# प्रस्तावना ।

शब्दइवार्थवानानुपूर्वीसत्त्वे तथाविधे । अथान्यथान्यथा यस्तु स धर्मो ध्रियते धृतः ॥ १ ॥

किं नैतदनतिपरोक्षं सहृदयविदुषां यत्कीटो वा भटो वा ना वा नरपतिर्वा दुर्मेधा वा सुमेधा वा रक्तो वा विरक्तो वा सर्व एव स्वीयस्य यस्य कस्यचित् तात्त्विकस्य कल्पितस्य वा क्रियाविशेषस्याभिलषितस्य कर्तृत्वं प्रयोजककर्तृत्वं वा समाचरन्नेव विचारविषयो भवतीति । इत्थं च प्रवृत्ता निरन्तरमव्याहता मनोवाक्कायप्रकल्पिता प्रवृत्तिरेव द्योतयति जनतायाः कामप्यशान्तिं महतीं चिकीर्षितं च किमप्यप्राप्तमिव प्राप्यं श्रेयोविशेषं प्रेयोविशेषं वा । एते च न व्यभिचरत इष्टतत्साधनप्राप्त्यनिष्टतत्साधनपरिहारान्यतरगोचरमनीषामन्यतरस्यैव चिकीर्षितत्वात्तत्रैव च तात्पर्यनिश्चयाद्यावतां प्रयत्नानां भ्रान्ताभ्रान्तसाधारणपुरुषानुष्ठितानाम् ।

दृष्टस्तु पुरुषार्थरूपोऽयं यत्नः प्रतिबन्धकपुञ्जपरिवृत इति तरुणार्द्रपद्मदलनिलीनदहन इवासकृद् ध्मातोऽपि न भवति फलेग्रहिरपेक्षते चातिशुष्ककाष्ठमिवादृष्टं सत्कृतिसमुद्भूतं यावदिष्टप्रतिबन्धकाधर्मध्वंसासाधारणहेतुतया सर्वविधपुरुषार्थसाध्यसहायं द्वितीयमिति तत्रैवाधेयो यत्नस्तावत्स एव च वस्तुतो यत्नोऽन्वितत्वात्सह फलेन कार्यनिष्पत्तिपूर्वकालिकस्तु दृष्टो हि स फलस्यावश्यंभावितया पराधीनो नान्तरीयश्चेति स्वयमेव स्फुरतीति तदर्थं बहुक्लेशः कालक्षेपः । अदृष्टासहचरितेनापि दृष्टेनैव प्रयत्नेन सह फलस्य तु नास्त्येव फलनिमित्तभावो व्यभिचरितत्वादन्वयव्यतिरेकभावस्य देवतानृपप्रसादावपि समानत्वादस्य परीक्षितस्य नियमस्य ।

अभीप्सितफलप्राप्तय आदर्त्तव्यमेतच्चादृष्टं साध्यं वैधाभिर्नानाजातीयाभिर्धर्मक्रियाभिः । धर्मक्रियाणां नानात्वे तु न विवादोऽनुभूयमानत्वात्फलनानात्वस्य । आगारानागारकर्त्तृद्वयभेदेन द्वैविध्यमेवासामागमादिषु प्रसिद्धं तु नितान्तविभिन्नस्वभावाधिकारिसमुदायद्वयसापेक्षम् । वैधासु च तासु तासु धर्मक्रियासु स एवाधिकरोति यो यथावर्णं यथाविधि संस्कृतो निरतश्च संस्कारप्रधाने स्वाध्यायादिसर्वविधआचारानुसरणे यावच्छक्यं दण्डकत्रितयेन । असंस्कृताश्रद्धालवनधिकारिसमष्टिभयभीतपुरुपाराधितस्तु स्वाध्यायादिरूपो धर्मो मदिरालिप्तपात्रनिहितसुरसरित्तोयमिव पीतमनुष्ठितोऽप्यपायपरम्पराप्रदानपर्यवसान इति तावदेव वर्णव्यवस्थामनुसृत्य संस्कारादावेवाधेयो यत्नः प्रत्नपरम्परानुमत इत्यालोच्यालोचिताचारसारः परिचितसाङ्गोपाङ्गागमगम्भीररहस्योऽप्रतिमप्रतिभासंपन्नोपकृष्टकालापकृष्टपुरुषापकृष्टकल्पनाकल्पितकुतर्कतश्चतुर्विधसंघाचारविचाररक्षाकामो मध्यस्थो मतभेदे चिकीर्पुर्लोककल्याणं परिजिहीर्षुः संस्कारासत्त्वप्रवादं रिरंसुस्सौजन्ये सूरिवर्यः श्रीवर्धमानसूरिर्निबबन्धेममाचारदिनकरनामानमाचारप्रचारकतयान्वर्थनामानं निबन्धराजम् ।

गुणकर्मप्राधान्यपराधीनमार्हतदर्शनं वर्णव्यवस्थायामुदासीनं वयमपि चार्हतदर्शनविद्वांसो न सम्मता वर्णव्यवस्थायां वर्धमानसूरिणा निर्मित आचारदिनकरस्तु वर्णव्यवस्थासमर्थकस्तत्र निर्दिष्टसंस्कारादिकर्मणां वर्णविभागेनैव निरूपितत्वाद्गुणकर्मकृतवर्णारोपस्य संस्कारकालेऽसंभूतप्रायत्वादिति कथमस्माकमुपादेयोयं निबन्ध इति केषाञ्चित्कथनं तु भ्रान्तभापितमेव । प्रोक्तप्रलापस्य वकीलबालेष्टरसॉलीस्रीटरएडीटरप्रिंटरमाष्टरादिटरटरलेक्चरासंस्कृतशरीरापरिचितागमगाम्भीर्यसंपादितसमाचारपत्रमात्रप्रमाणकत्वात् । आर्हतदर्शनरहस्यस्य चैषां स्वान्ते तमोगुणप्रधानशिश्नोदरतर्पणपरायणापरप्रान्तस्थपुरुषसंसर्गतदीयाचारविचारेतिहासादिश्रवणाभ्यसनमननिन्दितमिथ्याप्रधानवृत्तिस-

मर्जितान्नसेवनमलिनीभूते लेशतोप्यविद्यमानत्वेनैतद्विधपुरुषापसददत्तप्रमाणस्य प्रतारणारूपत्वात् । दर्शनरूपतयाऽऽत्मादिपदार्थस्वरूपनिरू-
पणावश्यकर्त्तव्यतया, हिंसाङ्गानुष्ठानमात्रनिरसनेनानिषिद्धमनुमतमिति तदितरतत्कालीनवर्णव्यवस्थादरपुरस्सरसंस्कारादीनां स्वीकृतसमान-
तया, क्षत्रियशरीरश्रीमहावीरादितीर्थकृदधीनधर्माधिपत्यब्राह्मणशरीरगौतमादिगणधरगततत्सहायकर्तृत्वयोर्मतान्तरानुमतक्षत्रियशरीरमनुरा-
मकृष्णाद्यधीनधर्मस्थापनरक्षादिकर्तृत्वब्राह्मणशरीरगौतमवामदेववसिष्ठगर्गादिगततत्संचालनकर्तृत्वयोरिवाङ्गीकृततयार्थादेव वर्णधर्मस्याङ्गीकृत-
प्रायतया, तीर्थकृद्विशेषप्रादुर्भावसमयस्य विलम्बिततया सर्वसम्मतस्यापि संस्कृतागमस्य हिंसाप्रवेशेन दूषिततया सर्वसाधारणधारणीयः
प्राकृतागमः कृत इति लेखस्यापि हिंसातिरिक्तयावल्लोकप्रसिद्धसंस्कृतागमसिद्धसंस्कारादिसत्कर्मणः कर्त्तव्यत्व एव सम्मततया, सूत्ररत्नमणि-
सुवर्णादिजैनोपवीतस्य सर्वत्रैवोपलब्धतया, विवाहमहोत्सवेऽतीव लौकिके लवणोत्तारादिकर्मण्यपि तीर्थकृतः कथं सहमता भवन्तीति
गौतमप्रश्ने आचार्याः प्रचलिताचारमाचरितं पूर्वजैर्न विघ्नन्तीति मरीचिचरमशरीरश्रीमहावीरतीर्थकरकृदुत्तरस्यापि लौकिकस्यातिलौकिकस्य
वा विशिष्याप्रतिषिद्धस्याश्रयणमेवास्तिक्यमिति तात्पर्यपरतया, आर्या म्लेच्छाश्चेति सूत्रे जात्यार्यकर्मार्ययोः, सन्तानक्रमेणागयजीवायरणस्स
गोदमिति संण्णेति गाथायां सन्तानक्रमागतजीवाचरणस्य गोत्रेति संज्ञायाः स्वीकृतायाः प्रयोजकस्य सन्तानक्रमस्य स्वीकारेण त्रिवर्णाचा-
राद्याचारनिबन्धेषु वर्णव्यवस्थामशिथिलामादृत्यैव संस्काराद्यावश्यकविधीनां निरूपणेन च दिगम्बरसमूहस्यापि प्रोक्तार्थे सहमततया चार्ह-
तागमो वर्णव्यवस्थातदनुसारिसंस्काराद्याचारेषु नोदास्ते नवा शेते किन्तु सुतरां जागर्त्तीति वक्तव्यस्यैव सद्भूतत्वात् । विषयलोलुपापट्टुप्र-
तिभपुरुषहतकप्रलापतो विदितार्हतदर्शनपरमार्थस्वरूपाणामेतत्सिद्धान्तधामप्रधानस्तम्भभूतानां श्रीवर्धमानसूरिहरिभद्रसूरिहेमचन्द्राचार्यय-

शोविजयोपाध्यायप्रभृ[illegible]वानां संवेगगुहानिवासिनां निर्णीतसिद्धान्तेषु श्रद्धानादिरहितैः क्षुल्लकार्हतैरेव सन्देहोत्थापनस्य तीर्थकराद्यार्हद[illegible]त्वात् । गुणकर्मभ्यां संस्कारवशतो यथाकालमागन्तुकाभ्यां प्रायः संस्कृतसंस्कारप्रियपुरुषसहचराभ्यां तत्त[illegible]ोत्कर्षैतामात्रप्रयोजकाभ्यां तरतमगुणकर्मवत्कतिपयव्यक्तिसमूहरूपसमष्टिसन्तानपरम्परामवधीकृत्य व्यवस्थिताया वर्णव्यवस्थाया गतार्थत्वमङ्गीकुर्वतस्तु कस्कोऽन्तर्भवति कुत्रकुत्रेत्येतदर्थापेक्षितव्याप्यव्यापकभावभावानभिज्ञत्वाच्च । अतएववैदिकार्हतसौगतादिसमयेषु वैदिकेष्वपि च तेषु तेषु संप्रदायेषु तादृशत्यागादिगुणशालिशूद्रशरीरस्वीकारेऽपि न तस्य चक्रित्वधर्मचक्रित्वपदप्राप्तिस्वीकारो नच शूद्रादिशब्दातिरिक्तक्षत्रियादिशब्दवाच्यतास्वीकारोऽतएव च शठकोपस्य सूर्पकारस्याचार्यत्वमङ्गीकुर्वतां तापिताङ्गानामपि वैष्णवैकदेशिनां श्रुतिध्वंस्यास्पदावाप्तिस्तयैव तेषां वर्णव्यवस्थाध्वंससाहसाद्विरतिश्च ।

ये च केचनार्हता अनार्हता वा हतमतयोऽप्यहतोत्साहा जल्पन्ति वस्तुतस्त्वध्यात्मदृष्ट्या सत्यज्ञानानन्दात्मन्यात्मनि नास्ति दुःखदुर्बोधयोर्लेशोऽपि यदपनयकृते नानाविधधर्मक्रियानुष्ठानं तत्कृते च संस्कारादिविधिना तथाविधाधिकारसंपादनम् एतत्कृते च वर्णव्यवस्थायामास्थायाः स्थिरीकरणमुपपन्नं भवतीति तेऽपि भ्रमभूतपीतचैतन्या एव । ज्ञानाद्यात्माप्यात्मा तावदेव तथात्वेन न निश्चित इति तदर्थमेव नानाविधधर्मानुष्ठानस्यावश्यकत्वात् । प्राक् च तथानिश्चयात्तस्मिन्नेव शरीरावच्छेदेन सर्वेषामेव दुःखदुर्बोधादीनां व्यावहारिकधर्माणां कल्पितानामप्यकल्पितानामिवानुभूयमानत्वात् । स्रक्चन्दनवनितामोदकादिषु रागोपादेयविषयेषु परुषपुरुषपुरीषादिषु द्वेषहेयविषयेषु द्रव्यतो विशेषविकलेष्वपि पर्यायत एव तथाभूतेषु भेदमनुभवतामपि वर्णव्यवस्थामेव द्विषतामध्यात्मदृशामधार्मिककुलकुलपतिलौकिककनिष्ठबन्धुत्वात् । ईदृशैश्चाधमैः स्वस्मिन्नारोपितस्याध्यात्मदृक्त्वस्याध्यात्मशास्त्रानवलोकनमूलकमोहत्वात् ।

अस्माकं तु सूत्राण्येव प्रमाणानि तेषु तु न निरूपितानि संस्कारादीनि कर्माणि भाष्यचूर्णिप्रभृतीनि व्याख्यानपुस्तकानि तु न प्रमाणानि पामरप्रकृतिकृतत्वादिति वादिनो दर्दुरानन्दानन्ददायिनः स्थानकवासिनोऽपि पामरा एव। निरूपितानामेव प्रवाहागतानां संस्कारादिकर्मणां सम्मततया विशिष्य पिष्टपेषस्यानावश्यकतयाऽऽगमानां पदार्थनिरूपणस्यैव प्रधानविषयतया च प्रतिपद्यानुक्तत्वेऽपि जन्मतः प्रभृति वोधचतुष्टयसंपदामपि यावतामेव तीर्थकृतां चरितप्रस्तावप्रसङ्गे विद्वद्भिः पितृभिराचरितानां तेषां स्वयंकृतानां दानादीनां सूत्रेष्वेव च चर्चितत्वात्, सूत्रसूत्रितरहस्यस्य सर्वसाधारणावेद्यस्य प्रकाशकतया सूत्रानुगतानां भाष्यादिमहानिबन्धानां प्रामाण्ये विदुषामार्हतानां वैमत्याभावात्, सूत्रतत्कर्तृतद्वक्तृमहत्त्वबोधैकहेतवो भाष्यादयो ग्रन्था येषां न प्रमाणानि कतिपयदोहाचौपाईचण्डोच्चारणचतुराणां निशाव्यासानां तेषां सूत्राणामेव प्रामाण्यं कथमवगतमित्यत्रैवोपपत्तेरसद्भावात् ।

विद्वद्दर्शनीयस्यास्याचारदिनकरस्याविष्कर्त्ता शुभनामधेयः श्रीवर्धमानसूरिः । अयं च खरतरगच्छादिमाचार्यस्य दादाजीतिपरमादरास्पदापराभिधेयेन प्रसिद्धस्य देवनिर्विशेषपूजाभाजनस्य चैत्यवासिशिथिलाचारोपकेशगच्छमुनीनां राज्ञो दुर्लभस्य सभायां पराभवकर्तुः सूरिवर्यस्य श्रीजिनेश्वरसूरेर्गुरुवर्यः । श्रीजिनेश्वरसूरिशास्त्रार्थसमयस्तु खाष्टखेन्दु १०८० मितो वैक्रमाब्दो महाजनवंशमुक्तावलीतः प्रतीयते । श्रीवर्धमानसूरेरस्तित्वं शास्त्रार्थसमय आसीद्वा नासीदित्यत्र यद्यपि प्रमाणं नोपलभ्यते तथापि विदुषो गुरोरपि विनेयस्यापि श्रीजिनेश्वरसूरेरेव प्रसिद्धिवैशिष्ट्याच्छक्यमुन्नेतुं नासीत्तदानीमस्तित्वं श्रीवर्धमानसूरेः । अनेनैव त्रयोदशराजमान्येन मुनिना प्रतिबोधितैः पौरवालगोत्रीयैः कारितमपरपर्वतमिवार्बुदपर्वते लोकोत्तरं मन्दिरमद्यापि शिल्पसंश्रयतोऽद्वितीयमेव वर्त्तते । सूरेरप्रतिममागमज्ञत्वं पाण्डित्यं

च तत्तद्देवपूजावसरे निर्मितैः पद्यैरेव स्फुटीभवति पण्डितानामिति तत्कृते विशेषोक्तिः पुनरुक्तिः । देवतानां वर्णनसमये तदीयरूपपत्नीवाहनादिना तदीयव्यावृत्तिं दर्शयता सूरिणा दर्शित आगमानुसंधानजनितश्चमत्कारश्चिन्तामुत्पादयति हा कथं न जायन्ते सम्प्रति चापि तादृशाः सूरय इति । पाण्डित्यं तु सूरेर्न शक्यते यादृशेन तादृशेन तुलयितुं पण्डितेनेत्यत्र त्वेतदेव पर्याप्तं साक्ष्यं यदेकेनैव केनापि कविना नोदाहृत्य दर्शितानि तावन्ति छन्दांसि यावन्त्याचारदिनकरे सन्ति निबद्धानि । जैनदर्शनस्य कर्मभूमिभारतसंभवस्यांशतो वैदिकधर्मस्पर्धित्वेऽपि नास्ति विरोधो वर्णधर्मे तदधीने चान्यस्मिन्नपि सर्वस्मिन् कर्मणीति नाविदितमस्ति दकारत्रयेण धर्मोपदेश उभयत्रेति पश्यतां विपश्चिताम् । प्रकारभेदस्तु दर्शनभेदप्रयुक्तः । तत्र तत्र वैदिकानां राजन्यानां जैनधर्मे प्रवेशस्य श्रूयमाणस्यापि प्रकारभेदादरण एव तात्पर्यम् नतु वर्णान्तरग्रहणे वर्णध्वंसकरणे वा सम्मतत्वाद्द्वयोर्वर्णव्यवस्थाया यवनादिवर्णविरोधिजात्यन्तरप्रवेशाभावादसंभूतत्वाच्च तदानीं तथाविधस्य । निष्फलकृत्यस्य संप्रति दृश्यमानस्तु विरोधप्रधानो भेदो जैनजैनयोरिव जैनाजैनयोरपि हतभाग्यभारतदुर्गतिहेतुक इति मतिरुदेति दिनकरदर्शनसमनन्तरमेवेति धन्यवादार्हस्यापि सहस्रधाभूतस्यास्य दिनकरस्याद्यावधि कथं नाभवत्प्रवेशः प्रत्यार्हतगृहमित्यत्रोचितं न मृग्यते निमित्तम् । जैनागममुद्रणपरायणजनता तपागच्छसाध्वधीना दिनकरस्तु खरतरगच्छाचार्यदिव्यदृष्टिसंभूत इत्यपि न हेतुः । खरतरतपाभेदभवप्राग्भवत्वेन सर्वमान्यत्वादस्य निबन्धस्यास्मादेवोपधानादिक्रियाभागमुद्धृत्य कृतानां तत्तद्विषयकपद्धतीनां सर्वत्राद्रियमाणत्वाच्च । यद्वा भवतु किमपि कारणं संप्रति दीयते धन्यवादपरंपरा श्रीमुनिमहाराजश्रीमोहनलालमहत्तरविनेयाय महोदारहृदयाय मण्डलाचार्याय **मुनिश्रीकमलसूरये** यदीयोपदेशवशीभूतश्चोदेति भागाभ्यामाचारदिनकरः । प्रथमभागात्किञ्चिदूनो द्विगुणो द्वितीयोऽपि भागो मुद्रणमनु-

भवतीति नातिचिरेणैव कालेनालोकिष्यते सहृदयानां भवतां स्वान्तम् । पत्रस्य बहुमूल्यत्वान्निर्णयसागरयन्त्रस्य बहुव्ययसाध्यत्वान्मूल्यमलघु प्रतीयते । शक्तिसमययोरल्पत्वात्प्राकृते पटुतरप्रवेशाभावाल्लब्धानां पुस्तकानामशुद्धत्वात्कृतेऽपि शोधने यत्ने सत्यः आचार्यसिद्धिविजयसूरेर्यशलमेरपुस्तकागारादुपाध्यायवृद्धिचन्द्रगणेश्चोपलब्धयोः पुस्तकयोः पश्चात्प्रतीयमाना अशुद्धयः शुद्धिपत्रे प्रवेशिताः । शोधनादिकर्मणा पुस्तकस्यैतस्य सौन्दर्यसंपादनेन बहूपकृतं निर्णयसागरप्रधानपण्डितैः श्रीवासुदेवपणशीकरशास्त्रिभिरिति निष्कृतये तदीयं सौजन्यमनुसर्तुमिच्छामि भवामि फलवानित्येतदर्थं स्मरामि नियन्तारम् । प्रशस्यते च केसरी सिंहः प्रकाशको यस्येदृशे सर्वजनीने कर्मणि प्रवृत्तिरुत्पन्ना यैश्चाधोनिर्दिष्टनामभिः श्रावकमहोदयैर्मुद्रणे साहाय्यमनुष्ठितं तेऽपि धन्यवादार्हाः ।

रमापतिमिश्रः ।

## मुद्रणसाहाय्यकर्तृनिर्देशः ।

| इमे च ते इयन्ति च तद्त्तानि | द्रव्याणि |
|---|---|
| शेठ गोवनजी हरसी (कच्छी) | ५०१ |
| ,, तुलसीदास मोहनजी (मांगरोल) | ५०१ |
| ,, लालबाग ज्ञानखाता २०० तथा सुपनाखातामाथी ३०० | ५०० |
| ,, केसरीभाई कल्याणचंद गेहेलाभाई जवेरी (सुरत) | २०० |
| ,, मगनभाई प्रतापचन्द्र झवेरी (सुरत) | १५० |

# अथाचारदिनकरीयप्रथमविभागविषयानुक्रमः ।

श्रीजिनाय नमः।

## श्रीवर्द्धमानसूरिविरचितः।

# आचारदिनकरः।

## प्रथमोऽरुणोदयः।

तत्त्वज्ञानमयो लोके आचारं यः प्रणीतवान्। केनापि हेतुना तस्मै नम आद्याय योगिने ॥ १ ॥
आत्मान्तर्द्धानहेतोर्वा कारुण्यादथ देहिनाम्। य आचारं स्वयं चक्रे तं वन्देऽर्हन्तमादिमम् ॥ २ ॥
तत्प्रसादात्सुखालोक्ये पथि तत्त्वोपयोगिनि। यो लोकाचारमाचख्यौ तस्मै सर्वात्मने नमः ॥ ३ ॥
अनादितत्त्वज्ञातापि स्वस्य मोक्षप्रदोऽपि च। स्वयं चचाराचारं यो नमस्तस्मै स्वयंभुवे ॥ ४ ॥
यस्याः श्रुतेः परा वाणी पूजनात्परमाः श्रियः। तत्त्वालोकः परं ध्यानात्तस्या अर्हद्गिरे नमः ॥ ५ ॥

सर्वर्द्धयः सुसंज्ञानं कीर्त्तिर्यस्याः प्रसादतः। प्राप्यते क्षणमात्रेण तामम्ब्यां प्रणमाम्यहम् ॥ ६ ॥
चिद्वत्पर्षत्सु गर्जन्ति मादृशा यत्प्रसादतः। नमोऽस्तु गुरुपादेभ्यस्तेभ्य एव प्रतिक्षणम् ॥ ७ ॥
उपायकोटिभिर्नैव प्राप्यं यत्तत्त्वमुत्तमम्। सुप्राप्यं यत्प्रसादात्तत् तस्मै श्रीगुरवे नमः ॥ ८ ॥
सत्यज्ञानात्सुखालोक्यः पन्थाः कैवल्यकारणम्। तच्चाचारवतां नृणामुन्मीलति विशेषतः ॥ ९ ॥
आगर्भवासाद् ज्ञातात्मा वृषभः परमः पुमान्। प्रविवेश यदाचारं तत्स प्रामाण्यमञ्चति ॥ १० ॥

इह हि केचिद्दर्शनमोहान्धधिय आर्हत १ सौगत २ वैशेषिक ३ नैयायिक ४ साङ्ख्य ५ चार्वाका ६ स्तत्त्वालोकना(मार्गा)नुसारिण एव अदृष्टतत्परमार्थाः सहृदयोपात्तप्रमातृप्रमेयप्रमाणप्रभावा आचारमेव तिरस्कुर्वन्ति। न तेषां वचः सद्भिः प्रमाणपथमुन्नेयं। यतः भगवानर्हन्नपि विदितसमस्तपरमार्थ आगर्भाद्राज्याभिषेकपर्यन्तसंस्कारान् स्वदेहेऽप्याविश्चकार। तथा च देशविरतिरूपे गृहिधर्मे प्रतिमोद्वहनादिसम्यक्त्वारोपणरूपमाचारमाचीर्णवान्। तथा निमेषमात्रशुक्लध्यानप्राप्येऽपि केवले यतिमुद्रातपश्चरणादि दीर्घकालं कलयति स्म। तथा च समुत्पन्ने केवले चिदानन्दरूपोऽपि त्यक्तपरापेक्षः समवसरणरचनाधर्मदेशनाविहारगणधरस्थापनसंशयव्यवच्छेदादि विधत्ते स्म। तथा च तस्मिन्नपि भगवति परिनिर्वृते बिडौजःप्रभृतयो वृन्दारकाः प्राणरहितस्यापि कर्त्तृकर्मव्यवच्छिन्नस्य तच्छरीरस्य संस्कारस्तूपप्रभृत्याचरणमाचरन्ति। तद् ध्रुवमार्हत-



१ 'शुभं' इति क्वचित्पाठः। सुखमिति पाठस्तु संगतः। २ 'ज्ञानात्मा' इत्यपि।

मते लोकोत्तरपुरुषाचीर्णत्वादाचारः प्रमाणं । तत्त्वानुवादेऽपि (य आश्रवः संवरश्च) आश्रवे शुभाशुभचारिणो मनोवाक्कायैः शुभाशुभं कर्म बध्नन्ति, अत एव आचाररूप आश्रवः संवरश्च द्रव्यभावभेदेन क्रियातत्त्यागादाचाररूप एव । सौगतानां च मते सुखासिकाप्रभृतयः शरीरकार्याचारा[1] बुद्धार्चनरूपाश्च क्रिया मन्त्रस्मरणादयश्च शून्यवादेऽप्याचारमश्नन्ति[2] । वैशेषिकाणां च मते विशेषपरीक्षाचारो यः स एव पूर्वमाचारस्य स्थापनाहेतुः । यदुक्तं, नहि क्रियात्मिकां परीक्षां विहाय विशेषज्ञानमिति । नैयायिकानां तु मते प्रमाणोपलंभरूपो न्याय इति । स च प्रमाणोपलंभो नहि क्रियाप्रतिपत्तिभिर्विना भूत इति तन्नैयायिकादिष्वाचार एव प्रमाणं। साङ्ख्यानां तु तत्त्ववादे प्रकृतिपुरुषयोश्चोपभोगार्थः संयोगः पङ्ग्वन्धयोरिव स प्रथममेवाचारान्तर्भूतः। चार्वाकाणां तु मते सर्वत्र नास्तिवादे सर्वं शुभमाचाररूपत्व एव प्रतिपाद्यते । तदेवं षट्स्वपि दर्शनेषु आचार एव[3] प्रमाणं । तदलं परमतालोकचिन्ताभिः । सांप्रतं प्रस्तुतकार्यसमर्थनाय स्वमतमेव प्रामाण्यं प्राप्यते । यदुक्तमागमे—

"नाणं सव्वत्थमूलं च साहा खंधा अ दंसणं । चारित्तं च फलं तस्स रसो मुक्खो जिणोइओ ॥ १ ॥"

अतश्च सिद्धान्तमहोदधिकल्लोलरूपं चारित्रव्याख्यानं केन वक्तुं शक्यते? तथापि श्रुतकेवलिप्रणीतशास्त्रार्थलेशमवलम्ब्य किञ्चिदाचारयोग्यं वचः प्रस्तूयते । स चाचारो द्वेधा यत्याचारो गृहस्थाचारश्च । यदुक्तं—

---

१ "शारीरिकाचारा" इत्यपि पाठः । २ शून्यमिति बहुषु पुस्तकेषु । ३ एवकारो भिन्नक्रमः प्रमाणमित्यस्याग्रे द्रष्टव्यः ।

"सावज्जजोगपरिवज्जणाओ सव्वुत्तमो जईधम्मो । बीओ सावगधम्मो तइओ संविग्गपक्खपहो ॥ १ ॥"

यतिधर्मो हि महाव्रतसमितिगुप्तिधारणपरीषहोपसर्गसहनकषायविषयजयश्रुतधारणबाह्याभ्यन्तरतपःकरणयोगैर्दुरासदो मोक्षस्य पन्थाः । गृहिधर्मश्च परिग्रहधारणसुखासिकायथेष्टविहारभोगोपभोगादिभिरौदारिकसुखलेशदायी न मोक्षदानायालंभूष्णुर्भवति । सोऽपि द्वादशव्रतधारणयतिजनोपासनार्हदर्चनदानशीलतपोभावनासंश्रयादिभिरुपचीयमानो मोक्षप्रदानाय यतेरिव । यत उक्तमागमे—

"विसमोवि निअडगमणो मग्गो मुक्खस्स इह जईधम्मो ।
सुगमोवि दूरगमणो गिहत्थधम्मो वि मुक्खपहो ॥ १ ॥"

तथा च खद्योतदिनकरयोरिव सर्षपसुराचलयोरिव घटिकासंवत्सरयोरिव यूकागजयोरिव महदन्तरं गृहिधर्मयतिधर्मयोः । यत उक्तमागमे—

"जह मेरुसरिसवाणं खज्जोअरवीणं चंदताराणं । तह अंतरं महंतं जइधम्मगिहत्थधम्माणं ॥ १ ॥"

अत एव यतिधर्मग्रहणस्य पूर्वसाधनभूतमनेकसुरासुरयतिलिङ्गिप्रीणनपरं जिनार्चनसाधुसेवादिसत्कर्मपवित्रितं गृहिधर्मं व्याचक्ष्महे । तत्रापि गृहिधर्मे पूर्वं व्यवहारसमुद्देशः । ततश्च गृहस्थधर्मकथनं । व्यवहारोऽपि प्रमाणं । यतः—ऋषभाद्या अर्हन्तोऽपि गर्भाधानजन्मकालप्रभृति व्यवहारं समाचरन्ति । यत उक्तमागमे—"समणस्स णं भगवओ महावीरस्स अम्मा पिउणो पढमे दिवसे विइपडिक्कमणं करंति, तइए दि-

वसे चंदसूरदंसणं कुणंति, छट्ठे दिवसे जागरिअं जागरंति; संपत्ते बारसाहदिवसे विरए"—इत्यादि व्यवहारकर्म भगवद्भिरप्याचीर्णमागमे निर्दिष्टं च । यतः—

"व्ववहारोवि हु बलवं जं वंदइ केवलीवि छडमत्थं । आहाकम्मं भुंजइ तो व्ववहारं पमाणं तु ॥ १ ॥"

लौकिकेऽपि—

"चतुर्णामपि वेदानां धारको यदि पारगः । तथापि लौकिकाचारं मनसापि न लङ्घयेत् ॥ १ ॥"

अत एव प्रथमं गृहस्थव्यवहारधर्माचरणाद्युपदर्श्यते । ततश्च साङ्गं यतिधर्मव्याख्यानम् ।

"मोहान्धकारनिर्म्मलयतिगृहस्थादिदर्शनविधायि । आचारदिनकराख्यं शास्त्रं प्रस्तूयते पुण्यम् ॥ १ ॥"

आदौ गृहस्थधर्मकथने षोडशसंस्काराः । तद्यथा,—

"गर्भाधानं १ पुंसवनं २ जन्म ३ चन्द्रार्कदर्शनम् ४ । क्षीराशनं ५ चैव षष्ठी ६ तथा च शुचिकर्म ७ च ॥ १ ॥
तथा च नामकरण ८ मन्नप्राशन ९ मेव च । कर्णवेधो १० मुण्डनं ११ च तथोपनयनं १२ परम् ॥ २ ॥
पाठारंभो १३ विवाहश्च १४ व्रतारोपो १५ ऽन्तकर्म च १६ । अमी षोडशसंस्कारा गृहिणां परिकीर्त्तिताः ॥३॥
ब्रह्मचर्यं १ क्षुल्लकत्वं २ प्रव्रज्यो ३ त्थापना ४ तथा । तथा च योगोद्वहनं ५ वाचनाग्रहणं ६ तथा ॥ ४ ॥
ततश्च वाचनानुज्ञा ७ सोपाध्यायपदस्थितिः ८ । आचार्यपदयुक्तिश्च ९ प्रतिमोद्वहनं १० तथा ॥ ५ ॥
व्रतिनी व्रतदानं च ११ प्रवर्त्तिनीपदक्रमः १२ । महत्तरापदाचारो १३ दिनरात्रिस्थितिर्द्वयोः १४ ॥ ६ ॥

ऋतुस्थितिश्च सव्याख्या १५ मरणस्य विधिः पुनः १६ । द्वाराणि षोडशैतानि यत्याचारे प्रदर्शयेत् ॥ ७ ॥
प्रतिष्ठा विम्बचैत्यादेः १ शान्तिकं २ पौष्टिकं ३ बलिः ४ । प्रायश्चित्तविधि ५ श्चैवावश्यकस्य विधिस्तथा ६ ॥८॥
तपोविधिस्त्रिविधोऽपि ७ पदारोपणमेव ८ च । गृहिसाध्वोः समानानि द्वाराण्यष्ट प्रकीर्त्तयेत् ॥ ९ ॥
चत्वारिंशत्प्रक्रमाश्च तावन्त उदया इह । शास्त्र आचारसूर्याख्ये प्रदर्श्यन्ते क्रमादतः ॥ १० ॥
गर्भाधानोदये चाद्ये १ तत्कर्माचरणं परम् । शान्तिदेव्याः परो मन्त्रो वेदस्थापनमेव च ॥ ११ ॥
द्वितीये २ ऽप्युदये व्याख्या कृता पुंसवनस्य च । जातकर्म तृतीये ३ च मूलर्क्षादिषु सूचितम् ॥ १२ ॥
चतुर्थे ४ ऽर्कचन्द्रदृष्टिः पञ्चमे ५ क्षीरभोजनम् । षष्ठे ६ षष्ठी जागरणं मातृणां पूजनं तथा ॥ १३ ॥
सप्तमे ७ शुचिकर्मैव नामकर्म तथाष्टमे ८ । ग्रहलग्नादिपूजा च मण्डलीपूजने विधिः ॥ १४ ॥
नवमे ९ ऽन्नप्राशनं च दशमे १० कर्णवेधनम् । एकादशे ११ मुण्डनं च द्वादशे १२ चोपनीतता ॥ १५ ॥
जिनोपवीतव्याख्यानं तद्विधिर्व्रतबन्धनम् । व्रतादेशस्तद्विसर्गो गोदानं व्रतधारणम् ॥ १६ ॥
चतुर्णामपि वर्णानां संस्कारे व्रतशिक्षणम् । शूद्रस्य चोत्तरीयादि बटूकरणमेव च ॥ १७ ॥
त्रयोदशे १३ पाठविधिश्चतुर्दशमे १४ एव च । विवाहोऽष्टप्रकारश्च प्राजापत्यस्य विस्तरः ॥ १८ ॥
तैलस्नानादिकविधिर्वेदिस्थापनजो विधिः । पूजा कुलकराणां च तथाऽग्निस्थापनं पुनः ॥ १९ ॥

१ मागमो मात्रापूर्त्तिकृते कृत ऐच्छिकः ।

अग्निसन्तर्पणं चैव तथार्घ्यविधिरुत्तमः । लाजमोक्षप्रदानं च गणिकानां विवाहनम् ॥ २० ॥
ततः पञ्चदशो १५ चैव सम्यक्त्वारोपणं परम् । द्वादशव्रतरोपश्च प्रतिमोद्वहनं तथा ॥ २१ ॥
उपधानतपश्चापि मालारोपणजो विधिः । परिग्रहप्रमाणं च गृहिणां शुनिशास्थितिः ॥ २२ ॥
अर्हत्पूजाविधिः श्रेष्ठो लघुस्नात्रविधिः शुभः । दिक्पालानां ग्रहाणां च पूजनं तत्र वै लघु ॥ २३ ॥
उपधानादि नन्दिश्च षोडशे १६ मृत्युजो विधिः । तत्र चाराधना श्रेष्ठा चतुःस्सरणमेव च[1] ॥ २४ ॥
क्षामणा चैव संस्कारः कथितो गृहमेधिनाम् । तथा च सप्तदशमे १७ ब्रह्मचर्यविधिः परः ॥ २५ ॥
अष्टादशे १८ क्षुल्लकत्वमेकोनविंश १९ एव च । व्रतयोग्यायोग्ययुक्तिर्गृहत्यागविधिः पुनः ॥ २६ ॥
प्रव्रज्याग्रहणं चैव तथा विंशोदये २० पुनः । उत्थापना व्रतोच्चार एकविंशे २१ तथैव च ॥ २७ ॥
योगोद्वहनयुक्तिश्च कालग्रहणजो विधिः । स्वाध्यायप्रस्थापनं च क्षमाश्रमणयोजना ॥ २८ ॥
कायोत्सर्गा वन्दनानि सङ्घट्टश्चोक्तपानकम् । क्रिया प्रतिदिनं चैव योगानां सार्द्धवार्षिकी ॥ २९ ॥
द्वाविंशे २२ वाचनायुक्तिस्त्रयोविंशे २३ यथाविधि । वाचनार्यपदप्राप्तिश्चतुर्विंशे २४ तथैव च ॥ ३० ॥
उपाध्यायपदारोपः पञ्चविंशे २५ ततः परम् । आचार्यपदयुक्तिश्च गुणा दोषाश्च तद्भवाः ॥ ३१ ॥
षड्विंशे २६ प्रतिमानां च वहनं व्रतधारिणाम् । सप्तविंशे २७ व्रतिनीनां व्रतदानमनुत्तरम् ॥ ३२ ॥
अष्टाविंशे २८ प्रवर्त्तिन्याः पदक्रमविशेषणम् । एकोनत्रिंशत्तमे २९ च महत्तरापदं गुणाः ॥ ३३ ॥

१ सरणमिति क्वचित् पाठः ।

त्रिंशत्तमे ३० व्रतिनां च व्रतिनीनां च सर्वथा । दिनरात्रिस्थितिश्चोपकरणानां च कीर्त्तनम् ॥ ३४ ॥
एकत्रिंशत्तमे ३१ साधुव्रतिन्योर्ऋतुजा स्थितिः । विहारलोचयुक्तिश्च व्याख्यानविधिरेव च ॥ ३५ ॥
द्वात्रिंशत्तम ३२ एवैषां मरणस्य विधिः परः । त्रयस्त्रिंशत्तमे ३३ देवचैत्यगेहजलात्मनाम् ॥ ३६ ॥
प्रतिष्ठा विस्तरादन्या तथा चैवाधिवासना । आह्वानं सर्वदेवानां पूजास्थापनमेव च ॥ ३७ ॥
बृहत्स्नात्रविधिश्चैव नन्द्यावर्त्तादिपूजनम् । कङ्कणच्छोटनं चैव मङ्गलाष्टकपूजनम् ॥ ३८ ॥
क्रयाणकानि खरसाग्नि ३६० मितानि शुभानि च । चतुस्त्रिंशत्तमे ३४ शान्तिकर्म सर्वार्चनान्वितम् ॥३९॥
ग्रहनक्षत्रशान्तिश्च तथा मूलादिशान्तिकम् । पञ्चत्रिंशत्तमे ३५ शान्तिपौष्टिकं कर्म सत्तमम् ॥ ४० ॥
षट्त्रिंशत्तमके ३६ ज्ञेयं बलिकर्म सुशोभनम् । सप्तत्रिंशत्तमे ३७ प्रायश्चित्तयुक्तिरनुत्तरा ॥ ४१ ॥
जीतकल्पभवा साधुगृहियोग्यार्थशोधिनी । दुःकर्मणां च बाध्यानां[1] शोधनं प्रोक्तमुत्तमम् ॥ ४२ ॥
अष्टात्रिंशत्तमे ३८ चैव सदावश्यकजो विधिः । सामायिकचतुर्विंशस्तववन्दनकादिषु ॥ ४३ ॥
प्रतिक्रमणकायोत्सर्गप्रत्याख्यानविचारणम् । एषां च योजना सर्वा व्याख्या विकृतिकादिषु ॥ ४४ ॥
व्याख्या पाक्षिकसूत्रस्य यतिश्रावकसूत्रयोः । शक्रार्हत्स्तुतिसिद्धादिस्तोत्रव्याख्यानमेव च ॥ ४५ ॥
व्याख्यानं वन्दनादीनां क्षामणालोचनास्वपि । स्थापनाचार्यमानं च कालदण्डादिमानकम् ॥ ४६ ॥

१ 'वाह्यानां' इत्यपि पाठः ।

एकोनचत्वारिंशे ३९ च त्रिविधोऽपि तपोविधिः । चत्वारिंशत्तमे ४० चैव पदारोपो महत्तमः ॥ ४७ ॥
व्रतिनां ब्राह्मणानां च क्षत्राणां राज्यजा स्थितिः । सामन्तमण्डलेशादिमन्त्र्यादिपदयोजनम् ॥ ४८ ॥
तथा च वैश्यशूद्रादेः साङ्घपत्यपदस्थितिः । शूद्राणां कीर्त्तनं चैव सर्वेषां नामकीर्त्तनम् ॥ ४९ ॥
चत्वारिंशत्प्रमाणेषूदयेष्वेवं निदर्शनम् । अस्मिन् दिनकरापेक्षे चोदयस्थितिकारणम् ॥ ५० ॥
अत्र शास्त्रे यदुक्तं तत्सर्वमर्हन्मताश्रितम् । मिथ्यादृशां व्यवहारो न मनागपि दर्शितः ॥ ५१ ॥
आचारशास्त्रमित्यत्र वैदुष्यादि न दर्शितम् । भूयात्सुखेन व्याख्येयं साधूनामिति चिन्तया ॥ ५२ ॥
वृहत्वात्रविधौ किञ्चिद्यमकादिकमीरितम् । मूढेन कृतमित्येवं मा जानन्तु विचक्षणाः ॥ ५३ ॥
अस्मिन् यश्च यथारूपः पाठ उच्चारणादिकः । स तथैवोदितो बालावबोधार्थं न मौढ्यतः ॥ ५४ ॥

अस्मिंश्चत्वारिंशतैवाधिकारैस्तत्वालोके पीठिकां योजयित्वा ।
ग्रन्थे ज्ञेयानुष्टुभामेव सङ्ख्या व्योम[1]व्योमेषुद्विचन्द्र १२५०० प्रमाणा ११४ अ० २५ ॥

इत्याचार्यश्रीवर्द्धमानसूरिकृते आचारदिनकरे संबन्धकारी शास्त्रपीठिकाभिधायिकीर्तनो
नामारुणोदयः पूर्णः प्रथमः ॥ १ ॥

इति प्रथमोऽरुणोदयः ।

---

1 व्योमव्योमाक्षेषु १५२०० इत्यपि पाठः ।

# प्रथम उदयः ।

"व्रतारोपं परित्यज्य संस्कारा दश पञ्च च । गृहिणां नैव कर्त्तव्या यतिभिः कर्मवर्जितैः ॥ १ ॥"

यत उक्तमागमे—

"विजयं जोइसं चेव कम्मं संसारिअं तहा । विज्ञामंतं कुणंतो अ साहू होइ विराहओ ॥ १ ॥"

ते पञ्चदश गृहस्थसंस्काराः केन कर्त्तव्याः? इत्युच्यते—

"अर्हन्मन्त्रोपनीतश्च ब्राह्मणः परमार्हतः । क्षुल्लको वात्तगुर्वाज्ञो गृहिसंस्कारमाचरेत् ॥ १ ॥"

## प्रथमं गर्भाधानसंस्कारविधिः ॥ १ ॥

स यथा—

"सञ्जाते पञ्चमे मासे गर्भाधानादनन्तरम् । गर्भाधानविधिः कार्यो गुरुभिर्गृहमेधिभिः ॥ १ ॥
गर्भाधाने पुंसवने जन्मन्याह्वानके तथा । शुद्धिर्मासदिनादीनामालोक्याचश्यकर्मणि ॥ २ ॥
श्रवणश्च करः पुनर्वसू निऋतेर्भं च सपुष्यको मृगः । रविभूसुतजीववासराः कथिताः पुंसवनादि कर्मसु ॥३॥"

अतश्च पञ्चमे मासे शुभतिथिवारर्क्षेषु पतिचन्द्रबलाद्यवलोक्य देशविरतो गुरुः कृतस्नानो बद्धधम्मिल्लो

१ अन्तर्भावितण्यर्थोऽत्र कृञ् ।

धृतोपवीतोत्तरासङ्गो धौतनिवसनपरिधानो धृतपञ्चकक्षश्चन्दनतिलकाङ्कितललाटः सुवर्णमुद्रिकाङ्कितसावित्रीकः प्रकोष्ठबद्धपञ्चपरमेष्ठिमन्त्रोद्दिष्टपञ्चग्रन्थियुतः सदर्भकौसुम्भसूत्रकङ्कणो रात्र्युपासितब्रह्मव्रतः कृतोपवासाचाम्लनैर्विकृतिकैकासनादिप्रत्याख्यानः संप्राप्ताजन्मयतिगुर्वनुज्ञो जैनब्राह्मणः क्षुल्लको वा गृहिणां संस्कारकर्म (कारयितु)मर्हति ।

उक्तं च यतः—

"शान्तो जितेन्द्रियो मौनी दृढसम्यक्त्ववासनः । अर्हत्साधुकृतानुज्ञः कुप्रतिग्रहवर्जितः ॥ १ ॥
जितक्रोधलोभमायः कुलीनः सर्वशास्त्रवित् । अविरोधः कृपालुश्च समभूपतिदुर्गतिः ॥ २ ॥
स्वाचारं प्राणनाशेऽप्यमुञ्चन्नञ्चितचेष्टितः । अखण्डिताङ्गः सरलः सदोपासितसद्गुरुः ॥ ३ ॥
विनीतो बुद्धिमान् क्षन्ता कृतज्ञः शौचवान् द्विधा । गृहिसंस्कारकार्येषु युज्यते गुरुरीदृशः ॥ ४ ॥"

ईदृशो गुरुर्गर्भाधानकर्मणि पूर्वं गुर्विण्याः[1] पतिमनुजानीयात् । स च गुर्विणीपतिर्नखशिखान्तं स्नातो धृतशुचिवस्त्रो निजवर्णानुसारधृतोपवीतोत्तरीयोत्तरासङ्गः प्रथममर्हत्प्रतिमां शास्त्रोक्तबृहत्स्नपनविधिना स्नपयेत् । तच्च स्नात्रोदकं शुभे भाजने स्थापयेत् । ततश्च जिनप्रतिमां गन्धपुष्पधूपदीपनैवेद्यगीतवादित्रैः शास्त्रोदितैः पूजयेत् । पूजान्ते गुरुर्गुर्विणीमविधवाकरैर्जिनस्नानोदकैरभिषेचयेत् । ततश्च सर्वजलाशयजलानि संमील्य

१ गर्भिण्याः ।

सहस्रमूलचूर्णं प्रक्षिप्य शान्तिदेवीमन्त्रेणाभिमन्त्रयेत् । तद्गर्भितस्तोत्रेण वा । शान्तिदेवीमन्त्रो यथा—"ॐ नमो निश्चितवचसे भगवते पूजामर्हते जयवते यशस्विने यतिस्वामिने सकलमहासंपत्तिसमन्विताय त्रैलोक्यपूजिताय सर्वासुरामरस्वामिसंपूजिताय अजिताय भुवनजनपालनोद्यताय सर्वदुरितौघनाशनकराय सर्वाशिवप्रशमनाय दुष्टग्रहभूतपिशाचशाकिनीनां प्रमथनाय, तस्येति नाममन्त्रस्मरणतुष्टा भगवती तत्पदभक्ता विजया देवी । ॐ ह्रीँ नमस्ते भगवति विजये, जय जय परे परापरे जये अजिते अपराजिते जयावहे सर्वसङ्घस्य भद्रकल्याणमङ्गलप्रदे, साधूनां शिवतुष्टिप्रदे, जय जय, भव्यानां कृतसिद्धे सत्त्वानां निर्वृतिनिर्वाणजननि अभयप्रदे स्वस्तिप्रदे भविकानां[1] जन्तूनां, शुभप्रदानाय नित्योद्यते सम्यग् दृष्टीनां, धृतिरतिमतिबुद्धिप्रदे जिनशासनरतानां शान्तिप्रणतानां जनानां श्रीसंपत्कीर्त्तियशोवर्द्धिनि, सलिलात् रक्ष रक्ष, अनिलात् रक्ष रक्ष, विषधरेभ्यो रक्ष रक्ष, राक्षसेभ्यो रक्ष रक्ष, रिपुगणेभ्यो रक्ष रक्ष, मारीभ्यो रक्ष रक्ष, चौरेभ्यो रक्ष रक्ष, ईतिभ्यो रक्ष रक्ष, श्वापदेभ्यो रक्ष रक्ष, शिवं कुरु कुरु, शान्तिं कुरु कुरु, तुष्टिं कुरु कुरु, पुष्टिं कुरु कुरु, स्वस्ति कुरु कुरु, भगवति, गुणवति, जनानां शिवशान्तितुष्टिपुष्टिस्वस्ति कुरु कुरु । ॐ नमो २ हूं ह्रः यः क्षः ह्रीँ फट्[2] फट् स्वाहा । अथवा ॐ नमो भगवतेऽर्हते शान्तिस्वामिने सकलातिशेषकमहासंपत्समन्विताय त्रैलोक्यपूजिताय नमः शान्तिदेवाय सर्वामरसमूहस्वामिसंपूजिताय भुवनपालनोद्यताय सर्वदुरितविनाशनाय

१ 'भक्तानां' इत्यपि पाठः । २ फुट् फुट् इति बहुषु पुस्तकेषु ।

सर्वदुष्टग्रहभूतपिशाचमारिडाकिनीप्रमथनाय नमो भगवति विजये अजिते अपरा-
सर्वाशिवप्रशमनाय सर्वदुष्टग्रहभूतपिशाचमारिडाकिनीप्रमथनाय साधूनां शिवशान्तितुष्टिपुष्टिस्वस्तिदे भव्यानां सिद्धि-
जिते जयन्ति जयावहे सर्वसङ्घस्य भद्रकल्याणमङ्गलप्रदे साधूनां शिवशान्तितुष्टिपुष्टिस्वस्तिदे, भक्तानां शुभावहे, सम्यग्दृष्टीनां धृतिरतिबुद्धि-
वृद्धिनिर्वृतिनिर्वाणजननि, सत्त्वानामभयप्रदाननिरते, भक्तानां शुभावहे, सम्यग्दृष्टीनां धृतिरतिबुद्धि-
प्रदानोद्यते, जिनशासननिरतानां श्रीसंपत्कीर्तियशोवर्द्धिनि, रोगजलज्वलनविषविषधरदुष्टज्वरव्यन्तरर‍ा-
क्षसरिपुमारिचौरेतिश्वापदोपसर्गादिभयेभ्यो रक्ष रक्ष, शिवं कुरु २ शान्तिं कुरु २ तुष्टिं कुरु २ पुष्टिं कुरु
२ स्वस्ति कुरु २ भगवति श्रीशान्तितुष्टिपुष्टिस्वस्ति कुरु २ ॐ नमो नमः हूं ह्रः यः क्षः ह्रीं फट् स्वाहा।
अनेन मन्त्रेण पूर्वोक्तेन वा स सहस्रमूलिकं सर्वजलाशयजलं सप्तवारमभिमन्त्र्य सपुत्रसधवाकरैः मङ्गलगी-
तेषु गीयमानेषु गुर्विणीं स्नपयेत्। ततश्च गुर्विण्या[2] गन्धानुलेपनं सदशवस्त्र[3]परिधानं यथासंपत्त्याभरणधारणं
कारयित्वा पत्या सह वस्त्राञ्चलग्रन्थिबन्धनं विधाय पतिवामपार्श्वे गुर्विणीं शुभासने कृतस्वस्तिकमाङ्गल्ये
निवेशयेत्। ग्रन्थियोजनमन्त्रः—"ॐ अर्हं, स्वस्ति संसारसंबन्धबद्धयोः पतिभार्ययोः। युवयोरवियोगोऽस्तु
भववासान्तमाशिषा १" विवाहं वर्जयित्वा सर्वत्र अनेनैव मन्त्रेण दंपत्योर्ग्रन्थिं बध्नीयात्। ततो गुरुस्तस्याः
पुरः शुभे पट्टे पद्मासनासीनो मणिस्वर्णरूप्यताम्रपत्रपात्रेषु सजिनस्नात्रजलं तीर्थोदकं संस्थाप्य कुशाग्रपृषतैः
आर्यवेदमन्त्रैर्गुर्विणीमभिषिञ्चेत्। तथा। आर्यवेदमन्त्रो यथा—"ॐ अर्हं जीवोऽसि जीवतत्त्वमसि प्राण्यसि

१ शूकशलभादय ईतयः। २ अधिकः। ३ रूपेण रचनया वा समस्तेन वा विजातीयस्तादृशवसनान्तरविशिष्टो वा प्रान्तो दशा।

प्राणोऽसि, जन्म्यसि, जन्मवानसि, संसार्यसि, संसरन्नसि, कर्मवानसि, कर्मवद्धोऽसि, भवभ्रान्तोऽसि, भवसंविभ्रमिषुरसि, पूर्णाङ्गोऽसि, पूर्णपिण्डोऽसि, जातोपाङ्गोऽसि, जायमानोपाङ्गोऽसि, स्थिरो भव, नन्दिमान् भव, वृद्धिमान् भव, पुष्टिमान् भव, ध्यातजिनो भव, ध्यातसम्यक्त्वो भव, तत्कुर्या न येन पुनर्जन्मजरामरणसङ्कुलं संसारवासं गर्भवासं प्राप्नोषि अर्हं ॐ" इति[1] मन्त्रेण दक्षिणकरधृतकुशाग्रतीर्थोदकबिन्दुभिः सप्तवेलं गुर्विणीं शिरसि[2] शरीरे अभिषिञ्चेत्। ततः पञ्चपरमेष्ठिमन्त्रपठनपूर्वं दंपती आसनादुत्थाप्य जिनप्रतिमापार्श्वे नीत्वा शक्रस्तवपाठेन जिनवन्दनं कारयेत्[3]। यथाशक्त्या फलवस्त्रमुद्रामणिस्वर्णादि जिनप्रतिमाग्रे ढौकयेत्। ततश्च गुर्विणी गुरवे स्वसंपत्त्या वस्त्राभरणद्रव्यस्वर्णादिदानं दद्यात्। ततश्च गुरुः सपतिकां गुर्विणीमाशीर्वादयेत्। यथा—"ज्ञानत्रयं गर्भगतोऽपि विन्दन् संसारपारैकनिवद्धचित्तः। गर्भस्य पुष्टिं युवयोश्च तुष्टिं युगादिदेवः प्रकरोतु नित्यम् ॥ १ ॥" ततश्च आसनादुत्थाप्य ग्रन्थिं वियोजयेत्। ग्रन्थिवियोजनमन्त्रः—"ॐ अर्हं-ग्रन्थौ वियोज्यमानेऽस्मिन् स्नेहग्रन्थिः स्थिरोऽस्तु वाम्। शिथिलोऽस्तु भवग्रन्थिः कर्मग्रन्थिर्दृढीकृतः ॥ १ ॥" इति मन्त्रेण ग्रन्थिं वियोज्य धर्मागारे दंपतिभ्यां सुसाधुगुरुवन्दनं कारयेत्। साधुभ्यो निर्दोषभोजनवस्त्रपात्रादि दापयेत्। इति गर्भाधानसंस्कारविधिः। ततः स्वकुलाचारयुक्त्या कुलदेवतागृहदेवतापुरदेवतादिपूजनं। इह यदुक्तं जैनवेदमन्त्रा इति तत्प्रतिपाद्यते। यदादिदेवतनूज आदिमश्चक्री भरतो धृतावधि-

---

१ पुनरुक्तिः स्पष्टार्था। २ अवच्छेदस्सप्तम्यर्थः शिरोवच्छेदेन गर्भिणीं सिञ्चेदित्यर्थः शरीरशब्दोप्यवयवार्थकः। ३ ताभ्यामिति शेषः।

ज्ञानः श्रीमद्युगादिजिनरहस्योपदेशप्राप्तसम्यक्[1]श्रुतज्ञानः सांसारिकव्यवहारसंस्कारस्थितये अर्हन्निदेशमाप्य पूज्यानकल्पयत् माहनान् धृतज्ञानदर्शनचारित्ररत्नत्रयकरणकारणानुमतित्रिगुणत्रिसूत्रमुद्राङ्कितवक्षःस्थलान् संस्कारदर्शनं १ संस्थानपरामर्शनं २ तदा च निजवैक्रियलब्ध्या चतुर्मुखीभूय वेदचतुष्कमुच्चचार । तद्यथा—संस्कारदर्शनं १ संस्थानपरामर्शनं २ तत्त्वाववोधः ३ विद्याप्रबोध ४ इति । चतुरो वेदान् सर्वनयवस्तुप्रकीर्त्तकान्माहनानपाठयत्[2] । ततश्च ते माहनाः व्यवहारोपदेशेन धर्मोपदेशादि वितेनुः । ततश्च तीर्थे व्यसस्ततीर्थङ्करतीर्थं यावद् धृतसम्यक्त्वाः आर्हतानां व्यवहारोपदेशेन धर्मोपदेशादि वितेनुः । ततश्च तीर्थे व्यवच्छिन्ने तत्रान्तरे ते माहनाः प्राप्तप्रतिग्रहलोभास्तान्[3] वेदान् हिंसाप्ररूपणसाधुनिन्दनगर्भतया ऋग्यजुःसामाथर्वनामकल्पनया मिथ्यादृष्टितां निन्युः । ततश्च साधुभिर्व्यवहारपाठपराङ्मुखैस्तान् वेदान् विहाय जिनप्रणीत आगम एव प्रमाणतां नीतः । तेष्वपि ये माहनाः सम्यक्त्वं न तत्यजुः तेषां मुखेष्वद्यापि भरतप्रणीतवेदलेशः कर्मान्तरव्यवहारगतः श्रूयते, स चात्रोच्यते । यत उक्तमागमे—"सिरिभरहचक्कवट्टी आरियवेआण विस्सुओ कत्ता । माहणपढणत्थमि णं कहिअं सुहझाणववहारं ॥ १ ॥ जिणतित्थे वुच्छिन्ने मिच्छित्ते माहणेहिं ते ठविआ । अस्संजआणपूआ अप्पाणं कारिआ तेहिं ॥ २ ॥ पञ्चामृतं स्नात्रवस्तु सर्वतीर्थोद्भवं जलम् । सहस्रमूलं दर्भश्च कौसुम्भं सूत्रमेव च ॥ ३ ॥ द्रव्यं फलानि नैवेद्यं सदशं वसनद्वयम् । शुभमासनपट्टं

१ सम्यक्त्वेति पाठोपि । २ अवेदयदित्यर्थः । ३ तेषां वेदानामिति कथञ्चित्समर्थनीयः पाठः ।

च स्वर्णताम्रादि भाजनम् ॥ ४ ॥ वाद्यं च सधवा नार्यः पतिश्चापि समीपगः । गर्भाधानस्य संस्कारे वस्तून्येतानि कल्पयेत् ॥ ५ ॥" इत्याचार्यश्रीवर्द्धमानसूरिकृते आचारदिनकरे गृहिधर्मपूर्वायने गर्भाधानसंस्कारकीर्त्तनो नाम प्रथम उदयः ॥ १ ॥

---

## द्वितीय उदयः ।

### अथ पुंसवनसंस्कारविधिः ॥ २ ॥

गर्भादष्टमे मासे व्यतीते पूर्णेषु सर्वदोहदेषु सञ्जाते साङ्गोपाङ्गे गर्भे तच्छरीरपूर्णीभावप्रमोदरूपं स्तन्योत्पत्तिसूचकं पुंसवनकर्म कुर्यात् । तत्र नक्षत्रवारादि यथा—"मूलं पुनर्वसू पुष्यो हस्तो मृगशिरस्तथा । श्रवणः कुजगुर्वर्का वाराः पुंसवने मताः ॥ १ ॥ षष्ठे मास्यथवाष्टमे तदधिपे वीर्योपपन्ने विधौ चेष्टे दृष्टतनौ नृनामभगते पुंलग्नभागेऽपि च । धीधर्माख्यचतुष्टयेऽमरगुरौ पापैस्तु तद्वाह्यगैर्मृत्युद्वादशवर्जितैश्च मुनिभिः सीमन्तकर्म स्मृतम् ॥२॥"रिक्ता दग्धाः क्रूरा अहस्पृशः अवमाः षष्ठ्यष्टमीद्वादश्यमावास्यास्तिथीर्वर्जयित्वा गण्डान्तोपहतनक्षत्राशुभनक्षत्रवर्जिते दिने पूर्वोक्तनक्षत्रवारसहिते पत्युश्चन्द्रबले पुंसवनमारभेत । तद्यथा—गुरुः पूर्वोक्तरूपस्त-

धारिततद्वस्त्रवेषां तत्केशवेषां गुर्विणीं निशाचतु-
द्वेषः पत्यौ समीपगे असमीपगे वा गर्भाधानकर्मणोऽनन्तरं धारिततद्वस्त्रवेषां तत्केशवेषां गुर्विणीं निशाचतु-
र्थप्रहरे सतारके गगने मङ्गलगानमुखीभिः सभूषणाभिरविधवाभिरभ्यङ्गोद्वर्त्तनजलाभिषेकैः स्नपयेत् । ततश्च
जाते प्रभाते तां गुर्विणीं भव्यवस्त्रगन्धमाल्यभूषणभूषितां साक्षिणीं विधाय गृहार्हत्प्रतिमां तत्पतिना वा
तद्देवरेण वा तत्कुल्येन वा स्वयं गुरुः पञ्चामृतस्नात्रेण बृहत्स्नात्रविधिना स्नपयेत् । ततः सहस्रमूलीस्नानं
प्रतिमायाः कुर्यात् । तत्तीर्थोदकस्नात्रं च तत्सर्वं स्नात्रोदकं स्वर्णरूप्यताम्रादिभाजने निधाय शुभासने सुखो-
पविष्टां गुर्विणीं साक्षीभूतपतिदेवरादिकुलजां दक्षिणकरधृतकुशः कुशाग्रबिन्दुभिस्तेन स्नात्रोदकेन गुर्विणी-
शिरःस्तनोदराण्यभिषिञ्चन्नमुं वेदमन्त्रं पठेत्। "ॐ अर्हं नमस्तीर्थङ्करनामकर्मप्रतिबन्धसंप्राप्तसुरासुरेन्द्रपूजायार्हते
आत्मने त्वमात्मायुःकर्मबन्धप्राप्यं तं मनुष्यजन्मगर्भावासमवाप्तोऽसि, तद्भवजन्मजरामरणगर्भवासविच्छित्तये
प्राप्तार्हद्धर्मोऽर्हद्भक्तः सम्यक्त्वनिश्चलः कुलभूषणः सुखेन तव जन्मास्तु। भवतु तव त्वन्मातापित्रोः कुलस्या-
भ्युदयः, ततः शान्तिः तुष्टिर्वृद्धिः ऋद्धिः कान्तिः सनातनी अर्हं ॐ ॥" इति वेदमन्त्रमष्टवारं पठन् गुर्विणी-
मभिषिञ्चेत् । ततो गुर्विण्यासनादुत्थाय सर्वजातिफलाष्टकं स्वर्णरूप्यमुद्राष्टकं प्रणामपूर्वं जिनप्रतिमाग्रे ढौक-
येत् । ततश्च गुरुपादौ प्रणम्य वस्त्रयुग्मं स्वर्णरूप्यमुद्राष्टकं क्रमुकाष्टकं सताम्बूलं गुरवे दद्यात् । ततो धर्मागारे
साधुवन्दनं साधुभ्यो यथाशक्ति शुद्धान्नवस्त्रपात्रदानं कुलवृद्धेभ्यो नमस्कारः । इति पुंसवनसंस्कारविधिः ।
ततः स्वकुलाचारेण कुलदेवतादिपूजनम् । "पञ्चामृतस्नात्रवस्तु स्त्रीवस्त्राणि नवानि च। नवीनं वस्त्रयुग्मं

च स्वर्णमुद्राष्टकं तथा ॥ १ ॥ रूप्यमुद्राष्टकं चैव तयोरष्टाष्टकं पुनः । षोडशाख्या फलजातिः कुशास्ताम्बूलमुत्तमम् ॥ २ ॥ गन्धाः पुष्पाणि नैवेद्यं सधवागीतमङ्गलम् । वस्तु पुंसवने कार्यं संस्कारप्रगुणं परम् ॥ ३ ॥" इत्याचार्यश्रीवर्द्धमानसूरिकृते आचारदिनकरे गृहिधर्मपूर्वायने पुंसवनसंस्कारकीर्त्तनो नाम द्वितीय उदयः ॥ २ ॥

---

# तृतीय उदयः ।

## अथ जन्मसंस्कारविधिः ॥ ३ ॥

जन्मकाले पूर्णेषु मासदिनेषु गुरुर्ज्यौतिषिकसहितः सूतिकागृहासन्नगृहे एकान्ते निष्कलकले स्त्रीबालप्रमुखप्रचाररहिते सघटिकापात्रे सदावहितचेताः पञ्चपरमेष्ठिजापपरायणस्तिष्ठेत् । अत्र च दिने पूर्वं (न) तिथिवारनक्षत्रादि विलोक्यते जीवकर्मकालायत्तमेतत् । यतः—"जन्म मृत्युर्द्धनं दौस्थ्यं स्वस्वकाले प्रवर्त्तते । तदस्मिन् क्रियते हन्त चेतश्चिन्ता कथं त्वया ॥ १ ॥" उक्तं चागमे–श्रीवर्द्धमानस्वामिवाक्यम्—"समयं जम्मणकालं कालं मरणस्स कम्मइ सुरनाह । संपत्तजेण हुंती न अइसया वीअराएहिं ॥ १ ॥" अतो जाते बालके

स गुरुः समीपस्थो ज्यौतिषिकं जन्मक्षणपरिज्ञानाय निर्दिशेत्। तेनापि सम्यग् जन्मकालः करगोचरं विधायावधार्यः। ततश्च बालकपितृपितृव्यपितामहैरच्छिन्ने नाले गुरुर्ज्यौतिषिकश्च बहुभिर्वस्त्रभूषणवित्तादिभिः पूजनीयः। छिन्ने नाले सूतकं। गुरुर्बालकपितृपितामहादीनाशीर्वादयति। यथा—"ॐ अर्हं कुलं वो वर्द्धतां सन्तु शतशः पुत्रपौत्रप्रपौत्राः अक्षीणमस्त्वायुर्द्धनं यशः सुखं च अर्हं ॐ॥" इति वेदाशीः। तथा चोक्तं—"यो मेरुश्रृङ्गे त्रिदशाधिनाथैर्दैत्याधिनाथैः सपरिच्छदैश्च। कुम्भामृतैः संस्नपितः स देव आद्यो विदध्यात् कुलवर्द्धनं च॥ १॥" ज्यौतिषिकाशीर्वादो यथा—"आदित्यो रजनीपतिः क्षितिसुतः सौम्यस्तथा वाक्पतिः शुक्रः सूर्यसुतो विधुन्तुदशिखी श्रेष्ठा ग्रहाः पान्तु वः। अश्विन्यादिभमण्डलं तदपरो मेषादिराशिक्रमः कल्याणं पृथुकस्य वृद्धिमधिकां सन्तानमप्यस्य च॥ १॥" ततोऽवधारितजन्मलग्ने ज्यौतिषिके स्वगृहं गते गुरुः सूतिकर्मणे कुलवृद्धाः सूतिकाश्च निर्दिशेत्। अन्यगृहस्थित एव बालस्नपनार्थं जलमभिमन्त्र्य दद्यात्। जलाभिमन्त्रणमन्त्रो यथा—ॐ अर्हं नमोऽर्हत्सिद्धाचार्योपाध्यायसर्वसाधुभ्यः॥" "क्षीरोदनीरैः किल जन्मकाले यैर्मेरुश्रृङ्गे स्नपितो जिनेन्द्रः। स्नानोदकं तस्य भवत्विदं च शिशोर्महामङ्गलपुण्यवृद्ध्यै॥ १॥" अनेन सप्तवेलं जलमभिमन्त्रयेत्। तेन जलेन कुलवृद्धाः स्नपयन्ति बालं। नालच्छेदश्च स्वकुलाचारेण सर्वेषां। ततो गुरुः स्वस्थानस्थ एव चन्दनरक्तचन्दनविल्वकाष्टादि दग्ध्वा भस्म कुर्यात्। तद् भस्म श्वेतसर्षपलवणमिश्रितं पोट्टलिकायां बध्नीयात्।

१ पूर्वग्रापीदृशः प्रयोग आयातः सर्वत्रैव द्वितीयास्थाने चतुर्थी तृतीया वा संगता।

रक्षाभिमन्त्रणमन्त्रः—"ॐ ह्रीँ श्रीँ अंबे जगदंबे शुभे शुभङ्करे असुं बालं भूतेभ्यो रक्ष रक्ष, ग्रहेभ्यो रक्ष रक्ष, पिशाचेभ्यो रक्ष रक्ष, वेतालेभ्यो रक्ष रक्ष, शाकिनीभ्यो रक्ष रक्ष, गगनदेवीभ्यो रक्ष रक्ष, दुष्टेभ्यो रक्ष रक्ष, शत्रुभ्यो रक्ष रक्ष, कार्मणेभ्यो रक्ष रक्ष, दृष्टिदोषेभ्यो रक्ष रक्ष, जयं कुरु कुरु, विजयं कुरु कुरु, तुष्टिं कुरु कुरु, पुष्टिं कुरु कुरु, कुलवृद्धिं कुरु कुरु, ॐ ह्रीँ ॐ भगवति श्री अंबिके नमः।" अनेन सप्ताभिमन्त्रितां रक्षापोट्टलिकां कृष्णसूत्रेण बद्धा सलोहखण्डां सवरुणमूलखण्डां सरक्तचन्दनखण्डां सवराटिकां कुलवृद्धाभिः शिशुहस्ते बन्धयेत्। "सांवत्सरो घटीपात्रं चन्दनं रक्तचन्दनम्। समीपैकान्तगेहं च सिद्धार्थलवणं तथा ॥१॥ कौशेयं कृष्णसूत्रं च कपर्दी गीतमङ्गलम्। लोहरक्षा तथा वस्त्रं दक्षिणार्थं धनानि च ॥ २ ॥ स्वस्तिकाः कुलवृद्धाश्च जलं सर्वजलाशयात्। आनेयं जन्मसंस्कार एतद्वस्तु विचक्षणैः ॥ ३ ॥ इति जन्मसंस्कारविधिः। अथ कदाचिदाश्लेषाज्येष्ठामूलेषु गण्डान्ते भद्रायां शिशोर्जन्म भवति, तच्च तस्य तत्पित्रोः तस्य कुलस्य दुःखदारिद्र्यशोकमरणदम्। अतएव पिता कुलज्येष्ठश्च तद्विधाने अकृते शिशुमुखं नावलोकयेत्। तद्विधानकरणं प्रक्रमविशेषेण शान्तिकविधौ कथयिष्यते ॥ इत्याचार्यश्रीवर्द्धमानसूरिकृते आचारदिनकरे गृहिधर्मपूर्वायने जातकर्मसंस्कारकीर्त्तनो नाम तृतीय उदयः ॥ ३ ॥

---

## चतुर्थ उदयः ।

### अथ सूर्येन्दुदर्शनसंस्कारविधिः ॥ ४ ॥

यथा जन्मदिनादिनद्वये व्यतीते तृतीयेऽह्नि गुरुः समीपगृहेऽर्हदर्चनपूर्वं जिनप्रतिमाग्रतः स्वर्णताम्रमयीं रक्तचन्दनमयीं वा दिनकरप्रतिमां स्थापयेत् । तस्या अर्चनं अनन्तरोक्तशान्तिकपौष्टिकप्रतिष्ठाप्रक्रमोक्तविधिना कुर्यात् । ततश्च स्नातां सुवसनां सभूषणां शिशुमातरं करद्वयधृतशिशुं प्रत्यक्षसूर्यसंमुखं नीत्वा सूर्यवेदमन्त्रमुच्चरन् मातापुत्रयोः सूर्यं दर्शयति । सूर्यवेदमन्त्रो यथा—"ॐ अर्हं सूर्योऽसि, दिनकरोऽसि, सहस्रकिरणोऽसि, विभावसुरसि, तमोऽपहोऽसि, प्रियंकरोऽसि, शिवङ्करोऽसि, जगच्चक्षुरसि, सुरवेष्टितोऽसि, मुनिवेष्टितोऽसि, विततविमानोऽसि, तेजोमयोऽसि, अरुणसारथिरसि, मार्तण्डोऽसि, द्वादशात्मासि, चक्रबान्धवोऽसि, नमस्ते भगवन् प्रसीदास्य कुलस्य तुष्टिं पुष्टिं प्रमोदं कुरु कुरु, सन्निहितो भव अर्हं ॐ ॥ इति पठति गुरौ, सूर्यमवलोक्य माता सपुत्रा गुरुं नमस्कुर्यात् । गुरुः सपुत्रां मातरमाशीर्वादयेत् । यथा आर्या—

"सर्वसुरासुरवन्द्यः कारयिता सर्वधर्मकार्याणाम् । भूयात् त्रिजगच्चक्षुर्मङ्गलदस्ते सपुत्रायाः ॥ १ ॥"

दक्षिणा सूतके नास्ति । ततो गुरुः स्वस्थानमागत्य जिनप्रतिमां स्थापितसूर्यं च विसर्जयेत् । मातापुत्रौ सूतकभयात्तत्र नानयेत् । तस्मिन्नेव दिवसे सन्ध्याकाले गुरुर्जिनपूजापूर्वं प्रतिमाग्रतः स्फटिकरूप्यचन्दन-

मयीं चन्द्रमूर्त्तिं स्थापयेत् । अन्यत्र गृहे तं च शशिनं शान्तिकादिप्रक्रमोक्तविधिना पूजयेत् । ततश्च तथैव सूर्यदर्शनरीत्या चन्द्रोदये प्रत्यक्षचन्द्रसंमुखं मातापुत्रौ नीत्वा वेदमन्त्रमुच्चरन् तयोश्चन्द्रं दर्शयति । चन्द्रस्य वेदमन्त्रो यथा—"ॐ अर्हं चन्द्रोऽसि, निशाकरोऽसि, सुधाकरोऽसि, चन्द्रमा असि, ग्रहपतिरसि, नक्षत्रपतिरसि, कौमुदीपतिरसि, निशापतिरसि, मदनमित्रमसि, जगज्जीवनमसि, जैवातृकोऽसि, क्षीरसागरोद्भवोऽसि, श्वेतवाहनोऽसि, राजासि, राजराजोऽसि, औषधीगर्भोऽसि, वन्द्योऽसि, पूज्योऽसि, नमस्ते भगवन्! अस्य कुलस्य ऋद्धिं कुरु, वृद्धिं कुरु, तुष्टिं कुरु, पुष्टिं कुरु, जयं कुरु, विजयं कुरु, भद्रं कुरु, प्रमोदं कुरु, श्रीशशाङ्काय नमः अर्हं ॐ॥" इति पठन् मातापुत्रयोश्चन्द्रं दर्शयित्वा तिष्ठेत् । सा च सपुत्रा गुरुं नमस्कुर्यात् । गुरुराशीर्वादयति । यथा—"सर्वौषधीमिश्रमरीचिजालः सर्वापदां संहरणप्रवीणः । करोतु वृद्धिं सकलेऽपि वंशे युष्माकमिन्दुः सततं प्रसन्नः ॥ १ ॥" दक्षिणा सूतके नास्ति । ततो गुरुर्जिनप्रतिमाचन्द्रप्रतिमे विसर्जयेत् । नवरं कदाचित्तस्यां रजन्यां चतुर्दश्यमावास्यावशात्साभ्राकाशवशाद्वा चन्द्रो न दृश्यते तदापि पूजनं तस्यामेव सन्ध्यायां कार्यं । दर्शनमपरस्यामपि रात्रौ चन्द्रोदये भवतु । "सूर्याचन्द्रमसोर्मूर्त्तौ तत्पूजावस्तुसङ्गतम् । सूर्येन्दुदर्शने योग्यं संस्कारेऽत्र समाहरेत् ॥ १ ॥" इत्याचार्यश्रीवर्द्धमानसूरिकृते आचारदिनकरे गृहिधर्मपूर्वायने सूर्येन्दुदर्शनसंस्कारकीर्त्तनो नाम चतुर्थ उदयः ॥ ४ ॥

---

# पञ्चम उदयः ।

## अथ क्षीराशनसंस्कारविधिः ॥ ५ ॥

तस्मिन्नेव जन्मतस्तृतीये चन्द्रार्कदर्शनस्याह्नि शिशोः क्षीराशनं । तद्यथा गुरुः पूर्वोक्तवेषधारी तीर्थोदकैरमृतामन्त्रेणाष्टोत्तरशतवारमभिमन्त्रितैः शिशुमातुः स्तनौ चाभिषिच्य जनन्यङ्कस्थितं शिशुं स्तन्यं पाययेत् । पूर्णाङ्गनासिकासक्तं स्तनं पूर्वं पाययेत् । स्तन्यं पिबन्तं शिशुं गुरुराशीर्वादयेत् । यथा वेदमन्त्रः—"ॐ अर्हं जीवोऽसि, आत्मासि, पुरुषोऽसि, शब्दज्ञोऽसि, रूपज्ञोऽसि, रसज्ञोऽसि, गन्धज्ञोऽसि, स्पर्शज्ञोऽसि, सदाहारोऽसि, कृताहारोऽसि, अभ्यस्ताहारोऽसि, कावलिकाहारोऽसि, लोमाहारोऽसि, औदारिकशरीरोऽसि, अनेनाहारेण तवाङ्गं वर्धतां, बलं वर्द्धतां, तेजो वर्द्धतां, पाटवं वर्द्धतां, सौष्ठवं वर्द्धतां, पूर्णायुर्भव, अर्हं ॐ" इति त्रिराशीर्वादयेत् । अमृतामन्त्रः—"ॐ अमृते अमृतोद्भवे अमृतवर्षिणि अमृतं स्रावय स्रावय स्वाहा ॥" इत्याचार्यश्रीवर्द्धमानसूरिकृते आचारदिनकरे गृहिधर्मपूर्वायने क्षीराशनसंस्कारकीर्त्तनो नाम पञ्चम उदयः ॥ ५ ॥

---

## षष्ठ उदयः ।

### अथ षष्ठीसंस्कारविधिः ॥ ६ ॥

यथा षष्ठे दिने सन्ध्यासमये गुरुः प्रसूतिगृहमागत्य षष्ठीपूजनविधिमारभेत् । न सूतकं तत्र गण्यं । यत उक्तं—श्लोकः । "स्वकुले तीर्थमध्ये च तथावश्ये बलादपि । षष्ठीपूजनकाले च गणयेन्नैव सूतकम् ॥ १ ॥ इति वचनबलात्सूतिकागृहभित्तिभागभूमिभागौ सधवाहस्तैर्गोमयानुलिप्तौ कारयेत् । ततो दृश्यशुक्रबृहस्पतिवर्त्तितदिग्भित्तिभागं खटिकादिभिर्धवलयेत् । तद्भूमिभागं च चतुष्कमण्डितं कारयेत् । ततश्च धवलभित्तिभागे सधवाकरैः कुङ्कुमहिङ्गुलादिभिर्वर्णकैरष्टमातृरूर्ध्वा लेखयेत् । अष्ट चोपविष्टाः । अष्ट च प्रसुप्ताः । कुलक्रमान्तरे गुरुक्रमान्तरे षट् षट् लिख्यन्ते । ततश्च गुरुः सधवाभिर्गीतमङ्गलेषु गीयमानेषु चतुष्के शुभासने समासीनोऽनन्तरोक्तपूजाक्रमेण मातॄः पूजयेत् । नलिखवओ (?) "ॐ ह्रीँ नमो भगवति ब्रह्माणि वीणापुस्तकपद्माक्षसूत्रकरे हंसवाहने श्वेतवर्णे इह षष्ठीपूजने आगच्छ आगच्छ स्वाहा ॥ १ ॥" इति त्रिवेलं पठित्वा पुष्पेणाह्वानं । ततः—"ॐ ह्रीँ नमो भगवति ब्रह्माणि वीणापुस्तकपद्माक्षसूत्रकरे हंसवाहने श्वेतवर्णे मम सन्निहिता भव भव स्वाहा ॥" इति त्रिवेलं सन्निहितीकरणं । एवं मन्त्रपूर्वकं इह तिष्ठ तिष्ठ इति त्रिः स्थापनं ।

गन्धं गृह्ण २, पुष्पं गृह्ण २, धूपं गृह्ण २, दीपं गृह्ण २, अक्ष-
ततः गन्धपुष्पधूपदीपाक्षतनैवेद्यदानपूर्वं मन्त्रपाठपूर्वं एभिर्वस्तुभिर्भगवतीं पूजयेत् । अनयैव युक्त्या सप्तानां
तान् गृह्ण २, नैवेद्यं गृह्ण २ इत्येकैकवेलं मन्त्रपाठपूर्वं
परासां मातॄणां पूजनं । नवरं मन्त्राः—"ॐ ह्रीँ नमो भगवति माहेश्वरि शूलपिनाककपालखट्वाङ्गकरे चन्द्रार्द्ध-
ललाटे गजचर्मावृते शेषाहियद्धकाञ्चीकलापे त्रिनयने वृषभवाहने श्वेतवर्णे इह षष्ठीपूजने आगच्छ आगच्छ,
शेषं पूर्ववत् ॥ २ ॥" तथा "ॐ ह्रीँ नमो भगवति कौमारि षण्मुखि शूलशक्तिधरे वरदाभयकरे मयूरवाहने
गौरवर्णे इह षष्ठीपूजने आगच्छ आगच्छ, शेषं पूर्ववत् ॥ ३ ॥ ॐ ह्रीं नमो भगवति वैष्णवि शङ्खचक्रगदा-
शार्ङ्गखड्गकरे गरुडवाहने कृष्णवर्णे इह षष्ठीपूजने आगच्छ २, शेषं पूर्ववत् ॥ ४ ॥ ॐ ह्रीं नमो भगवति
वाराहि वराहीमुखि चक्रखड्गहस्ते शेषवाहने श्यामवर्णे इह षष्ठीपूजने आगच्छ २, शेषं पूर्ववत् ॥ ५ ॥ ॐ ह्रीं
नमो भगवति इन्द्राणि सहस्रनयने वज्रहस्ते सर्वाभरणभूषिते गजवाहने सुराङ्गनाकोटिवेष्टिते काञ्चनवर्णे
इह षष्ठीपूजने आगच्छ २, शेषं पूर्ववत् ॥ ६ ॥ ॐ ह्रीं नमो भगवति चामुण्डे शिराजालकरालशरीरे प्रकटि-
तदशने ज्वालाकुन्तले रक्तत्रिनेत्रे शूलकपालखड्गप्रेतकेशकरे प्रेतवाहने धूसरवर्णे इह षष्ठीपूजने आगच्छ २,
शेषं पूर्ववत् ॥ ७ ॥ ॐ ह्रीं नमो भगवति त्रिपुरे पद्मपुस्तकवरदाभयङ्करे सिंहवाहने श्वेतवर्णे इह षष्ठीपूजने,
आगच्छ २ शेषं पूर्ववत् ॥८॥ एतावत्पर्यन्तमधिकम् । एवं यथा ऊर्ध्वाः पूज्यन्ते, तेनैव मन्त्रार्चनप्रयोगेण निविष्टाः

1 गृहाणेत्यर्थः ।

सुप्ता अपि पूज्यन्ते त्रिवेलं। कैश्चिच्चामुण्डात्रिपुरावर्जिताः षण्मातर एव पूज्यन्ते। एता मातृः पूजयित्वा इति पठेत्—"ब्राह्म्याद्या मातरोऽप्यष्टौ स्वस्वास्त्रबलवाहनाः। षष्ठीसंपूजनात्पूर्वं कल्याणं ददतां शिशोः ॥ १ ॥" ततो मातृस्थापनाग्रभूमौ चन्दनलेपस्थापनया षष्ठीम्वारूपां स्थापयेत्। तां च दधिचन्दनाक्षतदूर्वाभिरर्चयेत्। ततश्च गुरुः पुष्पहस्तः "ॐ ऐं ह्रीं षष्ठि आम्रवनासीने कदंबवनविहारे पुत्रद्वययुते नरवाहने श्यामाङ्गि इह आगच्छ २ स्वाहा।" मातृवदस्या अपि पूजा। ततः शिशुमातृसहिताः कुलवृद्धा अविधवा मङ्गलगानपरायणाः वाद्येषु वाद्यमानेषु षष्ठीरात्रिं जाग्रति। ततः प्रातः "भगवति पुनरागमनाय स्वाहा" इति प्रत्येकं नामपूर्वं गुरुर्मातृः षष्ठीं च विसर्जयेत्। तथा—"ॐ भगवति माहेश्वरि पुनरागमनाय स्वाहा" एवं सर्वत्र। ततो गुरुः शिशुं पञ्चपरमेष्ठिमन्त्रपूतजलैरभिषिञ्चन् वेदमन्त्रेणाशीर्वादयेत्। यथा—"ॐ अर्हं जीवोऽसि, अनादिरसि, अनादिकर्मभागसि, यत्त्वया पूर्वं प्रकृतिस्थितिरसप्रदेशैराश्रववृत्त्या कर्मबद्धं तद्बन्धोदयोदीरणासत्ताभिः प्रतिभुङ्क्ष्व, माशुभकर्मोदयफलभुक्तेरुच्छेकं दध्याः, नचाशुभकर्मफलभुक्त्या विषादमाचरेः, तवास्तु संवरवृत्त्या कर्मनिर्जरा अर्हं ॐ ॥" सूतके दक्षिणा नास्ति। "चन्दनं दधि दूर्वा च साक्षतं कुङ्कुमं तथा। वर्णिका हिङ्गुलाद्याश्च पूजोपकरणानि च ॥ १ ॥ नैवेद्यं सधवा नार्यो दर्भो भूम्यनुलेपनम्। षष्ठीजागरणाख्येऽस्मिन् संस्कारे वस्तु कल्पयेत् ॥ २ ॥" इत्याचार्यश्रीवर्द्धमानसूरिकृते आचारदिनकरे गृहिधर्मपूर्वायने षष्ठीजागरणसंस्कारकीर्त्तनो नाम षष्ठ उदयः ॥ ६ ॥

---

# सप्तम उदयः।

## अथ शुचिकर्मसंस्कारविधिः॥ ७ ॥

अत्र च शुचिकर्म स्वस्ववर्णानुसारेण व्यतीतदिनेषु कार्यं। तद्यथा—“शुध्येद्विप्रो दशाहेन द्वादशाहेन बाहुजः। वैश्यस्तु षोडशाहेन शूद्रो मासेन शुध्यति॥ १॥ कारूणां सूतकं नास्ति तेषां शुद्धिर्नवापि हि। ततो गुरुकुलाचारस्तेषु प्रामाण्यमिच्छति॥ २॥” ततः कारणात्स्वस्ववर्णकुलानुसारेण दिनेषु व्यतीतेषु गुरुः सर्वमपि षोडशपुरुषयुगादर्वाक् तत्कुलजवर्गं समाह्वाययेत्। यतः सूतकं हि षोडशपुरुषयुगादर्वाक् गृह्यते। यदुक्तं—“नृषोडशकपर्यन्तं गणयेत्सूतकं सुधीः। विवाहं नानुजानीयाद्गोत्रे लक्षनृणां युगे॥ १॥” ततस्तान् गोत्रजानाह्वाय सर्वेषां साङ्गोपाङ्गं स्नानं वस्त्रक्षालनं च समादिशेत्। ते स्नाताः शुचिवसना गुरुं साक्षीकृत्य विविधपूजाभिर्जिनमर्चयन्ति। ततश्च बालकस्य मातापितरौ पञ्चगव्येनाचान्तस्नातौ सशिशू नखच्छेदं विधाप्य योजितग्रन्थी दंपती जिनप्रतिमां नमस्कुरुतः। सधवाभिर्मङ्गलेषु गीयमानेषु वाद्येषु वाद्यमानेषु सर्वेषु चैत्येषु पूजानैवेद्यढौकनं च। साधवे यथाशक्त्या चतुर्विधाहारवस्त्रपात्रदानं। संस्कारगुरवे वस्त्रतांबूलभूषणद्रव्यादिदानं। तथा जन्मचन्द्रार्कदर्शनक्षीराशनषष्ठीसत्कदक्षिणा संस्कारगुरवे तस्मिन्नहनि देया॥ सर्वेषां गोत्रजस्वजनमित्रवर्गाणां यथाशक्त्या भोजनतांबूलदानं। तथा गुरुः तत्कुलाचारानुसारेण शिशोः

पञ्चगव्यजिनस्नात्रोदकसर्वौषधिजलतीर्थजलैः स्नपितस्य वस्त्राभरणादि परिधापयेत्। तथा च नारीणां सूतकस्नानं पूर्णेष्वपि सूतकदिवसेषु नार्द्रनक्षत्रेषु नच सिंहगजयोनिनक्षत्रेषु कुर्यात्। आर्द्रनक्षत्राणि दश यथा— "कृत्तिका भरणी मूलमार्द्रा पुष्यपुनर्वसू। मघा चित्रा विशाखा च श्रवणो दशमस्तथा ॥ १॥ आर्द्रधिष्ण्यानि चैतानि स्त्रीणां स्नानं न कारयेत्। यदि स्नानं प्रकुर्वीत पुनः सूतिर्न विद्यते ॥ २॥ सिंहयोनिर्धनिष्ठा च पूर्वाभाद्रपदं तथा। भरणी रेवती चैव गजयोनिर्विचार्यते ॥ ३॥" कदाचित्पूर्णेषु सूतकदिवसेष्वेतानि नक्षत्राण्यायान्ति तदा दिनैकैकान्तरेण शुचिकर्म विधेयम्। "पूजावस्तु पञ्चगव्यं निजगोत्रोद्भवो जनः। तीर्थोदकानि संस्कारे शुचिकर्मणि निर्दिशेत् ॥ १॥" इत्याचार्यश्रीवर्द्धमानसूरिकृते आचारदिनकरे गृहिधर्मपूर्वायने शुचिसंस्कारकीर्त्तनो नाम सप्तम उदयः ॥ ७॥

---

## अष्टम उदयः।

### अथ नामकरणसंस्कारविधिः॥ ८॥

"मृदुध्रुवक्षिप्रचरेषु भेषु सूनोर्विधेयं खलु जातकर्म। गुरौ भृगौ वापि चतुष्टयस्थे सन्तः प्रशंसन्ति च नामधेयम् ॥ १॥ शुचिकर्मदिने अथवा तद्द्वितीये तृतीये वा शुभदिने शिशोश्चन्द्रबले गुरुः सज्योतिषिकस्तद्गृहे

शुभस्थाने शुभासने सुखासीनः पञ्चपरमेष्ठिमन्त्रं स्मरंस्तिष्ठेत्। तदा च शिशोः पितृपितामहाद्याः पुष्पफलपरिपूर्णकराः गुरुं सज्योतिषिकं साष्टाङ्गं प्रणिपत्य इति कथयन्ति, "भगवन्! पुत्रस्य नामकरणं क्रियतां।" ततो गुरुस्तान् कुलपुरुषान् कुलवृद्धाश्च स्त्रियः पुरो निवेश्य ज्योतिषिकं जन्मलग्नप्ररूपणाय समादिशेत्। ज्योतिषिकः शुभपट्टे खटिकया तज्जन्मलग्नमालिखेत्। स्थाने स्थाने ग्रहांश्च स्थापयेत्। ततः शिशुपितृपितामहाद्या जन्मलग्नं पूजयन्ति। तत्र स्वर्णमुद्राः १२ रूप्यमुद्राः १२ ताम्रमुद्राः १२ क्रमुकाः १२ अन्यफलजातिः १२ नालिकेलानि १२ नागवल्लीदलानि १२ एभिर्द्वादशलग्नपूजनम्। एतैरेव वस्तुभिर्नवनवप्रमाणैर्नवग्रहाणां पूजनं। एकैकवस्तुसंख्या सर्वमीलने २१। एवं पूजिते लग्ने तेषां पुरो ज्योतिषिको लग्नविचारं व्याख्याति। तैरवहितैः श्रोतव्यं। ततः सव्यावर्णनं लग्नं ज्योतिषिकः कुङ्कुमाक्षरैः पत्रे लिखित्वा तत्कुलज्येष्ठस्य समर्पयेत्। तत्पित्रादिभिर्ज्योतिषिकश्च निवापवस्त्रस्वर्णदानैः सम्माननीयः। गणकोऽपि तेषां पुरो जन्मनक्षत्रानुसारेण नामाक्षरं प्रकाश्य स्वगृहं व्रजेत्। ततो गुरुः सर्वकुलपुरुषान् कुलवृद्धा नारीश्च पुरतो निवेश्य तेषां संमतेन दूर्वाकरः परमेष्ठिमन्त्रभणनपूर्वं कुलवृद्धाकर्णे जातिकुलोचितं नाम श्रावयेत्। तदनन्तरं कुलवृद्धा नार्यो गुरुणा सह पुत्रोत्सङ्गां तन्मातरं शिबिकादिवाहनासीनां पादचारिणीं वा सहानीय अविधवाभिर्मङ्गलगीतेषु गीयमानेषु वाद्येषु वाद्यमानेषु चैत्यं प्रति प्रयान्ति। तत्र मातापुत्रौ जिनं नमस्कुरुतः। माता चतुर्विंशतिप्रमाणैः स्वर्णरूप्यमुद्राफलनालिकेरादिभिर्जिनप्रतिमाग्रे ढौकिनिकां कुर्यात्। ततश्च देवाग्रे कुलवृद्धाः शिशुनाम प्रकाशयन्ति।

चैत्याभावे गृहप्रतिमायामेवायं विधिः। ततस्तथैव रीत्या पौषधागारमागच्छेत्। तत्र प्रविश्य भोजनमण्डलीस्थाने मण्डलीपट्टं निवेश्य तत्पूजामाचरेत्। मण्डलीपूजाविधिर्यथा—शिशुजननी "श्रीगौतमाय नमः" इत्युच्चरन्ती गन्धाक्षतपुष्पधूपदीपनैवेद्यैर्मण्डलीपट्टं पूजयेत्। मण्डलीपट्टोपरि स्वर्णमुद्राः १० रूप्यमुद्राः १० क्रमुकाः १०८ नालिकेराणि २९ वस्त्रहस्तान् २९ स्थापयेत्। ततः सपुत्रा स्त्री त्रिः प्रदक्षिणीकृत्य यतिगुरुं नमस्कुर्यात्। नवभिः स्वर्णरूप्यमुद्राभिः गुरोर्नवाङ्गपूजां कुर्यात्। निरुञ्छनारात्रिके च विधाय क्षमाश्रमणपूर्वं करौ संयोज्य "वासरकेवं करेह" इति शिशुमाता कथयति। ततो यतिगुरुः वासान् ॐकार-ह्रींकार-श्रींकार-संनिवेशेन कामधेनुमुद्रया वर्द्धमानविद्यया परिजप्य मातृपुत्रयोः शिरसि क्षिपेत्। तत्रापि तयोः शिरसि—"ॐ ह्रीं श्रीं अक्षरसंनिवेशं कुर्यात्। ततो बालकस्य चन्दनेन साक्षतं तिलकं विधाय कुलवृद्धावचनानुवादेन नामस्थापनं कुर्यात्। ततस्तथैव युक्त्या सर्वैः सह स्वगृहं गच्छन्ति। यतिगुरुभ्यश्चतुर्विधाहारवस्त्रपात्रदानं गृहिगुरवे वस्त्रालङ्कारस्वर्णदानं। "नान्दी मङ्गलगीतानि गुरुर्ज्यौतिषिकान्वितः। प्रभूतफलमुद्राश्च वस्त्राणि विविधानि ह ॥ १ ॥ वासाश्च चन्दनं दूर्वा नालिकेरा धनं बहु। नामसंस्कारकार्येषु वस्तूनि परिकल्पयेत् ॥ २ ॥"

इत्याचार्यश्रीवर्द्धमानसूरिकृते आचारदिनकरे गृहिधर्मपूर्वायने नामकरणसंस्कारकीर्त्तनो नामाष्टम उदयः ॥८॥

---

# नवम उदयः ।

## अथान्नप्राशनसंस्कारविधिः ॥ ९ ॥

"रेवती श्रवणो हस्तो मृगशीर्षं पुनर्वसू । अनुराधाश्विनी चित्रा रोहिणी चोत्तरात्रयम् ॥ १ ॥ धनिष्ठा च तथा पुष्यो निर्दोषर्क्षेष्वमीषु च । रवीन्दुबुधशुक्रेषु गुरौ वारेषु वै नृणाम् ॥ २ ॥ नवान्नप्राशनं श्रेष्ठं शिशूनामन्नभोजनम् । रिक्तादिकाश्च कुतिथीर्दुर्योगांश्चैव वर्जयेत् ॥ ३ ॥ षष्ठे मासे प्राशनं दारकाणां कन्यानां तत्पञ्चमे सद्भिरुक्तम् । प्रोक्ते धिष्ण्ये वासरे सद्ग्रहाणां दर्शं रिक्तां वर्जयित्वा तिथिं च ॥ ४ ॥ रवौ लग्ने कुष्ठी धरणितनये पित्तगदभाक् शनौ[1] वातव्याधिः कृशशशिनि भिक्षाटनरतः । बुधे ज्ञानी भोगी ह्युशनसि चिरायुः सुरगुरौ विधौ पूर्णे यज्वा भवति च नरः सत्रद इह ॥ ५ ॥ कण्टकान्त्यधनिनस्त्रिकोणगास्तत्फलं ददाति यस्तनावमी । षष्ठ इन्दुरशुभस्तथाष्टमः केन्द्रकोणगत एनिरन्नहृत् ॥ ६ ॥" ततः षष्ठे मासे बालस्य पञ्चमे मासे बालिकायाः पूर्वोक्तनक्षत्रतिथिवारयोगेषु शिशोश्चन्द्रबले अन्नप्राशनमारभेत । तद्यथा—गुरुः उक्तवेषधारी तद्गृहे गत्वा सर्वाणि देशोत्पन्नान्यन्नानि समाहरेत् । देशोत्पन्नानि नगरप्राप्याणि फलानि च षड् विकृतीः प्रगुणीकुर्यात् । ततः सर्वेषामन्नानां सर्वेषां शाकानां सर्वासां विकृतीनां घृततैलेक्षुरसगोरसजलपाकैर्बहून्

---

१ पे॰लि॰ शनि॰ । क्रूरग्रहोपलक्षणमेतत् ।

परःशतान् पृथक्प्रकारान् कारयेत् । ततोऽर्हत्प्रतिमाया बृहत्स्नात्रविधिना पञ्चामृतस्नात्रं कृत्वा पृथक्पात्रे स्थापयेत्। अन्नशाकविकृतिपाकान् जिनप्रतिमाग्रतो नैवेद्यमन्त्रेण अर्हत्कल्पोक्तेन ढौकयेत्। फलान्यपि सर्वाणि ढौकयेत् । ततः शिशोः अर्हत्स्नात्रोदकं पाययेत् । पुनरपि तानि सर्वाणि वस्तूनि जिनप्रतिमानैवेद्योद्धरितानि अमृतश्रवमन्त्रेण सूरिमन्त्रमध्यगेन श्रीगौतमप्रतिमाग्रे ढौकयेत् । तत उद्धरितानि कुलदेवतामन्त्रेण तद्देवीमन्त्रेण गोत्रदेवीप्रतिमाग्रे ढौकयेत् । तत् कुलदेवीनैवेद्याद्योग्याहारं मङ्गलेषु गीयमानेषु माता सुतमुखे दद्यात् । गुरुश्चासुं वेदमन्त्रं पठेत्, "ॐ अर्हं भगवान्नर्हन् त्रिलोकनाथः स्त्रिलोकपूजितः सुधाधारधारितशरीरोऽपि कावलिकाहारमाहारितवान् पश्यन्नपि पारणाविधाविक्षुरसपरमान्नभोजनात्परमानन्ददायकं बलं। तद्देहिन्नौदारिकशरीरमासस्त्वमप्याहारय आहारं तत्ते दीर्घमायुरारोग्यमस्तु अर्हं ॐ" इति मन्त्रं त्रिः पठेत् । ततः साधुभ्यः षड्विकृतिभिः षड्रसैराहारदानं यतिगुरोर्मण्डलीपट्टोपरि परमान्नपूरितसुवर्णपात्रदानं गृह्यगुरवे द्रोणमात्रं सर्वान्नदानं तुलामात्रं सर्वं घृततैललवणादिदानं प्रत्येकमष्टोत्तरशतमितं सर्वफलदानं ताम्रचरुकांस्यस्थालवस्त्रयुग्मदानं । "सर्वान्नफलभेदाश्च सर्वा विकृतयस्तथा । स्वर्णरूप्यताम्रकांस्यपात्राण्येकत्र कल्पयेत् ॥ १ ॥" इत्याचार्यश्रीवर्द्धमानसूरिकृते आचारदिनकरे गृहिधर्मपूर्वायने अन्नप्राशनसंस्कारकीर्त्तनो नाम नवम उदयः ॥ ९ ॥

# दशम उदयः ।

## अथ कर्णवेधसंस्कारविधिः ॥ १० ॥

“उत्तरात्रितयं हस्तो रोहिणी रेवती श्रुतिः । पुनर्वसू मृगशिरः पुष्यो धिष्ण्यानि तत्र च ॥ १ ॥ पौष्णवै-
ष्णवकराश्विनिचित्रा पुष्यवासवपुनर्वसुमित्रैः । सैन्दवैः श्रवणवेधविधानं निर्दिशन्ति मुनयो हि शिशू-
नाम् ॥ २ ॥ लाभे तृतीये च शुभैः समेते क्रूरैर्विहीने शुभराशिलग्ने । वेध्यौ तु कर्णौ त्रिदशेज्यलग्ने तिष्येन्दु-
चित्राहरिपौष्णभेषु ॥ ३ ॥ कुजशुक्रार्कजीवेषु वारेषु तिथिसौष्ठवे । शुभयोगे कनीशिश्वोः कर्णवेधो विधी-
यते ॥ ४ ॥” एतेषु निर्दोषवर्षमासतिथिवारर्क्षेषु शिशो[1] रविचन्द्रबले कर्णवेधमारभेत । उक्तं च—“गर्भाधाने
पुंसवने जन्मन्यर्केन्दुदर्शने । क्षीराशने तथा षष्ठ्यां शुचौ नामकृतावपि ॥ १ ॥ तथान्नप्राशने मृत्यौ संस्कारेष्वे-
ष्ववश्यतः । शुद्धिर्वर्षस्य मासस्य न गवेष्या विचक्षणैः ॥ २ ॥ कर्णवेधादिकेष्वन्यसंस्कारेषु विवाहवत् । शुद्धिं
वत्सरमासर्क्षदिनानामवलोकयेत् ॥ ३ ॥” यथा तृतीये पञ्चमे सप्तमे वर्षे निर्दोषे शिशोरादित्यबलशालिनि
मासे गुरुः शुभे दिने शिशुं शिशुमातरं च अमृतामन्त्राभिमन्त्रितजलैर्मङ्गलगानमुखाविधवाकरैः स्नपयेत् ।
तत्र च कुलाचारसंपदतिरेकविशेषेण सतैलनिषेकं त्रिपञ्चसप्तनवैकादशदिनानि स्नानं । तद्गृहे पौष्टिकाधिका-

१ “शिशोश्चन्द्रबले” इत्यपि पाठः ।

रप्रोक्तं पौष्टिकं सर्वं विधेयं। षष्ठीवर्जितं मातृकाष्टकपूजनं पूर्ववद्विधेयं। ततः स्वकुलानुसारेण अन्यग्रामे कुलदेवतास्थाने पर्वते नदीतीरे गृहे वा कर्णवेध आरभ्यते। तत्र मोदकनैवेद्यकरणगीतगानमङ्गलाचारप्रभृति स्वस्वकुलागतरीत्या करणीयं। ततः बालं सुखासने पूर्वाभिमुखमुपवेशयेत्। तस्य कर्णवेधं विदध्यात्। तत्र गुरुरमुं वेदमन्त्रं पठेत्। यथा—"ॐ अर्हं श्रुतेनाङ्गैरुपाङ्गैः कालिकैरुरुकालिकैः पूर्वगतैश्चूलिकाभिः परिकर्मभिः सूत्रैः पूर्वानुयोगैः छन्दोभिर्लक्षणैर्निरुक्तैर्धर्मशास्त्रैर्विद्धकर्णौ भूयात् अर्हं ॐ॥ शूद्रादेस्तु "ॐ अर्हं तव श्रुतिद्वयं हृदयं धर्माविद्धमस्तु।" इत्येव वाच्यं। ततो बालं यानस्थं नरनार्युत्सङ्गस्थं वा धर्मागारं नयेत्। तत्र मण्डलीपूजां पूर्वोक्तविधिना विधाय शिशुं यतिगुरुपादाग्रे लोटयेत्। यतिगुरुर्विधिना वासक्षेपं कुर्यात्। ततो बालं तद्गृहं नीत्वा गृह्यगुरुः कर्णाभरणे परिधापयेत्। यतिगुरुभ्यश्चतुर्विधाहारवस्त्रपात्रदानं गृह्यगुरवे वस्त्रस्वर्णदानं च। "पौष्टिकस्योपकरणं मातृपूजाकुलोचितम्। अन्यद्वस्तु कर्णवेधे योजनीयं महात्मभिः॥ १॥" इत्याचार्यश्रीवर्द्धमानसूरिकृते आचारदिनकरे गृहिधर्मपूर्वायने कर्णवेधसंस्कारकीर्त्तनो नाम दशम उदयः॥ १०॥

---

## एकादश उदयः।

### अथ चूडाकरणसंस्कारविधिः॥ ११॥

"हस्तत्रये मृगज्येष्ठे पौष्णादित्यश्रुतिद्वये। एकद्वित्रिपञ्चसप्तत्रयोदशदशस्वपि॥ १॥ एकादशाख्यतिथिषु

शुक्रसोमबुधेष्वपि । क्षुरकर्म विधेयं स्यात्सद्बले चन्द्रतारयोः ॥२॥ न पर्वसु न यात्रायां न च स्नानात्परात्परम् । न भूषितानां नो सन्ध्यात्रितये निशि नैव च ॥ ३ ॥ न सङ्ग्रामे नाशने वा नोक्तान्यतिथिवारयोः । नान्यत्र मङ्गले कार्ये क्षुरकर्म विधीयते ॥ ४ ॥ क्षौरर्क्षेषु स्वकुलविधिना चौलमाहुर्मुनीन्द्राः केन्द्रायातैर्गुरुभृगुबुधैस्तत्र सूर्ये ज्वरश्च । शस्त्राद्नाशो धरणितनये पङ्गुता चार्कपुत्रे शीतज्योतिष्वपचिततनौ निश्चितं नाश एव ॥ ५ ॥ षष्ठ्यष्टम्यौ चतुर्थीं च सिनीवालीं चतुर्दशीम् । नवमीं चार्कमन्दारान् क्षुरकर्मणि वर्जयेत् ॥ ६ ॥ धनव्ययत्रिकोणगैरसद्ग्रहैर्मृतावपि । क्षुरक्रिया न शोभना शुभेषु पुष्टिकारिणी ॥ ७ ॥" ततो बालकस्यादित्यबलयुते मासे चन्द्रताराबलयुते दिने उक्तेषु तिथिवारर्क्षेषु कुलाचारानुसारेण कुलदेवतारूपे अन्यग्रामे वने पर्वते वा गृहे वा पूर्वं शास्त्रोक्तरीत्या पौष्टिकं विदध्यात् । ततो मातृपूजा पूर्ववदेव षष्ठीपूजावर्जितं ( सर्वं ) । ततः कुलाचारानुसारेण नैवेद्यदेवपक्वान्नादिकरणं । ततो बालं गृह्य गुरुः सुस्नातं आसने निवेश्य बृहत्स्नात्रविधिकृतेन जिनस्नात्रोदकेन शान्तिदेवीमन्त्रेणाभिषिञ्चेत् । ततः कुलक्रमागतनापितकरेण मुण्डनं कारयेत् । शिरोमध्यभागे शिखां स्थापयेत् वर्णत्रयस्य । शूद्रस्य पुनः सर्वमुण्डनमेव चूडाकरणे क्रियमाणे अमुं वेदमन्त्रं पठेत् । यथा—"ॐ अर्हं ध्रुवमायुर्ध्रुवमारोग्यं ध्रुवाः श्रियो ध्रुवं कुलं ध्रुवं यशो ध्रुवं तेजो ध्रुवं कर्म ध्रुवा च कुलसन्ततिरस्तु अर्हं ॐ ।" इति सप्तवेलं पठन् शिशुं तीर्थोदकैरभिषिञ्चेत् । गीतवाद्यादि सर्वत्र योज्यं । ततो बालकं पञ्चपरमेष्ठिपठनपूर्वं आसनादुत्थाप्य स्नापयेत् । चन्दनादिभिरनुलेपयेत् । शुभ्रवासांसि परिधापयेत् । भूषणैर्भूषयेत् । ततो

धर्मागारं नयेत् । ततः पूर्वरीत्या मण्डलीपूजागुरुवन्दनावासक्षेपादि । ततः साधुभ्यो वस्त्रान्नपात्रदानं षड्विकृतिदानं च । गृह्यगुरवे वस्त्रस्वर्णदानं । नापिताय वस्त्रकङ्कणदानं—"पौष्टिकस्योपकरणं मातॄणां पूजनस्य च । मुण्डने योजनीयं स्यान्नैवेद्यं च कुलोचितम् ॥ १ ॥" इत्याचार्यश्रीवर्द्धमानसूरिकृते आचारदिनकरे गृहिधर्मपूर्वायने चूडाकरणसंस्कारकीर्त्तनो नाम एकादश उदयः ॥ ११ ॥

---

## द्वादश उदयः ।

### अथोपनयनसंस्कारविधिः ॥ १२ ॥

तत्रोपनयनं नाम मनुष्याणां वर्णक्रमप्रवेशाय संस्कारो हि वेषमुद्रोद्वहनेन स्वस्वगुरूपदिष्टे धर्ममार्गे निवेशयति । यदुक्तमागमे—"धम्मायारे चरिए वेसो सवत्थकारणं पढमं । संजमलज्जाहेऊ सड्ढाणं तह य साहूणं ॥ १ ॥" तथा च श्रीधर्मदासगणिपादैरुपदेशमालायामप्युक्तं । यथा—"धम्मं रक्खइ वेसो संकइ वेसेण दिक्खिओमि अहं । उम्मग्गे जेण पडंतं रक्खइ राआ जणवउव्व ॥ १ ॥" तथा च इक्ष्वाकुवंश्यनारदवंश्यप्राच्योदीच्यवंश्यानां जैनब्राह्मणानामुपनयनं जिनोपवीतधारणं च । तथा क्षत्रियवंशोत्पन्नानां जिनचक्रिबलदेववासुदेवानां श्रेयांसदशार्णभद्रप्रभृतीनां नृपाणामपि हरिवंशेक्ष्वाकुवंशविद्याधरवंशसंभवानामप्युप-

नयन–जिनोपवीतधारणविधिः। यत उक्तमागमे—"देवाणुप्पिआ न एअं भूयं न एअं भव्वं जन्नं अरिहंता वा चक्कवट्टी वा बलदेवा वा वासुदेवा वा अंतकुलेसु वा पंतकुलेसु वा किविणकुलेसु वा तुच्छकुलेसु वा दरिद्दकुलेसु वा भिक्खागकुलेसु वा माहणकुलेसु वा नायंति वा नाअस्संति वा एवं खलु अरहंता वा चक्कवट्टी वा बलदेवा वा वासुदेवा वा उग्गकुलेसु वा भोगकुलेसु वा राअन्नकुलेसु वा खत्तियकुलेसु वा इक्खागकुलेसु वा हरिवंसकुलेसु वा अन्नअरेसु वा तहप्पगारेसु विसुद्धजायकुलवंसेसु वा आयाअंसु वा आअंति वा आअस्संति वा अत्थिकिरए से विभावे लोगत्थेरएभूए अणंताहिं ओसप्पिणीहिं अवसप्पिणीहिं वियक्कंताहिं नामगुत्तस्स वा कम्मस्स अक्खीणस्स अवेइस्स अनिज्जिन्नस्स उदयणं समुपज्जइ, अन्नं अरहंता वा चक्कवट्टी वा बलदेवा वा वासुदेवा वा अंतकुलेसु वा पंतकुलेसु वा किविणकुलेसु वा तुच्छकुलेसु वा दरिद्दकुलेसु वा भिक्खागकुलेसु वा माहणकुलेसु वा आयंसु वा 'आयंति वा आयंस्संति वा नो चेवणं जोणीजम्मणनिक्खमणेणं निक्खमिंसु वा निक्खमंति वा निक्खमस्संति वा तं जीअमे अंतीअपच्चुपन्नमणागयाणं देविंदाणं देवराईणं जन्नं अरहंते भगवंते तहप्पगारेहिंतो अंतकुलेहिंतो पंतकुलेहिंतो तुच्छदरिद्दकिविणभिक्खागमाहणकुलेहिंतो तहप्पगारेसु उग्गभोगरायन्नखत्तियइक्खागहरिवंसकुलेसु साहराविताए॥" ततश्च वैश्यानां कार्त्तिकश्रेष्ठिकामदेवादीनामप्युपनयनजिनोपवीतधारणं। शूद्राणामप्यानन्दादीनामुत्तरीयधारणं शेषाणां वणिगादीनां उत्तरासङ्गानुज्ञा । जिनोपवीतं हि भगवतो जिनस्य गार्हस्थ्यमुद्रा

यतीनां हि निर्ग्रन्थानां सर्वबाह्याभ्यन्तरकर्मविमुक्तानां नवब्रह्मगुप्तिगुप्ता ज्ञानदर्शनचारित्ररत्नमयी हृद्गतैव। सद्भावनाभाविता हि सर्वदा मुनयो न बहिः सूत्ररूपां नवब्रह्मगुप्तियुतां रत्नमयीं वहन्ति तन्मयत्वात्। न समुद्रो जलपात्रं करे करोति। न सूर्यो दीपं बिभर्त्ति। यत उक्तं—"अग्नौ देवोऽस्ति विप्राणां हृदि देवोऽस्ति योगिनाम्। प्रतिमास्वल्पबुद्धीनां सर्वत्र विदितात्मनाम्॥ १॥" अतः शिखासूत्रविवर्जिता यतयः ब्रह्मगुप्तिरत्नत्रयकरणकारणानुमतिषु सदैवादृताः। गृहिणः पुनर्ब्रह्मगुप्तिरत्नत्रये लेशश्रवणस्मरणमात्रधृते ब्रह्मगुप्ती रत्नत्रयं च सूत्रमुद्रया हृदि वहन्ति। "प्रतिमास्वल्पबुद्धीनां" इति वचनाद् अतदात्मकत्वे मुद्राधारणं। यथा छद्मस्थस्य बाह्याभ्यन्तरतपःकर्म तथा नवतन्तुगर्भत्रिसूत्रमयमेकमग्रम्। एवमग्रत्रयं विप्रस्य, अग्रद्वयं क्षत्रियस्य, अग्रमेकं वैश्यस्य, उत्तरीयकं शूद्रस्य, उत्तरासङ्गानुज्ञा परेषां। कथमीदृशो विशेषः? तदुच्यते, ब्राह्मणैर्नवब्रह्मगुप्तियुतं ज्ञानदर्शनचारित्ररूपं रत्नत्रयं स्वयं करणीयं परैः कारणीयं परेषामनुज्ञातव्यं च ब्रह्मगुप्तिगुप्ता इति ब्राह्मणाः स्वयं रत्नत्रयीमध्ययनसम्यग्दर्शनचारित्रक्रियाभिराचरन्ति। परैरध्यापनसम्यक्त्वोपदेशाचारप्ररूपणैः कारयन्ति। परांश्च ज्ञानोपासनसम्यग्दर्शनधर्मोपासनाभिः श्रद्दधानान् अनुज्ञां याचमानान् अनुजानन्ति। अतो नवब्रह्मगुप्तिगर्भरत्नरत्नत्रयकरणकारणानुमतिभाजां ब्राह्मणानां जिनोपवीतेऽग्रत्रयं, क्षत्रियाणां च रत्नत्रयस्य स्वयमाचरणे निजशक्त्या नयप्रवृत्त्या परैरत्नत्रयस्याचरणकारणं न तेषामनुज्ञादानं युज्यते। ते हि प्रभुत्वशालिनो न परेषु नियमाद्यनुजानन्ति। अतः क्षत्रियाणां जिनोपवीतं द्व्यग्रं। वैश्यैर्ज्ञा-

नभक्त्या सम्यक्त्वधृत्या उपासकाचारशक्त्या स्वयमाचरणीयं तेषामसामर्थ्याद् अनुपदेशकत्वात् च रत्नत्रयस्य कारणानुज्ञे न युक्ते अतो वैश्यानां जिनोपवीतमेकाग्रं । शूद्राणां हि ज्ञानदर्शनचारित्ररूपस्य रत्नत्रयस्य स्वयं करणेऽप्यशक्तिः कारणानुमती आस्तां, तेषामधमजातित्वान्निःसत्वत्वाद् अज्ञानत्वाच्च, अतस्तेषां जिनाज्ञाभूतस्योत्तरीयस्य धारणं । तदपराणां वणिगादीनां देवगुरुधर्मोपासनवेलायां जिनाज्ञारूपा उत्तरासङ्गमुद्रा । जिनोपवीतरूपं यथा स्तनान्तरमात्रं चतुरशीतिगुणमेकं सूत्रं तत् त्रिगुणं कार्यं ततोऽपि त्रिगुणं वर्त्तनीयम्, एतावता एकस्तन्तुः तथैव रीत्या एतादृशं पूर्वोक्तं तत् द्वयं अन्ययोजनीयं एतावतैकमग्रं । तत्र ब्राह्मणक्षत्रियवैश्यानां त्रयं द्वयमेकं योज्यं । परेषां मते इत्युक्तं—"कृते स्वर्णमयं सूत्रं त्रेतायां रौप्यमेव च । द्वापरे ताम्रसूत्रं च कलौ कार्पासमिष्यते ॥ १ ॥" जिनमते तु सौवर्णं सूत्रं सर्वदा ब्राह्मणानामेव क्षत्रियवैश्यानां सदा कार्पाससूत्रमेव । इति जिनोपवीतयुक्तिः ॥ ॥ अथोपनयनविधिरुच्यते । उपनीयते वर्णक्रमारोहयुक्तया प्राणी पुष्टिं नीयते इत्युपनयनं—"श्रवणश्च धनिष्ठा च हस्तो मृगशिरस्तथा । अश्विनी रेवती स्वातिश्चित्रा चैव पुनर्वसू ॥ १ ॥ तथा च—सौम्ये पौष्णे वैष्णवे वासवाख्ये हस्तस्वातीत्वाष्ट्रपुष्याश्विनीषु । ऋक्षेऽदित्यां मेखलाबन्धमोक्षौ संस्मर्यंते नूनमाचार्यवर्यैः ॥ २ ॥ गर्भाधानादष्टमे जन्मतो वा मौञ्जीबन्धः शस्यते ब्राह्मणानाम् । राजन्यानां नूनमेकादशाब्दे वैश्यानां च द्वादशे वेदविद्भिः ॥ ३ ॥ वर्णाधिपे बलोपेते

१ अनेन कर्मणेति शेषः ।

उपनीतिक्रिया हिता । सर्वेषा वा गुरौ चन्द्रे सूर्ये च बलशालिनि ॥ ४ ॥ शाखाधिपे बलिनि केन्द्रगतेऽथवास्मिन् वारेऽस्य चोपनयनं गदितं द्विजानाम् । नीचस्थितेऽरिगृहगे च पराजिते स्यात् जीवे भृगौ श्रुतिविधिः स्मृतिकर्महीना ॥ ५ ॥ लग्ने जीवे भार्गवे च त्रिकोणे शुक्रांशस्थे स्याद्विधौ वेदवेदां (?) । सौरांशस्थे सूरिलग्ने सशुक्रे विद्याशीलः प्रोज्झितः स्यात्कृतघ्नः ॥ ६ ॥ स्वानुष्ठाने रतः स्यात्प्रवरमतियुतः केन्द्रसंस्थे सुरेज्ये विद्यासौख्यार्थयुक्तो ह्युशनसि शशिजेऽध्यापकश्च प्रदिष्टः । सूर्ये राजोपसेवी भवति धरणिजे शस्त्रवृत्तिर्द्विजन्मा शीतांशौ वैश्यवृत्तिर्दिनकरतनये सेवकश्चान्त्यजानाम् ॥ ७ ॥ शन्यंशे ह्युदयति मूर्खतार्कभागे क्रूरत्वं भवति च पापधीः कुजांशे । चन्द्रांशे त्वतिजडिमा बुधे पटुत्वं यज्ञत्वं गुरुभृगुभागयोर्गृणन्ति ॥ ८ ॥ सार्के जीवे निर्गुणोऽर्थेन हीनः क्रूरस्सारे स्यात्पटुः सत्समेते । भानोः पुत्रेणालसो निर्गुणश्च स्याच्छुक्रेन्दू जीववत्सप्रकल्पौ ॥ ९ ॥ निर्दोषेष्वेषु धिष्ण्येषु वारेष्वपि कुजं विना । सुतिथौ दिनशुद्धौ च दिवा लग्ने शुभग्रहे ॥१०॥ विवाहवत्त्याज्यमृक्षदिनमासादि वर्जयेत् । पञ्चमे ग्रहनिर्मुक्ते लग्नेऽस्मिन् व्रतमाचरेत् ॥ ११ ॥" पूर्वं यथासंपत्त्या उपनेयपुरुषस्य सप्ताहं नवाहं वा पञ्चाहं त्र्यहं वा सतैलनिषेकं स्नानं कारयेत् । ततो लग्नदिने गृह्यगुरुस्तद्गृहे ब्राह्मे मुहूर्ते पौष्टिकं कुर्यात् । तदनन्तरमुपनेयशिरसि शिखावर्जितं केशवपनं कारयेत् । ततो वेदीस्थापनं तन्मध्ये वेदीचतुष्किका कार्या । वेदिप्रतिष्ठा विवाहाधिकाराद्वसेया । तत्र वेदिचतुष्किकायां समवसरणरूपं चतुर्मुखं जिनबिंबं निवेशयेत् तमभ्यर्च्य गुरुः उपनेयं सदशश्वेतनिवसन-

परिधानं कृतवस्त्रोत्तरासङ्गं अक्षतनालिकेरक्रमुकहस्तं त्रिः प्रदक्षिणां कारयेत् । ततो गुरुरुपनेयं वामपार्श्वे संस्थाप्य पश्चिमाभिमुखबिंबसम्मुखमुपविश्य शक्रस्तवं प्रथमार्हत्स्तोत्रयुक्तं पठेत् । पुनस्त्रिः प्रदक्षिणीकृत्य उत्तराभिमुखो जिनबिंबाभिमुखस्तथैव शक्रस्तवं पठेत् । एवं त्रिः प्रदक्षिणान्तरितं पूर्वाभिमुखदक्षिणाभिमुखजिनबिंबेऽपि शक्रस्तवं पठेत् । मङ्गलगीतवादित्रादि तत्र बहु विस्तारणीयं । ततस्तत्राचार्योपाध्याय-साधुसाध्वीश्रावकश्राविकारूपं श्रीश्रमणसङ्घं सङ्घट्टयेत् । ततः प्रदक्षिणाशक्रस्तवपाठादनन्तरं गृह्यगुरुरुपनयनप्रारंभहेतुं वेदमुच्चरेत् । उपनेयस्तु दूर्वाफलपरिपूर्णकर ऊर्ध्वस्थितो जिनाग्रे कृताञ्जलिः शृणुयात्। उपनयनारंभवेदमन्त्रो यथा—"ॐ अर्हं अर्हद्भ्यो नमः, दर्शनाय नमः, चारित्राय नमः, संयमाय नमः, सत्याय नमः, शौचाय नमः, ब्रह्मचर्याय नमः, आकिञ्चन्याय नमः, तपसे नमः, शमाय नमः, मार्दवाय नमः, आर्जवाय नमः, मुक्तये नमः, धर्माय नमः, सङ्घाय नमः, सैद्धांतिकेभ्यो नमः, धर्मोपदेशकेभ्यो नमः, वादिलब्धिभ्यो नमः, अष्टाङ्गनिमित्तज्ञेभ्यो नमः, तपस्विभ्यो नमः, विद्याधरेभ्यो नमः, इह लोकसिद्धेभ्यो नमः, कविभ्यो नमः, लब्धिमद्भ्यो नमः, ब्रह्मचारिभ्यो नमः, निष्परिग्रहेभ्यो नमः, दयालुभ्यो नमः, सत्यवादिभ्यो नमः, निःस्पृहेभ्यो नमः, एतेभ्यो नमस्कृत्यायं प्राणी प्राप्तमनुष्यजन्मा प्रविशति वर्णक्रमं अर्हं ॐ ॥" इति वेदोच्चारं विधाय पुनरपि पूर्ववत् त्रिः प्रदक्षिणीकृत्य चतुर्दिक्षु शक्रस्तवपाठं सयुगादिदेवस्तवं कुर्यात् । तद्दिने उपनेयस्य जलयवान्नभोजनेनाचाम्लप्रत्याख्यानं कारयेत्। ततश्च उपनेयं वामपार्श्वे संस्थाप्य सर्वतीर्थोदकैः अमृता-

मन्त्रेण कुशाग्रैरभिषिञ्चेत् । ततः परमेष्ठिमन्त्रं पठित्वा "नमोऽर्हत्सिद्धाचार्योपाध्यायसर्वसाधुभ्यः" इति कथयित्वा जिनप्रतिमाग्रे पूर्वाभिमुखमुपनेयं निवेशयेत्। ततो गृह्यगुरुश्चन्दनमन्त्रेणाभिमन्त्रयेत् । चन्दनमन्त्रो यथा —"ॐ नमो भगवते, चन्द्रप्रभजिनेन्द्राय, शशाङ्कहारगोक्षीरधवलाय, अनन्तगुणाय, निर्मलगुणाय, भव्यजनप्रबोधनाय, अष्टकर्ममूलप्रकृतिसंशोधनाय, केवलालोकविलोकितसकललोकाय, जन्मजरामरणविनाशकाय, सुमङ्गलाय, कृतमङ्गलाय, प्रसीद भगवन् इह चन्दननामामृताश्रवणं कुरु कुरु स्वाहा ।" अनेन मन्त्रेण चन्दनमभिमन्त्र्य हृदि जिनोपवीतरूपां, कटौ मेखलारूपां, ललाटे तिलकरूपां रेखां कुर्यात् । तत उपनेयो गुरोः पादयोः "नमोऽस्तु" २ इति भणन्निपत्य ऊर्ध्वीभूतः कृताञ्जलिरिति वदेत्—"भगवन् ! वर्णरहितोऽस्मि, आचाररहितोऽस्मि, मन्त्ररहितोऽस्मि, गुणरहितोऽस्मि, धर्मरहितोऽस्मि, शौचरहितोऽस्मि, ब्रह्मरहितोऽस्मि । देवर्षिपित्रातिथिकर्मसु नियोजय मां । पुनः "नमोऽस्तु" २ वदन् गुरोः पादयोः निपतति । गुरुरपि इति मन्त्रं पठन् उपनेयं शिखायां धृत्वा ऊर्ध्वं कुर्यात्–"ॐ अर्हं देहिन्निमग्नोऽसि भवार्णवे तत्कर्षति त्वां भगवतोऽर्हतः प्रवचनैकदेशरज्जुना गुरुस्तदुत्तिष्ठ प्रवचनादादाय श्रद्धाहि अर्हं ॐ ।" इति उपनेयमुत्थाप्य अर्हतः प्रतिमापुरः पूर्वाभिमुखमूर्ध्वीकुर्यात् । ततो गृह्यगुरुः त्रितन्तुवर्त्तितां एकाशीतिकरप्रमाणां मुञ्जमेखलां स्वकरद्वये निधाय अमुं वेदमन्त्रं पठेत्—"ॐ अर्हं आत्मन् देहिन् ज्ञानावरणेन बद्धोऽसि, दर्शनावरणेन बद्धोऽसि, वेदनीयेन बद्धोऽसि, मोहनीयेन बद्धोऽसि, आयुषा बद्धोऽसि, नाम्ना बद्धोऽसि, गोत्रेण बद्धोऽसि, अन्तरायेण

यद्धोऽसि, कर्माष्टकप्रकृतिस्थितिरसप्रदेशैर्बद्धोऽसि, तन्मोचयति त्वां भगवतोऽर्हतः प्रवचनचेतना, तद् बुध्यस्व,
मा मुहः, मुच्यतां तव कर्मबन्धनमनेन मेखलाबन्धेन अर्हं ॐ।" इति पठित्वा उपनेयस्य कटौ नवगुणां मेखलां
यध्नीयात्। तत उपनेयः "ॐ नमोऽस्तु" २ इति कथयन् गृह्यगुरोः पादयोर्निपतति। मेखलाया एकाशीति-
हस्तत्वं विप्रस्यैकाशीतितन्तुगर्भजिनोपवीतसूचनाय, क्षत्रियस्य चतुःपञ्चाशत्करत्वात्तावत्तन्तुगर्भजिनोपवीत-
सूचनाय। नवगुणबन्धना विप्रस्य, षड्गुणबन्धना क्षत्रियस्य, त्रिगुणबन्धना वैश्यस्य तथा। मौञ्जीकौपीनजि-
नोपवीतानां पूजनं, गीतादिमङ्गलं, निशाजागरणं तत्पूर्वदिनस्य निशि कार्यं। ततः पुनर्गृह्यगुरुः उपनेयवित-
स्तिपृथुलं त्रिवितस्तिदीर्घं कौपीनं करद्वये निधाय—"ॐ अर्हं आत्मन् देहिन् मतिज्ञानावरणेन, श्रुतज्ञानाव-
रणेन, अवधिज्ञानावरणेन, मनःपर्यायावरणेन, केवलज्ञानावरणेन, इन्द्रियावरणेन, चित्तावरणेन आवृतोऽसि
तन्मुच्यतां तवावरणमनेनाचरणेन अर्हं ॐ॥" इति वेदमन्त्रं पठन् उपनेयस्य अन्तः कक्षं कौपीनं परिधाप-
येत्। तत उपनेयो "नमोऽस्तु" २ वदन् पुनरपि गृह्यगुरोः पादयोर्निपतेत्। ततस्त्रिस्त्रिः प्रदक्षिणीकृत्य चतु-
र्दिक्षु शक्रस्तवपाठः। ततो लग्नवेलायां जातायां गुरुः पूर्वोक्तं जिनोपवीतं स्वकरे निदध्यात्। तत उपनेयः
पुनरूर्ध्वं स्थितः करौ संयोज्य इति वदेत्—"भगवन् वर्णोज्झितोऽस्मि, ज्ञानोज्झितोऽस्मि, क्रियोज्झितो-
ऽस्मि, तज्जिनोपवीतदानेन मां वर्णज्ञानक्रियासु समारोपय" इत्युक्त्वा "नमोऽस्तु" २ कथयन् गृह्यगुरुपाद-
योर्निपतेत्। गुरुः पुनः पूर्वेणोत्थापनमन्त्रेण तमुत्थाप्योर्ध्वीकुर्यात्। ततो गुरुर्दक्षिणकरतलधृतजिनोपवीतः

"ॐ अर्हं नवब्रह्मगुप्तीः स्वकरणकारणानुमतीर्धारयेस्तदनन्तरमक्षय्यमस्तु ते व्रतं स्वपरतरणतारणसमर्थो भव अर्हं ॐ ।" क्षत्रियस्य पुनः—"करणकारणाभ्यां धारयेः स्वस्य तरणसमर्थो भव ।" वैश्यस्य पुनः—"करणेन धारयेः स्वस्य तरणसमर्थो भव ।" शेषं पूर्ववत् । इति वेदमन्त्रेण पञ्चपरमेष्ठिमन्त्रं भणन् उपनेयस्य कण्ठे जिनोपवीतं स्थापयेत् । तत उपनेयस्त्रिः प्रदक्षिणीकृत्य "नमोस्तु २" कथयन् गुरुं प्रणमति । गुरुरपि निस्तारपारगो भवेत्याशीर्वादयेत् । ततो गृह्यगुरुः पूर्वाभिमुखो जिनप्रतिमाग्रे शिष्यं वामपार्श्वे निवेश्य सर्वजगत्सारं महागमक्षीरोदधिनवनीतं सर्ववाञ्छितदायकं कल्पद्रुकामधेनुचिन्तामणितिरस्कारहेतुं निमेषमात्रस्मरणप्रदत्तमोक्षं पञ्चपरमेष्ठिमन्त्रं गन्धपुष्पपूजिते दक्षिणकर्णे त्रिः श्रावयेत् । ततस्त्रिस्तन्मुखेनैनमुच्चारयेत् । यथा—"नमो अरिहंताणं नमो सिद्धाणं नमो आयरियाणं नमो उवज्झायाणं नमो लोएसव्वसाहूणं ।" तस्य मन्त्रप्रभावं श्रावयेत् । तद्यथा—"सोलससु अक्खरेसु इक्किक्कं अक्खरं जगुज्जोअं । भवसयसहस्समहणो जम्मिठिओ पंचनवकारो ॥ १ ॥ थंभेइ जलं जलणं चिंतिअमित्तोअ पंचनवकारो । अरिमारिचोरराउलघोरुवसग्गं पणासेई ॥२॥ एकत्र पञ्चगुरुमन्त्रपदाक्षराणि विश्वत्रयं पुनरनन्तगुणं परत्र । यो धारयेत्किल कुलानुगतं ततोऽपि वन्दे महागुरुतरं परमेष्ठिमन्त्रम् ॥ ३ ॥ ये केचनापि सुषमाद्यरका अनन्ता उत्सर्पिणीप्रभृतयः प्रययुर्विवर्त्ताः । तेष्वप्ययं परतरः प्रथितः पुरापि लब्ध्वैनमेव हि गताः शिवमत्र लोकाः ॥ ४ ॥ जग्मुर्जिनास्तदपवर्गपदं यदैव विश्वं वराकमिदमत्र कथं विनाऽस्मात् । एतद्विलोक्य भुवनोद्धरणाय धीरैर्मन्त्रात्मकं निजवपुर्निहितं तदात्र ॥ ५ ॥

इन्दुर्दिवाकरतया रविरिन्दुरूपः पातालमंवरमिला सुरलोक एव । किं जल्पितेन बहुधा भुवनत्रयेऽपि तन्नास्ति यन्न विषमं च समं च तस्मात् ॥ ६ ॥ सिद्धान्तोदधिनिर्मन्थान्नवनीतमिवोद्धृतम् । परमेष्ठिमहामन्त्रं धारयेद् हृदि सर्वदा ॥ ७ ॥ सर्वपातकहर्त्तारं सर्ववाञ्छितदायकम् । मोक्षारोहणसोपानं मन्त्रं प्राप्नोति पुण्यवान् ॥८॥ धार्योऽयं भवता यत्नात् न देयो यस्य कस्यचित् । अज्ञानेषु श्रावितोऽयं शपत्येव न संशयः ॥ ९ ॥ न सत्त्व्योऽपवित्रेण न शठेनान्यसंश्रयैः । नाविनीतेन नो दीर्घशब्देनापि कदाचन ॥ १० ॥ न बालानां नाशुचीनां नाधर्माणां न दुर्दृशाम् । नापूतानां न दुष्टानां दुर्जातीनां न कुत्रचित् ॥ ११ ॥ अनेन मन्त्रराजेन भूयास्त्वं विश्वपूजितः । प्राणान्तेऽपि परित्यागमस्य कुर्यान्न कुत्रचित् ॥ १२ ॥ गुरुत्यागे भवेद्दुःखं मन्त्रत्यागे दरिद्रता । गुरुमन्त्रपरित्यागे सिद्धोऽपि नरकं व्रजेत् ॥ १३ ॥ इति ज्ञात्वा सुगृहीतं कुर्यान्मन्त्रममुं सदा । सेत्स्यन्ति सर्वकार्याणि तवास्मान्मन्त्रतो ध्रुवम् ॥ १४ ॥" गुरुणेति शिक्षित उपनीतस्त्रिः प्रदक्षिणीकृत्य "नमोऽस्तु" २ इति कथयन् गुरुं नमस्कुर्यात् । गुरवे स्वर्णजिनोपवीतं शुभ्रकौशेयनिवसनं स्वर्णमौञ्जीं च यथासंपत्त्या दद्यात् । सर्वस्यापि सङ्घस्य तांबूलवस्त्रदानम् ॥ इति उपनयने व्रतबन्धविधिः ॥ ॥ अथ व्रतादेशविधिः । तस्मिन्नेव क्षणे तस्मिन्नेव सङ्घसङ्गमे तस्मिन्नेव गीतवाद्याद्युत्सवे तस्मिन्नेव वेदिचतुष्किकाप्रतिस्थापनसंयोगे व्रतादेशमारभेत । तस्य चायं क्रमः—गृह्यगुरुः उपनीतपुरुषस्य कार्पासकौशेयानि अन्तरीयोत्तरीयान्यपनीय मौञ्जीकौपीनोपवी-

1 'जातरूपं' इत्यपि पाठः ।

तादीनि तद्देहे तथैव संस्थाप्य तदुपरि कृष्णसाराजिनं वा वृक्षवल्कलं वस्त्रं वा परिधापयेत् । तत्करे च पालाशदण्डं दद्यात् । इति मन्त्रं च पठेत्—"ॐ अर्हं ब्रह्मचार्यसि, ब्रह्मचारिवेषोऽसि, अवधिब्रह्मचर्योऽसि, धृतब्रह्मचर्योऽसि, धृताजिनदण्डोऽसि, बुद्धोऽसि, प्रबुद्धोऽसि, धृतसम्यक्त्वोऽसि, दृढसम्यक्त्वोऽसि, पुमानसि, सर्वपूज्योऽसि, तदवधि ब्रह्मव्रतं आगुरुनिर्देशं धारयेः अर्हं ॐ ।" इति पठित्वा व्याघ्रचर्ममये आसने कल्पितकाष्ठमयासने वा उपनीतं निवेशयेत् । तस्य दक्षिणकरप्रदेशिन्यां सदर्भां काञ्चनमयीं पञ्चगुञ्जामितषोडशमाषकतुलितां पवित्रिकां मुद्रिकां परिधापयेत् । पवित्रिकापरिधापनमन्त्रो यथा—"पवित्रं दुर्लभं लोके सुरासुरनृवल्लभम् । सुवर्णं हन्ति पापानि मालिन्यं च न संशयः ॥ १ ॥" तत उपनीतश्चतुर्दिक्षु मुखेन पञ्चपरमेष्ठिमन्त्रं पठन् गन्धपुष्पाक्षतधूपदीपनैवेद्यैर्जिनप्रतिमां पूजयेत् । ततो जिनप्रतिमां प्रदक्षिणीकृत्य गुरुं च प्रदक्षिणीकृत्य 'नमोऽस्तु २' भणन् योजितकर इति वदति, "भगवन् ! उपनीतोऽहं," गुरुः कथयति, "सुष्ठूपनीतो भव" पुनरुपनीतो 'नमोऽस्तु २' वदन् प्रणम्य वदति, "कृतो मे व्रतबन्धः" गुरुः कथयति, "सुकृतोऽस्तु" पुनः 'नमोऽस्तु' २ इति वदन् प्रणम्य शिष्यः कथयति, "भगवन् जातो मे व्रतबन्धः" गुरुः कथयति, 'सुजातोऽस्तु' पुनर्नमस्कृत्य शिष्यः कथयति, "जातोऽहं ब्राह्मणः क्षत्रियो वा वैश्यो वा?" गुरुः कथयति, "दृढव्रतो भव, दृढसम्यक्त्वो भव।" पुनः शिष्यो नमस्कृत्य कथयति, "भगवन्, यदि त्वया ब्राह्मणोऽहं तदादिश कृत्यं।" गुरुः कथयति, "अर्हद्गिरा आदिशामि।" पुनर्नमस्कृत्य शिष्यः कथयति, "ब्रह्मन्,

नवब्रह्मगुप्तिगर्भं रत्नत्रयं समादिश।" गुरुः कथयति, "आदिशामि।" पुनः शिष्यः कथयति, "नवब्रह्मगुप्तिगर्भं
रत्नत्रयं ममादिष्टं ?" गुरुः कथयति, 'आदिष्टं' । पुनर्न० मम समादिष्टं । गुरुः कथयति, 'समादिष्टं' ।
पुनः शिष्यः कथयति नव० 'अनुजानीहि' गुरुः कथयति, 'अनुजानामि' पुनः नव० 'ममानुज्ञातं' गुरुः कथयति,
'अनुज्ञातं' । पुनर्न० नव० 'मया स्वयं करणीयं' । गुरुः कथयति, 'करणीयं' पुनर्न० नव० 'मया अन्यैः कारयि-
तव्यं' । गुरुः कथयति, 'कारयितव्यं'। पुनर्न० नव० 'कुर्वन्तोऽन्ये मया अनुज्ञातव्याः' । गुरुः कथयति, 'अनुज्ञा-
तव्याः' । क्षत्रियस्येदमन्तरं, "भगवन्, अहं क्षत्रियो जातः । आदेशसमादेशौ कथनीयौ अनुज्ञा न कथ-
नीया । करणकारणे न कर्त्तव्ये कारयितव्यमिति कथनीयं । वैश्यस्य आदेश एव कथनीयः न समादेशानुज्ञे ।
कर्त्तव्यमेव कथनीयं न कारयितव्यानुज्ञातव्ये । तत उपनीतो योजितकरः कथयति, "भगवन् आदिश्यतां
व्रतादेशः" । गुरुरादिशति, ब्राह्मणं प्रति व्रतादेशो यथा—"परमेष्ठिमहामन्त्रो विधेयो हृदये सदा । निर्ग्र-
न्थानां मुनीन्द्राणां कार्यं नित्यमुपासनम् ॥ १ ॥ त्रिकालमर्हत्पूजा च सामायिकमपि त्रिधा । शक्रस्तवैः सस-
वेलं वन्दनीया जिनोत्तमाः ॥ २ ॥ त्रिकालमेककालं वा स्नानं पूतजलैरपि । मद्यं मांसं तथा क्षौद्रं तथोदुंबर-
पञ्चकम् ॥ ३ ॥ आमगोरससंपृक्तं द्विदलं पुष्पितौदनम् । सन्धानमपि संसक्तं तथा वै निशिभोजनम् ॥ ४ ॥
शूद्रान्नं नैव नैवेद्यं नाश्नीयान्मरणेऽपि हि । प्रजार्थं गृहवासेऽपि संभोगो न तु कामतः ॥ ५ ॥ आर्यवेदचतुष्कं
च पठनीयं यथाविधि । कर्षणं पाशुपाल्यं च सेवावृत्तिं विवर्जयेत् ॥ ६ ॥ सत्यं वचः प्राणिरक्षामन्यस्त्रीधन-

वर्जनम् । कषायविषयत्यागं विदध्याः शोकभागपि ॥ ७ ॥ प्रायः क्षत्रियवैश्यानां न भोक्तव्यं गृहे त्वया । ब्राह्मणानामार्हतानां भोजनं युज्यते गृहे ॥ ८ ॥ स्वज्ञातेरपि मिथ्यात्ववासितस्य विलासिनः । न भोक्तव्यं गृहे प्रायः स्वयंपाकेन भोजनम् ॥ ९ ॥ आमान्नमपि नीचानां न ग्राह्यं दानमञ्जसा । भ्रमता नगरे प्रायः कायस्पर्शो न केनचित् ॥ १० ॥ उपवीतं स्वर्णमुद्रां नान्तरीयमपि त्यजेः । कारणान्तरमुत्सृज्य नोष्णीषं शिरसि व्यधाः ॥ ११ ॥ धर्मोपदेशः प्रायेण दातव्यः सर्वदेहिनाम् । व्रतारोपं परित्यज्य संस्कारान् गृहमेधिनाम् ॥ १२ ॥ निर्ग्रन्थगुर्वनुज्ञातः कुर्यात्पञ्चदशापि हि । शान्तिकं पौष्टिकं चैव प्रतिष्ठामर्हदादिषु ॥ १३ ॥ निर्ग्रन्थानुज्ञया कुर्यात्प्रत्याख्यानं च कारयेः । धार्यं च दृढसम्यक्त्वं मिथ्याशास्त्रं विवर्जयेत् ॥ १४ ॥ नानार्यदेशे गन्तव्यं त्रिशुद्ध्या शौचमाचरेः । पालनीयस्त्वया वत्स व्रतादेशो भवावधिः ॥ १५ ॥" इति ब्राह्मणव्रतादेशः ॥

अथ क्षत्रियव्रतादेशः । "परमेष्ठिमहामन्त्रः स्मरणीयो निरन्तरम् । शक्रस्तवैस्त्रिकालं च वन्दनीया जिनेश्वराः ॥ १ ॥ मद्यं मांसं मधु तथा सन्धानोदुंबरादि च । निशि भोजनमेतानि वर्जयेदतियत्नतः ॥ २ ॥ दुष्टनिग्रहयुद्धादि वर्जयित्वा च योगिनाम् । न विधेयः स्थूलमृषावादस्त्यक्तव्य एव च ॥ ३ ॥ परनारीं परधनं त्यजेदन्यविकत्थनम् । युक्त्या साधूपासनं च द्वादशव्रतपालनम् ॥ ४ ॥ विक्रमस्याविरोधेन विधेयं जिनपूजनम् । धारणं च प्रयत्नेन सोपवीतान्तरीययोः ॥ ५ ॥ लिङ्गिनामन्यविप्राणामन्यदेवालयेष्वपि । प्रणामदानपूजादि विधेयं व्यवहारतः ॥ ६ ॥ सांसारिकं सर्वकर्म धर्मकर्मापि कारयेत् । जैनविप्रैश्च निर्ग्रन्थैर्दृढसम्यक्त्ववासनः

॥ ७ ॥ रणे शत्रुसमाकीर्णे धार्यो वीर्यरसो हृदि । युद्धे मृत्युभयं नैव विधेयं सर्वथापि हि ॥ ८ ॥ गोब्राह्म-
णार्थे देवार्थे गुरुमित्रार्थ एव च । स्वदेशभङ्गे युद्धेऽत्र सोढव्यो मृत्युरप्यलम् ॥ ९ ॥ ब्राह्मणक्षात्त्रयोर्नैव क्रिया-
भेदोऽस्ति कश्चन । विहायान्यव्रतानुज्ञाविद्यावृत्तिप्रतिग्रहान् ॥ १० ॥ दुष्टनिग्रहणं युक्तं लोभं भूमिप्रता-
पयोः । ब्राह्मणव्यतिरिक्तं च क्षत्रियो दानमाचरेत् ॥ ११ ॥" इति क्षत्रियव्रतादेशः ॥ ॥ अथ वैश्यव्रतादेशः—
"त्रिकालमर्हत्पूजा च ससवेलं जिनस्तवः । परमेष्ठिस्मृतिश्चैव निर्ग्रन्थगुरुसेवनम् ॥ १ ॥ आवश्यकं द्विकालं
च द्वादशव्रतपालनम् । तपोविधिर्गृहस्थार्हो धर्मश्रवणमुत्तमम् ॥ २ ॥ परनिन्दावर्जनं च सर्वत्राप्युचितक्रमः ।
वाणिज्यपाशुपाल्याभ्यां कर्षणेनोपजीवनम् ॥ ३ ॥ सम्यक्त्वस्यापरित्यागः प्राणनाशेऽपि सर्वथा । दानं
मुनिभ्य आहारपात्राच्छादनसद्मनाम् ॥ ४ ॥ कर्मादानविनिर्मुक्तं[1] वाणिज्यं सर्वमुत्तमम् । उपनीतेन वैश्येन
कर्तव्यमिति यत्नतः ॥ ५ ॥" इति वैश्यव्रतादेशः ॥ ॥ अथ चातुर्वर्ण्यस्य समानो व्रतादेशः—"निजपूज्यगुरु-
प्रोक्तं देवधर्मादिपालनम् । देवार्चनं साधुपूजा प्रणामो विप्रलिङ्गिषु ॥ १ ॥ धनार्जनं च न्यायेन परनिन्दावि-
वर्जनम् । अवर्णवादो न क्वापि राजादिषु विशेषतः ॥ २ ॥ स्वसत्त्वस्यापरित्यागो दानं वित्तानुसारतः । आ-
योचितो व्ययश्चैव यथाकाले च भोजनम् ॥ ३ ॥ न वासोऽल्पजले देशे नदीगुरुविवर्जिते । न विश्वासो

1 यत्कर्मबन्धने निमित्तं न भवति तादृशं वाणिज्यं सर्वमेवोत्तममिति तात्पर्यम्, वस्तुतस्तु तादृशं तन्न संभवतीति धर्मशास्त्रनियममनुरुध्य सर्वविधं तदुत्तममिति तदाकूतम् ।

नरेन्द्राणां नागनीचनियोगिनाम् ॥ ४ ॥ नारीणां च नदीनां च लोभिनां पूर्ववैरिणाम् । कार्यं विना स्थावराणां अहिंसा देहिनामपि ॥ ५ ॥ नासत्याहितवाक् चैवं विवादो गुरुभिर्न च । मातापित्रोर्गुरोश्चैव माननं परतत्त्ववान् ॥ ६ ॥ शुभशास्त्राकर्णनं च तथा नाभक्ष्यभक्षणम् । अत्याज्यानां न च त्यागोऽप्यघात्यानामघातनम् ॥ ७ ॥ अतिथौ च तथा पात्रे दीने दानं यथाविधि । दरिद्राणां तथान्धानामापद्धारभृतामपि ॥ ८ ॥ हीनाङ्गानां विकलानां नोपहासः कदाचन । समुत्पन्नक्षुत्पिपासाघृणाक्रोधादिगोपनम् ॥ ९ ॥ अरिषड्वर्गविजयः पक्षपातो गुणेषु च । देशाचाराचरणं च भयं पापापवादयोः ॥ १० ॥ उद्वाहः सदृशाचारैः[1] समजात्यन्यगोत्रजैः । त्रिवर्गसाधनं नित्यमन्योन्याप्रतिबन्धतः ॥ ११ ॥ परिज्ञानं स्वपरयोर्देशकालादिचिन्तनम् । सौजन्यं दीर्घदर्शित्वं कृतज्ञत्वं सलज्जता ॥ १२ ॥ परोपकारकरणं परपीडनवर्जनम् । पराक्रमः परिभवे सर्वत्र क्षान्तिरन्यदा ॥ १३ ॥ जलाशयश्मशानानां तथा दैवतसद्मनाम् । निद्राहाररतादीनां सन्ध्यासु परिवर्जनम् ॥ १४ ॥ प्रदेशोल्लङ्घनं चैव तटे शयनमेव च । कूपस्य वर्जनं नद्या लङ्घनं तरणीं विना ॥ १५ ॥ गुर्वासनादिशय्यासु तालवृन्ते कुभूमिषु । दुर्गोष्ठीषु कुकार्येषु सदैवासनवर्जनम् ॥ १६ ॥ न लङ्घनं च गर्त्तादेर्न दुष्टस्वामिसेवनम् । न चतुर्थीन्दुनग्नस्त्रीशक्रचापविलोकनम् ॥ १७ ॥ हस्त्यश्वनखिनां चापवादिनां[2] दूरवर्जनम् । दिवा

१ जात्या ब्राह्मणत्वादिना समेन गोत्रेण काश्यपादिना भिन्नेन सदृशाचारेण वरेणाधिवाहस्त्रिवर्गसाधनमन्यादृशस्स काममात्रफलकत्वात्सभ्यसमागम. ।
२ ''श्वापदादीनां'' इत्यपि पाठः ।

देशकालविरुद्धं च
संभोगकरणं धृक्षस्योपासनं निशि ॥ १८ ॥ कलहे तत्समीपं च वर्जनीयं निरन्तरम् । देशकालविरुद्धं च
भोज्यकृत्यं गमागमौ ॥ १९ ॥ भाषितं व्यय आयश्च कर्त्तव्यानि न कर्हिचित् । चातुर्वर्ण्यस्य सर्वत्र व्रतादे-
शोऽयमुत्तमः ॥ २० ॥ इति चातुर्वर्ण्यस्य समानो व्रतादेशः । गृह्यगुरुरिति शिष्यस्य व्रतादेशं विधाय पुरतः
गत्वा जिनप्रतिमां प्रदक्षिणयेत् । पुनः पूर्वाभिमुखः शक्रस्तवं पठेत् । ततो गृह्यगुरुः आसने निविशेत् ।
शिष्यः नमोऽस्तु भणन् गुरोः पादयोर्निपत्य इति वदेत्, "भगवन् भवद्भिर्मम व्रतादेशो दत्तः । गुरुः कथ-
यति, दत्तः सुगृहीतोऽस्तु सुरक्षितोऽस्तु स्वयं तर परान् तारय संसारसागरात् ।" इत्युक्त्वा नमस्कारभणन-
पूर्वकमुत्थाय द्वाभ्यामपि चैत्यवन्दनं कार्यं। ततो ब्राह्मणेन क्षत्रियवैश्यगृहेषु भिक्षाटनं कार्यं । क्षत्रियेणशास्त्र-
ग्रहः कार्यः । वैश्येनान्नदानं विधेयम् । इत्युपनयने व्रतादेशः ॥ ॥ अथ व्रतविसर्गः कथ्यते । ब्राह्मणेन वर्षा-
ष्टकादारभ्य दण्डाजिनभृता भिक्षाभोजिना षोडशाब्दीं यावदट्यते अयमुत्तमः पक्षः । क्षत्रियेण दण्डाजि-
नभृता वर्षदशकादारभ्य षोडशाब्दीं यावत् स्वयं पाकभोजिना गुरुदेवसेवापरायणेनाट्यते । वैश्येन दण्डा-
जिनभृता स्वकृतपाकभोजिना द्वादशाब्दादारभ्य षोडशाब्दीं यावत् अट्यते अयमुत्तमः पक्षः । तथा चेत्का-
र्यव्यग्रतया तावन्ति दिनानि स्थातुं न शक्यन्ते तदा षण्मासीं यावत् स्थेयं । तदभावे मासं तदभावे पक्षं
तदभावे दिनत्रयं तदभावे दिन एव व्रतविसर्गः । स कथ्यते—उपनीतस्त्रिः प्रदक्षिणीकृत्य चतुर्दिक्षु जिनप्र-

१ प्रदक्षिणा कारयेत् ।

तिमाग्रतः पूर्ववच्छक्रस्तवं पठेत् सयुगादिजिनस्तोत्रम् । तत आसनस्थस्य गुरोः पुरो नमस्कृत्य योजितकरो वदेत्—"भगवन्! देशकालाद्यपेक्षया व्रतविसर्गमादिश ।" गुरुः कथयति, "आदिशामि ।" पुनः प्रणम्य शिष्यः कथयति, "भगवन् मम व्रतविसर्ग आदिष्टः" गुरुः कथयति, 'आदिष्टः' पुनर्नमस्कृत्य शिष्यः कथयति, "भगवन् व्रतबन्धो विसृष्टः ।" गुरुः कथयति, "जिनोपवीतधारणेन अविसृष्टोऽस्तु स्वजन्मनः षोडशाब्दीं ब्रह्मचारी पाठधर्मनिरतस्तिष्ठेः ।" ततः पञ्च परमेष्ठिमन्त्रं भणन् पूर्वं शिष्यो मौञ्जीकौपीनवल्कलदण्डानपनीय गुर्वग्रे स्थापयेत् । स्वयं जिनोपवीतधारी श्वेतनिवसनोत्तरीयो भूत्वा गुर्वग्रे प्रणम्योपविशेत् । ततो गुरुः तस्य द्वादशतिलकभृतः पुरः उपनयनव्याख्यानं कुर्यात् । तद्यथा—"अष्टवर्षं ब्राह्मणमुपनयेत् दशवर्षं क्षत्रियं द्वादशवर्षं वैश्यं, तत्र गर्भमासा अप्यन्तर्भवन्ति । तथा च जिनोपवीतमिति, जिनस्य उपवीतं मुद्रासूत्रमित्यर्थः । नव ब्रह्मगुप्तिगर्भं रत्नत्रयमेतत् पुरा श्रीयुगादिदेवेन वर्णत्रयस्य गार्हस्थ्यभृतः स्वमुद्राधारणमाभवादुपदिष्टं । ततस्तीर्थव्यवच्छेदे माहनैर्मिथ्यात्वमुपगतैर्वेदचतुष्के हिंसाप्ररूपणेन मिथ्यापथं नीते पर्वतवसुराजाभ्यां यज्ञमार्गे प्रवर्त्तिते यज्ञोपवीतमिति नाम धृतं । प्रलपन्तु मिथ्यादृशो यथेष्टं । जिनमते जिनोपवीतमेवैतत्त्वया सुधारितं कार्यं । मासे मासे नव्यं परिधेयं । प्रमादाज्जिनोपवीते त्यक्ते त्रुटिते वा उपवासत्रयं विधाय नवीनं धार्यं । प्रेतक्रियायां दक्षिणस्कन्धोपरि वामकक्षाधो विपरीतं धार्यं । यतो विपरीतं कर्म तत् । मुनयोऽपि मृतमुनिपरित्यागे तथाविधं विपरीतमेव वस्त्रं परिदधाति । तत्त्वं पुरा जन्मना शूद्रोऽभूः

क्षतात् त्राणेन क्षत्रं वा न्यायधर्मोपदेशात्, वैश्यो वा जातो-
सांप्रतं संस्कारविशेषेण ब्रह्मगुप्तिधारणाद्ब्राह्मणः, क्षतात् त्राणेन क्षत्रं वा न्यायधर्मोपदेशात्, वैश्यो वा जातो-
ऽसि । तत्सक्रियमेतज्जिनोपवीतं सुगृहीतं कुर्याः सुरक्षितं कुर्याः । अस्तु ते क्षयरहितः सद्धर्मवासन उपन-
यनविधिः ।” इति व्याख्याय परमेष्ठिमन्त्रं भणित्वा द्वावप्युत्तिष्ठतः । चैत्यवन्दनं साधुवन्दनं च । इति उपनयने
व्रतविसर्गविधिः ॥ ॥ अथ गोदानविधिः । यथा, तदा व्रतविसर्गानन्तरं गुरुः सशिष्यस्त्रिस्त्रिर्जिनं प्रदक्षि-
णीकृत्य पूर्ववच्चतुर्दिक्षु शक्रस्तवपाठं कुर्यात् । ततो गृह्यगुरुः आसने उपविशेत् । ततः शिष्यो गुरुं त्रिः प्रद-
क्षिणीकृत्य नमस्कृत्य योजितकरः ऊर्ध्वस्थितो गुरुं विज्ञपयेत् । यथा, भगवन् तारितोऽहं निस्तारितोऽहं
उत्तमः कृतोऽहं, सत्तमः कृतोऽहं, पूतः कृतोऽहं, तद् भगवन्नादिश प्रमादबहुले गृहस्थधर्मे मम किञ्चनापि
रहस्यभूतं सुकृतं ।” ततो गुरुर्भणति, “वत्स! सुष्ठ्वनुष्ठितं सुष्ठु पृष्टं तत् श्रूयतां—“दानं हि परमो धर्मो
दानं हि परमा क्रिया । दानं हि परमो मार्गस्तस्माद्दाने मनः कुरु ॥ १ ॥ दया स्यादभयं दानं उपकारस्त-
थाविधः । सर्वो हि धर्मसङ्घातो दानेऽन्तर्भावमर्हति ॥ २ ॥ ब्रह्मचारी च पाठेन भिक्षुश्चैव समाधिना । वान-
प्रस्थस्तु कष्टेन गृही दानेन शुध्यति ॥ ३ ॥ ज्ञानिनः परमार्थज्ञा अर्हन्तो जगदीश्वराः । व्रतकाले प्रयच्छन्ति
दानं सांवत्सरं च ते ॥ ४ ॥ गृह्णतां प्रीणनं सम्यग् ददतां पुण्यमक्षयम् । दानतुल्यस्ततो लोके मोक्षोपायो-
ऽस्ति नापरः ॥ ५ ॥” तत् त्वं वत्स! ब्राह्मण्यं क्षत्रत्वं वैश्यत्वं वा प्रपन्नोऽसि गृहस्थधर्मस्य मोक्षसोपानरूपं
दानधर्मप्रारंभं कुरु ।” ततः प्रणम्य शिष्यः कथयति, “भगवन्नादिश मे दानविधिं ।” गुरुः कथयति, ‘आदि-

शामि' । यथा—"गावो भूमिः सुवर्णं च रत्नानि पञ्च नक्तकाः । गजाश्वा इति दानं तदष्टधा परिकीर्त्तयेत् ॥ १ ॥ एतच्चाष्टविधं दानं विप्राणां गृहमेधिनाम् । देयं, न चापि यतयो गृह्णन्त्येतच्च निःस्पृहाः ॥ २ ॥ यतिभ्यो भोजनं वस्त्रं पात्रमौषधपुस्तके । दातव्यं द्रव्यदानेन तौ द्वौ नरकगामिनौ ॥ ३ ॥" ततः पूर्वं गोदानं, उपनीतो धेनुं सवत्सां कपिलां पाटलां तदभावे श्वेतां वा स्नपितचर्चितभूषितां पुरः समानीय पुच्छे धृत्वा रूप्यखुरां स्वर्णशृङ्गीं ताम्रपृष्ठां कांस्यमयदोहनपात्रां गुरवे दद्यात् । गुरुस्तत्पुच्छं करे धृत्वा इति वेदमन्त्रं पठेत् । यथा—"ॐ अर्हं गौरियं, धेनुरियं, प्रशस्यपशुरियं, सर्वोत्तमक्षीरदधिघृतेयं, पवित्रगोमयमूत्रेयं, सुधास्राविणीयं, रसोद्भाविनीयं, पूज्येयं, हृद्येयं, अभिवाद्येयं, तद्दत्तेयं त्वया धेनुः, कृतपुण्यो भव प्राप्तपुण्यो भव, अक्षय्यं दानमस्तु अर्हं ॐ ।" इत्युक्त्वा गृह्यगुरुर्धेनुं गृह्णीयात् । शिष्यः तया सह द्रोणमात्राणि सप्त धान्यानि तुलामात्रान् षड्रसान् नरतृप्तिमात्राः सप्त विकृतीर्दद्यात् इति गोदानं । अन्येषु सर्वेषु भूमिरत्नादिदानेषु मन्त्रो यथा—"ॐ अर्हं एकमस्ति, दशकमस्ति, शतमस्ति, सहस्रमस्ति, अयुतमस्ति, लक्षमस्ति, प्रयुतमस्ति, कोट्यस्ति कोटिदशकमस्ति कोटिशतमस्ति, कोटिसहस्रमस्ति, कोट्ययुतमस्ति, कोटिलक्षमस्ति, कोटिप्रयुतमस्ति, कोटाकोटिरस्ति, सङ्ख्येयमस्ति, असङ्ख्येयमस्ति, अनन्तमस्ति अनन्तानन्तमस्ति, दानफलमस्ति, तदक्षय्यं दानमस्तु ते अर्हं ॐ ।" इति परेषां दानानां मन्त्रपाठः । अत्रोपनयने गोदानस्यैव निश्चयः । शेषाणि दानानि क्रमेणान्यदापि दीयन्तां । गोदानादि गृह्यगुरुविप्रेभ्य एव देयं न यतिषु निःस्पृहेषु । यतिभ्योऽन्नपानवस्त्रपात्रभे-

धर्मलाभ एव मन्त्रः, न तेभ्यो द्रव्यापेक्षिदानं केवलमसङ्गत्वात् परिग्रहव्या-
पजवसतिपुस्तकादिदाने धर्मलाभ एव मन्त्रः, न तेभ्यो द्रव्यापेक्षिदानं विधाप्य तथैव सङ्घे
गृत्तेः। अथ गृह्यगुरुरुपनीताद्गोदानं गृहीत्वा वर्णानुज्ञां दत्वा चैत्यवन्दनं साधुवन्दनं विधाप्य तथैव सङ्घे
मिलिते मङ्गलगीतवाद्येषु प्रसरत्सु शिष्यं साधुवसतिं नयेत् । तत्र पूर्ववत् मण्डलीपूजा वासःक्षेपः साधुव-
न्दनं। ततश्चतुर्विधसङ्घस्य पूजा मुनिभ्यो वस्त्रान्नपात्रादिदानं इति गोदानविधिः । संपूर्णोऽयं चतुर्विध उप-
नयनविधिः॥ ॥ अथ शूद्रस्योत्तरीयकन्यासविधिः। सप्ताहं तैलनिषेकस्नानं पूर्ववत्। तदनन्तरं पौष्टिकं यथा-
विधि सर्वशीर्षमुण्डनं वेदिकरणं चतुष्किकाकरणं जिनप्रतिमास्थापनं पूर्ववत्। ततो गृह्यगुरुर्जिनस्याष्टप्रकारां
पूजां कुर्यात्। चतुर्दिक्षु शक्रस्तवपाठश्च। ततो गुरुरासने उपविशेत्। शिष्यः समवसरणं गुरुं च प्रदक्षिणी-
कृत्य परिधृतश्वेतनिवसनोत्तरासङ्गो 'नमोऽस्तु' २ कथयन् गुरुं प्रणम्य योजितकर ऊर्ध्वीभूय विज्ञपयेत्—
"भगवन् प्राप्तमनुष्यजन्मार्यदेशार्यकुलस्य मम बोधिरूपां जिनाज्ञां देहि।" गुरुः कथयति, 'ददामि।' शिष्यः
पुनः प्रणम्य कथयति, "न योग्योऽहमुपनयनस्य तज्जिनाज्ञां देहि।" गुरुः कथयति, 'ददामि'। ततो द्वादश-
गर्भतन्तुरूपं कार्पासं वा कौशेयं वा उत्तरीयकं जिनोपवीतदीर्घं परमेष्ठिमन्त्रभणनपूर्वं जिनोपवीतवत्परि-
धापयेत्। ततो गुरुः पूर्वाभिमुखस्य शिष्यस्य चैत्यवन्दनं कारयेत्। ततः शिष्यः 'नमोऽस्तु' २ भणन् सुखो-
पविष्टस्य गुरोः पादयोर्निपत्य पुनरप्यूर्द्ध्वीभूतो बद्धाञ्जलिरिति कथयेत्, "भगवन् उत्तरीयकन्यासेन जिनाज्ञा-
मारोपितोऽहं।" गुरुः कथयति, "सम्यगारोपितोऽसि तर भवसागरं।" ततो गुरुरग्रत उपविष्टस्य शूद्रस्य

पुरो व्रतानुज्ञा दद्यात् । सा यथा—"सम्यक्त्वेनाधिष्ठितानि व्रतानि द्वादशैव हि । धार्याणि भवता नैव कार्यः कुलमदस्त्वया ॥ १ ॥ जैनर्षीणां तथा जैनब्राह्मणानामुपासनम् । विधेयं चैव गीतार्थाचीर्णं कार्यं तपस्त्वया ॥ २ ॥ न निन्द्यः कोऽपि पापात्मा न कार्यं स्वप्रशंसनम् । ब्राह्मणेभ्यस्त्वयामान्नं दातव्यं हितमिच्छता ॥ ३ ॥ शेषं चतुर्वर्णशिक्षाश्लोकव्याख्यानमाचरेत् । उत्तरीयपरिभ्रंशे भङ्गे वाप्युपवीतवत् ॥ ४ ॥ कार्यं व्रतं प्रेतकर्मकरणं वृषल त्वया । युक्तिरेषोत्तरासङ्गानुज्ञायां च विधीयते ॥ ५ ॥ क्षत्राणामथ वैश्यानां देशकालादियोगतः । त्यक्तोपवीतानां कार्यमुत्तरासङ्गयोजनम् ॥ ६ ॥ धर्मकार्ये गुरोर्दृष्टौ देवगुर्वालयेऽपि च । धार्यस्तथोत्तरासङ्गः सूत्रवत्प्रेतकर्मणि ॥ ७ ॥ अन्येषामपि कारूणां गुर्वनुज्ञां विनापि हि । गुरुधर्मादिकार्येषु उत्तरासङ्ग इष्यते ॥ ८ ॥" इति व्याख्याय गुरुः शिष्यस्य चैत्यवन्दनं कारयेत् । परमेष्ठिमन्त्रोच्चारणं च मन्त्रव्याख्यानं पूर्ववत् । नवरं शूद्रादीनां 'नमो' स्थाने 'णमो' उच्चारयेत् इति गुरुसंप्रदायः । तत्र सशिष्यो गुरुरुत्सवे क्रियमाणे धर्मागारं व्रजेत् । तत्र मण्डलीपूजा गुरुनमस्कृतिवासःक्षेपादि पूर्ववत् । ततो मुनिभ्योऽन्नवस्त्रपात्रदानं । चतुर्विधसङ्घपूजा च ॥ इत्युपनयने शूद्रादीनां उत्तरीयकन्यासोत्तरासङ्गानुज्ञाविधिः ॥ ॥ अथ बटूकरणविधिः । यतो ब्राह्मणाः सम्यगुपनीता वेदविद्यागर्भा दुष्प्रतिग्रहवर्जिता अशूद्रान्नभोजिनो माहनाचाररताः सर्वगृह्यसंस्कारप्रतिष्ठादिकर्मकृतः पूज्या भवन्ति । न ते माहनाः क्षत्रियादीनां नृपाणां शुश्रूषान्नपाकतदाज्ञाकरणाभ्युत्थानचाटुप्रशंसानमस्कारविनाभूताशीर्वाददानादिज्ञानकर्मकृषिवाणिज्यकरणतुरङ्गवृषभादि-

शिक्षाकरणाय कल्पन्ते। अतस्तथाविधेषु पूर्वोक्तेषु कर्मसु बटूकृता ब्राह्मणा योजयितुं योग्या भवन्ति। अतस्तेषां बटूकरणविधिर्विधीयते। उक्तं च, यतः—"च्युतव्रतानां व्रात्यानां तथा नैवेद्यभोजिनाम्। कुकर्मणामवेदानामजपानां च शस्त्रिणाम् ॥ १ ॥ ग्राम्याणां कुलहीनानां विप्राणां नीचकर्मणाम्। प्रेतान्नभोजिनां चैव मागधानां च बन्दिनाम् ॥ २ ॥ घाण्टिकानां सेवकानां गन्धतांबूलजीविनाम्। नटानां विप्रवेषाणां परशुरामान्ववायिनाम् ॥ ३ ॥ अन्यजात्युद्भवानां च बन्दिवेषोपजीविनाम्। इत्यादि विप्ररूपाणां बटूकरणमिष्यते ॥ ४ ॥" तस्य चायं विधिः-पूर्वं तस्य गृहे गृह्यगुरुर्यथोक्तविधिना पौष्टिकं कुर्यात्। ततस्तं शिष्यं संस्थाप्य मुण्डनं कारयेत्। ततस्तं तीर्थोदकैर्मन्त्राभिमन्त्रितैः स्नपयेत्। तीर्थोदकाभिमन्त्रणमन्त्रो यथा—"ॐ वं वरुणोऽसि, वारुणमसि, गाङ्गमसि, यामुनमसि, गौदावरमसि, नार्मदमसि, पौष्करमसि, सारस्वतमसि, शातद्रवमसि, वैपाशमसि, सैन्धवमसि, चान्द्रभागमसि, वैतस्तमसि, ऐरावतमसि, कावेरमसि, कारतोयमसि, गौतममसि, शैतमसि, शैतोदमसि, रौहितमसि, रौहितांशमसि, सारयवमसि, हारिकान्तमसि, हारिसलिलमसि, नारीकान्तमसि, नारकान्तमसि, रौप्यकूलमसि, सौवर्णकूलमसि, सालिलमसि, राक्तवतमसि, नैम्नगसलिलपाद्ममसि, औन्निम्नग्नमसि, पाद्ममसि, माहापद्ममसि, तौंगिच्छमसि, कैशरमसि, पौण्डरीकमसि, ह्रादमसि, नादेयमसि, कौपमसि, सारसमसि, कौण्डमसि, नैर्झरमसि, वापेयमसि, तैर्थमसि, अमृतमसि, जीवनमसि, पवित्रमसि, पावनमसि, तदमुं पवित्रय कुलाचाररहितमपि देहिनं।" अनेन

मन्त्रेण कुशाग्रेण सप्तवारमभिषिञ्चेत् । ततो नदीकूले तीर्थे देवायतने वा पवित्रे वा गृहे स्थाने तस्य बटूकरणीयस्य पूर्वं त्रिगुणा कुशमयमेखलां त्रिधा बध्नीयात् । मेखलाबन्धमन्त्रो यथा—"ॐ पवित्रोऽसि, प्राचीनोऽसि, नवीनोऽसि, सुगमोऽसि, अजोऽसि, शुद्धजन्मासि, तदमुं देहिनं धृतव्रतमव्रतं वा पावय, पुनीहि अब्राह्मणमपि ब्राह्मणं कुरु ।" इति त्रिवेलं पाठः । ततस्तस्य कौपीनं परिधापयेत् । कौपीनमन्त्रो यथा—"ॐ अब्रह्मचर्यगुप्तोऽसि ब्रह्मचर्यधरोऽपि वा । वृतः कौपीनबन्धेन ब्रह्मचारी निगद्यते ॥ १ ॥" इति त्रिवेलं पठित्वा कौपीनं परिधापयेत् । ततः पूर्वोक्तं ब्राह्मणसदृशमुपवीतं मन्त्रपूर्वं परिधापयेत् । मन्त्रो यथा—"ॐ सधर्मोऽसि, अधर्मोऽसि, कुलीनोऽसि, अकुलीनोऽसि, सब्रह्मचर्योऽसि, अब्रह्मचर्योऽसि, सुमना असि, दुर्मना असि, श्रद्धालुरसि, अश्रद्धालुरसि, आस्तिकोऽसि, नास्तिकोऽसि, आर्हतोऽसि, सौगतोऽसि, नैयायिकोऽसि, वैशेषिकोऽसि, साङ्ख्योऽसि, चार्वाकोऽसि, सलिङ्गोऽसि, अलिङ्गोऽसि, तत्वज्ञोऽसि, अतत्वज्ञोऽसि, तद्भव ब्राह्मणोऽमुनोपवीतेन भवन्तु ते सर्वार्थसिद्धयः ।" अनेन मन्त्रेण नववारं पठितेनोपवीतस्थापनम् । ततस्तस्य करे पालाशदण्डं दद्यात् । मृगाजिनं च परिधापयेत् । भिक्षामार्गणं च कारयेत् । ततो भिक्षामार्गणानन्तरमुपवीतवर्जितं मेखलाकौपीनाजिनदण्डाद्यपनयेत् । तदपनयनमन्त्रो यथा—"ॐ ध्रुवोऽसि, स्थिरोऽसि, तदेकमुपवीतं धारय ।" इति त्रिः पठेत् । ततो गुरुस्तं धृतश्वेतनिवसनोत्तरासङ्गं पुरो निवेश्य शिक्षयेत् । यथा—"परनिन्दां परद्रोहं परस्त्रीधनवाञ्छनम् । मांसाशनं म्लेच्छकन्दभक्षणं चैव वर्जयेत् ॥ १ ॥ वाणिज्ये स्वा-

ब्रह्मस्त्रीभ्रूणगोरक्षादेवर्षिगुरुसेवनम् ॥ २ ॥ अतिथीनां पूजनं च कुर्या
मिसेवायां कपटं मा कृथाः क्वचित् । ब्रह्मस्त्रीभ्रूणगोरक्षादेवर्षिगुरुसेवनम् ॥ ३ ॥ उपवीतमिदं स्थाप्यमाजन्म विधिव-
द्दानं यथाधनम् । अघात्यघातं मा कुर्या मा वृथा परतापनम् ॥ ३ ॥ उपवीतमिदं स्थाप्यमाजन्म विधिव-
त्त्वया । शेषः शिक्षाविधिः कथ्यश्चातुर्वर्ण्यस्य पूर्ववत् ॥ ४ ॥" ततः स बटूकृतो गृह्यगुरवे स्वर्णवस्त्रधेन्वन्न-
दानं कुर्यात् । अत्र बटूकरणे वेदीचतुष्किकासमवसरणचैत्यवन्दनव्रतानुज्ञाव्रतविसर्गगोदानवासःक्षेपादि
नास्ति । इति बटूकरणविधिः—"पौष्टिकस्योपकरणं मौञ्जी कौपीनवल्कले । उपवीतं स्वर्णमुद्रा गावः सङ्घस्य
सङ्गमः ॥ १ ॥ तीर्थोदकानि वस्त्राणि चन्दनं दर्भ एव च । पञ्चगव्यं बलिकर्म तथा वेदी चतुष्किका ॥ २ ॥
चतुर्मुखप्रतिमा च दण्डः पालाश एव च । इत्यादिवस्तुसंयोगो व्रतबन्धे विधीयते ॥ ३ ॥" इत्याचार्यश्रीवर्द्ध-
मानसूरिकृते आचारदिनकरे गृहिधर्मपूर्वायने उपनयनादिकीर्त्तनो नाम द्वादश उदयः ॥ १२ ॥

---

## त्रयोदश उदयः ।

### अथाध्ययनारंभविधिः ।

"विद्यारंभोऽश्विनीमूलपूर्वासु मृगपञ्चके । हस्ते शतभिषक्स्वातिचित्रासु श्रवणद्वये ॥ १ ॥ बुधो गुरु-

---

१ 'शिक्षाक्रमः' इत्यपि पाठः ।

स्तथा शुक्रो वारा विद्यागमे शुभाः । मध्यमौ दिननाथेन्दू त्याज्यौ कुजशनैश्चरौ ॥ २ ॥ अमावास्याष्टमी चैव प्रतिपच्च चतुर्दशी । पाठे वर्ज्याः सदारंभे रिक्ताष्टमी नवम्यपि ॥ ३ ॥" अथोपनयनसदृशे दिने लग्ने च विद्यारंभसंस्कारमारभेत । तस्य चायं विधिः—गृह्यगुरुः प्रथमविधिनोपनीतस्य पुरुषस्य गृहे पौष्टिकं कुर्यात् । ततो गुरुर्देवायतने धर्मागारे वा कदंबवृक्षतले वा कुशासनस्थः स्वयं शिष्यं च वामपार्श्वे कुशासने निवेश्य तद्दक्षिणकर्णे संपूज्य सारस्वतमन्त्रं त्रिः पठेत् । ततो गुरुः स्वगृहे वा अन्योपाध्यायशालायां वा पौषधागारे वा शिष्यं नरवाहनाश्वाद्यधिरूढं मङ्गलगीतेषु गीयमानेषु दानेषु दीयमानेषु वाद्येषु वाद्यमानेषु यतिगुरोः सकाशं नीत्वा मण्डलीपूजापूर्वं वासःक्षेपं कारयित्वा पाठशालायां नयेत् । ततः शिष्यो गुरोः पुरो निवेश्य इति शिक्षाश्लोकान् पठेत्, यथा—"अज्ञानतिमिरान्धानां ज्ञानाञ्जनशलाकया । नेत्रमुन्मीलितं येन तस्मै श्रीगुरवे नमः ॥ १ ॥ यासां प्रसादादधिगम्य सम्यक् शास्त्राणि विन्दन्ति परंपराज्ञाः[1] । मनीषितार्थप्रतिपादिकाभ्यो नमोऽस्तु ताभ्यो गुरुपादुकाभ्यः ॥ २ ॥ सत्येतस्मिन्नरतिरतिदं गृह्यते वस्तु दूरादप्यासन्नेऽप्यसति तु मनः स्थाप्यते नैव किञ्चित् । पुंसामित्यप्यवगतवतामुन्मनीभावहेतावित्थं बाढं भवति न कथं सद्गुरूपासनायाम् ॥ ३ ॥ इति मत्वा त्वया वत्स त्रिशुद्ध्योपासनं गुरोः । विधेयं येन जायन्ते गीर्धीकीर्त्तिधृतिश्रियः ॥ ४ ॥" इति शिष्यस्य शिक्षां दत्वा तस्माच्च स्वर्णवस्त्रदक्षिणां गृहीत्वा स्वगृहं व्रजेत् । तत उपाध्यायः स-

१ पदज्ञाः इत्यपि पाठः ।

वैंपां पूर्वं मातृकापाठं पाठयेत् ततो विप्रस्य पूर्वमायुर्वेदं ततः षडङ्गीं ततो धर्मशास्त्रं पुराणादि । क्षत्रस्याप्येवमेव चतुर्दशविद्यास्ततश्च आयुर्वेदं धनुर्वेदं दण्डनीतिमाजीविकां च, वैश्यस्य धर्मशास्त्रं नीतिशास्त्रं, कामशास्त्रमर्थशास्त्रं नीतिशास्त्रमाजीविकाशास्त्रं, कारूणां तदुचितं विज्ञानशास्त्रमध्यापयेत् । ततः साधुभ्यश्चतुर्विधाहारवस्त्रपात्रपुस्तकदानम्—"पौष्टिकस्योपकरणं गीतं वादित्रमेव च । मन्त्रोपदेशः पाठस्य संस्कारवस्तुसङ्ग्रहः ॥ १ ॥" इत्याचार्यश्रीवर्द्धमानसूरिकृते आचारदिनकरे गृहिधर्मपूर्वायने विद्यारंभसंस्कारकीर्त्तनो नाम त्रयोदश उदयः ॥ १३ ॥

---

## चतुर्दश उदयः ।

### अथ विवाहविधिः ।

इह हि विवाहः समकुलशीलयोरेव भवति । यत उक्तं—"ययोरेव समं शीलं ययोरेव समं कुलम् । तयोर्मैत्री विवाहश्च नतु पुष्टविपुष्टयोः ॥ १ ॥" ततः समकुलशीलौ समज्ञाती ज्ञातदेशकृत्यान्वयौ विवाहसंबन्धे योज्यौ । ततश्च योऽविकृतस्तेन न विकृतकुलस्य कन्या ग्राह्या । विकृतकुलं यथा—"रोमशश्चार्शसो ह्रस्वो दद्रुणश्चित्रिकुष्ठिनः । नेत्रोदररुजो बभ्रुवंशास्त्याज्याः कनीग्रहे ॥ १ ॥" एभ्यः कुलेभ्यो न कन्या ग्राह्या ।

कन्या विकृता यथा—"अधिकाङ्गी च हीनाङ्गी कपिला व्योमदृक् तथा । भीषणा भीषणाह्वा च त्याज्या कन्या विचक्षणैः ॥ १ ॥ देवर्षिग्रहताराग्निनदीवृक्षादिनामिकाम् । वर्जयेद्रोमशां कन्यां पिङ्गाक्षीं घर्घरस्वराम् ॥ २ ॥" कन्यादाने वरस्य विकृतं कुलं यथा—"हीनक्रूरवधूकं च दरिद्रं व्यसनान्वितम् । कुलं विवर्जयेत्कन्यादानेऽल्पपुत्रकं[1] तथा ॥ १ ॥ मूर्खनिर्धनदूरस्थशूरमोक्षाभिलाषिणाम् । त्रिगुणाधिकवर्षाणामपि देया न कन्यका ॥ २ ॥" ततः अविकृतकुलयोर्द्वयोर्विवाहसंबन्धो योग्यः । विकृतकुलयोर्द्वयोरपि तथा पञ्चशुद्धीर्निरीक्ष्य वधूवरयोः संयोगो विधेयः । ता यथा—"राश्योर्योन्योश्च गणयोर्नाड्योस्तत्र च वर्गयोः । शुद्धिं निरीक्ष्य कर्त्तव्यो वरवध्वोश्च सङ्गमः ॥ १ ॥" तथा च—"कुलं च शीलं च सनाथता च विद्या च वित्तं च वपुर्वयश्च । वरे गुणाः सप्त विलोकनीया अतः परं भाग्यवशा हि कन्या ॥ १ ॥ गर्भाष्टमात्परं पाणिग्रहमर्हति कन्यका । एकादशाब्दीं यावच्च तत ऊर्ध्वं रजस्वला ॥ २ ॥ राकेति कथ्यते सा तु विवाहं शीघ्रमर्हति । वरं प्राप्य चन्द्रबले तुच्छेऽपि हि महोत्सवे ॥ ३ ॥" यत उक्तं—"वर्षमासदिनादीनां शुद्धिं राकाकरग्रहे । नालोकयेच्चन्द्रबलं वरं प्राप्य विवाहयेत्[2] ॥ १ ॥ नरस्याब्दाष्टकादूर्ध्वं विवाहो[3]ऽशीतिमध्यतः । ततो न कल्पते येन स शुक्ररहितो

१ 'पुरुषं' इत्यपि क्वचित् । २ 'विधापयेत्' इत्यपि पाठः । ३ अशीतिवर्षवयस्कः पुमान् विवाहं कुर्यादिति नास्य वचनस्य तात्पर्यं, ततः परमेव शुक्ररहितत्वस्य तस्योपदेशात्, किन्तु मध्यत इति कथनात् तत्पर्यन्तमेव शुक्रानुवृत्तिरिति ज्ञात्वैव सत्यवशिष्टे संभोगक्षम आयुषि योग्ये विवाहं कुर्यादित्येतत्तात्पर्यम् । एतदपि शतायुरधिकृत्योक्तं, सम्प्रति तु शुक्ररहितत्वमसुरहितत्वं वा षष्टिसप्ततिवर्षायुष्कस्येति न परोक्षमितिज्ञात्वैव विवाहं कुर्यात् तदवधिश्च तादृशसंयोगाधीनः ।

भवेत् ॥ २ ॥" "ब्राह्मं प्राजापत्यं तथार्षमथ दैवतं च चत्वारि । करपीडनानि धर्म्याणि मातृपितृवचनयो-
गेन ॥ १ ॥ गान्धर्व १ आसुरश्चाथ २ राक्षसस्तदनु ३ चैव पैशाचः ४ । एते पापविवाहाश्चत्वारः स्वेच्छया
विहिताः ॥ २ ॥" ब्राह्मविवाहविधिः । यथा शुभदिने शुभलग्ने पूर्वोदितगुणं वरं समाकार्य तस्मै स्नातालङ्कृ-
ताय अलङ्कृतां कन्यां दद्यात् । मन्त्रो यथा—"ॐ अर्हं सर्वगुणाय, सर्वविद्याय, सर्वसुखाय, सर्वपूजिताय,
सर्वशोभनाय सुवस्त्रगन्धमाल्यालङ्कृतां कन्यां ददामि, प्रतिगृह्णीष्व भद्रं भवते अर्हं ॐ ।" इति मन्त्रेण बद्धा-
ञ्चलौ दंपती स्वगृहं गच्छतः । इति धर्म्यो ब्राह्मविवाहः । प्राजापत्यस्तु जगत्प्रसिद्धत्वाद्विस्तरेण कथयिष्यते ।
आर्षे च विवाहे वनस्थमुनयो गृहस्थाः स्वसुतामन्यृषिपुत्राय गा अनडुहश्च सह दत्वा कन्यां ददति । न
तत्रान्यत्किञ्चिदुत्सवादि । एतदीयो वेदमन्त्रो जैनवेदेषु नास्ति जैनानां तदकृत्यत्वात् । दैवतविवाहे तु पिता
पुरोहिताय इष्टपूर्तकर्मतः[1] । स्वकन्यां दक्षिणावद् दद्यात् । इति दैवतो धर्म्यविवाहः । अमी चत्वारो धर्म्या
विवाहाः—"पित्राद्यप्रामाण्येऽन्योन्यप्रीत्युद्यमश्च गान्धर्वः । पणबन्धेनासुर इति पालादो हठकनीग्रहणात्
॥ १ ॥ सुप्तप्रमत्तकन्याग्रहणात् पैशाचिकः समाख्यातः । चत्वारोऽमी पापा उपयामाः कीर्त्तितास्तज्ज्ञैः ॥ २ ॥"
इति पितृमातृगुर्वनुज्ञारहितत्वाच्चत्वारः पापविवाहाः तथा च ब्राह्मार्षदैवता विवाहा दुःषमाकाले कलियुगे
न प्रवर्त्तन्ते । पापविवाहानां चतुर्णां वेदोक्तो विधिरपि न अधर्मत्वात् । यत उक्तं—"गोमेधनरमेधाद्या

1 'कर्मान्ते' इत्यपि पाठः ।

यज्ञाः पाणिग्रहत्रयम् । सुताश्च गोत्रजगुरोर्न भवन्ति कलौ युगे ॥ १ ॥" इति वचनात् । संप्रति वर्त्तमानस्य प्राजापत्यविवाहस्य विधिरुच्यते । स यथा—"मूलानुराधारोहिण्यो मघा मृगशिरः करः । रेवतीत्र्युत्तरा स्वातीधिष्ण्येष्वेषु करग्रहः ॥ १ ॥ वेधैकार्गललत्ता पापोपग्रहयुतेषु धिष्ण्येषु । न विवाहः कर्त्तव्यो न युतौ वा क्रान्तिसाम्ये च ॥ १ ॥ न त्रिदिनस्पृशि नावमतिथौ च न क्रूरदग्धरिक्तासु । नामावास्याष्टमीषष्ठिकासु न द्वादशी द्विव्येशे ॥ २ ॥ भद्रायां गण्डान्ते न चर्क्षतिथिवारदुष्टयोगेषु । न व्यतिपाते नो वैधृतौ च नो निन्द्यवेलासु ॥ ३ ॥ रविक्षेत्रगते जीवे जीवक्षेत्रगते रवौ । दीक्षाविवाहप्रमुखान् प्रतिष्ठां च विवर्जयेत् ॥ ४ ॥ चतुर्मास्यामधिमासे तथास्ते गुरुशुक्रयोः । मलमासे जन्ममासे विवाहादि न कारयेत् ॥ ५ ॥ मासान्ते चैव सङ्क्रान्तौ तद्द्वितीये तथा दिने । ग्रहणादिदिने तस्मिन् दिने ससाहके ततः ॥ ६ ॥ न जन्मतिथिवारर्क्षलग्नेष्वपि करग्रहः । राशिजन्मेश्वरे चास्तं गते क्रूरहतेऽपि च ॥ ७ ॥ न जन्मराशौ नो जन्मराशिलग्नान्त्यमाष्टमे । न लग्नांशाधिपे लग्नं षष्ठाष्टमगते विधौ ॥ ८ ॥ लग्ने स्थिरे द्विस्वभावे सद्गुणे वा चरेऽपि च । उदयास्तविशुद्धे च नोत्पातादिविदूषिते ॥ ९ ॥ लग्ने ग्रहविनिर्मुक्ते सप्तमे च तथा विधौ । त्रिषडेकादशगते रवौ भौमे शनावपि ॥ १० ॥ राहौ च षट्त्रिके पापग्रहमुक्ते च पञ्चमे । सुतलग्नांबुदशमधर्मसंस्थे बृहस्पतौ ॥ ११ ॥ शुक्रे बुधे तथा संस्थे मूर्त्तिनाथेऽप्यखण्डिते । मूर्त्तिषष्ठाष्टमं त्यक्त्वान्यत्र युक्ते निशाकरे ॥ १२ ॥ क्रूरदृष्टं क्रूरयुक्तं चन्द्रं तत्र विवर्जयेत् । त्याज्यौ क्रूरान्तरस्थौ च लग्नपीयूषरोचिषौ ॥ १३ ॥ इत्यादिगुणसंयुक्ते लग्ने

दोषविवर्जिते। शुभेऽंशके शुभैर्दृष्टे लग्नं पाणिग्रहे शुभम् ॥ १४ ॥" इत्यादि श्रीभद्रबाहुवराहगर्गलल्लपृथु-
यशःश्रीपतिविरचितविवाहशास्त्रावलोकनात् सम्यग् लग्नं विलोक्य विवाहारंभः—"ततश्च कुलदेशादि
गुरुवाक्यैर्विशेषतः। अनुज्ञातं विवाहादि गर्गादिमुनिभिः पुरा ॥ १ ॥ सूर्यः षट्त्रिदशस्थितस्त्रिदशषट्सप्ता-
ग्रगश्चन्द्रमा जीवः सप्तनवद्विपञ्चमगतो वक्रार्कजौ षट्त्रिगौ। सौम्यः षड्द्विचतुर्दशाष्टमगतः सर्वेऽप्युपान्ते
शुभाः शुक्रः सप्तमषड्दशर्क्षसहितः शार्दूलवत् त्रासकृत् ॥ २ ॥ सुरगुरुबलमबलानां पुरुषाणामहिमरश्मि-
बलमेव। चन्द्रबलं दंपत्योरवलम्ब्य विशोधयेल्लग्नम् ॥ २ ॥" तथा च पूर्वं कन्यादानविधिः। पूर्वोदितसमान-
कुलशीलेभ्योऽन्यगोत्रेभ्यः कन्यां याचयेत्। तादृशाय वराय कन्या दातव्या। कन्याकुलज्येष्ठेन वरकुलज्ये-
ष्ठाय नालिकेरस्रक्जिनोपवीतव्रीहिदूर्वाहरिद्रादानेन स्वस्वदेशकुलोचितेन कन्यादानं कार्यं। तत्र गृह्यगुरु-
र्वेदमन्त्रं पठेत्। स यथा—"ॐ अर्हं परमसौभाग्याय, परमसुखाय, परमभोगाय, परमधर्माय, परमयशसे,
परमसन्तानाय भोगोपभोगान्तरायव्यवच्छेदाय, इमाममुकनाम्नीं कन्याममुकगोत्राममुकनाम्ने वराय
अमुकगोत्राय ददाति, प्रतिगृह्णाण अर्हं ॐ।" ततः सर्वेभ्यो लोकेभ्यः कन्यापक्षीयास्ताम्बूलं ददति। तथा च
दूरस्थे विवाहकाले वरपितर्यमृते नान्यस्मै सा कन्या देया। उक्तं च यतः—"सकृज्जल्पन्ति राजानः सकृज्ज-
ल्पन्ति पण्डिताः। सकृत् प्रदीयते कन्या त्रीण्येतानि सकृत् सकृत् ॥ १ ॥" तथा वरोऽपि तस्यै कन्यायै
वस्त्राभरणगन्धप्रसाधनादि सोत्सवं तत्पितृगृहे दद्यात्। कन्यापित्रापि वराय सपरिजनाय भोजनं समहो-

त्सर्वं वस्त्राङ्गुलीयादि च देयं। तथा च लग्नदिनात् प्राक् मासे वा पक्षे वा वैयग्र्यानुसारेण उभयोः पक्षयोः परिजनं सङ्घट्य सांवत्सरमुत्तमासने निवेश्य तत्करेण विवाहलग्नं शुभभूमौ लेखयेत् । रूप्यस्वर्णमुद्राफलपुष्पदूर्वाभिर्जन्मलग्नवद् विवाहलग्नमर्चयेत्। ततो ज्योतिषिकाय उभयपक्षवृद्धैर्वस्त्रालङ्कारताम्बूलदानं देयं इति विवाहारंभः। ततः कौरशरावेषु यववापनं। ततः कन्यागृहे मातृस्थापनं षष्ठ्याः स्थापनं षष्ठ्यादिप्रक्रमोक्तप्रकारेण। वरगृहे जिनसमयानुसारेण मातृकुलकरस्थापनं । परसमये गणपतिकन्दर्पस्थापनं । गणपतिकन्दर्पस्थापनं सुगमं लोकप्रसिद्धं । कुलकरस्थापनविधिरुच्यते । गृह्यगुरुर्भूमिपतितगोमयलिप्तभूमौ स्वर्णमयं रूप्यमयं ताम्रमयं श्रीपर्णकाष्ठमयं पट्टकं स्थापयेत् । पट्टस्थापनमन्त्रः—"ॐ आधाराय नमः, आधारशक्तये नमः, आसनाय नमः, ।" अनेन मन्त्रेणैकवारं परिजप्य पट्टं स्थापयेत्। तं पट्टं अमृतामन्त्रेण तीर्थजलैरभिषिञ्चेत्। ततश्चन्दनाक्षतदूर्वाभिः पट्टं पूजयेत् । तत आदौ—"ॐ नमः प्रथमकुलकराय, काञ्चनवर्णाय, श्यामवर्णचन्द्रयशःप्रियतमासहिताय, हाकारमात्रोच्चारस्थापित[1]न्यायपथाय, विमलवाहनाभिधाय, इह विवाहमहोत्सवादौ आगच्छ २, इह स्थाने तिष्ठ २, सन्निहितो भव २, क्षेमदो भव २, उत्सवदो भव २, आनन्ददो भव २, भोगदो भव २, कीर्त्तिदो भव २, अपत्यसन्तानदो भव २, स्नेहदो भव २, राज्यदो भव २, इदमर्घ्यं पाद्यं बलिं चरुं आचमनीयं गृहाण २, सर्वोपचारान् गृहाण २। तत ॐ गन्धं नमः, ॐ पुष्पं नमः, ॐ धूपं नमः,

१ ख्यापित इत्यपि पाठ.।

ॐ दीपं नमः, ॐ उपवीतं नमः, ॐ भूषणं नमः, ॐ नैवेद्यं नमः, ॐ तांबूलं नमः । पूर्वेण मन्त्रेण आहाय संस्थाप्य संनिहितां कृत्य अर्घ्यपाद्यबलिचर्वाचमनीयदानं दद्यात् । अपरे ॐकारादिभिर्मन्त्रैर्गन्धतिलकद्वयं पुष्पद्वयं धूपद्वयं दीपद्वयं उपवीतमेकं स्वर्णमुद्राद्वयं नैवेद्यद्वयं तांबूलद्वयं दद्यात् १ ततः द्वितीयस्थाने—"ॐ नमो द्वितीयकुलकराय, श्यामवर्णाय, श्यामवर्णचन्द्रकान्ताप्रियतमासहिताय, हाकारमात्रख्यापितन्यायपथाय, चक्षुष्मदभिधानाय, शेषं पूर्ववत् २ ॐ नमस्तृतीयकुलकराय, श्यामवर्णाय, श्यामवर्णसुरूपाप्रियतमासहिताय, माकारमात्रख्यापितन्यायपथाय, यशस्व्यभिधानाय, शेषं पूर्ववत् ३ ॐ नमश्चतुर्थकुलकराय, श्वेतवर्णाय, श्यामवर्णप्रतिरूपाप्रियतमासहिताय, माकारमात्रख्यापितन्यायपथाय, अभिचन्द्राभिधानाय, शेषं पूर्ववत् ४ ॐ नमः पञ्चमकुलकराय, श्यामवर्णाय, श्यामवर्णचक्षुःकान्ताप्रियतमासहिताय, धिक्कारमात्रख्यापितन्यायपथाय, प्रसेनजिदभिधानाय, शेषं पूर्ववत् ५ ॐ नमः षष्ठकुलकराय, स्वर्णवर्णाय, श्यामवर्णश्रीकान्ताप्रियतमासहिताय, धिक्कारमात्रख्यापितन्यायपथाय, मरुदेवाभिधानाय, शेषं पूर्ववत् ६ ॐ नमः सप्तमकुलकराय, काञ्चनवर्णाय, श्यामवर्णमरुदेवाप्रियतमासहिताय, धिक्कारमात्रख्यापितन्यायपथाय, नाभ्यभिधानाय शेषं पूर्ववत् ७ ॥ इति कुलकरस्थापनापूजनविधिः । इयं कुलकरस्थापना परसमये गणेशमदनस्थापना च विवाहानन्तरमपि सप्ताहोरात्रपर्यन्तं रक्षणीया । ततः शान्तिकं पौष्टिकं च वरगृहे कुर्यात् । कन्यागृहे मातृपूजां पूर्ववत् । ततः सप्तसु नवसु एकादशसु त्रयोदशसु विवाहकालात्पूर्वदिवसे वधूवरयोः

स्वस्वगृहे मङ्गलगीतवादित्रवादनपूर्वं तैलाभिषेकः स्नानं च विवाहपर्यन्तं नित्यं तथैव वधूवरयोः स्नानं। प्रथमतैलाभिषेकदिने वरगृहात्कन्यागृहे तैलशिरःप्रसाधनगन्धवस्तुद्राक्षादिखाद्यशुष्कफलप्रेषणं सर्वैर्नागरवधूजनैर्वरगृहे कन्यागृहे च तैलधान्यादिढौकनं विधेयं। वधूवरगृहसत्कवृद्धनारीभिः ताभ्यो धान्यतैलढौकनीभ्यो नारीभ्यः अपूपादि पक्वान्नं देयं। तत्र धारणाप्रभृति देशाचारकुलाचारैर्विधेयं। तैलाभिषेककुलकरगणेशादिस्थापनं कङ्कणबन्धनमन्यविवाहोपचारादि सर्वं वधूवरयोश्चन्द्रबले वैवाहिके नक्षत्रे च विधेयं। तथा धूलिभक्तकौरभक्तसौभाग्यजलानयनप्रभृति मङ्गलकर्म मङ्गलगीतवाद्यसहितं देशाचारकुलाचारविशेषाद्विधेयं। ततो यदि वरोऽन्यत्र ग्रामान्तरे नगरान्तरे देशान्तरे वा भवति तदा तस्य यज्ञयात्रा कन्यानिवासस्थानं प्रति विधीयते तस्यायं विधिः। एकस्मिन् प्रथमेऽहनि मातृपूजापूर्वं पूर्वेषां जनानां भोजनं देयं। ततो द्वितीयेऽह्नि वरः सुस्नातश्चन्दनानुलिप्तः सर्ववस्त्रगन्धमाल्यसंस्कृतः[2] किरीटभूषितशिरा अश्वाधिरूढो गजाधिरूढो वा नरयानाधिरूढो वा चलति। तत्समीपे जनाः सुवसनाः सप्रमोदाः सतांबूलवदनाः संबन्धिज्ञातिजनाः स्वसंपत्त्या तुरंगाद्यधिरूढाः पदातयो वा वरेण सार्द्धं चलन्ति। पार्श्वयोरुभयोर्मङ्गलगानप्रसक्ताः चलन्ति ज्ञातिनार्यः। पुरतोऽस्य ब्राह्मणा ग्रहशान्तिमन्त्रं पठन्तश्चलन्ति। स यथा—"ॐ अर्हं आदिमोऽर्हन्, आदिमो नृपः, आदिमो नियन्ता, आदिमो गुरुः, आदिमः स्रष्टा, आदिमः कर्ता, आदिमो भर्त्ता,

१ वरगृहे कन्यागृहे च इति पुस्तकान्तरे। २ 'माल्यालङ्कृत.' इत्यपि।

आदिमो जयी, आदिमो नयी आदिमः शिल्पी, आदिमो विद्वान्, आदिमो जल्पकः, आदिमः शास्ता, आदिमो रौद्रः, आदिमः सौम्यः, आदिमः काम्यः, आदिमः शरण्यः, आदिमो दाता, आदिमो वन्द्यः, आदिमः स्तुत्यः, आदिमो ज्ञेयः, आदिमो ध्येयः, आदिमो भोक्ता, आदिमः सोढा, आदिम एकः, आदिमोऽनेकः, आदिमः स्थूलः, आदिमः कर्मवान्, आदिमोऽकर्मा, आदिमो धर्मवित्, आदिमोऽनुष्ठेयः, आदिमोऽनुष्ठाता, आदिमः सहजः, आदिमो दशावान्, आदिमः सकलत्रः, आदिमो विकलत्र[1]ः, आदिमो विवोढा, आदिमः ख्यापकः, आदिमो ज्ञापकः, आदिमो विदुरः, आदिमः कुशलः, आदिमो वैज्ञानिकः, आदिमः सेव्यः, आदिमो गम्यः, आदिमो विमृष्यः, आदिमो विमृष्टा, सुरासुरनरोरगप्रणतः, प्राप्तविमलकेवलो, यो गीयते यत्यवतंसः, सकलप्राणिगणाहितो, दयालुरपरापेक्षः, परात्मा, परं ज्योतिः, परं ब्रह्म, परमैश्वर्यभाक्, परंपरः परापरोऽपरंपरः, जगदुत्तमः, सर्वगः, सर्ववित्, सर्वजित्, सर्वीयः, सर्वप्रशस्यः, सर्ववन्द्यः, सर्वपूज्यः, सर्वात्मा असंसारः, अव्ययः, अवार्यवीर्यः, श्रीसंश्रयः, श्रेयःसंश्रयः, विश्वावश्यायहृत्, संशयहृत्, विश्वसारो, निरञ्जनो, निर्ममो, निष्कलङ्को, निष्पाप्मा, निष्पुण्यः, निर्मनाः, निर्वचाः, निर्देहो, निःसंशयो, निराधारो, निरवधिः, प्रमाणं, प्रमेयं, प्रमाता, जीवाजीवाश्रयबन्धसंवरनिर्जरामोक्षप्रकाशकः, स एव भगवान् शान्तिं करोतु, तुष्टिं करोतु, पुष्टिं करोतु, ऋद्धिं करोतु, वृद्धिं करोतु, सुखं करोतु, श्रियं करोतु, लक्ष्मीं करोतु

1 निष्कलत्रः इत्यपि।

अर्हं ॐ ।" इत्यार्यवेदपाठिनो ब्राह्मणाः पुरतो गच्छन्ति । ततश्च अनेनैव विधिना महोत्सवेन च चैत्यपरिपाटीं गुरुवन्दनं मण्डलीपूजनं पुरदेवतादिपूजनं विधाय पुरोपान्ते तिष्ठेत् । ततः पथि गच्छेत् । तथा अनयैव रीत्या कन्याधिष्ठितपुरप्रवेशोऽपि विधेयः । तत्रैव पुरे विवाहाय चलतो वरस्याप्ययमेव विधिः । तथा नित्यस्नानानन्तरं वधूवरयोः कौसुंभसूत्रेण शरीरमानं । ततः समागते विवाहदिने विवाहलग्नादर्वाक् तत्पुरवासी वा अन्यदेशागतो वा वरः तेनैव पूर्वोक्तेन विधिना पाणिग्रहणाय चलेत् । तद्भगिन्यो विशेषेण लवणाद्युत्तारणं कुर्वन्ति । ततो वरस्याडंबरः गृह्यगुरुसहितः रथ्यागृहद्वारि गच्छेत् । तत्र तिष्ठतस्तस्य श्वश्रूजनः कर्पूरदीपादिभिरारात्रिकं कुर्यात् । ततोऽन्या शरावसंपुटं ज्वलदङ्गारलवणगर्भं त्रडत्रडिति शब्दायमानं वरस्य निरुञ्छनं विधाय वरप्रवेशवाममार्गे स्थापयेत् । ततोऽन्या मन्थानं कौसुंभवस्त्रालङ्कृतं समानीय त्रिवेलं तेन वरललाटं स्पृशेत् । ततो वरो वाहनादुत्तीर्य वामपादेन तदग्निलवणगर्भं शरावसंपुटं खण्डयेत् । ततो वरश्वश्रूः कन्यामातुलपत्नी वा कन्यामातुलो वा कौसुंभवस्त्रं वरकंठे निक्षिप्याकृष्यमाणं मातृगृहं नयेत् । तत्र पूर्वमासने निविष्टाया विभूषितायाः कृतकौतुकमङ्गलायाः कन्याया वामपार्श्वे मातृदेव्यभिमुखं वरं निवेशयेत् । ततो गृह्यगुरुर्लग्नवेलायां शुभांशके चन्दनद्रव्यसंपिष्टशमीत्वक्पिप्पलत्वक्मिश्रितलिप्तौ वधूवरयोर्दक्षिणहस्तौ योजयेत् । उपरि कौसुंभसूत्रेण बध्नीयात् । हस्तबन्धनमन्त्रः—"ॐ अर्हं आत्मासि, जीवोऽसि, समकालोऽसि, समचित्तोऽसि, समकर्मासि, समाश्रयोऽसि, समदेहोऽसि, समक्रियोऽसि, समस्नेहोऽसि, समचे-

समविषादोऽसि, समावस्थोऽसि, समनिमि-
ष्टितोऽसि, समाभिलापोऽसि, समेच्छोऽसि, समप्रमोदोऽसि, समविषादोऽसि, समावस्थोऽसि, समनिमि-
त्तोऽसि, समवचा असि, समक्षुत्तृष्णोऽसि, समगमोऽसि, समागमोऽसि, समविहारोऽसि, समविषयोऽसि,
समशब्दोऽसि, समरूपोऽसि, समरसोऽसि, समगन्धोऽसि, समस्पर्शोऽसि, समेन्द्रियोऽसि, समाश्रवोऽसि,
समबन्धोऽसि, समसंवरोऽसि, समनिर्जरोऽसि, सममोक्षोऽसि, तदेह्येकत्वमिदानीं अर्हं ॐ ।" इति हस्तब-
न्धनमन्त्रः । अत्र समयान्तरे देशान्तरे कुलान्तरे लग्नसाधनवेलायां मधुपर्कप्राशनं वराय गोयुग्मदानं क-
न्याया आभरणपरिधापनं इत्यादि कुर्वन्ति । ततः वधूवरयोः मातृगृहोपविष्टयोः सतोः कन्यापक्षीया वेदिर-
चनां कुर्वन्ति । तस्या विधिरयं–कैश्चित् काष्ठस्तंभैः काष्ठाच्छादनैः मण्डपान्तश्चतुष्कोणा वेदी क्रियते । कै-
श्चिच यथोपरि लघुलघुभिश्चतुष्कोणनिहितैरुपर्युपरिधृतैः स्वर्णरूप्यताम्रमृत्कलशैः सप्त सप्त सङ्ख्यैः चतुःपार्श्वे-
चतुश्चतुरार्द्रवंशबद्धैर्वेदी क्रियते । चतुर्ष्वपि धारेषु वस्त्रमयानि काष्ठमयानि वा तोरणानि वन्दनमालिकाश्च ।
अन्तस्त्रिकोणमग्निकुण्डं । ततो गृह्यगुरुः पूर्वोक्तवेषधारी वेदीप्रतिष्ठां कुर्यात् । तस्याश्चायं विधिः–वासपुष्पा-
क्षतपरिपूर्णहस्तः, "ॐ नमः क्षेत्रदेवतायै शिवायै क्षाँ क्षीँ क्षूँ क्षौँ क्षः इह विवाहमण्डपे आगच्छ २, इह
वलिपरिभोग्यं गृह्ण[1] २ भोगं देहि, सुखं देहि, यशो देहि, सन्ततिं देहि, ऋद्धिं देहि, वृद्धिं देहि, सर्वसमी-
हितं देहि देहि स्वाहा ।" इति पठित्वा चतुर्ष्वपि कोणेषु प्रत्येकं वासमाल्याक्षतक्षेपः । तोरणस्य प्रतिष्ठा

१ गृहाणेत्यर्थः ।

चैवं। तन्मन्त्रो यथा—"ॐ ह्रीँ श्रीँ नमो द्वारश्रिये सर्वपूजिते सर्वमानिते सर्वप्रधाने इह तोरणस्था सर्वं समीहितं देहि २ स्वाहा।" इति तोरणप्रतिष्ठा। ततोऽग्निकुण्डे वेदिमध्याग्नेयकोणेऽग्निं न्यसेत् मन्त्रपूर्वं। अग्निन्यासमन्त्रो यथा—"ॐ रं रं रीं रौं रः नमोऽग्नये, नमो बृहद्भानवे, नमोऽनन्ततेजसे, नमोऽनन्तवीर्याय, नमोऽनन्तगुणाय, नमो हिरण्यरेतसे, नमः छागवाहनाय, नमो हव्याशनाय, अत्र कुण्डे आगच्छ २, अवतर २, उत्तिष्ठ २, स्वाहा।" समयान्तरे देशान्तरे कुलान्तरे च हस्तलेपनं वेद्यन्तरेव कुर्वन्ति। देशकुलाचारादौ मधुपर्कप्राशनानन्तरं वेदिहस्तलेपात् प्रथमं परस्परं कम्बायुद्धकण्ठायुधवधूवरास्फालनवेडानयनमणिग्रथनस्नानआष्ट्रकर्मपर्याणकर्मवस्त्रकौसुंभसूत्राकर्षणप्रभृतिकर्माणि कुर्वन्ति। तानि च देशविशेषाल्लोकेभ्यो विज्ञेयानि न व्यवहारशास्त्रेषूक्तानि। परं स्त्रीभिः सौभाग्यप्राप्तये सपत्न्याद्यभावाय वरवशीकरणाय च क्रियन्ते। ततो वधूवरौ युक्तहस्तावेव नारीनरकव्यारूढौ गीतवाद्यादिडंबरे महति दक्षिणद्वारेण प्रवेश्य वेदिमध्यमानयेत्। ततो देशकुलाचारेण काष्ठासनयोर्वेत्रासनयोः सिंहासनयोः अधोमुखीकृत्य शरमयखार्योर्वा वधूवरौ पूर्वाभिमुखावुपवेशयेत्। तथा हस्तलेपे वेदिकर्मणि च कुलाचारानुसारेण सदशकौरवस्त्राणि वा कौसुंभवस्त्राणि वा स्वभाववस्त्राणि वधूवरयोः परिधाप्यन्ते। ततो गृह्यगुरुरुत्तराभिमुखः मृगाजिनासीनो वह्निं शमीपिप्पलकपित्थकुटजबिल्वामलकसमिद्भिः प्रबोध्य अनेन मन्त्रेण घृतमधुतिलयवनानाफलानि जुहुयात्। मन्त्रो यथा—"ॐ अर्हं ॐ अग्ने प्रसन्नः सावधानो भव, तवायमवसरः, तदाकारयेन्द्रं

यमं नैर्ऋतिं वरुणं वायुं कुबेरमीशानं नागान् ब्रह्माणं लोकपालान्, ग्रहांश्च सूर्यशशिकुजसौम्यबृहस्पतिकविशनिराहुकेतून्सुरांश्चासुरनागसुपर्णविद्युदग्निद्वीपोदधिदिक्कुमारान् भवनपतीन् पिशाचभूतयक्षराक्षसकिन्नरकिंपुरुषमहोरगगन्धर्वान् व्यन्तरान् चन्द्रार्कग्रहनक्षत्रतारकान् ज्योतिष्कान् सौधर्मैशानश्रीवत्साखंडलपद्मोत्तरब्रह्मोत्तरसनत्कुमारमाहेन्द्रब्रह्मलान्तकशुक्रसहस्रारानतप्राणतारणाच्युतग्रैवेयकानुत्तरभवान् वैमानिकान् इन्द्र सामानिकान् पार्षद्यत्रयस्त्रिंशल्लोकपालानीकप्रकीर्णकलोकान्तिकाभियोगिकभेदभिन्नांश्चतुर्णिकायानपि सभार्यान् साधुधवलवाहनान् स्वस्वोपलक्षितचिह्नान्, अप्सरसश्च परिगृहीतापरिगृहीताभेदभिन्नाः ससखीकाः सदासीकाः साभरणा रुचकवासिनीर्दिक्कुमारिकाश्च सर्वाः, समुद्रनदीगिर्याकरवनदेवतास्तदेतान् सर्वांश्च, इदं अर्घ्यं पाद्यमाचमनीयं बलिं चरुं हुतं न्यस्तं ग्राहय २, स्वयं गृहाण २, स्वाहा अर्हं ॐ।" ततः सुष्ठुहुतप्रहुतप्रदीप्तेऽग्नौ सति गृह्यगुरुस्तत उत्थाय वरस्य दक्षिणपार्श्वे स्थिताया वध्वाः पुरः सम्मुखीन उपविश्य इति वदेत्—"ॐ अर्हं इदमासनमध्यासीनौ स्वध्यासीनौ स्थितौ सुस्थितौ तदस्तु वां सनातनः सङ्गमः अर्हं ॐ।" इत्युक्त्वा कुशाग्रेण तीर्थोदकैस्तावभिषिञ्चेत्। ततो वध्वाः पितामहः पिता वा पितृव्यो वा भ्राता वा मातामहो वा मातुलो वा कुलज्येष्ठो वा कृतधर्मानुष्ठानोचितवेषो वधूवरयोः पुर उपविशेत्। ततः शान्तिकपौष्टिकाभ्यामारभ्य विवाहमासपर्यन्तं मङ्गलगानवादित्रवादिनां भोजनतांबूलवस्त्रसामग्री सदैव गवेष्यते। ततो गृह्यगुरुः "ॐ नमोऽर्हत्सिद्धाचार्योपाध्यायसर्वसाधुभ्यः" इत्युक्त्वा दूर्वा-

क्षतपूर्णकरो वधूवरयोः पुर इति वक्ति—"विदितं वां गोत्रं संबन्धकरणेनैव ततः प्रकाश्यतां जनाग्रतः।" ततः पूर्वं वरपक्षीयाः स्वगोत्रप्रवरज्ञात्यन्वयप्रकाशनं कुर्वते। ततश्च ते पुनः वरस्य मातृपक्षीया गोत्रप्रवरज्ञात्यन्वयान् प्रकाशयन्ति ततः कन्यापक्षीयाः स्वगोत्रप्रवरज्ञात्यन्वयान् प्रकाशयन्ति। ते पुनः कन्याया मातृपक्षीया गोत्रप्रवरज्ञात्यन्वयादि प्रकाशयन्ति। ततो गृह्यगुरुः—"ॐ अर्हं अमुकोऽमुकगोत्रीयः, इयत्प्रवरः, अमुकज्ञातीयः, अमुकान्वयः, अमुकप्रपौत्रः, अमुकपौत्रः, अमुकपुत्रः, अमुकगोत्रीयः, इयत्प्रवरः, अमुकज्ञातीयः, अमुकान्वयः, अमुकप्रदौहित्रः, अमुकगोत्रीयः, इयत्प्रवरः अमुकज्ञातीयः, अमुकान्वयः, अमुकदौहित्रः, अमुकगोत्रीया, इयत्प्रवरा, अमुकज्ञातीया, अमुकान्वया, अमुकप्रपौत्री, अमुकपौत्री, अमुकपुत्री, अमुकगोत्रीया, इयत्प्रवरा, अमुकज्ञातीया, अमुकान्वया, अमुकप्रदौहित्री, अमुकगोत्रीया, इयत्प्रवरा, अमुकज्ञातीया, अमुकान्वया, अमुकदौहित्री, अमुकावर्या, तदेतयोर्वर्यावरयोर्वरवर्ययोर्निबिडो विवाहसंबन्धोऽस्तु, शान्तिरस्तु, पुष्टिरस्तु, तुष्टिरस्तु धृतिरस्तु, वृद्धिरस्तु, धनसन्तानवृद्धिरस्तु अर्हं ॐ।", ततो गृह्यगुरुर्वरवधूसकाशात् गन्धपुष्पधूपनैवेद्यैर्वैश्वानरपूजां कारयेत्। ततो वधूर्लाजाञ्जलिं वह्नौ निक्षिपेत्। ततः पुनस्तथैव दक्षिणे वधूः वामे वर उपविशेत्। ततो गृह्यगुरुर्वेदमन्त्रं पठेत्—"ॐ अर्हं अनादि विश्वमनादिरात्मा, अनादिः कालोऽ-

१ अनेनोपदेशेन वरकन्याभ्यामुभाभ्यामेवोभयवंशशुद्धाभ्यां भाव्यमित्युपपाद्यते एतेनानादृतगोत्रप्रवरज्ञातिव्यवहारा वर्णसंकरसंकीर्णतादिप्रचारतत्परा गोत्रादिनिरपेक्षो विवाहइतिवादिनो नवीनाः परास्ताः.

नादि कर्म, अनादिः संबन्धो देहिनां देहानुगतानुगतानां क्रोधाहङ्कारच्छद्मलोभैः संज्वलनप्रत्याख्यानवर-
णानन्तानुबन्धिभिः शब्दरूपरसगन्धस्पर्शैरिच्छानिच्छापरिसङ्कलितैः संबन्धोऽनुबन्धः प्रतिबन्धः संयोगः
सुगमः सुकृतः सुनिवृत्तः सुतुष्टः सुपुष्टः सुप्रासः सुलब्धो द्रव्यभावविशेषेण अर्हं ॐ" इति मन्त्रं पठित्वा पुन-
रिति कथयेत्। "तदस्तु वां सिद्धप्रत्यक्षं, केवलिप्रत्यक्षं, चतुर्निकायदेवप्रत्यक्षं, विवाहप्रधानाग्निप्रत्यक्षं, नाम-
प्रत्यक्षं, नरनारीप्रत्यक्षं, नृपप्रत्यक्षं, जनप्रत्यक्षं, गुरुप्रत्यक्षं, मातृप्रत्यक्षं, पितृप्रत्यक्षं, मातृपक्षप्रत्यक्षं, पितृपक्ष-
प्रत्यक्षं, ज्ञातिस्वजनबन्धुप्रत्यक्षं, संबन्धः सुकृतः, सदनुष्ठितः सुप्रासः सुसङ्गतः तत् प्रदक्षिणीक्रियतां तेजो-
राशिर्विभावसुः।" इति कथयित्वा तथैव ग्रथिताञ्चलौ वधूवरौ वैश्वानरं प्रदक्षिणीकुरुतः। तथा प्रदक्षिणी-
कृत्य तथैव पूर्वरीत्योपविशतो लाजात्रयस्य प्रदक्षिणात्रये पुरतो वधूः पश्चाद्वरः दक्षिणे वध्वासनं वामे वरा-
सनं इति प्रथमलाजाकर्म। तत आसनोपविष्टयोस्तयोर्गुरुर्वेदमन्त्रं पठेत्। "ॐ अर्हं कर्मास्ति, मोहनीयमस्ति,
दीर्घस्थितिरस्ति, निबिडमस्ति, दुश्छेद्यमस्ति, अष्टाविंशतिप्रकृतिरस्ति, क्रोधोऽस्ति, मानोऽस्ति, मायास्ति, लोभो-
ऽस्ति, संज्वलनोऽस्ति, प्रत्याख्यानावरणोऽस्ति, अप्रत्याख्यानावरणोऽस्ति, अनन्तानुबन्ध्यस्ति, चतुश्चतुर्विधो-
ऽस्ति, हास्यमस्ति, रतिरस्ति, अरतिरस्ति, भयमस्ति, जुगुप्सास्ति, शोकोऽस्ति, पुंवेदोऽस्ति, स्त्रीवेदोऽस्ति,
नपुंसकवेदोऽस्ति, मिथ्यात्वमस्ति, मिश्रमस्ति, सम्यक्त्वमस्ति, सप्ततिकोटाकोटिसागरस्थितिरस्ति, अर्हं ॐ।"
इति वेदमन्त्रं पठित्वा पुनरिति कथयेत्—"तदस्तु वां निकाचितनिबिडबद्धमोहनीयकर्मोदयकृतः स्नेहः सुकृ-

तोऽस्तु, सुनिष्ठितोऽस्तु, सुसंबद्धोऽस्तु, आभवमक्षयोऽस्तु तत्प्रदक्षिणीक्रियतां विभावसुः ।” पुनरपि तथैव वह्निं प्रदक्षिणीकुर्यात् । इति द्वितीयलाजाकर्म । चतसृष्वपि लाजासु प्रदक्षिणाप्रारंभे वधूर्वह्नौ लाजामुष्टिं क्षिपेत् । ततस्तयोस्तथैवोपविष्टयोर्गुरुरिति वेदमन्त्रं पठेत्—“ॐ अर्हं कर्मास्ति, वेदनीयमस्ति, सातमस्ति, असातमस्ति, सुवेद्यं सातं दुर्वेद्यमसातं, सुवर्गणाश्रवणं सातं दुर्वर्गणाश्रवणमसातं, शुभपुद्गलदर्शनं सातं दुष्पुद्गलदर्शनमसातं, शुभषड्रसास्वादनं सातं अशुभषड्रसास्वादनमसातं, शुभगन्धाघ्राणं सातं अशुभगन्धाघ्राणमसातं, शुभपुद्गलस्पर्शः सातं अशुभपुद्गलस्पर्शोऽसातं, सर्वं सुखकृत्सातं सर्वं दुःखकृदसातं, अर्हं ॐ ।” इति वेदमन्त्रं पठित्वा इति कथयेत्—“तदस्तु वां सातवेदनीयं माभूदसातवेदनीयं तत्प्रदक्षिणीक्रियतां विभावसुः ।” इति वैश्वानरं प्रदक्षिणीकृत्य वधूवरौ तथैवोपविशतः इति तृतीयलाजाकर्म । ततो गृह्यगुरुरिति वेदमन्त्रं पठेत्—“ॐ अर्हं सहजोऽस्ति, स्वभावोऽस्ति, संबन्धोऽस्ति, प्रतिबद्धोऽस्ति, मोहनीयमस्ति, वेदनीयमस्ति, नामास्ति, गोत्रमस्ति, आयुरस्ति, हेतुरस्ति, आश्रवबद्धमस्ति, क्रियाबद्धमस्ति, कायबद्धमस्ति, तदस्ति सांसारिकः संबन्धः अर्हं ॐ ।” इति वेदमन्त्रं पठित्वा कन्यायाः पितुः पितृव्यस्य भ्रातुः कुलज्येष्ठस्य वा हस्तं तिलयवकुशदूर्वागर्भेण जलेन पूरयित्वा इति वदेत्, “अद्यामुकसंवत्सरे अमुकायने अमुकर्त्तौ अमुकमासे अमुकपक्षे अमुकतिथौ अमुकवारे अमुकनक्षत्रे अमुकयोगे अमुककरणे अमुकमुहूर्त्ते पूर्वकर्मसंबन्धानुबद्धां वस्त्रगन्धमाल्यालङ्कृतां सुवर्णरूप्यमणिभूषणभूषितां ददात्ययं, प्रतिगृह्णीष्व” इति कथयित्वा वधूवरयोर्युक्त-

हस्तान्तराले इति जलं निक्षेपयेत्। वरः कथयति—"प्रतिगृह्णामि प्रतिगृहीता।" गुरुः कथयति, "सुप्रतिगृहीतास्तु, शान्तिरस्तु, पुष्टिरस्तु, ऋद्धिरस्तु, वृद्धिरस्तु, धनसन्तानवृद्धिरस्तु, ततः पूर्वे लाजात्रये वरहस्तोपरिस्थं कन्याहस्तं अधः कुर्यात्। वरहस्तं चोपरि कुर्यात्। ततो वरवध्वावासनादुत्थाप्य वरं पुरः कुर्यात् वधूं च पश्चात्। ततो लाजमुष्टिं वह्नौ निक्षिप्य गृह्यगुरुरिति कथयेत्—"प्रदक्षिणीक्रियतां विभावसुः।" वरवध्वोर्हुताशं प्रदक्षिणीकुर्वतोः कन्यापिता यावत्कुलज्येष्ठो वा सर्वं वरवध्वोर्देयं वस्तु वस्त्राभरणस्वर्णरूप्यताम्रकांस्यभूमिनिष्क्रयकरितुरगदासीगोवृषपल्यङ्कतूलिकोच्छीर्षकदीपशस्त्रपाकभाण्डप्रभृति सर्वं वेद्यन्तः समाहरेत्। अन्येऽपि तदीया वन्धुसंबन्धिसुहृदादयः स्वसंपदानुसारेण तत्पूर्वोक्तं वस्तु वेद्यन्तरानयन्ति। ततः प्रदक्षिणान्ते वरवध्वौ तथैवासने उपविशतः। नवरं चतुर्थलाजानन्तरं वरस्यासनं दक्षिणे वध्वा आसनं वामे। ततो गृह्यगुरुः कुशदूर्वाक्षतवासपूर्णकरः इति कथयेत्—"येनानुष्ठानेनाद्योऽर्हन् शक्रादिदेवकोटिपरिवृतो भोग्यफलकर्म भोगाय संसारिजीवव्यवहारमार्गसंदर्शनाय सुनन्दासुमङ्गले पर्यणैषीत्, ज्ञातमज्ञातं वा तदनुष्ठानमनुष्ठितमस्तु।" इत्युक्त्वा वासदूर्वाक्षतकुशान् वरवधूमस्तके क्षिपेत्। ततो गृह्यगुरुणादिष्टो वधूपिता जलं यवतिलकुशान् करे गृहीत्वा वरकरे दत्वा इति वदेत्, "सुदायं ददामि प्रतिगृहाण।" वरः कथयति, "प्रतिगृह्णामि प्रतिगृहीतं परिगृहीतं।" गुरुः कथयति, "सुगृहीतमस्तु सुपरिगृहीतमस्तु। पुनस्तथैव वस्त्र-

---

१ इदं पुस्तकादीनामुपलक्षणम् व्यवस्था शक्त्या जात्या वा कार्या। क्षत्रियस्य शस्त्रं प्रधानमन्येषामप्यावश्यकम्.

भूषणहस्त्यादिदायदानेषु वधूपितुर्वरस्य इदमेव वाक्यं अयमेव विधिः । ततः सर्ववस्तुषु दत्तेषु गुरुरिति कथयेत्, "वधूवरौ वां पूर्वकर्मानुसंबन्धेन निविडेन निकाचितबद्धेन अनुपवर्त्तनीयेन अघातनीयेन अनुपायेन अश्लथेन अवश्यभोग्येन विवाहः प्रतिबद्धो बभूव, तदस्त्वखण्डितोऽक्षयोऽव्ययो निरपायो निर्व्याबाधः सुखदोऽस्तु, शान्तिरस्तु, पुष्टिरस्तु, ऋद्धिरस्तु, वृद्धिरस्तु, धनसन्तानवृद्धिरस्तु ।" इत्युक्त्वा तीर्थोदकैः कुशाग्रेणाभिषिञ्चेत् । पुनर्गुरुस्तथैव वधूवरावुत्थाप्य मातृगृहं नयेत् । तत्र नीत्वा वधूवरयोरिति वदेत्, "अनुष्ठितो वां विवाहो वत्सौ! सस्नेहौ, सभोगौ, सायुषौ, सधर्मौ, समदुःखसुखौ, समशत्रुमित्रौ, समगुणदोषौ, समवाङ्मनःकायौ, समाचारौ, समगुणौ भवतां ।" ततः कन्यापिता करमोचनाय गुरुं प्रति वदति । गुरुरिति वेदमन्त्रं पठेत्, "ॐ अर्हं जीव त्वं कर्मणा बद्धः, ज्ञानावरणेन बद्धः, दर्शनावरणेन बद्धः, वेदनीयेन बद्धः, मोहनीयेन बद्धः, आयुषा बद्धो, नाम्ना बद्धो, गोत्रेण बद्धः, अन्तरायेण बद्धः, प्रकृत्या बद्धः, स्थित्या बद्धः, रसेन बद्धः, प्रदेशेन बद्धः, तदस्तु ते मोक्षो गुणस्थानारोहक्रमेण अर्हं ॐ ।" इति वेदमन्त्रं पठित्वा पुनरिति वदेत्, "मुक्तयोः करयोरस्तु वां स्नेहसंबन्धोऽखण्डितः ।" इत्युक्त्वा करौ मोचयेत् । कन्यापिता करमोचनपर्वणि जामात्रा प्रार्थितं स्वसंपत्त्यनुसारि वा बहु वस्तु दद्यात् । तद्दानविधिः, पूर्वयुक्त्यैव ततः पुनर्मातृगृहादुत्थाय पुनर्वेदिगृहमागच्छतः । ततो गृह्यगुरुरासनोपविष्टयोस्तयोरिति वदेत्—"पूर्वं युगादिभगवान् विधिनैव येन विश्वस्य कार्यकृतये किल पर्यणैषीत् । भार्याद्वयं तदमुना विधिनास्तु युग्ममेतत्सुकामपरिभोगफ-

लानुबन्धि ॥ १ ॥" इत्युक्त्वा पूर्वोक्तविधिनाञ्चलमोचनं कृत्वा, "वत्सौ ! लब्धविषयौ भवतां" इति गुर्वनु-
ज्ञातौ दंपती विविधविलासिनीगणवेष्टितौ शृङ्गारगृहं प्रविशतः। तत्र पूर्वस्थापितमदनस्य कुलवृद्धानुसारेण
मदनपूजनं कुरुतः। ततः वधूवरयोः सममेव क्षीरान्नभोजनं ततो यथायुक्त्या सुरतप्रचारः। ततस्तथैवागमन-
रीत्या सोत्सवं स्वगृहं व्रजतः। ततो वरस्य मातापितरौ वधूवरयोः निरुञ्छनमङ्गलविधिं स्वदेशकुलाचारेण
कुरुतः। कङ्कणबन्धनकङ्कणमोचनद्यूतक्रीडावेणीग्रन्थनादिकर्माणि सर्वाण्यपि तद्देशकुलाचारेण कर्त्तव्यानि।
विवाहात्पूर्वं वधूवरपक्षद्वयेऽपि भोजनदानं। तदनन्तरं धूलिभक्तजन्यभक्तप्रभृति देशकुलाद्याचारेण। ततः
ससाहानन्तरं वरवधूविसर्जनं। तस्य चायं विधिः, ससाहं विविधभक्त्या पूजितस्य जामातुः पूर्वोक्तरीत्या
अञ्चलग्रन्थनं विधाय अनेकवस्तुदानपूर्वं तेनैवाडंबरेण स्वगृहप्रापणं कुर्यात्। ततः ससरात्रिकमासिकषाण्मा-
सिकवार्षिकमहोत्सवकरणं स्वकुलसंपत्तिदेशाचारानुसारेण विधेयं। ससरात्रानन्तरं मासानन्तरं वा कुला-
चारानुसारेण कन्यापक्षे मातृविसर्जनं पूर्वोक्तरीत्या करणीयं। गणपतिमदनादिविसर्जनविधिर्लोकप्रसिद्धः।
वरपक्षे कुलकरविसर्जनविधिस्तु कथ्यते। कुलकरस्थापनानन्तरं नित्यं कुलकरपूजा विधेया। विसर्जनकाले
कुलकरान् संपूज्य गृह्यगुरुः पूर्ववत्, "ॐ अमुककुलकराय" इत्यादि पूर्ववत्संपूर्णं मन्त्रं पठित्वा, "पुनरागमनाय
स्वाहा" इति सर्वानपि कुलकरान् विसर्जयेत्, "ॐ आज्ञाहीनं क्रियाहीनं मन्त्रहीनं च यत्कृतम्। तत्सर्वं कृपया
देव क्षमस्व परमेश्वर ॥ १ ॥" इति कुलकरविसर्जनविधिः। ततो मण्डलीपूजा गुरुपूजा वासक्षेपादि पूर्व-

वत्। साधुभ्यो वस्त्रपात्रदानं । ज्ञानपूजा विप्रेभ्योऽपरमार्गणेभ्यो यथासंपत्ति दानं । तथा च देशकुलसमयान्तरे विवाहलग्ने प्राप्ते वरे श्वशुरगृहं प्रविष्टे षडाचारकरणं । पूर्वमङ्गणे आसनदानं, श्वशुरः कथयति, "विष्टरं प्रतिगृह्णाण।" वरः कथयति, "ॐ प्रतिगृह्णामि" इत्यासने उपविशति । ततः श्वशुरो वरस्य पादौ प्रक्षालयेत्। ततोऽर्घदानं दधिचन्दनाक्षतदूर्वाकुशपुष्पश्वेतसर्षपजलैः श्वसुरो जामात्रे अर्घं ददाति। तथाचमनदानं। ततो गन्धाक्षतपूजातिलककरणं ततो मधुपर्कप्राशनं इति विष्टरपाद्यार्घ्याचमनीयगन्धमधुपर्कैः षडाचाराः। ततो गृहान्तः वधूवरयोः परस्परं दृष्टिसंयोगः परस्परं द्वयोर्नामग्रहणं शेषं पूर्ववत्—"इति देशकुलाचारैर्विवाहस्य विधिः परः। विधेयश्च स्वसंपत्तिबन्धपक्षानुसारतः ॥ १ ॥ मूलशास्त्रं समालोक्य विधिरेष प्रदर्शितः। स्वदेशकुलजाचारः परो ज्ञेयो महात्मभिः ॥ २ ॥ वरकार्यं रात्रिमातृकुलदेव्यादिपूजनम् । स्वस्ववंशानुसारेण विधेयं स्याद्यथाविधि ॥ ३ ॥ वेद्यानयनकर्मापि तथा मण्डपबन्धनम्। कुलवृद्धादिवचनैर्विधेयं विधिवेदिभिः ॥ ४ ॥ कार्यः कङ्कणबन्धस्तु विवाहादौ कुलोचितः । विवाहान्ते तस्य मोक्षः कार्यो वृद्धगिरा परम् ॥ ५ ॥ ऊर्णामयं सूत्रमयं कौशेयमयमित्यपि। परे मुञ्जमयं प्राहुः कङ्कणं कुलयुक्तितः ॥ ६ ॥ केचिन्मातृगृहे प्राहुर्दंपत्योः करबन्धनम्। मधुपर्काशनात्पश्चात्परे वेद्यासनस्थयोः ॥ ७ ॥ अग्निप्रदक्षिणाकाले शिलालोष्ठ्योः पदेन च। वध्वाः स्पर्शनमित्याहुः परे नैवच किञ्चन ॥ ८ ॥ क्वचिद् देशान्तरे चैव वरकन्यासमागमे । विवाहमाहुः कुत्रापि तयोरञ्चलकर्षणात् ॥ ९ ॥ देशाचारे विवाहान्तरुपहासं च गानतः। मिथः कुर्वन्ति महिला ज्ञेयो

देशकुलादितः ॥ १० ॥ पितृमातृगिरा यस्तु सङ्गमो वरकन्ययोः । ज्ञेयो विवाहधर्मः स विधिना येन केनचित् ॥ ११ ॥ यहुनाडंबरेणापि यहुद्रव्यव्ययेन च । ज्ञेयः पार्[1]विवाहः स पितृमातृवचोविना ॥ १२ ॥ अत्रान्तः कथितो यस्तु स वेदोक्तो विधिः परः । देशान्वयव्यवहारादन्यः कार्यः पृथग्विधः ॥ १३ ॥" नलिखचउ वेश्यायाः सर्वकामुककाम्याया विवाहविधिरुच्यते । स चायं । पूर्वोक्ते विवाहलग्ने शुद्धे कुमारिकां भाविनीं वेश्यां स्नातविलिप्तालङ्कृतां कृतकौतुकमाङ्गल्यां वेश्याजनपरिवृतां समीपस्थबहुगीतवादित्रां गृह्यगुरुर्मदन-प्रासादे स्थापितमदनसमीपे वा समानयेत् । ततस्तस्या द्वावपि हस्तौ कौसुंभसूत्रेण प्रतिमामदनहस्ताभ्यां सह वध्नीयात् । ततः पञ्चबाणमन्त्रेण अष्टोत्तरशतपठितेन कुशाग्रोद्धृतेन गन्धोदकेन तामभिषिञ्चेत् । ततो गृह्यगुरुर्वेदमन्त्रं पठन् तत्प्रतिमायाः तां त्रिः प्र[2]दक्षिणयेत् । मन्त्रो यथा—"ॐ अर्हं कामोऽसि, अभिलाषोऽसि, चित्तजन्मासि, सङ्कल्पजन्मासि, काम्योऽसि, सेव्योऽसि, प्रियोऽसि, मान्योऽसि, शब्दोऽसि, रूपोऽसि, रसोऽसि, गन्धोऽसि, स्पर्शोऽसि, सर्वगोऽसि, सर्वव्यापकोऽसि, सर्वार्थोऽसि, आनन्ददोऽसि, ऊह्योऽसि, मदनोऽसि, मथनोऽसि, उन्मादनोऽसि, मोहनोऽसि, तापनोऽसि, शोषणोऽसि, मारणोऽसि, विकृति-

---

१ इति ग्रन्थेन सूत्रसम्मतेन पित्रादिनिरपेक्षो वरवधूप्रीतिमात्रपर्याप्तेतिकर्त्तव्यो विवाहो धर्म्य इति वादिनः परास्ताः । २ ईदृशः प्रयोगः पुनःपुनरायातीति न परिवृत्यते.

णागमो महुरवक्को। गंभीरो धीमंतो उवएसपरो स आयरिओ ॥ २ ॥ अपरिस्सावी सोमो संगहसीलो अभिग्गहमई य। अविकत्थणो अचवलो पसंतहिअओ गुरू होई ॥ ३ ॥ कइआ वि जिणवरिंदा पत्ता अयरामरं पहं दाउं। आयरिण (प) हिववयणं धारिज्जइ संपयं सयलं ॥ ४ ॥" षट्त्रिंशद्गुणा गुरोर्यथा—"आयारे १ सुअविणये २ विक्खवणे चेव होइ बोधव्वे। दोसस्स परीघाए विणए चउहेव पडिवत्ती ॥ १ ॥" अथवा— "समत्तनाणचरणा पत्तेयं अट्ठ अट्ठ भेइल्ला। बारसभेओ अ तवो सूरिगुणा हुंति छत्तीसं ॥ २ ॥" अथवा— "संविग्गो १ मज्झत्थो २ संतो ३ मओ ४ ऊ ५ विऊ ६ सु संतुत्थो ७। गीयत्थो ८ कडयोगी ९ भावन्नू १० लद्धिसंपन्नो ११ ॥ १ ॥ देसणिओ १२ आदेओ १३ महमं १४ विन्नाणिओ १५ निरववाई १६। नेमित्ती १७ ओअंसी १८ उवयारी १९ धारणावलिओ २० ॥ २ ॥ बहुदिट्ठो २१ नयनिउणो २२ पिअंवओ २३ सुस्सरो २४ तवोनिरओ। २५। सुसरीरो २६ सुप्पइभो २७ चाईओ २८ आणंदओ २९ चक्खो ३० ॥ ३ ॥ गंभीरो ३१ अणुवत्ती ३२ पडिवन्नयपालगो ३३ थिरो ३४ धीरो ३५। उचियन्नं ३६ सूरीणं छत्तीसगुणा सुअक्खाया ॥ ४ ॥" ईदृशे गुरौ पितृपरंपरामानिते तदभावेऽन्यस्मिन् गुरुगुणयुक्ते प्राप्ते गृहिणो व्रतारोपविधिर्युज्यते। स चायं संस्कारचतुर्दशकसंस्कृतो गृही गृहिधर्माय कल्पते। यत उक्तमागमे—"धम्मरयणस्सजुगो अक्खुद्दो १ रूववं २ पगइसोमो ३। लोअप्पिओ ४ अक्रूरो ५ भीरू ६ असढो ७ सुदप्पिणो ८ ॥ १ ॥ लज्जालुओ ९ दयालू १० मज्झत्थो ११ सोमदिट्ठि १२ गुणरागी १३। सक्कहसपक्खहुत्तो १४ सुदीहदंसी १५ विसे-

सन्नू १६ ॥ २ ॥ वुड्ढाणुगो १७ विणीओ १८ कयन्नुओ १९ परहिअत्थकारी २० अ। तह चेव लद्धलक्खो २१
इगवीसगुणो हवइ सड्ढो ॥३॥" योगशास्त्रे श्रीहेमचन्द्राचार्योक्तिर्यथा—"न्यायसंपन्नविभवः शिष्टाचारप्रशं-
सकः। कुलशीलसमैः सार्द्धं कृतोद्वाहोऽन्यगोत्रजैः॥१॥पापभीरुः प्रसिद्धं च देशाचारं समाचरन्। अवर्णवादी
न क्वापि राजादिषु विशेषतः ॥२॥ अनतिव्यक्तगुप्ते च स्थाने सुप्रातिवेश्मिके। अनेकनिर्गमद्वारे विवर्जितनि-
केतनः ॥३॥ कृतसङ्गः सदाचारैर्मातापित्रोश्च पूजकः। त्यजन्नुपप्लुतं स्थानमप्रवृत्तश्च गर्हिते ॥४॥ व्ययमायोचितं
कुर्वन् वेषं वित्तानुसारतः। अष्टभिर्धीगुणैर्युक्तः शृण्वानो धर्ममन्वहम्॥५॥ अजीर्णे भोजनत्यागी काले भोक्ता
च सात्म्यतः। अन्योऽन्याप्रतिबन्धेन त्रिवर्गमपि साधयन् ॥ ६ ॥ यथावदतिथौ साधौ दीने च प्रतिपत्तिकृत्।
सदानभिनिविष्टश्च पक्षपाती गुणेषु च ॥ ७ ॥ अदेशाकालयोश्चर्यां त्यजन् जानन् बलाबलम्। वृत्तस्थज्ञानवृ-
द्धानां पूजकः पोष्यपोषकः ॥ ८ ॥ दीर्घदर्शी विशेषज्ञः कृतज्ञो लोकवल्लभः। सलज्जः सदयः सौम्यः परोपकृ-
तिकर्मठः ॥९॥ अन्तरङ्गारिषड्वर्गपरिहारपरायणः। वशीकृतेन्द्रियग्रामो गृहिधर्माय कल्पते ॥ १० ॥" ईदृशस्य
पुरुषस्य व्रतारोपो विधीयते। प्रायेण व्रतारोपे गुरुशिष्यवचनानि प्राकृतभाषया यतो गर्भाधानादिविवाहपर्य-
न्तेषु संस्कारेषु गुरुवचनान्येव प्रायेण सन्ति न शिष्यवचनानि। गुरवश्च प्रायेण शास्त्रविदः संस्कृतवादिनो
भवन्ति। अत्र तु व्रतारोपे बालानां स्त्रीणां मूर्खाणां च क्षमाश्रमणदानपूर्वं शिष्याणां वचनाधिकारः तत-

१ शिष्टाचारनिन्दादरैस्समगोत्रविवाहसमर्थनपरैश्च युगप्रधानश्रीहेमचन्द्राचार्यमतं द्रष्टव्यम्।

रसि, अजेयोऽसि, दुर्जयोऽसि, प्रभुरसि, नमस्ते अर्हँ ॐ ॥" इति मन्त्रं पठित्वा त्रिःप्रदक्षिणानन्तरं इति वदेत्—"नमोऽस्तु ते भगवन् गृहाण परभागममुष्याः, वत्से! त्वमस्यैव पाणिगृहीती यत्र यत्रास्य भगवतो हृदये निवासस्तत्र काम्यापूरणं विधेयं" इत्युक्त्वा तां मदनसमीपे रजनीमेकां स्थापयेत् । ततः स्वेच्छया चरतु इति वेश्याया विवाहः[1] । इतरातार्ई—"तैलाभिषेको वैवाहवस्तु प्रारंभ एव च । वैवाहिकेषु धिष्ण्येषु करणीयो महात्मभिः ॥ १ ॥ वाद्यं नार्यः कुलवृद्धा द्वयोः स्वजनसंमतिः । मण्डपो मातृपूजा च तथा कुलकरार्चनम् ॥ २ ॥ वेदिस्तोरणमर्घ्यादि वस्तु शान्तिकपौष्टिकैः । बहुभोजनसामग्री कौसुंभे सूत्रवाससी ॥ ३ ॥ आरूढऋद्धिवृद्धी च यवादिवपनं तथा । गुरोर्वस्त्रं भूषणं च वरे देयं गवादि च ॥ ४ ॥ पाकभोजनपात्राणि दानशक्तिधनं तथा । इमान्यन्यानि संयोगो विवाहस्य विनिर्दिशेत् ॥ ५ ॥ इत्याचार्यश्रीवर्द्धमानसूरिकृते आचारदिनकरे गृहिधर्मपूर्वायने विवाहसंस्कारकीर्त्तनो नाम चतुर्दश उदयः ॥ १४ ॥

---

१ वेश्याविवाहविधिलेखेनासामप्यावश्यकत्वं स्वीकृतमिति नाशङ्कनीयम् विवाहविधिर्वेश्यानामप्यावश्यक इत्येतन्निबन्धाशयात् । आसामावश्यकतावेतिनेतिच विषयान्तरमत्रोपेक्ष्यम्.

---

# पञ्चदश उदयः ।

## अथ व्रतारोपविधिः ।

इह हि गर्भाधानादारभ्य विवाहपर्यन्तैश्चतुर्दशभिः संस्कारैः संस्कृतोऽपि पुमान् न व्रतारोपसंस्कारं विनेह जन्मनि श्लाघाश्रेयोलक्ष्मीपात्रं स्यात्, परत्र च नार्यदेशादिभावपवित्रितमनुष्यजन्मस्वर्गमोक्षादिभाजनं स्यात् अतो व्रतारोप एव परमसंस्काररूपो नृणां । यत उक्तमागमे—“बंभणो खत्तियो वावि वैसो सूद्दो तहेव य । पई य वावि धम्मेण हुत्तो मोक्खस्स भायणं ॥ १ ॥” अपि च—“बाहत्तरिकलाकुसला थिवेअसहिआ न ते नरा कुसला । सव्वकलाणयपवरं जे धम्मकलं ण जाणंति ॥ १ ॥” परसमयेऽपि—“उपनीतोऽपि पूज्योऽपि कलावानपि मानवः । न परत्रेह सौख्यानि प्राप्नोति च कदाचन ॥ १ ॥” अतः सर्वसंस्कारप्रधानभूतो व्रतारोपसंस्कारः कथ्यते, तस्य चायं विधिः—पूर्वे विवाहान्ताः संस्कारा गृह्यगुरुणा जैनब्राह्मणेन क्षुल्लकेन वा भवन्ति, व्रतारोपस्तु निर्ग्रन्थगुरुणा यतिनैव भवति । गुरुगवेषणा यथा—“पञ्चमहव्वयजुत्तो पंचविहायारपालणसमत्थो । पंचसमिओ तिगुत्तो छत्तीसगुणो गुरू होई ॥ १ ॥ पडिरूवो ते अस्सी जुगप्पहा-

१ वर्णधर्मधर्मविरोधिभिर्गुणादितस्तद्विभाग इति वादिभिर्वा मननीयोयमागमः.

णागमो महुरवक्को । गंभीरो धीमंतो उवएसपरो स आयरिओ ॥ २ ॥ अपरिस्सावी सोमो संगहसीलो अभिग्गहमई य । अविकत्थणो अचवलो पसंतहिअओ गुरू होई ॥ ३ ॥ कइआ वि जिणवरिंदा पत्ता अयरामरं पहं दाउं । आयरिण (प) हिववयणं धारिज्जइ संपयं सयलं ॥ ४ ॥" षट्त्रिंशद्गुणा गुरोर्यथा—"आयारे १ सुअविणये २ विक्खवणे चेव होइ बोधव्वे । दोसस्स परीघाए विणए चउहेव पडिवत्ती ॥ १ ॥" अथवा—"समत्तनाणचरणा पत्तेयं अट्ठ अट्ठ भेइल्ला । बारसभेओ अ तवो सूरिगुणा हुंति छत्तीसं ॥ ३ ॥" अथवा—"संविग्गो १ मज्झत्थो २ संतो ३ मओ ४ ऊ ५ विऊ ६ सु संतुत्थो ७ । गीयत्थो ८ कडयोगी ९ भावन्नू १० लद्धिसंपन्नो ११ ॥ १ ॥ देसणिओ १२ आदेओ १३ मइमं १४ विन्नाणिओ १५ निरववाई १६ । नेमित्ती १७ ओअंसी १८ उवयारी १९ धारणावलिओ २० ॥ २ ॥ बहुदिट्ठो २१ नयनिउणो २२ पिअंवओ २३ सुस्सरो २४ तवोनिरओ । २५ । सुसरीरो २६ सुप्पइभो २७ चाईओ २८ आणंदओ २९ चक्खो ३० ॥ ३ ॥ गंभीरो ३१ अणुवत्ती ३२ पडिवन्नयपालगो ३३ थिरो ३४ धीरो ३५ । उचियन्नं ३६ सूरीणं छत्तीसगुणा सुअक्खाया ॥ ४ ॥" ईदृशे गुरौ पितृपरंपरामानिते तद्भावेऽन्यस्मिन् गुरुगुणयुक्ते प्रासे गृहिणो व्रतारोपविधिर्युज्यते । स चायं संस्कारचतुर्दशकसंस्कृतो गृही गृहिधर्माय कल्पते । यत उक्तमागमे—"धम्मरयणस्सजुगो अक्खुद्दो १ रूववं २ पगइसोमो ३ । लोअप्पिओ ४ अक्रूरो ५ भीरू ६ असढो ७ सुदप्पिणो ८ ॥ १ ॥ लज्जालुओ ९ दयालू १० मज्झत्थो ११ सोमदिट्ठि १२ गुणरागी १३ । सक्कहसपक्खहुत्तो १४ सुदीहदंसी १५ विसे-

तह चेव लद्धलक्खो २१
सन्न् १६ ॥ २ ॥ वुड्ढाणुगो १७ विणीओ १८ कयन्नुओ १९ परहिअत्थकारी २० अ । शिष्टाचारप्रशं-
इगवीसगुणो हवइ सड्ढो ॥३॥" योगशास्त्रे श्रीहेमचन्द्राचार्योक्तिर्यथा—"न्यायसंपन्नविभवः
सकः । कुलशीलसमैः सार्द्धं कृतोद्वाहोऽन्यगोत्रजैः॥१॥पापभीरुः प्रसिद्धं च देशाचारं समाचरन् । अवर्णवादी
न क्वापि राजादिषु विशेषतः ॥२॥ अनतिव्यक्तगुप्ते च स्थाने सुप्रातिवेश्मिके । अनेकनिर्गमद्वारे विवर्जितनि-
केतनः ॥३॥ कृतसङ्गः सदाचारैर्मातापित्रोश्च पूजकः । त्यजन्नुपप्लुतं स्थानमप्रवृत्तश्च गर्हिते ॥ ४ ॥ व्ययमायोचितं
कुर्वन् वेषं वित्तानुसारतः । अष्टभिर्धीगुणैर्युक्तः शृण्वानो धर्ममन्वहम् ॥५॥ अजीर्णे भोजनत्यागी काले भोक्ता
च सात्म्यतः । अन्योऽन्याप्रतिवन्धेन त्रिवर्गमपि साधयन् ॥ ६ ॥ यथावदतिथौ साधौ दीने च प्रतिपत्तिकृत् ।
सदानभिनिविष्टश्च पक्षपाती गुणेषु च ॥ ७ ॥ अदेशाकालयोश्चर्यां त्यजन् जानन् बलाबलम् । वृत्तस्थज्ञानवृ-
द्धानां पूजकः पोष्यपोषकः ॥ ८ ॥ दीर्घदर्शी विशेषज्ञः कृतज्ञो लोकवल्लभः । सलज्जः सदयः सौम्यः परोपकृ-
तिकर्मठः ॥९॥ अन्तरङ्गारिषड्वर्गपरिहारपरायणः । वशीकृतेन्द्रियग्रामो गृहिधर्माय कल्पते ॥ १० ॥" ईदृशस्य
पुरुषस्य व्रतारोपो विधीयते । प्रायेण व्रतारोपे गुरुशिष्यवचनानि प्राकृतभाषया यतो गर्भाधानादिविवाहपर्-
यन्तेषु संस्कारेषु गुरुवचनान्येव प्रायेण सन्ति न शिष्यवचनानि । गुरवश्च प्रायेण शास्त्रविदः संस्कृतवादिनो
भवन्ति । अत्र तु व्रतारोपे वालानां स्त्रीणां मूर्खाणां च क्षमाश्रमणदानपूर्वं शिष्याणां वचनाधिकारः तत्-

१ शिष्टाचारनिन्दादीरेससमगोत्रविवाहसमर्थनपरैश्च युगप्रधानश्रीहेमचन्द्राचार्यमतं द्रष्टव्यम् ।

स्तेषां संस्कृतोच्चारासामर्थ्ये प्राकृतानि वाक्यानि तत्साहचर्यात्तत्प्रबोधार्थं गुरुवाक्यान्यपि प्राकृतानि । यत उक्तमागमे—"मुत्तूण दिट्ठिवायं कालिय उक्कालियंगसिद्धंतं । थीबालवायणत्थं पाइयमुइयं जिणवरेहिं॥१॥" तथा च—"बालस्त्रीवृद्धमूर्खाणां नृणां चारित्रकाङ्क्षिणाम् । उच्चारणाय तत्त्वज्ञैः सिद्धान्तः प्राकृतः कृतः ॥१॥" दृष्टिवादस्तु द्वादशमङ्गं परिकर्म १ सूत्र २ पूर्वानुयोग ३ पूर्वगत ४ चूलिका ५ रूपं पञ्चविधं संस्कृतमेव न बालस्त्रीमूर्खैः पठनीयं । संसारपारगामिभिर्विदिततत्त्वोपन्यासैर्गीतार्थैरेव पठनीयं । शेषमेकादशाङ्गं कालिकोत्कालिकादिसाधुसाध्वीशिशुभिर्व्रतिभिर्योगवाहिभिः पठनीयम् । अतएव भगवद्भिरर्हद्भिः प्राकृतं कृतं । ततो व्रतारोपेऽपि गृहिणां बालस्त्रीमूर्खावस्थाभृतां तादृशां यतीनामपि वचांसि प्राकृतानि । अथ—"मृदुध्रुवचरक्षिप्रैर्वारैर्भौमं शनिं विना । आचाटनतपोनन्द्यालोचनादिषु भं शुभम् ॥१॥" वर्षमासदिननक्षत्रलग्नशुद्धौ विवाहदीक्षाप्रतिष्ठावत् शुभलग्ने गुरुस्तद्गृहे शान्तिकपौष्टिके विधाय पुनर्देवगृहे धर्मगृहे शुभाश्रमेऽन्यत्र वा यथाकल्पितं समवसरणं स्थापयेत् । ततः श्राद्धं स्नातं शुचिं स्वगृहान्महोत्सवेन समायातं सकक्षश्वेतनिवसनं श्वेतोत्तरासङ्गं मुखवस्त्रिकाकरं बद्धधम्मिल्लं चन्दनकृतभालतिलकं स्ववर्णानुसारेण जिनोपवीतोत्तरीयोत्तरासङ्गधारिणं गुरुः पूर्वाभिमुखो वामपार्श्वे संस्थाप्य इति कथयेत्—"सम्मत्तमिउ लद्धेठइयाइं नरयतिरियदाराइं । दव्वाणि माणुसाणि य मुक्खसुहाइ सुहीणाइं ॥ १ ॥" ततो गुर्वाज्ञया श्राद्धो नालिकेराक्षतक्रमुकपूर्णकरः समवसरणं परमेष्ठिमन्त्रं भणन् त्रिः प्रदक्षिणयेत् । ततो गुरुपार्श्वे समेत्य गुरुश्राद्धौ द्वावपि ईर्यापथिकीं प्रति-

"इच्छामि खमासमणो वंदिउं जावणिज्जाए निस्सीहि-
क्राम्यतः। ततो निषद्यानिषण्णस्य गुरोः पुरः श्राद्धः याए मत्थेएण वंदामि भगवन्निच्छाकारेण तुम्हे अम्ह सम्मत्तमारोवणियं नंदिकड्ढावणियं वासक्खेवं करेह।"
ततो गुरुर्वासान् सूरिमन्त्रेण गणिविद्यया वा अभिमन्त्र्य परमेष्ठिकामधेनुमुद्रे विधाय पूर्वाभिमुख ऊर्ध्वीभूतो
वामपार्श्वस्थस्य श्राद्धस्य शिरसि निक्षिपेत्। तन्मस्तके हस्तं न्यस्य गणधरविद्यया रक्षां कुर्यात्। ततो गुरु-
र्निपद्यायां निषीदति। श्राद्धः पूर्ववत्समवसरणं प्रदक्षिणीकृत्य गुर्वग्रे क्षमाश्रमणं दत्वा भणति—"इच्छाका-
रेण तुम्हे अम्हं सम्मत्ताइतिगारोवणिअं चेईआइं वंदावेह।" ततो गुरुश्राद्धौ चतसृभिर्वर्द्धमानस्तुतिभिश्चै-
त्यवन्दनं कुरुतः। वर्द्धमानस्तुतयस्तु छन्दसा वर्द्धमानाश्चरमजिनस्तुतिपूर्वाश्च। ततश्चतुर्थस्तुतिकथनान्ते श्री-
शान्तिनाथदेवाराधनार्थं—"करेमि काउसग्गं वंदणवत्तियाए० जाव अप्पाणं वोसिरामि।" सप्तविंशत्यु-
च्छ्वासचतुर्विंशतिस्तवचिन्तनम्। ततोऽर्हन्नमस्कारेण पारयित्वा, "नमोऽर्हत्सिद्धाचार्योपाध्यायसर्वसाधुभ्यः।
"श्रीमते शान्तिनाथाय नमः शान्तिविधायिने। त्रैलोक्यस्यामराधीशमुकुटाभ्यर्चिताङ्घ्रये ॥ १ ॥" अथवा—
"शान्तिः शान्तिकरः श्रीमान् शान्तिं दिशतु मे गुरुः। शान्तिरेव सदा तेषां येषां शान्तिर्गृहे गृहे ॥१॥" पुनरपि
श्रुतदेवताराधनार्थं "करेमि काउसग्गं अन्नत्थउससेणं जाव अप्पाणं वोसिरामि।" कायोत्सर्ग एव परमेष्ठिमन्त्र-
चिन्तनम्। ततो "नमो अरिहंताणं, नमोऽर्हत्सिद्धा० "सुअदेवया भगवई नाणावरणीयकम्मसंघायं। तेसिं
खवेउ सययं जेसिं सुअसायरे भत्ती ॥ १ ॥" अथवा—"श्वसितसुरभिगन्धाल्लब्धभृङ्गीकुरङ्गं मुखशशिनमजस्रं

बिभ्रती या बिभर्त्ति। विकचकमलमुच्चैः सास्त्वचिन्त्यप्रभावा सकलसुखविधात्री प्राणभाजां श्रुताङ्गी ॥ १ ॥" पुनरपि क्षेत्रदेवताराधनार्थं, "करेमि काउसग्गं० जाव अप्पाणं वोसिरामि।" कायोत्सर्ग एकवेलं च परमेष्ठिमन्त्रचिन्तनं। ततो "नमो अरिहंताणं० नमोऽर्हत्सिद्धाचार्यो० ।" "यस्याः क्षेत्रं समाश्रित्य साधुभिः साध्यते क्रिया। सा क्षेत्रदेवता नित्यं भूयान्नः सुखदायिनी ॥ १ ॥" पुनरपि भुवनदेवताराधनार्थं, "करेमि काउसग्गं अन्नत्थ उससेएणं० जाव अप्पाणं वोसिरामि।" कायोत्सर्ग एकवेलं परमेष्ठिमन्त्रचिन्तनं पारयित्वा, "नमो अरिहंताणं० नमोऽर्हत्सिद्धा० "ज्ञानादिगुणयुतानां नित्यं स्वाध्यायसंयमरतानाम्। विदधातु भुवनदेवी शिवं सदा सर्वसाधूनाम् ॥१॥" शासनदेवताराधनार्थं, "करेमि काउसग्गं अन्नत्थ उससेणं० जाव अप्पाणं वोसिरामि।" कायोत्सर्ग एकवेलं परमेष्ठिमन्त्रचिन्तनं। अर्हन्नमस्कारेण पारयित्वा, 'नमोऽर्हत्सिद्धा० "या पाति शासनं जैनं सद्यः प्रत्यूहनाशिनी। साभिप्रेतसमृद्ध्यर्थं भूयाच्छासनदेवता ॥ १ ॥" समस्तवैयावृत्त्यकराराधनार्थं, "करेमि काउसग्गं अन्नत्थ उससेणं० जाव अप्पाणं वोसिरामि।" कायोत्सर्ग एकवेलं परमेष्ठिमन्त्रचिन्तनं पारयित्वा नमोऽर्हत्सिद्धा० "ये ते जिनवचनरता वैयावृत्त्योद्यताश्च ये नित्यम्। ते सर्वे शान्तिकरा भवन्तु सर्वाणुयक्षाद्याः ॥१॥" 'नमोअरिहंताणं' उपविश्य 'सनमुत्थुणं०' 'जावंति चेइयाइं०' अर्हणादिस्तोत्रपठनं। यथा—"अरिहाणं नमो पूअं अरहंताणं रहस्सरहियाणं। पयओ परमिट्ठीणं अरहंताणं धुअरयाणं ॥१॥ निद्दढअट्ठकम्मिंधणाणं वरनाणदंसणधराणं। मुत्ताणं नमो सिद्धाणं परमपरिमिट्ठिभूयाणं ॥२॥

आयारधराण नमो पंचविहायारसुट्ठियाणं च । नाणीणायरिआणं आयारुवए सयाणसया ॥ ३ ॥ बारसविहं
अपुव्वं दिन्ताणसुअं नमो सुयहराणं । सययमुवज्झायाणं सज्झायज्झाणजुत्ताणं ॥ ४ ॥ सव्वेसिं साहूणं नमो
तिगुत्ताण सव्वलोएवि । तवनियमनाणदंसणजुत्ताणं वंभयारीणं ॥५॥ एसो परमिट्ठीणं पंचह्ववि भावओ नमु-
क्कारो । सव्वस्स कीरमाणो पावस्स पणासणो होई ॥ ६ ॥ भुवनेवि मंगलाणं मणुयासुरअमरखयरमहियाणं ।
सव्वेसिमिमो पढमो होइ महामंगलं पढमं ॥ ७ ॥ चत्तारि मंगलं मे हुंतु अरहा तहेव सिद्धाय । साहूअ सव्व-
कालं धम्मो अतिलोअमंगल्लो ॥ ८ ॥ चत्तारि चेव ससुरासुरस्स लोगस्स उत्तमा हुंति । अरिहंतसिद्धसाहू-
धम्मो जिणदेसियमुयारो ॥९॥ चत्तारिवि अरहंते सिद्धे साहूतहेव धम्मं च । संसारघोररक्खसभएण सरणं
पवज्जामि ॥ १० ॥ अह अरहओ भगवओ महइमहावद्धमाणसामिस्स । पणयसुरेसरसेहरवियलिअकुसुमुच्चय-
कम्मस्स ॥ ११ ॥ जस्स वरधम्मचक्कं दिणयरविंवव्व भासुरच्छायं । तेएण पज्जलंतं गच्छइ पुरओ जिणंदस्स
॥१२॥ आयासं पायालं सयलं महिमंडलं पयासंतं । मिच्छत्तमोहतिमिरं हरेइ तिण्हंपि लोआणं ॥१३॥ सय-
लंमिवि जिअलोए चिंतिअमित्तो करेइ सत्ताणं । रक्खं रक्खसडाइणिपिसायगहभूअजक्खाणं ॥ १४ ॥ लहइ
विवाए वाए ववहारे भावओ सरंतो अ । जूए रणे अरायं गणे अ विजयं विसुद्धप्पा ॥१५॥ पच्चूसपओसेसुं
सययं भव्वो जणो सुहज्झाणो । एअं झाएमाणो मुक्खं पइ साहगो होई ॥१६॥ वेआलरुद्ददाणवनरिंदकोहंडि-
रेवईणं च । सव्वेसिं सत्ताणं पुरिसो अपराजिओ होइ ॥१७॥ विज्जुव्व पज्जलंती सव्वेसुवि अक्खरेसु मत्ताओ ।

पंच नमुक्कारपए इक्किक्के उवरिमा जाव ॥१८॥ ससिधवलसलिलनिम्मलआयारसहं च वन्नियं बिंदुं । जोयणसयप्पमाणं जालासयसहस्सदिप्पंतं ॥१९॥ सोलससु अक्खरेसु इक्किक्कं अक्खरं जगुज्जोअं । भवसयसहस्समहणो जंमि ठिओ पंचनवक्कारो ॥ २० ॥ जो थुणई हु इक्कमणो भविओ भावेण पंचनवक्कारं । सो गच्छइ सिवलोअं उज्जोअंतो दसदिसाओ ॥२१॥ तवनियमसंयमरहो पंचनमोक्कारसारहिनिउत्तो । नाणतुरंगमजुत्तो नेइ फुडं परमनिवाणं ॥ २२ ॥ सुद्धप्पा सुद्धमणा पंचसु समईसु संजयतिगुत्ता । जे तम्मि रहे लग्गा सिग्घं गच्छंति सिवलोअं ॥२३॥ थंभेइ जलजलणं चिंतिअमित्तो वि पंचनवक्कारो । अरिमारिचोरराउलघोरुवसग्गं पणासेई ॥ २४ ॥ अट्ठेवयंअट्ठसयं अट्ठसहस्सं च अट्ठकोडीओ । रक्खंतु मे सरीरं देवासुरपणमिआ सिद्धा ॥२५॥ नमो अरहंताणं तियलोअपुज्जो असंथुओ भयवं । अमरनररायमहिओ अणाइनिहणो सिवं दिसओ ॥ २६ ॥ निट्ठविअअट्ठकम्मो सिवसुहभूओ निरंजणो सिद्धो । अमरनररायमहिओ अणाइनिहणो सिवं दिसओ ॥ २७ ॥ सवे पओसमच्छरआहिं अहिअया पणासमुवयंति । दुगणीकयधणुसद्दं सोओपि महाधणु सहस्सं ॥२८॥ इय तिहुअणप्पमाणं सोलसपत्तं जलंतदित्तसरं । अट्ठारअट्ठवलयं पंचनमुक्कारचक्कमिणं ॥ २९ ॥ सयलुज्जोइअभुवणं विद्दाविअसेससत्तुसंघायं । नासिअमिच्छत्ततमं वियलिअमोहं गयतमोहं ॥३०॥ एयस्सयमज्झत्थो सम्मदिट्ठीवि सुद्धचारित्ती । नाणी पवयणभत्तो गुरुजुणसस्सूसणापरमो ॥ ३१ ॥ जो पंचनमुक्कारं परमोपुरिसो पराइभत्तीए । परियत्तेइ पइदिणं पयओ सुद्धप्पओ गप्पा ॥ ३२ ॥ अट्ठेवय अट्ठसया अट्ठसहस्सं

अट्ठेवयकोडीओ सो तइअभवे लहइ सिद्धिं ॥३३॥ एसो परमो मंतो परमरहस्सं परं परं तत्तं।
च उभयकालंपि। अट्ठेवयकोडीओ सो तइअभवे लहइ सिद्धिं ॥३३॥ एवं कवयमभेयं खाइयमत्थं परा भुवणरक्खा। जोईसुन्नं बिंदुं
नाणं परमं णेअं सुद्धं झाणं परऽझेयं ॥ ३४ ॥ एवं कवयमभेयं खाइयमत्थं परा भुवणरक्खा। जोईसुन्नं बिंदुं
नाणं परमं णेअं सुद्धं झाणं परऽझेयं ॥ ३४ ॥ सुअबारसंगसायरमहत्थ-
ताओ तारालवो मत्ता ॥ ३५ ॥ सोलसपरमक्खरवीअबिंदुगब्भो जगुत्तमो जोओ। सुअबारसंगसायरमहत्थ-
पुवत्थपरमत्थो ॥ ३६ ॥ नासेइ चोरसावयविसहरजलजलणबंधणसयाइं। चिंतिज्जंतो रक्खसरणरायभयाइं
भावेणं ॥ ३७ ॥" इति अरिहणादिस्तोत्रं पठित्वा, "जयवीयराय जगगुरु०" इत्यादिगाथाकथनं। आचार्योपा-
ध्यायगुरुसाधुवन्दनम्। इति शक्रस्तवविधिं गुरुश्राद्धौ द्वावपि कुरुतः। चैत्यवन्दनानन्तरं श्राद्धः क्षमाश्रमण-
दानपूर्वकं कथयति, "भगवन्, सम्यक्त्वसामायिक श्रुतसामायिक देशविरतिसामायिक आरोवणियं नंदि-
कड्ढावणियं काउस्सग्गं करेमि।" गुरुः कथयति, "करेह।" ततः श्राद्धः सम्मत्ता इतिगारोवणिअं करेमि का-
उस्सग्गं अन्नत्थऊससिएणं जाव अप्पाणं वोसिरामि।" इति कायोत्सर्गं करोति सप्तविंशत्युच्छ्वासप्रमाणं
चतुर्विंशतिस्तवचिन्तनं। ततो अर्हन्नमस्कारेण पारयित्वा चतुर्विंशतिस्तवभणनं। ततो मुखवस्त्रिकालेखनपू-
र्वकं श्राद्धो द्वादशावर्त्तवन्दनं दद्यात्। पुनः क्षमाश्रमणं दत्वा भणति, "भगवन् सम्मत्ताइतिगं आरोवेह।"
गुरुः कथयति, "आरोवेमि।" ततः श्राद्धो गुर्वग्रे ऊर्ध्वीभूय कृताञ्जलिर्मुखवस्त्राच्छादितवदनस्त्रिवेलं परमेष्ठि-
मन्त्रं भणति। ततः सम्यक्त्वदण्डकं भणाति। स यथा—"अहण्णं भंते तुम्हाणं समीवे मिच्छत्ताओ पडिक्क-
मामि सम्मत्तं उवसंपज्जामि, तंजहा दव्वओ खेत्तओ कालओ भावओ दव्वओ मिच्छत्तकारणाइं पच्च-

क्खामि समत्तकारणाइं उवसंपज्जामि नो मे कप्पेइ अज्जप्पभिई अन्नओतित्थिएवा अन्नउत्थिअदेवयाणि वा अन्नउत्थिअपरिग्गाहियाणि अर्हंतचेइआणि वंदित्तएवा नमंसित्तएवा पुव्विं अणालत्तेणं आलवित्तएवा संलवित्तएवा तेसिं असणं वा पाणं वा खाइमं वा साइमं वा दाउं वा अणुप्पयाउं वा खित्तओणं इहेव वा अन्नत्थ वा कालओणं जावज्जीवाए भावओणं जाव गहेणं न गहिज्जामि जावच्छलेण नच्छलिज्जामि जाव सन्निवाएणं नाभिभविज्जामि जाव अन्नेण वा केणइ परिणामवसेण परिणामो मे न परिवड्ढइ ताव मे एअं सम्मदंसणं अन्नत्थ रायाभिओगेणं बलाभिओगेणं गणाभिओगेणं देवयाभिओगेणं गुरुनिग्गहेणं वित्तीकंतराएणं वोसिरामि" इति वारत्रयं दण्डकपाठः ॥ अन्ये तु दण्डकमित्थमुच्चारयन्ति यथा—"अहण्णं भंते तुह्माणं समीवे मिच्छित्ताओ पडिक्कमामि सम्मत्तं उवसंपज्जामि नो मे कप्पइ अज्जप्पभिई अन्नउत्थिए वा अन्नउत्थिअदेवयाणि वा अन्नउत्थिअपरिग्गहियाणि चेईआणि वंदित्तए वा नमंसित्तए वा पुव्विं अणालत्तेणं आलवित्तए वा संलवित्तए वा तेसिं असणं वा पाणं वा खाइमं वा साइमं वा दाउं वा अणप्पयाउं वा अन्नत्थ रायाभिओगेणं गणाभिओगेणं बलाभिओगेणं देवयाभिओगेणं गुरुनिग्गहेणं वित्तीकंतारेणं तं चउव्विहं तं जहा दव्वओ खत्तओ कालओ भावओ दव्वओणं दंसणदव्वाइं अंगीकयाइं खित्तओणं उड्ढलोए वा अहोलोए वा तिरिअलोए वा कालओणं जावज्जीवाए भावओणं जाव गहेणं न गहिज्जामि जाव छलेणं नछलिज्जामि जाव सन्निवाएणं नाभिभविज्जामि जाव अन्नेण वा केणइ परिणामवसेण परिणामो मे न परिवडइ

ताव मे एसा दंसणपडिवत्ती ।" इति गुरुविशेषेण द्वितीयो दण्डकः पूर्वदण्डको वा अयं वा एकतम उचारणी यस्त्रिः। ततः गाथा—"इअमिच्छाओ विरमिअ सम्मं उवगम्म भणइ गुरुपुरओ। अरिहंतो निस्संगो मम देवो दक्खणा साहू ॥१॥" गुरुर्वारत्रयमिति गाथां पठित्वा श्राद्धमस्तके वासान् क्षिपति। तदनु गुरुर्निषद्यायामुपविशति। तत्रोपविश्य गन्धाक्षतवासान् सूरिमन्त्रेण गणिविद्यया वाभिमन्त्रयति। तान् गन्धक्षतवासान् करे गृहीत्वा जिनपादान् स्पर्शयति। तांश्च साधुसाध्वीश्रावकश्राविकाभ्यो ददाति। ते च सूर्ध्यन्तः स्थापयन्ति। ततः श्राद्धो निपद्यासीनगुरोः पुरतः क्षमाश्रमणं दत्वा भणति, "भयवं, तुम्भे अम्हं सम्मत्ताइसामाईअं आरोवेह" । गुरुः कथयति, 'आरोवेमि' । पुनः श्राद्धः क्षमाश्रमणं दत्वा भणति—"संदिसह किं भणामि ।" गुरुः कथयति, 'वंदित्तुपवेयह' । पुनः श्राद्धः क्षमाश्रमणं दत्वा भणति, "भयवं, तुम्भेहिं अम्हं सामाइअतिअ मा रोवियं ।" गुरुः कथयति, "आरोवियं २ खमासमणेणं हत्थेणं सुत्तेणं अत्थेणं तदुभएणं गुरुगुणेहिं वड्ढाहि नित्थारगपारगो होहि ।" पुनः श्राद्धः "इच्छामो अनुसट्ठिं" इति भणित्वा पुनः क्षमाश्रमणं दत्वा भणति, "तुह्माणं पवेइयं संदिसह साहूणं पवेएमि ।" गुरुः कथयति, 'पवेअय' । ततः श्राद्धः परमेष्ठिमन्त्रं पठन् समवसरणं प्रदक्षिणीकरोति । सङ्घस्तु पूर्वदत्तान् वासान् तन्मस्तके क्षिपति । गुरोर्निषद्योपवेशादारभ्य सङ्घवासक्षेपपर्यन्ता क्रिया त्रिवेलमनयैव रीत्या विधेया । पुनः श्राद्धः क्षमाश्रमणं दत्वा भणति, "तुम्हाणं पवेइयं ।" पुनः क्षमाश्रमणपूर्वं भणति, "साहूणं पवेइयं संदिसह काउस्सग्गं करेमि ।" गुरुः कथयति, 'करेह' । ततः श्राद्धः "सम्मत्ताइतिगस्स थिरीकरणत्थं करेमि काउसग्गं अन्नत्थऊससिएणं जाव अप्पाणं वोसिरामि ।" सस-

विंशत्युच्छ्वासः चतुर्विंशतिसूत्रचिन्तनं पारयित्वा मुखेन चतुर्विंशतिस्तवपाठः । भूयश्चतुःस्तुतिवर्जितं शक्रस्तवेन चैत्यवन्दनं । ततः श्राद्धो गुरुं त्रिः प्रदक्षिणयेत् । गुरुर्निषद्यासीनः श्राद्धं पुरो निवेश्य नियमं ददाति । नियमयुक्तिर्यथा—"पंचुंबरि चउविगई अनायफलकुसुमहिमविसकरेय । मट्टिअ राईभोअण घोलवडा रिंगणा चेव ॥१॥ पंपुट्टय सिंघाडय वायंगण कायबाणि अ तहेव । बावीसं दव्वाई अभक्खणीयाइं सड्ढाणं ॥२॥" इति नियमान् दत्वा पुनरुच्चारयेत्—"अरिहंतो मह देवो जावज्जीवं सुसाहुणो गुरुणो । जिणपन्नत्तं तत्तं इयसंमत्तं मए गहियं ॥ १ ॥" तदनन्तरं अर्हन्तं मुक्त्वा अन्यदेवान्नमस्कर्त्तुं जैनयतीन् मुक्त्वान्ययतिविप्रादीन् भावेन वन्दितुं जिनोक्ततत्वसमकं मुक्त्वा तत्त्वान्तरश्रद्धानं कर्त्तुंहि नियम एव कार्यः । अन्यदेवलिङ्गिविप्रादिनमस्कारदानं च लोकव्यवहाराय । तथान्यशास्त्रश्रवणपठने तद्वत् । ततो गुरुः सम्यक्त्वदेशनां कुर्यात् । सा यथा—"मानुष्यमार्यदेशश्च जातिः सर्वाक्षपाटवम् । आयुश्च प्राप्यते तत्र कथञ्चित्कर्मलाघवात् ॥ १ ॥ प्राप्तेषु पुण्यतः श्रद्धाकथकश्रवणेष्वपि । तत्त्वनिश्चयरूपं तद्बोधिरत्नं सुदुर्लभम् ॥ २ ॥" "कुसमयसुईणमहणं सम्मत्तं जस्स सुट्ठियं हिअए । तस्स जगुज्जोअकरं नाणं चरणं च भवमहणं ॥१॥" "या देवे देवताबुद्धिर्गुरौ च गुरुतामतिः । धर्मे च धर्मधीः शुद्धा सम्यक्त्वमिदमुच्यते ॥ १ ॥ अदेवे देवबुद्धिर्या गुरुधीरगुरौ च या । अधर्मे धर्मबुद्धिश्च मिथ्यात्वं तद्विपर्ययात् ॥२॥ सर्वज्ञो जितरागादिदोषस्त्रैलोक्यपूजितः । यथास्थितार्थवादी च देवोऽर्हन् परमेश्वरः ॥३॥ ध्यातव्योऽयमुपास्योऽयमयं शरणमिष्यताम् । अस्यैव प्रतिपत्तव्यं शासनं चेतनास्ति चेत् ॥ ४ ॥ ये स्त्रीशस्त्राक्षसूत्रादिरागाद्यङ्ककलङ्किताः । निग्रहानुग्रहपरास्ते देवाः स्युर्न मुक्तये ॥ ५ ॥ नाट्याट्टहाससङ्गीताद्यु-

पल्लवविसंस्थुलाः । लंभयेयुः पदं शातं प्रपन्नान् प्राणिनः कथम् ॥ ६ ॥ महाव्रतधरा धीरा भैक्ष्यमात्रोपजीविनः । सामायिकस्था धर्मोपदेशका गुरवो मताः ॥ ७ ॥ सर्वाभिलाषिणः सर्वभोजिनः सपरिग्रहाः । अब्रह्मचारिणो मिथ्योपदेशा गुरवो न तु ॥८॥ परिग्रहारम्भमग्नास्तारयेयुः कथं परान् । स्वयं दरिद्रो न परमीश्वरीकर्त्तुमीश्वरः ॥९॥ दुर्गतिप्रपतत्प्राणिधारणाद्धर्म उच्यते । संयमादिर्दशविधः सर्वज्ञोक्तो विमुक्तये ॥ १० ॥ अपौरुषेयं वचनमसंभवि भवेद्यदि । न प्रमाणं भवेद्वाचां ह्याप्ताधीना प्रमाणता ॥११॥ मिथ्यादृष्टिभिराम्नातो हिंसाद्यैः कलुषीकृतः । स धर्म इति वित्तोऽपि भवभ्रमणकारणम् ॥१२॥ सरागोऽपि हि देवश्चेद्गुरुरब्रह्मचार्यपि । कृपाहीनोऽपि धर्मः स्यात्कष्टं नष्टं हहा जगत् ॥ १३ ॥ समसंवेगनिर्वेदानुकंपास्तिक्यलक्षणैः । लक्षणैः पञ्चभिः सम्यक् सम्यक्त्वमुपलक्ष्यते ॥१४॥ स्थैर्यं प्रभावना भक्तिः कौशलं जिनशासने । तीर्थसेवा च पञ्चास्य भूषणानि प्रचक्षते ॥१५॥ शङ्का काङ्क्षा विचिकित्सा मिथ्यादृष्टिप्रशंसनम् । तत्संस्तवश्च पञ्चापि सम्यक्त्वं दूषयन्त्यलम्॥१६॥ इति व्याचक्षीत । श्रेणिकसंप्रतिदशार्णभद्रादिनृपदृष्टं सम्यक्त्वचरितव्याख्यानं सम्यक्त्वविषये कुर्यात् । तथा सङ्घहः—"चियवंदणवंदणयं गिहिवयउवसग्गपइवउच्चरणं । जहसत्तिवयग्गहणं पयाहिणं देसणं चेव ॥१॥" तद्दिने श्राद्ध एकभक्ताचाम्लादि कुर्यात् । साधुभ्योऽन्नवस्त्रपुस्तकवसतिदानं । मण्डलीपूजा । चतुर्विधसङ्घवात्सल्यं । सङ्घपूजा च । इति व्रतारोपसंस्कारे सम्यक्त्वसामायिकारोपणविधिः ॥ ॥ अथ देशविरतिसामायिकारोपणविधिः । स चायं तदैव सम्यक्त्वसामायिकारोपणानन्तरं तत्कालमेव तद्वासनानुसारेण दिनमासवर्षादिव्यतिक्रमे वा देशविरतिसामायिकमारोप्यते । तत्र नन्दिचैत्यवन्दनकायोत्सर्गवासक्षेपक्षमाश्रमणप्र-

भूति सर्वं पूर्ववत्। परं सर्वत्र सम्यक्त्वसामायिकस्थाने देशविरतिसामायिकनामग्रहणं सर्वत्र। तत्तथैव कृत्वा पुनरपि द्वितीया नन्दिर्दण्डकोच्चारणपूर्वं विधेया। व्रतोच्चारकाले नमस्कारत्रयपाठानन्तरं हस्तगृहीतपरिग्रहप्रमाणादिटिप्पनकस्य श्राद्धस्य गुरुर्देशविरतिसामायिकदण्डकमुच्चारयेत्। स यथा—"अहण्णं भंते तुम्हाणं समीवे थूलगं पाणाइवायं संकप्पओ बीअंदिआइजीवनिकायनिग्गहनियट्टिरूवं निरवराहं पच्चक्खामि जावज्जीवाए दुविहं तिविहेणं मणेणं वायाए काएणं न करेमि न कारवेमि तस्स भंते पडिक्कमामि निंदामि गरिहामि अप्पाणं वोसिरामि।" वारत्रयं भणनीयं १। एवं अहण्णं भंते तुम्हाणं समीवे थूलगं मुसावायं जीहाछेयाइं निग्गहहेऊअं कन्नागोभूमिनिक्खेवावहारकूडसक्खाइं पंचविहं दक्खिनाइअविसए अहागहिअभंगएणं पच्चक्खामि जावज्जीवाए दुविहं तिविहेणंत्रिः २ एवं अहण्णं भंते तुम्हाणं समीवे थूलगं अदिन्नादाणं खत्तखणणाइ चोरकारकरं रायनिग्गहकरं सचित्ताचित्तवत्थुविसयं पच्चक्खामि जावज्जीवाए दुविहं तिविहे त्रि० ३ एवं अहण्णं भंते तुम्हाणं समीवे थूलगमेहुणं उरालियवेउव्विअभेयं अहागहिअभंगएणं तत्थ दुविहं तिविहेणं दिव्वं एगविहं तिविहेणं तेरित्थं एगविहमेगविहेणं माणुसं पच्चक्खामि जावज्जीवाए दुविहं तिवि०त्रिः ४ एवं अहण्णं भंते तुम्हाणं समीवे अपरिमिअं परिग्गहं धणधन्नाइनवविहं वत्थुविसयं पच्चक्खामि इच्छापरिमाणं अहागहिअभंगएणं उवसंपज्जामि जावज्जीवाए दुविहेणं त्रिः ५ एवं अहण्णं भंते तुम्हाणं समीवे पढमं गुणव्वयं दिसिपरिमाणरूवं पडिवज्जामि जावज्जीवाए दुवि० त्रिः ६ एवं अहण्णं भंते तुम्हाणं समीवे उवभोगपरिभोगवयं भोअणओ अणंतकायबहुबीअराईभोअणाइ बावीसवत्थुरूवं कम्मणा पनरसकम्मादाणइंगालकम्माइबहुसा-

वज्जं खरकम्माइरायनिओगं च परिहरामि परमिअं भोगउवभोगं उवसंपज्जामि जावज्जीवाए० दुविहं तिविहे० त्रि० ७ एवं अहण्णं भंते तुम्हाणं समीवे अणत्थदंडगुणव्वयं अट्टरुद्दज्झाणपावोवएसहिंसोवयारदाणपमायकरणरूवं चउविहं जहासत्तीए परिहरामि जावज्जीवाए दुविहं तिविहे० त्रि० ८ एवं अहण्णं भंते तुम्हाणं समीवे सामाइयं जहासत्तीए पडिवज्जामि जावज्जीवाए दुविहं तिविहे० त्रि० ९ एवं अहण्णं भंते तुम्हाणं समीवे पोसहोववासं जहासत्तीए पडिवज्जामि जावज्जीवाए दुविहं तिविहे० १० एवं अहण्णं भंते तुम्हाणं समीवे देसावगासिअं जहासत्तीए पडिवज्जामि जावज्जीवाए दुविहं तिविहं० ११ एवं अहण्णं भंते तुम्हाणं समीवे अतिहिसंविभागं जहासत्तीए पडिवज्जामि जावज्जीवाए दुविहं तिविहे १२ इच्चेअं सम्मत्तमूलं पंचाणुवइयं तिगुणवइयं चउसिक्खावइयं दुवालसविहं सावगधम्मं उवसंपज्जित्ताणं विहरामि। इति दण्डकोच्चारणानन्तरं कायोत्सर्गवन्दनकक्षमाश्रमणप्रदक्षिणावासक्षेपादिकं पूर्ववत्। परिग्रहपरिमाणटिप्पनकयुक्तिर्यथा —“पणमिअ अमुगजिणंदं अमुगासड्ढीअ अमुगसड्ढो वा। गिहिधम्मं पडिवज्जइ अमुगस्स गुरुस्स पासंमि॥१॥ अरहंतं मुत्तूणं न करेमि अ अन्नदेवयपणामं। मत्तूणं जिणसाहू न चेव पणमामि धम्मत्थं ॥ २ ॥ जिणवयणभाविआइं तत्ताइं सच्चमेव जाणामि। मित्थत्तसत्थसवणे पढणे लिहणे अ मे निअमो ॥३॥ परतित्थिआण पणमण उब्भावणथुणणभत्तिरागं च। सक्कारं सम्माणं दाणं विणयं च वज्जेमि॥४॥ धम्मत्थ मन्नतित्थे न करे तवदाणन्हाणहोमाइं। तेसिं च उचिअकम्मे करणिज्जे होउ मे जयणा ॥५॥ तिअपंचसत्तवेलं चियवंदणयं जहाणु-

सत्तीए। इगदुन्निअवाराओ सुसाहुनमणं च संवासो ॥ ६ ॥ इगदुन्नितिन्निवेलं जिणपूआ निच्चपव्वह्णवणं च। जयणा य कुलायारे पाणवहं सव्वजीवाणं ॥७॥ न करेमि अकज्जेणं कज्जे एगिंदिआण मह जयणा। कन्नाईवि अलि-आइं वज्जेमिअ पंचनिअमेणं ॥८॥ वज्जेमि धणं चोरं कारकरं रायनिग्गहकरं च। दुविहतिविहेणं दिवं एगविहं तिविहेओ अतेरिच्छं[2] ॥ ९ ॥ निअमुत्तिअणुभवेणं बंभवयं नियमणंमि धारेमि। माणुस्से जावजीवं काएणं मेहुणं वज्जे ॥१०॥ परनारीं परपुरिसं वज्जेमि अ अन्नओअ जयणामे। अह य परिग्गहसंखा परिग्गहे नवविहे एसा ॥११॥ इत्तिअमित्ता टंका इत्तिअमित्ताइं अहव दंमा वा। तेसिं च वत्थुगहणं इत्तिअमित्ताइं संखा वा ॥ १२ ॥ इत्तियमित्ताण टंकयाण गणिमस्स वत्थुणो गहणं। तुलिमस्स इत्तियाण य मेअस्स य इत्तियाणं च ॥१३॥ हत्थंगुलमेयाणं इत्तिअमित्ताण मज्झ संगहणं। तह दिट्ठिमुल्लयाणं इत्तिअमित्ताण टंकाणं ॥१४॥ इत्ति-यखारी अन्नाणं इत्तिय मह परिग्गहे भूमी। पुरगामहट्टगेहा खित्ता मह इत्तियपमाणा ॥ १५ ॥ इत्तिअमित्तं कणयं इत्तियमित्तं तहेव रूप्पं च। कंसं तंबं लोहं तउं सीसं इत्तियं च घरे॥१६॥ इत्तियमित्ता दासा दासीओ इत्तिआओ महसंखा। संखा सेवयचेडाण इत्तियाणं च मह होउ ॥ १७ ॥ इत्तियमित्ता करिणो इत्तिअतुरयाय इत्तियावसहा। इत्तिअ अरहा य सगडा गोमहिसीओ इयपमाणा ॥१८॥ इत्तियमित्ता मेसा इत्तिअ छगलाओ इत्तिआय हला। अमुगस्स य अमुगस्स य कम्मस्स उ होइ मे नियमो ॥१९॥ दससुवि दिसासु इत्तिअ जो-

१ इविसयअलियं पाठः। २ लिवहतेरिच्छं पाठः।

कम्मे भोगुवभोगे खरकम्मं
अणगमणं च जावजीवं मे । अप्पसवसेणं विय जयणा पुण तित्थजत्तासु ॥ २० ॥ पंचुंबरि चउविगई हिम विस करगेअ
कम्मवाणपनरसगं । कुप्पोलाहारं विअ अन्नाय पुप्फं फलं वज्जे ॥ २१ ॥ घोलवडा बायंगण अमुणिअनामाइं पुप्फफल-
सबमट्टीअ । राईभोयणगं विअ बहुयीयअणंतसंधाणा ॥ २२ ॥ एआइं मुत्तूणं अन्नाणफलानं पुप्फपत्ताणं । एआई
याइं । तुच्छफलं चलिअरसं वज्जे वज्जाणि यावीसं ॥ २३ ॥ इत्तिअमित्तअणंते फासुअरइएण होउ मे जयणा । इत्तिअफले अपक्के
एआइं पाणं ते विहु न भक्खेमि ॥२४॥ आजम्मं सच्चित्ता इत्तिअमित्ता य भक्खणिज्जा मे । इत्तिअमित्ता दव्वा
अखंडिए विहु न भक्खेमि ॥ २५ ॥ इत्तिअमित्ता विगई इत्तिअमित्ता यमेपइत्ताणा। इत्तिअमित्ता गयतुरगरथरह-
वंजणघियदुद्धदहिपभिई ॥२६॥ इत्तिअमित्ता पूगा इत्तिअमित्ता लवंगपत्ता य। एला जाइफलाइ अ महं निच्चं इत्ति-
वरा हुंतु जयणा मे ॥२७॥ चउविहवच्छाणंपि अ इत्तिअमत्ताणमब्भपरिहाणं । इअजाई इयसंखा पुप्फाणं अंगभोगे मे
अपमाणा ॥२८॥ आसंदी सिंहासण पीढअ पट्टाइ चउक्किआओअ । इत्तिअमित्ता पल्लंक तूलिआ खट्टमाईओ ॥ ३० ॥
॥२९॥ इत्तिअमित्तामह अंगलेवणे पूअणेजयणा ॥ ३१ ॥ इत्तिअमित्ता
कप्पूरागरुकत्थूरिआओसिरीहंडकुंकुमाईअ । इत्तिअघडेहिं पूएहि फासुएहिं च मे ह्वाणं ॥ ३२ ॥ इत्तिअवारा इत्तिअ-
नारीओ मज्झसंभोगमित्तियं कालं । इत्तिअमित्तं भत्तं इत्तिअवाराइं भुंजामि ॥ ३३ ॥ इह जावजीवं चिअ सच्चित्ताईण-
तिल्लेहिं इत्तिअप्पयारेहिं । इत्तियमित्तं मणिकणयरूप्पमुत्ताइभूसणं
भोगपरिभोगा । एएसिं पुण संखं दिवसे दिवसे करिस्सामि ॥ ३४ ॥

अंगे। इत्तिअमित्तं गीअं नट्टं वज्जं च उवभुज्जं ॥३५॥ वज्जेमि अट्टरुद्दं झाणं अरिघाय वयरमाईयं। दक्खिणणा-विसए पुण सावज्जुवएसदाणं च ॥३६॥ तह दक्खिणाविसएहिं सगगेहो वगरणाइदाणं च। तहकामसत्थपढणं जूयं मज्जं परिहरेमि ॥३७॥ हिंडोलायविणोअं भत्तिच्छीदेसरायथुइनिंदं। पसुपक्खीजोहणंविअ अकालनिद्दं सयलरयणी ॥ ३८ ॥ इच्चाइपमायाइं अणत्थदंडे गुणव्वएवज्जे। वरिसे इत्तिअसामाइआइं तह पोसहाइं इत्ताइं ॥३९॥ इत्ताइं जोअणाइं मह दिवसे दसदिसासु गमणं च। साहूण संविभागं भोअणवत्थाइसु करेमि ॥४०॥ इय पढमं जईण दाऊण अप्पणा पणमिऊण पारेमि। असईइ सुविहियाणं भुंजेमि अकयदिसालोओ ॥ ४१ ॥ इय बारसविह मिमिणा विहिणा पालेमि सावगं धम्मं। अगलिअजलस्स पाणं न्हाणं मरणेवि वज्जेमि ॥४२॥ कंदप्पदप्पनिट्ठीवणाइ सुहणं चउविहाहारं। सजिणजिणमंडवंते विकहं कलहं च मुंचामि ॥ ४३ ॥ अमुगम्मि महागच्छे अमुगस्स गुरुस्स सूरिसंताणे। अमुगस्स सीसपासे पायंते अमुगसूरिस्स ॥ ४४ ॥ अमुगंमि वत्थरे अमुगमासि अमुगम्मि पक्खसमयंमि। अमुगातिहि अमुगवारे अमुगे रिक्खे अ अमुगपुरे ॥ ४५ ॥ अमुगस्स सुओ अमुगो सड्ढो गिह्लेइ इत्थगिहिधम्मं। अमुगस्स अमुगकंता अमुगी वा साविआ चेव ॥४६॥" नवरं—क्षत्रियस्य प्राणातिपातस्थाने गाथाद्वयमधिकं यथा—"जुज्झंमि गोगहम्मि अ चेइअगुरुसाहुसंघउवसग्गे। तह दुट्ठनिग्गहे चिअ जीवविघाए न मह दोसो ॥१॥ जणदेसरक्खणत्थं हणणे मह सीहवग्घसत्तूणं। नहु दोसो जलपिअणे गलणं अन्नत्थ जहसत्ती ॥ २॥" "इत्थेव पमाएणं गुरुवयणेणं इमं तवं कुवे। अप्पबहुभंगएणं तेणं

जायइ मइ विसोही ॥ ४७॥” इतिपरिग्रहप्रमाणटिप्पनकविधिः। एतेषु द्वादशस्वपि व्रतेषु कोऽपि कियन्ति व्रतानि गृह्णाति तस्य तावन्त्युच्चार्यन्ते। यस्य षाण्मासिकं सामायिकव्रतमारोप्यते तस्यायं विधिः। चैत्यवन्दनानन्दिक्षमाश्रमणादि सर्वं पूर्ववत् सामायिकाभिलापेन। विशेषश्चायं कायोत्सर्गानन्तरं तत्करगतनूतनमुखवस्त्रिकायां वासक्षेपः कार्यः। तथैव मुखवस्त्रिकया षण्मासमुभयकालं सामायिकं गृह्णाति। ततो वारत्रयं नमस्कारपाठं कृत्वा दण्डकं पाठयेत्। स यथा—“करेमि भंते सामाइयं सावज्जं जोगं पच्चक्खामि जावनियमं पज्जुवासामि दुविहं तिविहेणं मणेणं वायाए काएणं न करेमि न कारवेमि तस्स भंते पडिक्कमामि निंदामि अप्पाणं वोसिरामि से सामाइए चउव्विहे तं जहा दव्वओ खित्तओ कालओ भावओ दव्वओणं सामाइअं पडुच्च खित्तओणं इहेववा अन्नत्थ वा कालओणं जाव छम्मासं भावओणं जाव गहेणं न गहिज्जामि जाव च्छलेणं न छलिज्जामि जाव सन्निवाइएणं नाभिभविज्जामि ताव मे एसा सामाइअपडिवित्ती।” वारत्रयमुच्चार्यते शिरसि वासदानं अक्षतवासाद्यभिमन्त्रणं सङ्घकरे वासदानं च नास्ति। प्रदक्षिणात्रयं कार्यते। इति षाण्मासिकसम्यक्त्वारोपणविधिः। एवमनयैव रीत्या सम्यक्त्वस्य अन्येषां द्वादशानां व्रतानामपि अनेनैव दण्डकेन तदभिलापेन मासं षण्मासान् वर्षं वा अवधिसम्यक्त्वव्रतानामुच्चारणं। नवरं सम्यक्त्वस्य सम्यक्त्वदण्डकेनोच्चारणं। नवरं कालओणं पुरतः अवधिसम्यक्त्वे 'जावज्जीवाए' न वक्तव्यं 'मासं छम्मासं वरिसं' इत्यादि वक्तव्यं। शेषेष्वपि व्रतेषु 'जावज्जीवाए' स्थाने 'मासं छम्मासं वरिसं' इत्यादि वक्तव्यं इति॥ ॥ अथ प्रतिमोद्वहनविधिः।

प्रतिमा यावज्जीवं नियमस्य स्थिरीकरणप्रतिज्ञा। न तत्र कालादौ नियमव्यवच्छेदः। ताश्चैकादश गृहिणां। ता यथा—"दंसण १ वय २ सामाइय ३ पोसह ४ पडिमाय ५ बंभ ६ अचित्ते। आरंभ ८ पेस ९ उद्दिठ्ठ १० वज्जए समणभूए ११ य॥१॥" तत्र श्रावको यस्यां निःशङ्किताद्सिम्यग्दर्शनो मासं स्यात्सा प्रथमा १ व्रताधारी द्वितीया २ कृतसामायिकस्तृतीया ३ अष्टमीचतुर्दश्यादिषु चतुर्विधपौषधकर्त्ता चतुर्थी ४ पौषधकाले रात्रिक्यादि प्रतिमादिप्रतिपत्ता अस्नानः प्रासुकभोजी दिवा ब्रह्मचारी रात्रौ कृतपरिमाणः कृतपौषधस्तु रात्रावपि ब्रह्मचर्यं चेत्येषा पञ्चमी ५ सदा ब्रह्मचारी षष्ठी ६ सचित्ताहारवर्जकः सप्तमी ७ आरंभस्वयङ्करणवर्जकाऽष्टमी ८ प्रेष्यैरारंभवर्जको नवमी ९ उद्दिष्टकृताहारवर्जकः क्षुरमुण्डितः शिखी वा निराधारी कृतार्थजातनिदर्शनश्चेति दशमी १० क्षुरमुण्डो लुञ्चितो वा रजोहरणप्रतिग्रहधारी श्रमणभूतो निर्ममत्वः स्वज्ञातिषु[1] विहरतीत्येकादशी ११। अत्र च प्रथमा मासं यावत्, द्वितीया द्वौ मासौ, तृतीया त्रयमेवं यावदेकादशी एकादशमासान्। तथा यत्पूर्वस्यां भणितं तदुत्तरस्यामपि सर्वं भणनीयम्। एतासु वितथप्रज्ञापनाश्रद्धानादिना अतिचार इति। तत्र प्रथमं दर्शनप्रतिमा तस्यां नन्दिचैत्यवन्दनकक्षमाश्रमणवासक्षेपविधिः दर्शनप्रतिमाभिलापेन। स एव दण्डकस्त्वेवं—"अहन्नं भंते तुम्हाणं समीवे मिच्छत्तं दव्वभावभेयभिन्नं पच्चक्खामि दंसणपडिमं उवसंपज्जामि नो मे कप्पई अज्जपभिई अ अन्नउत्थिअ देवयाणि वा अन्नउत्थियपरिग्गहिआणि वा अर्हंतचेइआणि वा वंदि-

१ "स्वजातिषु" इत्यपि पाठः।

त्तए वा नमंसित्तए वा पुव्विअणालत्तेणं आलवित्तए वा संलवित्तए वा तेसिं असणं वा पाणं वा खाइमं वा
साइमं वा दाउं वा अणुप्पयाउं वा तिविहं तिविहेणं मणेणं वायाए काएणं न करेमि न कारवेमि करंतंपि
अन्नं न समणुजाणामि तहा अईयं निंदामि पडुप्पन्नं संवरेमि अणागयं पचक्खामि अरहंतसक्खिअं सिद्ध-
सखियं साहुसखियं अप्पसखियं वोसिरामि तहा दव्वओ खित्तओ कालओ भावओ दव्वओणं एसा दंसण-
पडिमा खित्तओणं इहेव वा अन्नत्थ वा कालओणं जाव मासं भावओणं जाव गहेणं न गहिज्जामि जाव छ-
लेणं न छलिज्जामि जाव सन्निवाएणं नाभिभविज्जामि ताव मे एसा दंसणपडिमा” शेषं पूर्ववत् प्रदक्षिणात्र-
यादिकं। दर्शनप्रतिमास्थिरीकरणार्थं कायोत्सर्गादि। अत्राभिग्रहा मासं यथाशक्त्या आचाम्लादिप्रत्याख्यानं
त्रिसन्ध्यं विधिना देवपूजनं पार्श्वस्थादिवन्दनपरिहारः शङ्कादिपञ्चातीचारपरित्यागः राजाभियोगादिषट्के-
ऽपि न त्याज्या प्रतिमेयमिति दर्शनप्रतिमा १ ॥ अथ द्वितीया व्रतप्रतिमा ॥ सा च मासद्वयं यावन्निरतीचार-
पञ्चाणुव्रतपरिपालनविषया गुणव्रतशिक्षाव्रतप्रतिपालनं सहैव । अत्रैव नन्दिक्षमाश्रमणादि तत्तदभिलापेन
पूर्ववत्प्रत्याख्याननियमचर्याद्यास्तथैव दण्डकस्स एव तदभिलापेन इति व्रतप्रतिमा २ ॥ अथ तृतीया सामायि-
कप्रतिमा। सा च मासत्रयं यावदुभयसन्ध्यं सामायिकं कुर्वतो भवति। शेषो नियमनन्दिव्रतादिविधिः स एव
दण्डकतदभिलापेन इति सामायिकप्रतिमा ३ ॥ अथ चतुर्थी पौषधप्रतिमा ॥ सा च मासचतुष्टयं यावदष्टमी-
चतुर्दश्योः चतुर्विधाहारप्रत्याख्यानरतस्य चतुर्विधपौषधकृतो भवति । द्रव्यादिभेदतः द्विमासादिकालमानेन

यथास्वं चीर्यते ॥ अथ नन्दिव्रतनियमादिविधिः स एव दण्डकस्तदभिलापेन इति पौषधप्रतिमा चतुर्थी ४ ॥ एवं शेषास्वपि प्रतिमासु पञ्चमासादिकालासु अयमेव पूर्वोक्तो विधिः नन्दिक्षमाश्रमणदण्डकादि तत्तदभिलापेन व्रतचर्या सैव परं संप्रति कालविपर्ययात् संहननशैथिल्याद्वा पञ्चमाद्येकादशान्तप्रतिमानुष्ठानविधिर्न दृश्यते। तत्र समकालानुक्रमणिकायां क्रियमाणायां पूर्वप्रतिमारम्भ एव शुभमुहूर्त्ताद्यवलोकनं शेषास्तदनुक्रमेण निरन्तरा विधेया न तासु मुहूर्ताद्यवलोकनं। भिन्नासु तासु च क्रियमाणासु तत्तदारम्भे मुहूर्ताद्यवलोकनं ॥ इति व्रतारोपसंस्कारे सम्यक्त्वसामायिकारोपणविधिः ॥ ॥ अथ श्रुतसामायिकारोपणविधिः ॥ तत्र यतीनां श्रुतसामायिकारोपणं योगोद्वहनविधिभिः श्रुतारोपणमागमपाठेन गृहिणां च योगोद्वहनागमपाठरहितानां श्रुतसामायिकारोपणमुपधानोद्वहनेन श्रुतारोपणं च परमेष्ठिमन्त्रैर्यापथिकीशक्रस्तवचैत्यस्तवचतुर्विंशतिस्तवश्रुतस्तवसिद्धस्तवादि पठेत्। उपधीयते ज्ञानादि परीक्ष्यते अनेनेत्युपधानम्। अथवा चतुर्विधसंवरसमाधिरूपायां सुखशय्यायां उत्तमत्वेनोच्छीर्षकस्थाने उपधीयत इत्युपधानं। तत्रोपधाने षण्णां श्रुतस्कन्धानां परमेष्ठिमन्त्रस्य १ ऐर्यापथिक्याः २ शक्रस्तवस्य ३ अर्हच्चैत्यस्तवस्य ४ चतुर्विंशतिस्तवस्य ५ श्रुतस्तवस्य ६ सिद्धस्तवस्य ७ प्रथमगाथात्रयस्योपधानं विनापि वाचना, शेषास्तद्गाथा आधुनिक्यः श्रुतस्कन्धः आदितः परमेष्ठिमन्त्रमहाश्रुतस्कन्धस्य पञ्चाध्ययनान्येका चूलिका द्विपदाश्चालापकाः सप्ताक्षरप्रमाणानि त्रीणि पदानि अर्हदाचार्योपाध्यायनमस्कृतिरूपाणि द्वितीयपञ्चमपदे सिद्धसाधुनमस्कृतिरूपे पञ्चाक्षरनवाक्षरे। ततः पञ्चपदान-

न्तरं चूलिका। तत्र प्रथमालापो द्विपदरूपः षोडशाक्षरः द्वितीयालापस्तृतीयपदरूपोऽष्टाक्षरः तृतीयालापश्चतुर्थपदरूपो नवाक्षरः तत्र पञ्चसु पदेषूद्देशद्वयं चूलिकायामुद्देशत्रयं। तत्र पञ्चसु पदेषु पञ्चत्रिंशदक्षराणि चूलिकायां त्रयस्त्रिंशदक्षराणि पञ्चाध्ययनानि। यथा "नमो अरिहंताणं नमो सिद्धाणं नमो आयरियाणं नमो उवज्झायाणं नमो लोएसव्वसाहूणं" एका चूलिका यथा। "एसो पंचनमुक्कारो सव्वपावप्पणासणो। मंगलाणं च सव्वेसिं पढमं हवइ मंगलं"। द्विपदा आलापका यथा "नमो अरिहंताणं नमो सिद्धाणं" एक आलापः "नमो आयरियाणं नमोउवज्झायाणं" द्वितीयालापः "नमो लोए सव्वसाहूणं" तृतीयालापः "एसो पंचनमुक्कारो सव्वपावप्पणासणो" चतुर्थ आलापः "मंगलाणं च सव्वेसिं पढमं हवइ मंगलं" पंचम आलापः। समाक्षरप्रमाणानि त्रीणि पदानि यथा—"नमो अरिहंताणं ७ नमो आयरियाणं ७ नमो उवज्झायाणं ७" अयमेक उद्देशकः। द्वितीयपदं पञ्चाक्षरं 'नमो सिद्धाणं' ५ इति द्वितीय उद्देशकः। पञ्चमपदं नवाक्षरं ९ "नमो लोए सव्व साहूणं" इति तृतीय उद्देशकः। चूलिकायां प्रथमालापः षोडशाक्षरः १६ "एसो पंचनमुक्कारो सव्वपावप्पणासणो" इति चूलिकायां प्रथम उद्देशः। चूलिकायां द्वितीयालापोऽष्टाक्षरः ८ "मंगलाणं च सव्वेसिं" इति चूलिकायां द्वितीय उद्देशः। चूलिकायां तृतीयालापो नवाक्षरः ९ "पढमं हवइ मंगलं" इति चूलिकायां तृतीय उद्देशः। सर्वाक्षराण्यष्टषष्टिः ६८ तस्योपधानं यथा नन्दिदेववन्दनकायोत्सर्गक्षमाश्रमणवन्दनकप्रभृति नमस्कारश्रुतस्कन्धाभिलापेन पूर्ववत्। अभिमन्त्रितवासक्षेपश्च। तत्र पूर्वसेवायामेकभक्तान्तरिता उपवासाः पञ्च एवं द्वादशदिनानि। तत्र प्रथमे नन्दिदिने एकभक्तं निर्विकृतिकं वा, द्वितीये उपवासः, तृतीये एकभक्तं, चतुर्थे उपवासः, पञ्चमे एकभक्तं,

षष्ठे उपवासः, सप्तमे एकभक्तं, अष्टमे उपवासः, नवमे एकभक्तं, दशमे उपवासः, एकादशे एकभक्तं, द्वादशे उपवासः इति द्वादशमस्तपः पूर्वसेवायां। तत्र पञ्चपरमेष्ठिपदानां नन्दिं विनापि वाचना देया। शक्रस्तवभणनवासक्षेपपूर्वं नमस्कारत्रयपठनं सर्ववाचनासु। तत्र श्रेणिबद्धा अष्टावाचाम्लाः एवं एकोनविंशतिदिनानि। ततो विंशतितमे दिने एकभक्तं एकविंशतितमे दिने उपवासः द्वाविंशतितमे दिने एकभक्तं त्रयोविंशतितमे दिने उपवासः चतुर्विंशतितमे दिने एकभक्तं पञ्चविंशतितमे दिने उपवासः इत्यष्टमतपः उत्तरसेवायां। ततश्चूलिकावाचना "एसो पंचइत्याद्यारभ्य यावत् हवइ मंगलं" इति नमस्कारस्य उपधानं। ततस्तस्य वाचना तस्यायं विधिः। पूर्वं समाचारीपुस्तकपूजनं पश्चान्मुखवस्त्रिकापिहितवदन ऐर्यापथिकीं प्रतिक्रम्य क्षमाश्रमणपूर्वं भणति—"भगवन्, नमुक्कारवायणा संदिसावणिअं वायणालेवावणिअं वासक्खेवं करेह चेइआइं च वंदावेह" एवं नन्दिं विधाय षड्विंशतितमे दिने एकभक्ते कृते वाचना देया। चतुर्णां चूलिकापदानां सर्वेष्वप्युपधानेषु प्रतिदिनमव्यापारपौषधकरणं प्रातः प्रातः पौषधं पारयित्वा पुनः पुनर्नित्यं पौषधग्रहणं कार्यं नमस्कारसहस्रगुणनं च इति प्रथममुपधानं १ ऐर्यापथिक्या अप्युपधानमेवमेव, नन्दिद्वयमप्याद्यन्तयोस्तदभिलापेन। तत्र वाचनाया अष्टाध्ययनानि वाचनाद्वयं एका चूलिका त्रिपदी—"इच्छामि पडिक्कमिउं इरियावहिआए विराहणाए १ गमणागमणे २ पाणक्कमणे बीअक्कमणे हरिअक्कमणे ३ ओसाउत्तिंगपणगदगमट्टीमक्कडासंताणासंक्कमणे ४ जे मे जीवा विराहिआ ५ इत्येका वाचना द्वादशतपोनन्तरं दीयते। एगिंदिआ बेंदिआ तेंदिआ चउरिंदिआ पंचेंदिया ६ अभिहया वत्तीया लेसिआ संघाइआ संघट्टिआ परिआविआ किलामिआ उद्द-

विआ ठाणाओठाणं संकामिआ जीविआओ ववरोविआ तस्स मिच्छामि दुक्कडं ७ तस्स उत्तरीकरणेणं० यावत् ठामि काउस्सग्गं ८ इति द्वितीया वाचना आचाम्लाष्टकान्ते देया । अतः परं "अन्नत्थ ऊससिएणं०" "जाव वोसिरामि" इत्यादि चूलिकावाचना प्रान्तदिने देया इति ऐर्यापथिक्या उपधानं २। अथ शक्रस्तवोपधानं । नन्द्यादि तदभिलापेन पूर्ववत् । तथा प्रथमदिने एकभक्तं द्वितीये उपवासः तृतीये एकभक्तं चतुर्थे उपवासः पञ्चमे एकभक्तं षष्ठे उपवासः सप्तमे एकभक्तं । तत्र प्रथमा वाचना दीयते तिसृणां संपदां यथा— "नमुत्थुणं अरिहंताणं भगवंताणं १ आइगराणं तित्थयराणं सयसंबुद्धाणं २ पुरिसुत्तमाणं पुरिससीहाणं पुरिसवरपुंडरीआणं पुरिसवरगंधहत्थीणं ३ इत्येका वाचना । नमुत्थुणं पदं भिन्नं तिस्रोऽपि संपदः द्वित्रिचतुःपदाः तत एकश्रेण्या षोडशाचाम्लाः तत्र पञ्चपञ्चपदानां तिसृणां संपदां वाचना दीयते लोगुत्तमाणं० यावल्लोगपज्जोगराणं ४ अभयदयाणं० यावद्बोहिदयाणं ५ धम्मदयाणं जाव धम्मवरचाउरंतचक्कवट्टीणं ६ इति द्वितीया वाचना । ततः पुनरपि तथैव श्रेण्या षोडशाचाम्लाः ततः द्वित्रिपदानां तिसृणां संपदां वाचना, "अप्पडिहयवरनाणदंसणधराणं विअट्टछउमाणं ७ जिणाणं जावयाणं तिन्नाणं तारयाणं बुद्धाणं बोहयाणं मुत्ताणं मोयगाणं ८ सवन्नूणं सवदरिसीणं सिवमयलमरुयमणंतमक्खयमवाबाहमपुणरावित्तिसिद्धिगइनामधेयं ठाणं संपत्ताणं नमो जिणाणं जियभयाणं ९ इति तृतीयवाचना । अन्तिमगाथाया—"जेअअइआ सिद्धा जेअ भविस्संत णागए काले । संपइअ वट्टमाणा सवे तिविहेणं वंदामि" इति रूपायास्तृतीयवाचनया सहैव वाचना इति शक्रस्तवोपधानं ३ । अथ चैत्यस्तवोपधानं । नन्द्यादि पूर्ववत् । प्रथमे एकभक्तं द्वितीये उपवासः तृतीये

एकभक्तं ततः श्रेण्या आचाम्लत्रिकं पर्यन्ते त्रयाणामप्यध्ययनानां समकालमेका वाचना । यथा—"अरिहंतचेइयाणं करेमि काउस्सग्गं वंदणवत्तिआए पूअणवत्तिआए सक्कारवत्तिआए सम्माणवत्तिआए बोहिलाभवत्तिआए निरुवसग्गवत्तिआए १ सद्धाएमोहाए० जाव ठामि काउस्सग्गं २ अन्नत्थ उससिएणं जाव वोसिरामि ३ इत्येकैव वाचना । इति चैत्यस्तवोपधानं। अथ चतुर्विंशतिस्तवोपधानं। नन्दिद्वयं पूर्ववत्। प्रथमदिने एकभक्तं द्वितीये उपवासः तृतीये एकभक्तं चतुर्थे उपवासः पञ्चमे एकभक्तं षष्ठे उपवासः सप्तमे एकभक्तं इत्यष्टमतपः अन्ते प्रथमगाथात्रयस्य वाचना "लोगस्स० यावत्केवली १" इत्येका वाचना। ततश्च श्रेण्यैव द्वादशाचाम्लाः तदन्ते गाथात्रयस्य वाचना—"उसभमंजियं च वंदे० जाव वद्धमाणं च" इति द्वितीयवाचना २ ततस्तच्छ्रेण्यैव त्रयोदशाचाम्लाः तदंते "एवमए अभिच्छुया० यावत्सिद्धा सिद्धिं मम दिसंतु" इति तृतीया वाचना ३ इति चतुर्विंशतिस्तवोपधानं। अथ श्रुतस्तवोपधानं। नन्दिद्वयं पूर्ववत्। प्रथमे दिने एकभक्तं द्वितीये उपवासः तृतीये एकभक्तं तच्छ्रेण्यैव पञ्चाचाम्लाः तदन्ते गाथाद्वयस्य वृत्तद्वयस्यापि समकालं वाचना। तत्र पञ्चाध्ययनानि अध्ययनद्वयं गाथाद्वयेन तृतीयाध्ययनं वसन्ततिलकावृत्तेन चतुर्थाध्ययनं शार्दूलविक्रीडितवृत्तपूर्वार्द्धेन पञ्चमाध्ययनं तदुत्तरार्द्धेन इति श्रुतस्तवोपधानं। इति षडुपधानानि। तथा सिद्धस्तवे प्रथमगाथात्रयस्योपधानं विनैव वाचना शेषागाथा आधुनिक्य इत्युपधानवाचनास्थितिः। अत्र विस्तरो निशीथसिद्धान्तोद्धृतोपधानप्रकरणात् ज्ञेयः। यथा—"पंचनमुक्कारे किल दुवालसतवो उ होइ उवहाणं । अट्ठयआयामाइं एगं तह अट्ठमं अंते ॥१॥ एवं चिय नीसेसं इरियावहि आइ होइ उवहाणं। सक्कच्छयंमि अट्ठममेगं बत्तीस

आयामा ॥२॥ अरिहंतचेइअथए उवहाण मिणं तु होइ कायव्वं । एगं चेव चउत्थं तिन्निअ आयंबिलाणि तहा
॥३॥ एगं चिअ किर छट्ठं चउत्थमेगं तु होइ कायव्वं । पणवीसं आयामा चउवीसछयम्मि उवहाणं ॥ ४ ॥ एगं
चेव चउत्थं पंचय आयंबिलाणि नाणथए । चिइवंदणाइ सुत्ते उवहाण मिणं विणिद्दिट्ठं ॥५॥ अव्वावारो विकहा
विवज्जिओ रुद्दझाणपरिमुक्को । विस्सामं अ कुणंतो उवहाणं कुणइ उवउत्तो ॥६॥ अह कहवि हुज्ज बालो वुड्ढो
वा सत्तिवज्जिओ तरुणो । सो उवहाणपमाणं पूरिज्जा आयसत्तीए ॥७॥ राईभोअणविरई दुविहं तिविहं चउ-
व्विहं वा वि । नवकारसहिअमाई पच्चक्खाणं विहेऊणं ॥८॥ एगेण सुद्ध आयंबिलेणं इअरेहिं दोहिं उववासो ।
नवकारस्सहिएहिं पणयालीसाइं उववासो ॥९॥ पोरसि च उवीसाए होइ अवड्ढेहिं दसहिं उववासो । विग-
ईचाएहिं तिहिं एगट्ठाणे हिअ चऊहिं ॥ १० ॥ आयरणाओ नेयं पुरिमड्ढा सोलसेहिं उववासो । एगासणगा
चउरो अट्ठय बेकासणा तहय ॥ ११ ॥ भयवं बहूअ कालो एवं करिंतस्स पाणिणो हुज्जा । तो कहवि हुज्ज मरणं
नवकारविवज्जिअरसा वि ॥ १२ ॥ नवकारवज्जिओ सो निव्वाणमणुत्तरं कहलभिज्जा । तो पढमं चिअ गिण्हओ
उवहाणं होउ वा मा वा ॥ १३ ॥ गोअम जं समयं चिअ सुओवयारं करिज्ज जो पाणी । तं समयं चिअ जाणसु
गहिअवयट्ठं जिणाणाए ॥१४॥ एवं कयउवहाणो भवंतरे सुलहबोहिओ हुज्जा । एअऽभवसाणो विहु गोअम
आराहओ भणिओ ॥ १५ ॥ जो उ अ काउण मिणं गोअम गिह्लिज्ज भत्तिमंतो वि । सो मणुओ दिट्ठव्वो
अगिण्हमाणेण सारित्थो ॥ १६ ॥ आसायइ तित्थयरं तव्वयणं संघगुरुजणं चेव । आसायणबहुलो सो गोयम-
संसारमणुगामी ॥१७॥ पढमं विअकन्नाहे उएण जं पंचमंगलमहीअं । तस्स वि उवहाणपरस्स सुलहिआ बो-

हि निद्दिट्ठा ॥१८॥ इअ उवहाणपहाणं निउणं सयलं पि वंदणविहाणं । जिणपूआपुव्वंचिअ पढिज्ज सुअभणि-
अनीइए ॥ १९ ॥ तं सरवंजणमत्ता बिंदुपयत्थेअट्ठाणपरिसुद्धं । पढऊणं विअवंदणसुत्तं अत्थं विआणिज्जा
॥२०॥ तत्थ य जत्थेव सिआ संदेहो सुत्तअत्थविसयंमि। तं बहुसो वीमंसिय सयलं निस्संकियं कुज्जा ॥२१॥
अह सोहणतिहि-करणे-मुहुत्त-नक्खत्त-जोगलग्गंमि । अणुकूलंमि ससिबले सस्से सस्से अ समयंमि
॥२२॥ निअयविहवाणुरूवं संपाडिअ-भुवणनाह-पूएण । परमभत्तीइ विहिणा पडिलाभिअसाहुवग्गेण॥२३॥
भत्तिभरनिब्भरेणं हरिसवसुल्लसिअबहलपुलएणं । सद्धासंवेग-विवेग-परम-वेरग्ग-जुत्तेणं ॥ २४ ॥ विणिह-
यघणरागदोसमोहमित्थत्तमल्लकलंकेणं । अइ-उल्लसंत-निम्मल-अब्भवसाणेण अणुसमयं ॥ २५ ॥ तिहुअण-
गुरुजिणपडिमाविणिवेसिअनयणमाणसेण तहा। जिणचंदवंदणाओ धन्नोहं मन्नमाणेणं ॥२६॥ निअयसिररइ-
अकरकमलमउलिणा जंतुविरहिओगासे । निस्संकं सुत्तत्थं पए पए भावयंतेणं ॥ २७॥ जिणनाहदिट्ठगंभीर-
समयकुसलेण सुहचरित्तेणं । अपमायाई बहुविहगुणेण गुरुणा तहा सद्धिं ॥ २८ ॥ चउविहसंघजुएणं विसे-
सओ निअयबंधुसहिएणं । इअ विहिणानिउणेणं जिणबिंबं वंदणिज्जंति ॥ २९ ॥ तयणंतरं गुणड्ढे साहू वंदिज्ज
परमभत्तीए । साहम्मिआण कुज्जा जहारिहं तह पणामाई ॥ ३० ॥ जावयमहग्घमुक्किट्ठचुक्खवत्थप्पयाणपु-
व्वेण । पडिवत्तिविहाणेणं कायव्वो गरुअसम्माणो ॥ ३१ ॥ एआवसरे गुरुणा सुविहिअगंभीरसमयसारेणं । अ-
क्खेवणिविक्खेवणिसंवेइणिपमुहविहिणाओ ॥ ३२ ॥ भवनिव्वेअपहाणा सद्धासंवेगसाहणे णिउणा । गरुएणं

पयंथेणं धम्मकहा होइ कायवा ॥ ३३ ॥ सद्धासंवेगपरं सूरी नाऊण तं तओ भवं। चिअवंदणाइकरणे इय वयणं भणइ णिउणमई ॥ ३४ ॥ भो भो देवाणुप्पिया संपाविअ निअयजम्मसाफल्लं । तुमए अज्जप्पभिई तिक्कालं जावजीवाए ॥ ३५ ॥ वंदेअवाइं चेइआइं एगग्गसुथिरचित्तेणं । खणभंगुराइ मणुअत्तणाओ इणमेव सारंति ॥३६॥ तत्थ तुमे पुव्वण्हे पाणं पि न चेव ताव पायवं । नो जाव चेइआइं साहूविअ वंदिआ विहिणा ॥ ३७ ॥ मज्झण्हे पुणरवि वंदिऊण निअमेण कप्पए भुत्तुं । अवरण्हे पुणरवि वंदिऊण नियमेण सुअणंति ॥३८॥ एवमभिग्गहबंधं काउं तो वद्धमाणविज्जाए । अभिमंतिऊण निण्हइ सत्तगुरुगंधमुट्ठीओ ॥ ३९ ॥ तस्सुत्तमंगदेसे नित्थारगपारगो हविज्ज तुमं । उच्चारे माणो विअ निक्खिवइ गुरु सपणिहाणं ॥ ४० ॥ एआए विज्जाए पभावजोगेण एस किरभवो । अहिगयकज्जाण लहुं नित्थारगपारगो होउ ॥ ४१ ॥ अह चउविहोवि संघो नित्थारगपारगो हविज्ज तुमं । धन्नो सलक्खणो जंपिरोत्ति निक्खिवइ से गंधे ॥४२॥ तत्तो जिणपडिमाए पूआदेसाओ सुरभिगंधड्ढं । अभिलाणं सिअदामं गिण्हिअगुरुणा सहत्थेणं ॥ ४३ ॥ तस्सोभयक्खंधेसु आरोवंतेण सुद्धचित्तेण । निस्संदेहं गुरुणा वत्तवं एरिसं वयणं ॥ ४४ ॥ भो भो सुलद्धनिअजम्मनिच्चिअअइगुरुअपुन्नपब्भार । नारयतिरियगईओ तुब्भावस्सं निरुद्धाओ ॥४५॥ नो बंधगोसि सुंदर तुम मित्तो अयसनीयगुत्ताणं। नो दुल्लहो तुह जम्मंतरेवि एसो नमुक्कारो ॥ ४६ ॥ पंचनमुक्कारपभावओ अ जम्मंतरेवि किर तुज्झ । जाईकुलरूवा–रुग्गसंपयाओ पहाणाओ ॥४७॥ अन्नं च इम्माओ चिअ न हुंति मणुआ कया वि जिअलोए । दासापेसा दुभग्गनी

आ विगलिंदिआ चेव ॥ ४८ ॥ किं बहुणा जे इमिणा विहिणा एअं सुअं अहिज्जित्ता । सुअभणिअविहाणेणं सुद्धे सीले अभिरमिज्जा ॥ ४९ ॥ नो ते जइ तेणं चिअ भवेण निवाण मुत्तमं पत्ता । तोणुत्तरगेविज्जई एसु सुइरं अभिरमेउं ॥ ५० ॥ उत्तमकुलंमि उक्किट्ठ–लट्ठ–सवंग–सुंदरा पयडा । सवकलापत्तट्ठा जणमणआणंदणा होउ ॥ ५१ ॥ देविंदोवमरिद्धी दया–वरादाण–विणयसंपन्ना । निविन्नकामभोगा धम्मं सयलं अणुट्ठेउं ॥ ५२ ॥ सुहझाणानलनिद्दड्ढथाइकम्मिंधणा महासत्ता । उप्पन्नविमलनाणा विहुअमला झत्ति सज्झंति ॥५३॥ इअ विमलफलं मुणिओ जिणस्स महमाणदेवसूरिस्स । वयणा उवहाणमिणं साहेह महानिसीहाओ ॥५४॥ इति उपधानविधिः । षड्डपधानयंत्राणि॥ अथोपधानतपस उद्यापनरूपस्य मालारोपणस्य विधिरुच्यते । स चायं, तत्र प्राचीन एव नन्दिक्रमः। अयं च विशेषः, मालारोपणं तत्कालं वा उपधानतपसि परिपूर्णे दिनान्तरेषु वा अयं विधिरनुष्ठीयते तत्र मालारोपणात् प्रथमदिने साधुभ्योऽन्नपानवस्त्रपात्रवसतिपुस्तकदानं दद्यात् । सङ्घस्य भोजनदानं वस्त्रादिभिः सङ्घार्चनं तस्य तस्मिन् दिने शुभतिथिनक्षत्रवारलग्ने दीक्षोचिते दिने परमयुक्त्या बृहत्स्नात्रविधिना जिनार्चनं कुर्यात् । मातृपितृपरिजनसाधर्मिकादि मेलयेत् । ततो मालाग्राही कृतनिर्दिष्टोचितवेषः कृतधम्मिल्ल उत्तरासङ्गवान् निजवर्णानुसारेण जिनोपवीतोत्तरीयादिधारी प्रगुणीकृतप्रचुरगन्धाद्युपकरणः अक्षतनालिकेरभृतकरः पूर्ववत् समवसरणं प्रदक्षिणीकुर्यात् त्रिः । ततो गुरुसमीपे क्षमाश्रमणपूर्वं भणति—“इच्छाकारेण तुब्भे अम्हं पंचमंगलमहासुअक्खंधइरिआवहिआसुअक्खंधसकच्छयसुअक्खंधचेइअ-

च्छयवसुअक्खंध चउवीसत्थयसुयअक्खंध सुअत्थयसुयक्खंध अणुजाणावणिअं वासक्खेवं करेह । ततो गुरुरभिमन्त्रितवासक्षेपं करोति । पुनः श्राद्धः क्षमाश्रमणपूर्वं भणति—"चेइआइं च वंदावेह ।" ततश्चैत्य-वन्दनं वर्द्धमानस्तुतिभिः शान्तिदेव्यादिस्तुतयः पूर्ववत् । पुनः शक्रस्तुत्यर्हणादिस्तोत्रकथनं पूर्ववत् । तत उत्थाय पंचमंगलमहासुअक्खंधपडिक्कमणसुअक्खंधभावार्हं तत्थय ठवणारिहंतत्थय नाणत्थय सिद्धत्थय अणुजाणावणिअं करेमि काउस्सग्गं अन्नत्थ उससिएणं यावअप्पाणं वोसिरामि । चतुर्विंशतिस्तवचिन्तनं पारयित्वा चतुर्विंशतिस्तवपाठः त्रिः । गुरुः परमेष्ठिमन्त्रं पठित्वा निषद्यायामुपविशति । श्राद्धस्य सपरिजनस्य ससङ्घस्य—"भो भो देवाणुप्पिआ संपाविअ निअयजम्मसाफल्लं । तुमए अज्जप्पभिई तिकालं जावज्जी-वाए ॥१॥ वंदेअव्वाइं चेइआइं एगग्गसुथिरचित्तेणं । खणभंगुराओ मणुअत्तणाओ इणमेव सारंति ॥ २ ॥ तत्थ तुमे पुव्वण्हे पाणंपि न चेव ताव पायव्वं । नो जाव चेइयाइं साहूविअ वंदिआ विहिणा ॥ ३ ॥ मज्झण्हे पुणरवि वंदिऊणनिअमेण कप्पए भुत्तुं । अवरण्हे पुणरवि वंदिऊण निअमेण सुअणंति ॥४॥" इत्यादि महानिशीथ-मध्यगतविंशतिगाथोक्तां देशनां कृत्वा त्रिसन्ध्यं चैत्यवन्दनं साधुवन्दनं चैत्याभिग्रहविशेषान् ददाति । ततो वासानभिमन्त्र्य ससगन्धमुष्टीः "नित्थारगपारगो होहि" इति भणन् गुरुस्तच्छिरसि प्रक्षिपति । ततोऽक्षतवासान् अभिमन्त्रयेत् । तत्समये सुरभिगन्धाम्लानसितपुष्पसमूहास्तैश्च ग्रथितां मालां जिनप्रतिमापादोपरि न्यस्य सूरिरूर्ध्वीभूय अभिमन्त्रितवासान् जिनपादेषु क्षिपति । सन्निहितसाधुसाध्वीश्रावकश्राविकाजनस्य गन्धाक्ष-

तान् ददाति। श्राद्धो नमस्कारानुज्ञार्थं प्रदक्षिणात्रयं ददाति। गुरुः "नित्थारगपारगो होहि गुरुगुणेहिं बुड्ढाहिं" जनः पूर्णमनोरथो जातोऽसि, धन्यः पुण्यवानसि इति वदन्तः क्रमेण गुरुसङ्घादयो वासान् क्षिपंति। ततः पुनः श्राद्धः समवसरणं त्रिः प्रदक्षिणयेत्। गुरुं च त्रिः, सगुरुं समवसरणं त्रिः, सगुरुं ससङ्घं समवसरणं त्रिः प्रदक्षिणयेत्। ततो नमस्कारादि श्रुतस्कन्धानुज्ञापनार्थं कायोत्सर्गचतुर्विंशतिस्तवचिन्तनं भणनं च। ततस्तत्स्वजनैर्मालाधारिभिः सह प्रतिमाग्रे गत्वा शक्रस्तवं भणित्वा "अणुजाणउ मे भयवं अरिहा" इत्युक्त्वा श्राद्धो जिनपादोपरि पूर्वस्थापितां मालां गृहीत्वा निजबन्धुहस्ते संस्थाप्य नन्दिसमीपे समागत्य श्राद्धो मालां गुरुणा अभिमन्त्रयति। गुरुरूर्ध्वस्थित उपधानविधिं व्याख्याति। सोऽप्यूर्ध्वस्थितः शृणोति। "परमपयपुरीपत्थिए"त्यादि मालोपबृंहणगाथाभिर्गुरुर्देशनां करोति–तदनु ततः—"जिणपडिमाए पूआदेसाओ सुरभिगंधड्ढं। अमिलाणं सिअदामं गिह्निअ गुरुणा सहत्थेण॥ १॥ तस्सोभयक्खंधेसु आरोवंतेण सुद्धचित्तेण। निस्संदेहं गुरुणा वत्तव्वं एरिसं वयणं ॥२॥ भो भो सुलद्धनियजम्मनिचियअइगरुअपुन्नपब्भार। नारयतिरियगईओ, तुब्भ अवस्सं निरुद्धाओ॥३॥ नो बंधगोसि सुंदर तुममित्तो अयसनीयगुत्ताणं। नो दुल्लहो तुह जम्मंतरेवि एसो नमुक्कारो ॥ ४ ॥ पंचनमुक्कारपभावओ य जम्मंतरेवि किर तुब्भ। जाई कुलरूवारुग्गसंपयाओ पहाणाओ ॥५॥ अन्नं च इमा ओचिय न हुंति मणुया कयावि जिअलोए। दासा पेसा दुभग्गनीया विंगलिंदिया चेव ॥६॥ किं बहुणा जे इमिणा विहिणो एअं सुअं अहिजित्ता। सुअभणिअविहाणेणं सुद्धे सीले अ-

भो णुत्तरगे विज्जाइएसु सुइरं अभिरमेओ
भिरमिज्जा ॥७॥ नो ते जइ तेणं चिय भवेणं निव्वाणमुत्तमं पत्ता । सव्वकलापत्तट्ठा जणमणआणंदणा होऊ ॥ ९ ॥ देविंदोवम-
॥ ८ ॥ उत्तमकुलंमि उक्किट्ठलट्ठसव्वंगसुंदरापयडा । सव्वकलापत्तट्ठा जणमणआणंदणा होऊ ॥ १० ॥ सुहझाणानलनिदड्ढ घाइ-
रिद्धीदयावरादाणविणयसंपन्ना । निव्विण्णकामभोगा धम्मं सयलं अणुट्ठेओ ॥ १० ॥ सुहझाणानलनिदड्ढ घाइ-
कम्मिंधणा महासत्ता । उप्पन्नविमलनाणा विहुयमला झत्ति सिज्झंति ॥११॥" इत्थंतरे सुनेवच्छेहिं मालागा-
हिणो बंधवेहिं । जिणनाहपूयादेसाओ अणुजाणावितु माला आणेयव्वा ॥ १ ॥ संपइ सुत्तमईरत्तवच्छच्छुयामा-
लाकीरइ सूरीय तत्थ वासे खिवइ तओ तवंधवहत्थेण तस्स भव्वस्स कंठे माला पक्खेवणीया इत्थ केइ भणंति
पक्खित्तमाला समोसरणे पयाहिणाचउक्कं दिंति संघो य तस्सीसे वासक्खेए पक्खिवइत्ति । तओ पञ्चसद्दे
वज्जंते मालागाहिणो जिणगओ सपरियणा नचंति दाणं च दिंति आयंबिलं उववासो वा तस्स तम्मि दिणे
पच्चक्खाणं संपयं उववासा कारविज्जइत्ति दीसइ तओ आरत्तियमाइसावया कुणंति । ७ । तओ महया विच्छ-
ड्डेणं सावया सावियाओ जालागाहिणं गिहे नेति सोवि गिहगयाण तेसिं सत्तीए वत्थतंबोलाइ देइ जइ पुण
वसहीए नंदिरयणा कया तओ चेइहरे समुदाएण गम्मइत्ति सा य माला घरपडिमाअग्गओ ठाविया छम्मासं
जाव पूइज्जत्ति ॥ इति गाथा वारत्रयं गुरुर्भणति । ततस्तत्स्कन्धे माला प्रक्षेप्या आरात्रिकगीतनृत्यादि बहु
क्रियते । श्राद्धेन तद्दिने आचाम्लादि तपः कार्यं । यदि पौषधागारे मालारोपणं तदा ससङ्घश्चैत्यं गम्यते । चै-
त्यवन्दनां कृत्वा पुनरपि पौषधागारे समेत्य मण्डलपूजादि विधेयं । अयं चोपधानमालारोपणविधिर्निशीथम-

हानिशीथसिद्धान्तपाठिभिः श्रुतसामायिकत्वेन मन्यते । अन्यैस्तत्तिरस्कारपरैर्नोररीक्रियते । तैः प्रतिमोद्वहनविधिरेव श्रुतसामायिकत्वे निर्दिश्यते । मालाश्च कैश्चित्कौशेयपट्टसूत्रमय्यः स्वर्णपुष्पमुक्तामाणिक्यगर्भिता आरोप्यन्ते । कैश्चिच्च शुभ्रकुसुममय्यः । तत्र स्वसंपत्तिः प्रमाणं । इति व्रतारोपसंस्कारे श्रुतसामायिकारोपणम् ॥ अथ तत्प्रसङ्गेन श्राद्धानां दिनचर्या उच्यते । यथा—"मुहूर्त्तद्वय उत्थाय निशाशेषेऽप्युपासकः । कृतमूत्रमलोत्सर्गः कृतशौचो यथाविधि ॥ १ ॥ परमेष्ठिमहामन्त्रं जपन् पूजासनस्थितः । कुलधर्मव्रतश्राद्धपरामर्शं विधाय च ॥२॥ चैत्यवन्दनमाधाय स्तोत्रपाठपुरस्कृतम् । स्वगेहे धर्मगेहे वा स्थित्वावश्यकमाचरेत् ॥ ३ ॥ प्रत्यूषे च ततो गेहे स्नातः शुचिसिची वहन् । अर्चयेद्देवमर्हन्तं भोगमोक्षप्रदायकम् ॥ ४ ॥" ततो जिनार्चनविधिरर्हत्कल्पकथनानुसारेण प्रोच्यते । स यथा—श्राद्धः केवलदृढसम्यक्त्वः प्राप्तगुरूपदेशो निजालये चैत्ये वा बद्धधम्मिल्लः शुचिपरिधानः कृतोत्तरासङ्गः स्ववर्णानुसारेण जिनोपवीतोत्तरीयोत्तरासङ्गभृत् कृतमुखकोशोऽनन्यचित्तः एकान्ते जिनार्चनं कुर्यात् । प्रथमं जलपत्रपुष्पाक्षतफलधूपवह्निदीपगन्धादीनां निष्पापताकरणं—"ॐ आपोऽप्काया एकेन्द्रिया जीवा निरवद्यार्हत्पूजायां निर्व्यथाः सन्तु निरपायाः सन्तु सद्गतयः सन्तु न मेऽस्तु सङ्घट्टनाहिंसापापमर्हदर्चने" इति जलाभिमन्त्रणं । "ॐ वनस्पतयो वनस्पतिकाया जीवा एकेन्द्रिया निरवद्यार्हत्पूजायां निर्व्यथाः सन्तु निरपायाः सन्तु सद्गतयः सन्तु नमेऽस्तु सङ्घट्टनाहिंसापापमर्हदर्चने" इति पत्रपुष्पफलधूपचन्दनाद्यभिमन्त्रणं । "ॐ अग्नयोऽग्निकाया जीवा एकेन्द्रिया निरवद्यार्हत्पूजायां निर्व्यथाः सन्तु

निरपायाः सन्तु सद्गतयः सन्तु नमेऽस्तु सङ्घट्टनहिंसापापमर्हदर्चने" इति वह्निदीपाद्यभिमन्त्रणं । सर्वेषामभिमन्त्रणं वासक्षेपेण त्रिस्त्रिः । ततः पुष्पगन्धादि हस्ते गृहीत्वा, "ॐ त्रसरूपोऽहं संसारिजीवः सुवासनः सुमेधा एकचित्तो निरवद्यार्हदर्चने निर्व्यथो भूयासं निष्पापो भूयासं निरुपद्रवो भूयासं मत्संश्रिता अन्येऽपि संसारिजीवा निरवद्यार्हदर्चने निर्व्यथा भूयासुः निष्पापा भूयासुः निरुपद्रवा भूयासुः" इति स्वस्य तिलककरणं पुष्पादिभिः स्वशिरोऽर्चनं । पुनः पुष्पाक्षतादि करे गृहीत्वा "ॐ पृथिव्यप्तेजोवायुवनस्पतित्रसकाया एकद्वित्रिचतुष्पञ्चेन्द्रियास्तिर्यङ्मनुष्यनारकदेवगतिगताश्चतुर्दशरज्ज्वात्मकलोकाकाशनिवासिनः इह जिनार्चने कृतानुमोदनाः सन्तु निष्पापाः सन्तु निरपायाः सन्तु सुखिनः सन्तु प्राप्तकामाः सन्तु मुक्ताः सन्तु बोधमाप्नुवन्तु ।" इति दशस्वपि दिक्षु गन्धजलाक्षतादिक्षेपः । ततः—"शिवमस्तु सर्वजगतः परहितनिरता भवन्तु भूतगणाः । दोषाः प्रयान्तु नाशं सर्वत्र सुखी भवतु लोकः ॥ १ ॥ सर्वेऽपि सन्तु सुखिनः सर्वे सन्तु निरामयाः । सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग् भवेत् ॥२॥" इत्यार्यानुष्टुप्पाठः । "ॐ भूतधात्री पवित्रास्तु अधिवासितास्तु सुप्रोक्षितास्तु" इति जलेन पूर्वलिप्तभूमौ प्रोक्षणं।ततः "ॐ स्थिराय शाश्वताय निश्चलाय पीठाय नमः।" इति प्रक्षालितचन्दनलिप्तस्वस्तिकाङ्कितपूजापट्टस्थालादिस्थापनं । चैत्ये तु स्थिरबिंबे एताभ्यां मन्त्राभ्यां तद्भूमिजलपट्टाद्यधिवासनं । ततः—"ॐ अत्र क्षेत्रे अत्र काले नामार्हन्तो रूपार्हन्तो द्रव्यार्हन्तो भावार्हन्तः समागताः सुस्थिताः सुनिष्ठिताः सुप्रतिष्ठाः सन्तु ।" इत्यर्हत्प्रतिमास्थापनं । निश्चलबिंबे चरणाधिवासनं । ततो-

ऽञ्जल्यग्रे पुष्पं गृहीत्वा, "ॐ नमोऽर्हद्भ्यः सिद्धेभ्यः तीर्णेभ्यः तारकेभ्यो बोधकेभ्यः सर्वजन्तुहितेभ्यः इहं कल्पनाबिंबे भगवन्तोऽर्हन्तः सुप्रतिष्ठिताः सन्तु।" इति मौनेन कथयित्वा भगवच्चरणोपरि पुष्पस्थापनं। पुष्पेण पुनरपि जलार्द्रितेन पूजापूर्वकं कथनं । यथा—"स्वागतमस्तु सुस्थितिरस्तु सुप्रतिष्ठास्तु ।" ततः पुष्पाभिषेकेण—"अर्घ्यमस्तु पाद्यमस्तु आचमनीयमस्तु सर्वोपचारैः पूजास्तु।" एभिर्वचनैः पुनर्जिनप्रतिमोपरि जलार्द्रितपुष्पारोपणं विधीयते। ततो जलं गृहीत्वा मन्त्रश्लोकः—"ॐ अर्हं वं–जीवनं तर्पणं हृद्यं प्राणदं मलनाशनम्। जलं जिनार्चनेऽत्रैव जायतां सुखहेतवे ॥ १ ॥" इति जलेन प्रतिमाभिषेचनं स्नपनं च। ततश्चन्दनकुङ्कुमकर्पूरकस्तूरीप्रभृतिगन्धं करे गृहीत्वा, श्लोकः—"ॐ अर्हं लं–इदं गन्धं महामोदं बृंहणं प्रीणनं सदा। जिनार्चनेऽत्र सत्कर्मसंसिद्ध्यै जायतां मम ॥ १ ॥" इति विविधगन्धैः प्रतिमाविलेपनं । ततः पुष्पपत्रिकादि हस्ते गृहीत्वा–श्लोकः—"ॐ अर्हं क्षं–नानावर्णं महामोदं सर्वत्रिदशवल्लभम् । जिनार्चनेऽत्र संसिद्ध्यै पुष्पं भवतु मे सदा ॥ १ ॥" इति पुष्पपूजा । अक्षतान् गृहीत्वा—"ॐ अर्हं तं–प्रीणनं निर्मलं बल्यं माङ्गल्यं सर्वसिद्धिदम् । जीवनं कार्यसंसिद्ध्यै भूयान्मे जिनपूजने ॥ १ ॥" इति अक्षतान् जिनप्रतिमोपरि आरोपयेत् । ततः पूगजातीफलादि वर्त्तमानर्त्तुफलं वा करे गृहीत्वा—"ॐ अर्हं फुः–जन्मफलं स्वर्गफलं पुण्यमोक्षफलं फलम्। दद्याज्जिनार्चनेऽत्रैव जिनपादाग्रसंस्थितम् ॥ १ ॥" इति जिनपादाग्रे फलपूजा। ततो धूपं गृहीत्वा—"ॐ अर्हं रं–श्रीखण्डागरुकस्तूरीद्रुमनिर्याससंभवः। प्रीणनः सर्वदेवानां धूपोऽस्तु जिनपूजने ॥१॥" इति वह्नौ धूपक्षेपः। पुष्पं गृहीत्वा—"ॐ अर्हं रं–पञ्चज्ञानमहाज्योतिर्मयोऽयं ध्वान्तघातने। द्योतनाय

इति दीपमध्ये पुष्पन्यासः। ततः पुष्पाणि गृहीत्वा—"ॐ अर्हं भगव-
प्रतिमाया दीपो भूयात्सदार्हतः ॥१॥" इति दीपमध्ये पुष्पन्यासः। ततः पुष्पाणि गृहीत्वा—"ॐ अर्हं भगव-
द्भ्योऽर्हद्भ्यो जलगन्धपुष्पाक्षतफलधूपदीपैः संप्रदानमस्तु ॐ पुण्याहं पुण्याहं प्रीयन्तां प्रीयन्तां भगवन्तोऽर्हे-
न्तस्त्रिलोकस्थिता नामाकृतिद्रव्यभावयुताः स्वाहा।" इति पुनर्जिनपूजनं। ततो वासान् गृहीत्वा—"ॐ सूर्य-
सोमाङ्गारकबुधगुरुशुक्रशनैश्चरराहुकेतुमुखा ग्रहा इह जिनपादाग्रे समायान्तु पूजां प्रतीच्छन्तु" इत्युक्त्वा
जिनपादाधःस्थापितग्रहेषु स्नानपट्टे वा वासान् निक्षिपेत्। ततः—"आचमनमस्तु गन्धमस्तु पुष्पमस्तु अक्ष-
तमस्तु फलमस्तु धूपोऽस्तु दीपोऽस्तु," इति क्रमेण जलगन्धपुष्पाक्षतफलधूपदीपैर्ग्रहाणां पूजा। ततोऽञ्जल्यग्रे
पुष्पं गृहीत्वा—"ॐ सूर्यसोमाङ्गारकबुधगुरुशुक्रशनैश्चरराहुकेतुमुख्या ग्रहाः सुपूजिताः सन्तु सानुग्रहाः
सन्तु तुष्टिदाः सन्तु पुष्टिदाः सन्तु माङ्गल्यदाः सन्तु महोत्सवदाः सन्तु" इति ग्रहेषु पुष्पारोपणं। पुनरन-
यैव रीत्या—"ॐ इन्द्राग्नियमनिर्ऋतिवरुणवायुकुबेरेशाननागब्रह्माणो लोकपालाः सविनायकाः सक्षेत्र-
पालाः इह जिनपादाग्रे समागच्छन्तु पूजां प्रतीच्छन्तु" इति पूजापट्टोपरि लोकपालानां वासक्षेपः। ततः—
"आचमनमस्तु गन्धमस्तु पुष्पमस्तु अक्षतमस्तु फलमस्तु धूपोऽस्तु दीपोऽस्तु" इति क्रमेण जलगन्धपुष्पा-
क्षतफलधूपदीपैर्लोकपालानां पूजा। ततोऽञ्जल्यग्रे पुष्पं गृहीत्वा—"ॐ इन्द्राग्नियमनिर्ऋतिवरुणवायुकुबेरे-
शाननागब्रह्माणो लोकपालाः सविनायकाः सक्षेत्रपालाः सुपूजिताः सन्तु सानुग्रहाः सन्तु तुष्टिदाः सन्तु
पुष्टिदाः सन्तु माङ्गल्यदाः सन्तु महोत्सवदाः सन्तु।" इति लोकपालेषु पुष्पारोपणं। ततः पुष्पाञ्जलिं गृहीत्वा

—"असत्पूर्वजा गोत्रसंभवा देवगतिगताः सुपूजिताः सन्तु सानुग्रहाः सन्तु तुष्टिदाः सन्तु पुष्टिदाः सन्तु माङ्गल्यदाः सन्तु महोत्सवदाः सन्तु ।" इति जिनपादाग्रे पुष्पाञ्जलिं क्षिपेत् । ततः पुनरपि पुष्पाजलिं गृहीत्वा—"ॐ अर्हं अर्हद्भक्ताष्टनवत्युत्तरशतं १९८ देवजातयः सदेव्यः पूजां प्रतीच्छन्तु सुपूजिताः सन्तु सानु० तुष्टि० पुष्टि० माङ्गल्य० महोत्सवदाः सन्तु ।" इत्युक्त्वा जिनपादाग्रे पुष्पाञ्जलिं क्षिपेत् । ततोऽञ्जल्यग्रे पुष्पं धृत्वा अर्हन्मन्त्रं स्मृत्वा तेन पुष्पेण जिनप्रतिमां पूजयेत् । अर्हन्मन्त्रो यथा—"ॐ अर्हं नमो अरिहंताणं, ॐ अर्हं नमो सयंसंबुद्धाणं, ॐ अर्हं नमो पारगयाणं । "अयं तु त्रिपदो मन्त्रः श्रीमतामर्हतां परः । भोगमोक्षप्रदो नित्यं सर्वपापनिकृन्तनः ॥ १ ॥ न सत्त्वेभ्योऽपवित्रैश्च नान्यचित्तैर्न सस्वरम् । न श्राव्यश्च नास्तिकानां नैव मिथ्यादृशामपि ॥ २ ॥" ततोऽष्टोत्तरशतं तदर्द्धं वा मन्त्रजापः । ततो नैवेद्यढौकनं पात्रद्वयेन । तत एकपात्रजलं चुलुके गृहीत्वा—"ॐ अर्हं-नानाषड्रससंपूर्णं नैवेद्यं सर्वमुत्तमम् । जिनाग्रे ढौकितं सर्वसंपदे मम जायताम् ॥ १ ॥" प्रत्येकं तत्र नैवेद्ये जलचुलुकक्षेपः । पुनर्जलचुलुकं गृहीत्वा—"ॐ सर्वे गणेशक्षेत्रपालाद्याः सर्वे ग्रहाः सर्वे दिक्पालाः सर्वेऽस्मत्पूर्वजोद्भवा देवाः सर्वेऽष्टनवत्युत्तरशतं देवजातयः सदेव्योऽर्हद्भक्ता अनेन नैवेद्येन सन्तर्पिताः सन्तु सानु० तुष्टि० पुष्टि० माङ्गल्य० महो०" इति द्वितीयनैवेद्यस्योपरि चुलुकक्षेपः । इति जिनार्चनविधिः । "यो जन्मकाले पुरुषोत्तमस्य सुमेरुशृङ्गे कृतमज्जनैश्च । देवैः प्रदत्तः कुसुमाञ्जलिः स ददातु सर्वाणि समीहितानि ॥ १ ॥ राज्याभिषेकसमये त्रिदशाधिपेन छत्रध्वजाङ्कतलयोः पद-

योर्जिनस्य । क्षिप्तोऽतिभक्तिभरतः कुसुमाञ्जलिर्यः स प्रीणयत्वनुदिनं सुधियां मनांसि ॥ २ ॥ देवेन्द्रैः कृतकेवले जिनपतौ सानन्दभक्त्यागतैः सन्देहव्यपरोपणक्षमशुभव्याख्यानबुद्धाशयैः । आमोदान्वितपारिजातकुसुमैर्यत्स्वामिपादाग्रतो मुक्तः स प्रतनोतु चिन्मयहृदां भद्राणि पुष्पाञ्जलिः ॥ ३ ॥" इति वृत्तत्रयेण पुष्पाञ्जलित्रयक्षेपः । "लावण्यपुण्याङ्गभृतोऽर्हतो यस्तद्दृष्टिभावं सहसैव धत्ते । स विश्वभर्तुर्लवणावतारो गर्भावतारं सुधियां विहन्तु ॥ १ ॥ लावण्यैकनिधेर्विश्वभर्तुस्तद्दृष्टिहेतुकृत् । लवणोत्तारणं कुर्याद्भवसागरतारणम् ॥ २ ॥" इति वृत्तद्वयेन द्विवेलं लवणोत्तारणं । "सक्षारतां सदासक्तां निहन्तुमिव सोद्यमः । लवणाब्धिर्लवणांबुमिषात्ते सेवते पदौ ॥ १ ॥" इति लवणमिश्रपानीयोत्तारणं । "भुवनजनपवित्रताप्रमोदप्रणयनजीवनकारणं गरीयः । जलमविकलमस्तु तीर्थनाथक्रमसंस्पर्शि सुखावहं जनानाम् ॥ १ ॥" अनेन केवलजलप्रक्षेपः । "सप्तभीतिविघातार्हं सप्तव्यसननाशकृत् । यत्सप्तनरकद्वारसप्ताररि(ति)तुलां गतम् ॥ १ ॥ सप्ताङ्गराज्यफलदानकृतप्रमोदं तत्सप्ततत्त्वविदनन्तकृतप्रबोधम् । तच्छक्रहस्तधृतसङ्गतसप्तदीपमारात्रिकं भवतु सप्तमसद्गुणाय ॥ २ ॥" इति आरात्रिकावतरणं । "विश्वत्रयभवैर्जीवैः सदैवासुरमानवैः । चिन्मङ्गलं श्रीजिनेन्द्रात्प्रार्थनीयं दिने दिने ॥ १ ॥ यन्मङ्गलं भगवतः प्रथमार्हतः श्रीसंयोजने प्रतिबभूव विवाहकाले । सर्वासुरासुरवधूमुखगीयमानं सप्तर्षिभिश्च सुमनोभिरुदीर्यमाणं ॥ २ ॥ दास्यं गतेषु सकलेषु सुरासुरेषु राज्येऽर्हतः प्रथमसृष्टिकृतो यदासीत् । सन्मङ्गलं मिथुनपाणिगतीर्थवारिपादाभिषेकविधिना न्युपचीयमानम् ॥ ३ ॥

यद्बिश्वाधिपतेः समस्ततनुभृत्संसारनिस्तारणे तीर्थे पुष्टिमुपेयुषि प्रतिदिनं वृद्धिं गतं मङ्गलम् । तत्संप्रत्युपनीतपूजनविधौ विश्वात्मनामर्हतां भूयान्मङ्गलमक्षयं च जगते स्वस्त्यस्तु सङ्घाय च ॥ ४ ॥" इति वृत्तचतुष्टयेन मङ्गलप्रदीपोल्लासः । ततः शक्रस्तवपाठः । इति जिनार्चनविधिः । अथ कश्चनापि श्राद्धो निर्भरार्हद्भक्तिर्नित्यं पर्वणि कार्यान्तरे वा जिनस्नात्रं चिकीर्षति तस्य चायं विधिः । पूर्वस्नात्रपीठे पूर्वोक्तप्रकारेण दिक्पालग्रहान्यदेवतापूजनवर्जितेन जिनप्रतिमां संपूज्य तथारात्रिकं विधाय मङ्गलदीपवर्जितं श्राद्धः पूर्वोपचारयुक्तो गुरुसमक्षं सङ्घे मिलिते चतुर्विधे गीतवाद्याद्युत्सवे पुष्पाञ्जलिं करे गृहीत्वा—"नमो अरिहंताणं नमोऽर्हत्सिद्धा० वृत्तद्वयं शार्दूलमालिनीरूपं(पठेत्) "कल्याणं कुलवृद्धिकारि कुशलश्लाघार्हमत्यद्भुतं सर्वाघप्रतिघातनं गुणगणालङ्कारविभ्राजितम् । कान्तिश्रीपरिरंभणप्रतिनिधिप्रख्यं जयत्यर्हतां ध्यानं दानवमानवैर्विरचितं सर्वार्थसंसिद्धये ॥ १ ॥ भुवनभवनपापध्वान्तदीपायमानं परमतपरिघातप्रत्यनीकायमानम् । धृतिकुवलयनेत्रावश्यमन्त्रायमाणं जयति जिनपतीनां ध्यानमभ्युत्तमानाम् ॥ २ ॥" इति पुष्पाञ्जलिक्षेपः । "कर्पूरसिल्हाधिककाकतुण्डकस्तूरिकाचन्दननन्दनीयः । धूपो जिनाधीश्वरपूजनेऽत्र सर्वाणि पापानि दहत्वजस्रम् ॥ १ ॥" अनेन वृत्तेन सर्वपुष्पाञ्जल्यन्तराले धूपोत्क्षेपः शक्रस्तवपाठश्च । ततो जलकलशं गृहीत्वा श्लोकवसन्ततिलके पठेत्—"केवली भगवानेकः स्याद्वादी मण्डनैर्विना । विनापि परिवारेण वन्द्यते प्रभुतोर्जितः ॥ १ ॥ तस्येशितुः प्रतिनिधिः सहजश्रियाढ्यः पुष्पैर्विनापि हि विना वसनप्रतानैः । गन्धैर्विना मणिमयाभरणै-

विंनापि लोकोत्तरं किमपि दृष्टिसुखं ददाति ॥ २ ॥" इति प्रतिमायाः कलशाभिषेकः। पुष्पालङ्कारादीनामवतारणं। ततः पुनः पुष्पाञ्जलिं गृहीत्वा वृत्तद्वयं पठेत्—"विश्वानन्दकरी भवाम्बुधितरी सर्वापदां कर्त्तरी मोक्षाध्वैकविलङ्घनाय विमला विद्या परं खेचरी। दृष्टयुद्भावितकल्मषापनयने बद्धप्रतिज्ञा दृढं रम्यार्हत्प्रतिमा तनोतु भविनां सर्वं मनोवाञ्छितम् ॥ १ ॥ परमतररमासमागमोत्थप्रसृमरहर्षविभासिसन्निकर्षा। जयति जगदिनस्य शस्यदीप्तिः प्रतिमा कामितदायिनी जनानाम् ॥ २ ॥" इति पुनः पुष्पाञ्जलिक्षेपः। पुनः पूर्वोक्तवृत्तेन धूपोत्क्षेपः शक्रस्तवपाठः। पुनः पुष्पाञ्जलिं करे गृहीत्वा पृथ्वीमन्दाक्रान्तारूपं वृत्तद्वयं पठेत्—"न दुःखमतिमात्रकं न विपदां परिस्फूर्जितं न चापि यशसां क्षतिर्न विषमा नृणां दुःस्थता। न चापि गुणहीनता न परमप्रमोदक्षयो जिनार्चनकृतां भवे भवति चैव निःसंशयम् ॥ १ ॥ एतत्तत्वं परममसमानन्दसंपन्निदानं पातालौकःसुरनरहितं साधुभिः प्रार्थनीयम्। सर्वारंभोपचयकरणं श्रेयसां सन्निधानं साध्यं सर्वैर्विमलमनसा पूजनं विश्वभर्त्तुः ॥ २ ॥" इति पुनः पुष्पाञ्जलिक्षेपः। ततो धूपं करे गृहीत्वा शार्दूलार्यावृत्तद्वयं पठेत्—"कर्पूरागरुसिल्हचन्दनबलामांसीशशैलेयकश्रीवासद्रुमधूपरालघुसृणैरत्यन्तमामोदितः। व्योमस्थः प्रसरच्छशाङ्ककिरणज्योतिःप्रतिच्छादको धूमो धूपकृतो जगत्त्रयगुरोः सौभाग्यमुत्तंसतु ॥ १ ॥ सिद्धाचार्यप्रभृतीन् पञ्चगुरून् सर्वदेवगणमधिकम्। क्षेत्रे काले धूपः प्रीणयतु जिनार्चनारचितः ॥ २ ॥" इति धूपोत्क्षेपः शक्रस्तवपाठश्च। पुनः पुष्पाञ्जलिं गृहीत्वा वसन्ततिलकोपजाती पठेत्।

"जन्मन्यनन्तसुखदे भुवनेश्वरस्य सुत्रामभिः कनकशैलशिरःशिलायाम् । स्नात्रं व्यधायि विविधांबुधिकूपवापीकासारपल्वलसरित्सलिलैः सुगन्धैः ॥ १ ॥ तां बुद्धिमाधाय हृदीह काले स्नात्रं जिनेन्द्रप्रतिमागणस्य । कुर्वन्ति लोकाः शुभभावभाजो "महाजनो येन गतः स पन्थाः" ॥ २ ॥" इति पुष्पाञ्जलिक्षेपः । ततो वृत्तं—"परिमलगुणसारसद्गुणाढ्या बहुसंसक्तपरिस्फुरद्द्विरेफा । बहुविधबहुवर्णपुष्पमाला वपुषि जिनस्य भवत्वमोघयोगा ॥ १ ॥" अनेन वृत्तेन आपादान्तशिरोऽन्तं जिनप्रतिमायां पुष्पारोपणं । "कर्पूरसिल्हाधि०" अनेन धूपोत्क्षेपः शक्रस्तवपाठः । पुनः पुष्पाञ्जलिं करे गृहीत्वा शार्दूलोपजाती पठेत्—"यः साम्राज्यपदोन्मुखे भगवति स्वर्गाधिपैर्गुम्फितो मन्त्रित्वं बलनाथतामधिकृतिं स्वर्णस्य कोशस्य च । बिभ्रद्भिः कुसुमाञ्जलिर्विनिहितो भक्त्या प्रभोः पादयोर्दुःखौघस्य जलाञ्जलिः स तनुतादालोकनादेव हि ॥ १ ॥" चेतः समाधातुमतीन्द्रियार्थं पुण्यं विधातुं गणनाव्यतीतं । निक्षिप्यतेऽर्हत्प्रतिमापदाग्रे पुष्पाञ्जलिः प्रोद्गतभक्तिभावैः ॥ २ ॥" इति पुष्पाञ्जलिक्षेपः । सर्वेषां पुष्पाञ्जलीनामन्ते शक्रस्तवपाठः कर्त्तव्यः । एवं धूपोत्क्षेपश्च । ततोऽनन्तरं पुष्पादिभिः प्रतिमा पूज्यते । ततः स्नात्रकलशप्रगुणीकरणं । ततः कलशास्तु मणिस्वर्णरूप्यताम्रमिश्रधातुमृण्मयाः ते च स्नात्रचतुष्किकोपरिस्थाप्याः तेषु सर्वजलाशयोदकानि गङ्गोदकमिश्राणि निवेशयेत् । चन्दनकुङ्कुमकर्पूरादिभिः सुगन्धद्रव्यैर्वासयेत् । चन्दनादिभिः कुसुममालाभिः कलशान् पूजयेत् । जलपुष्पाद्यभिमन्त्रणमन्त्रास्ते पूर्वोदिता एव । ततः स एकः श्राद्धोऽन्येऽपि च बहवः पूर्वोदितवेषशौचभाजो

गन्धानुलिप्तकरा मालाविभूषितकण्ठाः तान् कलशान् करे दधति । ततस्ते च स्वस्वप्रज्ञानुसारेण जिनजन्माभिषेकाङ्कितस्नात्रस्तोत्राणि सजिनस्तुतिषट्पदानि पठन्ति । ततः शार्दूलवृत्तं—"जाते जन्मनि सर्वविष्टपपतेरिन्द्रादयो निर्जरा नीत्वा तं करसंपुटेन बहुभिः सार्द्धं विशिष्टोत्सवे । शृङ्गे मेरुमहीधरस्य मिलिते सानन्ददेवीगणे स्नात्रारंभमुपानयन्ति बहुधा कुंभाम्बुगन्धादिकम् ॥ १ ॥ आर्या । योजनमुखान् रजतनिष्कमयान्मिश्रधातुमृद्रचितान् । दधते कलशान् सङ्ख्या तेषां युगषट्खदन्ति (८०६४) मिता ॥ २ ॥ आर्या । वापीकूपह्रदांबुधितडागपल्वलनदीझरादिभ्यः । आनीतैर्विमलजलैस्तानधिकं पूरयन्ति च ते ॥ ३ ॥ शार्दूलवृत्तम् । कस्तूरीघनसारकुङ्कुमसुराश्रीखण्डकक्कोलकैर्ह्रीवेरादिसुगन्धवस्तुभिरलं कुर्वन्ति तत्संवरम् । देवेन्द्रा वरपारिजातबकुलश्रीपुष्पजातीजपामालाभिः कलशाननानि दधते संप्राप्तहारस्रजः ॥ ४ ॥ ईशानाधिपतेर्निजाङ्ककुहरे संस्थापितं स्वामिनं सौधर्माधिपनिर्मिताद्भुतचतुःप्रांशूक्षशृङ्गोद्गतैः । धारावारिभरैः शशाङ्कविमलैः सिञ्चन्त्यनन्यातयैः शेषाश्चैव सुराप्सरःसमुदयाः कुर्वन्ति कौतूहलम् ॥ ५ ॥ वसन्ततिलकावृत्तम् । वीणामृदंगतिमिलार्द्रकराहनूरढक्काहुडुक्कपणवस्फुटकाहलाभिः । सद्वेणुझज्झरकदुन्दुभिषुं (षु) णीभिर्वाद्यैः सृजन्ति सकलाप्सरसो विनोदम् ॥ ६ ॥ श्लोकः । शेषाः सुरेश्वरास्तत्र गृहीत्वा करसंपुटैः । कलशांस्त्रिजगन्नाथं स्नपयन्ति महामुदः ॥ ७ ॥ शार्दूलवृत्तम् । तस्मिन् तादृश उत्सवे वयमपि स्वर्लोकसंवासिनो भ्रान्ता

१ सेचनकश्रृंगं शृङ्गाकृति पीचकारीतिलोके प्रसिद्धमन्यतमपात्रम्. २ अत्रानन्यातंवा अनन्यातंयो वा पाठान्तरं प्रतिभाति । आतवशब्दो हिंसापर्यायः.

जन्मविवर्त्तनेन विहितश्रीतीर्थसेवाधियः । जातास्तेन विशुद्धबोधमधुना संप्राप्य तत्पूजनं स्मृत्वैतत्करवाम विष्टपविभोः स्नात्रं मुदामास्पदम् ॥ ८ ॥ बालत्तणम्मि सामि अ सुमेरुसिहरम्मि कणयकलसेहिं । तिअसासुरेहिं न्हविओ ते धन्ना जेहिं दिट्ठोसि ॥ ९ ॥" इति कलशैः प्रतिमाभिषेचनं । ततः सर्वेऽपि गुरुक्रमविशेषेण पुरुषाः स्त्रियोऽपि गन्धोदकैः स्नात्रं कुर्वन्ति । ततोऽभिषेकान्ते गन्धोदकपूर्णं कलशं गृहीत्वा वसन्ततिलकावृत्तं पठित्वा । सङ्घे चतुर्विध इह प्रतिभासमाने श्रीतीर्थपूजनकृतप्रतिभासमेते । गन्धोदकैः पुनरपि प्रभवत्वजस्रं स्नात्रं जगत्रयगुरोरतिपूतधारैः ॥ १ ॥" इति जिनपादोपरि कलशाभिषेकं विधाय स्नात्रनिवृत्तिः । पञ्चामृतस्नात्रयुक्तिस्तु शान्तिकपौष्टिकप्रतिष्ठोपयोगितया वृद्धस्नात्रविधौ कथयिष्यते । आर्हतश्वेतांबरमते पञ्चामृतस्नात्रविधिः शान्तिकादिषु भवति । नित्यपर्वस्नात्रं गन्धोदकैरेव । ततः पुष्पाञ्जलिं गृहीत्वा वृत्तं पठेत्—"इन्द्राग्ने यम निर्ऋते जलेश वायो वित्तेशेश्वर भुजगा विरिञ्चिनाथ । सङ्घाधिकतमभक्तिभारभाजः स्नात्रेऽस्मिन् भुवनविभोः श्रियं कुरुध्वम् ॥ १ ॥" इति स्नपनपीठपार्श्वस्थकल्पितदिक्पालपीठोपरि पुष्पाञ्जलिं क्षिपेत् । ततस्तत्पीठोपरि दिक्षु यथाक्रमं दिक्पालान् स्थापयेत् । तत एकैकं दिक्पालं प्रति पूजा । इन्द्रं प्रति शिखरिणीवृत्तपाठः—"सुराधीश श्रीमन् सुदृढतरसम्यक्त्ववसते शचीकान्तोपान्तस्थितविबुधकोट्यानतपद । ज्वलद्वज्राघातक्षपितदनुजाधीशकटक प्रभोः स्नात्रे विघ्नं हर हर हरे पुण्यजयिनाम् ॥ १ ॥" ॐ शक्र इह जिनस्नात्रमहोत्सवे आगच्छ २ इदं जलं गृहाण २ गन्धं गृहाण २ धूपं गृहाण २ दीपं गृहाण २

नैवेद्यं गृह्णाण २ विघ्नं हर २ दुरितं हर २ शान्तिं कुरु २ तुष्टिं कुरु २ पुष्टिं कुरु २ वृद्धिं कुरु २ स्वाहा ।”
इति पुष्पगन्धादिभिरिन्द्रपूजनं १ अग्निं प्रति व्यपच्छंदसिकवृत्तपाठः—“बहिरन्तरनन्ततेजसा विदधत्का-
रणकार्यसङ्गतिम् । जिनपूजन आशुशुक्षिणे कुरु विघ्नप्रतिघातमञ्जसा ॥ १ ॥” ॐ अग्ने इह० पूर्ववत् २ यमं
प्रति वसन्ततिलकापाठः—“दीप्ताञ्जनप्रभ तनोतु च सन्निकर्षं वाहारिवाहन समुद्धर दण्डपाणे । सर्वत्रतुल्य-
करणीय करस्थधर्म कीनाश नाशय विपद्विशरं क्षणेऽत्र ॥ १ ॥” ॐ यम इह० शेषं पूर्ववत् । ३ निर्ऋतिं प्रति
आर्यापाठः—“राक्षसगणपरिवेष्टित चेष्टितमात्रप्रकाशहतशत्रो । स्नात्रोत्सवेऽत्र निर्ऋते नाशय सर्वाणि
दुःखानि ॥ १ ॥” ॐ निर्ऋते इह० पूर्ववत् । ४ । वरुणं प्रतिस्रग्धरावृत्तपाठः—“कल्लोलानीतलोलाधिक-
किरणगणस्फीतरत्नप्रपञ्चप्रोद्भूतौर्वाग्निशोभं वरमकरमहापृष्ठदेशोत्क्रमानम् । चञ्चचीरल्लिशृङ्गिप्रभृतिझषगणै-
रञ्चितं वारुणं नो वर्ष्म च्छिन्द्यादपायं त्रिजगदधिपतेः स्नात्रसत्रे पवित्रे ॥ १ ॥” ॐ वरुण इह० पूर्ववत् । ५ ।
वायुं प्रति मालिनीवृत्तपाठः । “ध्वजपटकृतकीर्त्तिस्फूर्त्तिदीप्यद्विमानप्रसृमरबहुवेगत्यक्तसर्वोपमान । इह
जिनपतिपूजासन्निधौ मातरिश्वन्नपनय समुदायं मध्यवाध्यातपानाम् ॥ १ ॥” ॐ वायो इह० पूर्ववत् । कुबेरं
प्रति वसन्ततिलकावृत्तपाठः । “कैलाशवासविलसत्कमलाविलाससंशुद्धहासकृतदौस्थ्यकथानिरास । श्री-
मत्कुबेरभगवन् स्नपनेऽत्र सर्वविघ्नं विनाशय शुभाशय शीघ्रमेव ॥ १ ॥” इति कुबेर इह० पूर्ववत् ॥ ७ ॥
ईशानं प्रति वसन्ततिलकापाठः—“गङ्गातरङ्गपरिखेलनकीर्णवारिप्रोद्यत्कपर्दपरिमण्डितपार्श्वदेशम् । नृत्यं

जिनस्नपनहृष्टहृदः स्मरारेर्विघ्नं निहन्तु सकलस्य जगत्त्रयस्य ॥ १ ॥" ॐ ईशान इह० पूर्ववत् ॥ ८ ॥ नागान् प्रति वैतालीयवृत्तपाठः—"फणिमणिसहस्रा विभासमानाः कृतयमुनाजलसंश्रयोपमानाः । फणिन इह जिनाभिषेककाले बलिभवनादमृतं समानयन्तु ॥ १ ॥" ॐ नागा इह० पूर्ववत् । ९ । ब्रह्माणं प्रति द्रुतविलंबितपाठः—"विशदपुस्तकशस्तकरद्वयः प्रथितवेदतया प्रमदप्रदः । भगवतः स्नपनावसरे चिरं हरतु विघ्नभयं द्रुहिणो विभुः ॥ १ ॥" ॐ ब्रह्मन् इह० शेषं पूर्ववत् । १० । एवं क्रमेणदिक्पालपूजनं । ततः पुनरपि पुष्पाञ्जलिं करे गृहीत्वा आर्यापाठः—"दिनकरहिमकरभूसुतशशिसुतबृहतीशकाव्यरवितनयाः । राहो केतो सक्षेत्रपाल जिनस्यार्चने भवत सन्निहिताः ॥ १ ॥" इति ग्रहपीठोपरि पुष्पाञ्जलिं क्षिपेत् । ततः पूर्वादिक्रमेण सूर्यशुक्रमङ्गलराहुशनिचन्द्रबुधबृहस्पतीन् स्थापयेत्, अधः केतुमुपरि क्षेत्रपालं च । ततः सूर्यं प्रति वसन्ततिलकापाठः—"विश्वप्रकाशकृत भव्यशुभावकाश ध्वान्तप्रतानपरिपातनसद्विकाश । आदित्य नित्यमिह तीर्थकराभिषेके कल्याणपल्लवनमाकलय प्रयत्नात् ॥ १ ॥" ॐ सूर्य इह० पूर्ववत् । १ । शुक्रं प्रति मालिनीवृत्तपाठः—"स्फटिकधवलशुद्धध्यानविध्वस्तपाप प्रमुदितदितिपुत्रोपास्यपादारविन्द । त्रिभुवनजनशश्वज्जन्तुजीवातुविद्य प्रथय भगवतोऽर्चां शुक्र हे वीतविघ्नाम् ॥ १ ॥" ॐ शुक्र इह० पूर्ववत् । २ । भौमं प्रति आर्यापाठः—"प्रबलबलमितितबहुकुशललालनाललितकलितविघ्नहते । भौम जिनस्नपनेऽस्मिन् विघटय विघ्नागमं सर्वम् ॥ १ ॥" ॐ मङ्गल इह० पूर्ववत् । ३ । राहुं प्रति श्लोकपाठः—"अस्तांहः सिंहसंयुक्त-

रथ विघ्नममन्दिर। सिंहिकासुत पूजायामत्र सन्निहितो भव ॥ १ ॥" ॐ राहो इह० पूर्ववत्। ४। शनिं प्रति वृत्तं—"फलिनीदलनीललीलयान्तःस्थगितसमस्तवरिष्ठविषजात। रवितनय नय प्रबोधमेतान् जिनपूजाकरणैकसावधानान् ॥ १ ॥" ॐ शने इह० पूर्ववत्। ५। चन्द्रं प्रति द्रुतविलंबितवृत्तपाठः—"अमृतवृष्टिविनाशितसर्वदोपचितविघ्नविषः शशलाञ्छनः। वितनुतां तनुतामिह देहिनां प्रसृततापकरस्य जिनार्चने ॥ १ ॥" ॐ चन्द्र इह० पूर्ववत्। ६। बुधं प्रति वृत्तं—"बुध विबुधगणार्चितांघ्रियुग्म प्रमथितदैत्य विनीतदुष्टशात्र। जिनचरणसमीपगोऽधुना त्वं रचय मतिं भवघातनप्रकृष्टाम् ॥ १ ॥" ॐ बुध इह० पूर्ववत्। जिनपतिचरणाभिषेककाले गुरुं प्रति वृत्तं—"सुरपतिहृदयावतीर्ण सत्र प्रचुरकलाविकलप्रकाशभास्वन्। जिनपतिचरणाभिषेककाले कुरु वृहतीवर विघ्नविप्रणाशम् ॥ १ ॥" ॐ गुरो इह० पूर्ववत्। ८। केतुं प्रति द्रुतविलंबितवृत्तपाठः—"निजनिजोदययोगजगत्त्रयीकुशलविस्तरकारणतां गतः। भवतु केतुरनश्वरसंपदां सततहेतुरवारितविक्रमः ॥ ९ ॥" ॐ केतो इह० पूर्ववत्। ९। क्षेत्रपालं प्रति आर्या—"कृष्णसितकपिलवर्णप्रकीर्णकोपासितांघ्रियुग्म सदा। श्रीक्षेत्रपाल पालय भविकजनं विघ्नहरणेन ॥ १ ॥" ॐ क्षेत्रपाल इह० पूर्ववत् ॥ १० ॥ इति ग्रहक्षेत्रपालपूजा। विद्यादेवताशासनयक्षयक्षिणीसुरलोकाधिपतिपूजनं वृहत्स्नात्रविधौ कथयिष्यते प्रतिष्ठाशान्तिकपौष्टिकोपयोगित्वात्। ततो जिनप्रतिमाया गन्धपुष्पाक्षतधूपदीपपूजा पूर्वमन्त्रैरेव। ततः करे वस्त्रं गृहीत्वा वसन्ततिलकावृत्तपाठः—"त्यक्ताखिलार्थवनितासुतभूरिराज्यो निःसङ्गतामुपगतो जगतामधीशः।

भिक्षुर्भवन्नपि स वर्मणि देवदूष्यमेकं दधाति वचनेन सुरासुराणाम् ॥ १ ॥” इति वस्त्रपूजा । ततो नानाविधखाद्यपेयचूष्यलेह्यसंयुतं नैवेद्यं स्थानद्वये विधाय एकं पात्रं जिनाग्रतः संस्थाप्य श्लोकपाठः—“सर्वप्रधान सद्भूत देहि देहं सुपुष्टिदं । अन्नं जिनाग्रे रचितं दुःखं हरतु नः सदा ॥ १ ॥” इति जलचुलुकेन प्रतिमाया नैवेद्यदानं । ततो द्वितीयपात्रे श्लोकपाठः—“भो भोः सर्वे ग्रहा लोकपालाः सम्यग्दृशः सुराः । नैवेद्यमेतद् गृह्णन्तु भवन्तो भयहारिणः ॥ १ ॥” इति ग्रहदिक्पालादीनां जलचुलुकेन नैवेद्यदानं । स्नपनं विनापि पूजायां जिनप्रतिमानैवेद्यदानमनेनैव मन्त्रेण । तत आरात्रिकं मङ्गलदीपश्च पूर्ववत् शक्रस्तवश्च । यस्याः प्रतिमायाः स्नानस्थितायाः स्नपनं भवति तस्याः सर्वमपि तत्रैव क्रियते—“श्रीखण्डकर्पूरकुरङ्गनाभिप्रियङ्गुमांसीनतकाकतुण्डैः । जगत्त्रयस्याधिपतेः सपर्याविधौ विदध्यात्कुशलानि धूपः ॥ १ ॥” अनेन वृत्तेन सर्वपुष्पाञ्जलीनामन्तराले धूपोत्क्षेपः शक्रस्तवस्य पाठः । प्रतिमाविसर्जनं यथा—“ॐ अर्हं नमो भगवते अर्हते समये पुनः पूजां प्रतीच्छ स्वाहा” इति पुष्पन्यासेन प्रतिमाविसर्जनं । “ॐ ह्रः इन्द्रादयो लोकपालाः सूर्यादयो ग्रहाः सक्षेत्रपालाः सर्वदेवाः सर्वदेव्यः पुनरागमनाय स्वाहा ।” इति पुष्पपूजादिभिर्दिक्पालग्रहविसर्जनं । ततः—“आज्ञाहीनं क्रियाहीनं मन्त्रहीनं च यत्कृतम् । तत्सर्वं कृपया देवाः क्षमन्तु परमेश्वराः ॥१॥ आवाहनं न जानामि न जानामि विसर्जनम् । पूजां चैव न जानामि त्वमेव शरणं मम ॥ २ ॥ कीर्त्तिश्रियो राज्यपदं सुरत्वं न प्रार्थये किञ्चन देवदेव । मत्प्रार्थनीयं भगवन् प्रदेयं त्वद्दासतां मां नय सर्व-

इति सर्वकरणीयान्ते जिनप्रतिमादेवादिविसर्जनविधिः । अर्हदर्चनविधावपि एवं विसर्जनं
दापि ॥ ३ ॥" इति सर्वकरणीयान्ते जिनप्रतिमादेवादिविसर्जनविधिः । शक्रस्तवादिभिः स्तुत्वा जिनं पूजयित्वा प्रत्या-
ज्ञेयं । इति लघुस्नात्रविधिः । "ततो देवगृहं गत्वा स्तोत्रैः शक्रस्तवादिभिः स्तुत्वा जिनं पूजयित्वा प्रत्या-
ख्यानं विचिन्तयेत् ॥ १ ॥ चैत्यं प्रदक्षिणीकृत्य गत्वा पौषधमन्दिरम् । साधून् देववदानन्दान्नमस्येत्पूजये-
त्सुधीः ॥ २ ॥ शृणुयादेकचित्तः संस्तन्मुखाद्धर्मदेशनाम् । प्रत्याख्यानं ततः कृत्वा गुरुं नत्वा धनार्ज-
नम् ॥ ३ ॥ कर्मादानानि संत्यज्य यथास्थानं समाचरेत् । सर्वापि नययुक्तिस्तु व्रतबन्धादिशिक्षणात् ॥ ४ ॥
विधेयं कुत्सितं कर्म प्राणनाशेऽपि नाचरेत् । ततो गृहेऽर्हतः पूजां विधाय सलिलाशने ॥ ५ ॥ दत्वा स-
भक्ति साधुभ्यः पूजयित्वातिथीनपि । दीनान् संतोष्य भुञ्जीत भोज्यं व्रतकुलोचितम् ॥ ६ ॥ (साध्वा-
मन्त्रणं यथा । क्षमाश्रमणपूर्वं गृही कथयति—"भगवन्, फासुएणं एसणिज्जेणं असणेणं भयवं मम घरे अण-
ग्गहो कायव्वो") ततः शास्त्रविचारं च विधाय गुरुसन्निधौ । कृत्वार्थोपार्जनं सन्ध्यापूजां कृत्वा ततो
गृहे ॥ ७ ॥ मुहूर्त्ते भास्वदस्तावाक् भुञ्जीत निजवाञ्छया । सायं सामायिकं कृत्वा प्रतिक्रमणमाचरेत् ॥ ८ ॥
धर्मागारे ततो वेश्म निजमागत्य शान्तधीः । गते निशाचतुर्भागे पठित्वार्हत्स्तवादिकम् ॥ ९ ॥ धृतब्रह्मव्रतः
प्रायो निद्रासुखमुपाहरेत् । निद्रान्ते परमेष्ठ्याख्यमन्त्रस्मरणपूर्वकम् ॥ १० ॥ जिनचक्र्यर्द्धचक्र्यादिचरि-
तानि विचिन्तयेत् । मनोरथं व्रतादीनां कुर्यान्निजजनिजेच्छया ॥ ११ ॥ इत्याहोरात्रिकीं चर्यामप्रमत्तः समा-
चरन् । यथावदुक्तवृत्तस्थो गृहस्थोऽपि विशुद्ध्यति ॥ १२ ॥ इति व्रतारोपसंस्कारे गृहिणां दिनरात्रिचर्या ।

"वासना गुरुसामग्री विभवो देहपाटवम् । सङ्घश्चतुर्विधो हर्षो व्रतारोपे गवेष्यते ॥ १ ॥ वरकुसुमगंधअक्खय-फलजलनेवज्जधूवदीवेहिं । अट्ठविहकम्ममहणी जिणपूआ अट्ठहा होई ॥ २ ॥" इत्याचार्यश्रीवर्द्धमानसूरिकृते आचारदिनकरे गृहिधर्मपूर्वायने व्रतारोपसंस्कारकीर्त्तनो नाम पञ्चदश उदयः ॥ १५ ॥

---

## षोडश उदयः ।

### अथान्त्यसंस्कारविधिः ।

"श्राद्धो यथावद्वृत्तेन पालयित्वा निजं भवम् । कालधर्मे च संप्राप्ते कुर्यादाराधनां परम् ॥ १ ॥" तस्य चायंविधिः—"जिनकल्याणकस्थाने निर्जीवे स्थण्डिले शुचौ । अरण्ये वा स्वगृहे वा कार्य आनशनो विधिः ॥ १ ॥" तत्र शुभे स्थाने ग्लानस्य पर्यन्ताराधना विधेया । तथा अवश्यं भाविनि मरणे आसन्ने तिथिवारर्क्षचन्द्रबलादि न विलोकयेत् । तत्र संघमीलनं गुरुर्ग्लानस्य यथा सम्यक्त्वारोपणे तथैव नंदिं कुर्यात् । नवरं संलेहणाआराहणाभिलापेन सर्वं नन्दिदेववन्दनकायोत्सर्गादिविधिः स एव नवरं वैयावृत्त्यकारकायोत्सर्गानन्तरं आराधना, देवताराधनार्थं "करेमि काउस्सग्गं अन्नत्थउससिएणं० जाव अप्पाणं वोसिरामि" कायोत्सर्गः चतुर्विंशतिस्तवचतुष्टयचिन्तनं पारयित्वा आराधनास्तुतिकथनं । सा यथा—"यस्याः

श्रीमदाराधना देवी विघ्नव्रातापहास्तु वः ॥ १ ॥" शेषं पूर्व-
सान्निध्यतो भव्या वाञ्छितार्थप्रसाधका: । श्रीमदाराधना देवी विघ्नव्रातापहास्तु वः ॥ १ ॥" शेषं पूर्व-
वत् । ततस्तेनैव विधिना सम्यक्त्वदण्डकोच्चारणं द्वादशव्रतोच्चारणं तथैव वासःक्षेपादिकायोत्सर्गादि तथैव
संलेखना आराधनालापेन प्रदक्षिणा ग्लानस्य शक्त्यनुसारेण भवन्ति न वा । नवरं—"जावनियमपज्ज-
वासामि स्थाने जाव जीवाए" इति वक्तव्यं । ततः क्षामणं सर्वजीवानां अपराधक्षमेति क्षामणा । ततः श्राद्धः
परमेष्ठिमन्त्रोच्चारपूर्वं गुरुसंमुखं कृताञ्जलिर्भणति—"खामेमि सव्वजीवे सव्वे जीवा खमंतु मे । मित्तीमे
सव्वभूएसु वेरं मज्झ न केणई ॥ १ ॥" गुरुर्भणति—"खामेह, जो खमई तस्स अत्थि आराहणा जो न
खमेइ तस्स नत्थि आराहणा ।" ततः श्राद्धः क्षमाश्रमणपूर्वं भणति—"भयवं अणुजाणह," गुरुर्भ-
णति—"अणुजाणामि" श्राद्धः परमेष्ठिमन्त्रपाठपूर्वं कथयति—"जे मए अणंतेणं भवब्भमणेणं पुढविका-
इया आउकाइआ तेउकाइआ वाउकाइआ वणस्सईकाइआ एगंदिआ सुहमा वा बायरा वा पज्जुत्ता वा
अपज्जुत्ता वा कोहेण वा माणेण वा मायाए वा लोहेण वा पंचेंदिअट्टेण वा रागेण वा दोसेण वा घाइआ
वा पिडिआ वा मणेणं वायाए कायेणं तस्स मिच्छामि दुक्कडं ।" पुनः परमेष्ठिमन्त्रं पठित्वा—"जे मए अणं-
तेणं भवब्भमणेणं बेइंदिआ सुहमा वा बायरा वा० शेषं पूर्ववत् । पुनः परमेष्टि मंत्रं पठित्वा जेमए अणंतेणं
भवब्भमणेणं तेरिंदिआ सुहमा वा बायरा वा० शेषंपूर्ववत् । पुनः परमेष्ठिमन्त्रं पठित्वा—"जे मए अणंतेणं
भवब्भमणेणं चउरिंदिआ वा सुहमा वा बायरा वा शेषं पूर्ववत् । पुनः परमेष्ठिमन्त्रपाठं पूर्वं कथ-

यित्वा—"जे मए अणंतेणं भवब्भमणेणं पंचेंदिआ देवा वा मणुआ वा नेरइआ वा तिरिक्खजोणिआ वा जलयरा वा थलयरा वा खयरा वा सन्निया वा असन्निया वा सुहमा वा बायरा वा" शेषं पूर्ववत् । पुनः परमेष्ठिमन्त्रभणनपूर्वं श्राद्धः कथयति—"जं मए अणंतेणं भवब्भमणेणं अलिअं भणिअं कोहेण वा माणेण वा मायाए वा लोहेण वा पंचेंदिअट्ठेण वा रागेण वा दोसेण वा मणेणं वायाए काएणं तस्स मिच्छामि दुक्कडं ।" पुनः परमेष्ठिमन्त्रं पठित्वा—"जं मए अणंतेणं भवब्भमणेणं अदिन्नं गहिअं कोहेण वा माणे०" शेषं पूर्ववत् । पुनः परमेष्ठिमन्त्रं पठित्वा—"जं मए अणंतेणं भवब्भमणेणं दिव्वं माणुस्सं तेरिच्छं मेहुणं सेविअं कोणेह वा मा०" शेषं पूर्ववत् । पुनः परमेष्ठिमन्त्रं पठित्वा—"जं मए अणंतेणं भवब्भमणेणं अट्ठारसपावठाणायं कयाइं कोहेण वा मा०" शेषं पूर्ववत् । पुनः परमेष्ठिमन्त्रं पठित्वा—"जं मे पुढविकायगयस्स सिलालेट्ठुसक्करा सन्हा वालुआ गेरिअसुवन्नाइं महाधाऊ रूवं सरीरं पाणिवहे पाणिसंघट्टणे पाणिपीडणे पाववट्टणे मिच्छत्तपोसणे ठाणेसंलग्गंतं निंदामि गरिहामि अप्पाणं वोसिरामि जं मे पुढविकायगस्स सिलालेट्ठु सक्करा सन्हा वा वालुआ गेरि असुवन्नाइं महाधाउ रूवं सरीर० अरिहंत चेइएसु अरिहंतविंबेसुधम्मट्ठाणेसु जंतुरक्खणट्ठाणेसु धम्मोवगरणेसु संलग्गं तं अणुमोआमि कल्लाणेणं अभिनिंदेमि ।" पुनः परमेष्ठिमन्त्रं पठित्वा—"जं मे आउकायगयस्स जल करग मिहिआ उसा हिमहरतणु रूवं सरीरं पाणिवहे पाणिसंघट्टणे पाणिपीडणे पाववट्टणे मिच्छत्तपोसणे ठाणे संलग्गं तं निंदामि गरिहामि अप्पाणं वोसिरामि

पुनः परमेष्ठिमंत्रंपठित्वा जं मे आऊकायगयस्स जल करग महिआ ऊसा हिम हरतणुरूवं सरीरं अरिहंतचे-
इएसु अरिहंतार्विंबेसु धम्मठाणेसु जंनुरक्खणठाणेसु धम्मोवगरणेसु जिण ह्णाणेसु तह्लादाहावहरणेसु सुलग्गं
तं अणुमोआमि कल्लाणेणं अभिनंदेमि। पुनः परमेष्ठिमंत्रं पठित्वा. जमेतेउकायगयस्स अगणि इंगाल मम्मुर
जाला अलाय विज्जु उक्का तेअरूपं सरीरं पाणिवहे पाणिसंघट्टणे पाणिपीडणे पाववट्टणे मिछत्तपोसणे ठाणे
संलग्गं तं निंदामि गरिहामि वोसिरामि. जम्मे तेउकायगयस्स अगणि इंगाल मम्मुर जाला अलाअ विज्जु
उक्का तेअरूवं सरीरं सीआ वहारे जिणपूआधूवकरणे नेवेद्यपाए छुहाहरणा हारपाए संलग्गं तं य अणुमो-
एमि कल्लाणेणं. अभिनंदेमि। पुनः परमेष्ठिमंत्रं पठित्वा जम्मे वाउकायगयस्स वाउ झंझासासरूवं सरीरं.
पाणिवहे पाणिसंघट्टणे पाणिपीडणे पाववट्टणे मिच्छत्तपोसणे ठाणे संलग्गं तं निंदामि. गरिहामि वोसिरामि
जम्मे वाऊकायगयस्स वाउझंझासासरूवं सरीरं पाणिरक्खणे पाणीजीवणे साहूण वेयावच्चे धम्मावहारे संलग्गं
तं अणुमोएमि कज्झाणेणं अभिनंदेमि। पुनः परमेष्ठिमंत्रं पठित्वा जम्मे वणस्सइकाय गयस्स मूल कठ छल्लि
पत्त पुप्फ फल बीअ रस निज्झा सरूवं सरीरं पाणिवहे पाणिसंघट्टणे पाणिपीडणे पाववट्टणे मिछत्तपोसणे
संलग्गं तं निंदामि गरिहामि अप्पाणं वोसिरामि जम्मे वणस्सइकायगयस्स मूल कठ छल्लि पत्त पुप्फ फल
बीअ रस निज्झासरूवं सरीरं वुहाहरणेसु अरिहंतचेइअपूयणेसु धम्मठाणेसु नेवेद्यकरणेसु जंतुरक्खणेसु.
संलग्गं तं अणुमोएमि कल्लाणेणं अभिनंदेमि। पुनः परमेष्ठिमंत्रं पठित्वा जम्मे तसकायगयस्स. रस रत्त

मंसमेअ अट्ठिमज्जा सुक्क चम्म रोम नह नसारूवं सरीरं पाणिवहे पाणिसंघट्टणे पाणिपीडणे पाववट्टणे मिच्छत्तपोसणे ठाणे संलग्गं तं निंदामि गरिहामि वोसिरामि. जम्मे तस कायगयस्स रस रत्त मंस मेअ अट्ठि मज्जा सुक्क चमं रोम नह नसा रूवं सरीरं अरिहंतचेइएसु अरिहंतबिंबेसु धम्मट्ठाणेसु जंतुरक्खण. ठाणेसु धम्मोवगरणेसु संलग्गं तं अणुमोएमि कल्लाणेणं अभिनिंदेमि ।" पुनः पर-मेष्ठिमन्त्रं पठित्वा—"जं मए इत्थ भवे मणेणं वायाए काएणं दुट्ठं चिंतिअं दुट्ठं भासियं दुट्ठं कयं तं निंदामि गरिहामि वोसिरामि, जं मए इत्थ भवे मणेणं वायाए कायेणं सुट्ठु चिंतिअं सुट्ठु भासिअं सुट्ठु कयं तं अणुमोएमि कल्लाणेणं अभिनिंदेमि ।" अत्र पूर्वं समारोपितसम्यक्त्वव्रतस्यापि पुनः सम्यक्त्वव्रतारोपो विधेयः । अनारोपितसम्यक्त्वव्रतस्यापि सम्यक्त्वव्रतारोपः प्रान्ते विधेय एव । यस्य व्रतारोपः पूर्वं कृतो भवति तस्यात्र समये चतुर्विंशत्युत्तरशतातीचारालोचनं च । तत्र चातिचारा आवश्यकोदये कथयिष्यन्ते । तत आलोचनाविधिर्विधेयः सोऽपि प्रायश्चित्तविध्युदयादवसेयः । ततो गुरुः सर्वसङ्घसहितो वासाक्षतादि ग्लानशिरसि निक्षिपेत् । इत्यन्त्यसंस्कारे आराधनाविधिः । ततः क्षामणं । ग्लानः क्षमाश्रमणं परमेष्ठिमन्त्रपाठपूर्वं भणति—"आयरिअ उवज्झाए सीसे साहमीए कुलगणेअ जे मे केइ कसाया सव्वे तिविहेण खामेमि सव्वस्स समणसंघस्स भगवओ अंजलिं करे सीसे सव्वं खमामे वइत्ता खमामि सव्वस्स अहयंपि भयवं जं मए चउगइगयणं देवा तिरिआ मणुस्सा नेरइआ चउकसा उवगएणं पंचेंदिअवसट्टेणं इहंमि भवे अ-

न्नेसु वा भवगहणेसु मणेणं वायाए काएणं दूमिआ संताविआ अभिताइआ तस्स मिच्छामि दुक्कडं । तेहिं अहं अभिओ संताविओ अभिहउत्तमंहंपि खमामि । ततो गुरुणा अस्य गाथात्रयस्य स दण्डकस्य विस्तरव्याख्यानं करोति । ततो ग्लानो गुरुसाधुसाध्वीश्रावकश्राविकाः प्रत्येकं क्षमयति । अत्र गुरुभ्यो वस्त्रादिदानं सङ्घपूजा च । इत्यन्तसंस्कारे क्षामणविधिः । अथासन्ने मृत्युकाले सर्वचैत्येषु ग्लानः पुत्रादिभिः महापूजास्नपनध्वजारोपादि कारयेत्। चैत्यधर्मस्थानादिषु वित्तविनियोगं कारयेत् । ततः परमेष्ठिमन्त्रोच्चारपूर्वकं पठेत्—"जो मे जाणंतु जिणा अवराहा जेसु जेसु ठाणेसु । तेहं आलोएमि उवट्ठिओ सव्वकालंपि ॥ १ ॥ जं छउमत्थो मूढमणो कित्तिअमत्तंपि संभरइ जीवो । जं च न संभरामि अहं मिच्छामि दुक्कडं तस्स ॥ २ ॥ जं जं मणेण बद्धं जं जं वायाइभासिअं किंचि । जं जं काएण कयं मिच्छामि दुक्कडं तस्स ॥ ३ ॥ खामेमि सव्वजीवे सव्वे जीवा खमंतु मे । मित्ती मे सव्वभूएसु वेरं मज्झ न केणइ ॥४॥" इति ग्लानपाठः । ततो नमस्काररत्नत्रयपाठपूर्वं भणति—"चत्तारि मंगलं अरहंता मंगलं सिद्धा मंगलं साहु मंगलं केवलिपन्नत्तो धम्मो मंगलं । चत्तारि लोगुत्तमा अरहंता लोगुत्तमा सिद्धा लोगुत्तमा साहु लोगुत्तमा केवलिपन्नत्तो धम्मो लोगुत्तमो । चत्तारि सरणं पवज्जामि अरहंते सरणं पवज्जामि सिद्धे सरणं पवज्जामि साहू सरणं पवज्जामि केवलिपन्नत्तं धम्मं सरणं पवज्जामि" इति पठेत् । ततो गुरुवाक्येन अष्टादशपापस्थानकव्युत्सर्जनं यथा—"सव्वं पाणाइ-

१ कारयतीत्यर्थं. । यद्वा गुरुणासह करोतीत्यर्थं. । नानाधिकारानुरोधेन व्याख्येयोयं ग्रन्थइति संदिग्धप्रयोगकरणेनानुमीयते.

वायं पच्चक्खामि सव्वं मुसावायं पच्चक्खामि सव्वं अदिन्नादाणं प० सव्वं मे हुणं प० सव्वं परिग्गहं प० सव्वं राईं भोअणं प० सव्वं कोहं प० सव्वं माणं प० सव्वं मायं प० सव्वं लोहं प० सव्वं पिज्जं प० सव्वं दोसं कलहं अब्भक्खाणं अरईं रईं पेसुन्नं परपरिवायं मायामोसं मित्थादंसणसल्लं इच्चेइआइं अट्ठारसपावठाणाइं दुविहं तिविहेणं वोसिरामि अपच्छिमम्मि ऊसासे तिविहं तिविहेणं वोसिरामि ।" ततो गुरुर्गीतार्थः श्रीयोगशास्त्रपञ्चमप्रकाशकथितं कालप्रदीपादिशास्त्रकथितं च ग्लानस्यायुःक्षयं विज्ञाय सङ्घस्य तत्संबन्धिनां राजादेरनुमतिं गृहीत्वा अनशनमुच्चारयेत् । ग्लानः शक्रस्तवं पठित्वा परमेष्ठिमन्त्रं त्रिः पठित्वा गुरुमुखादुच्चरति, यथा—"भवचरिमं पच्चक्खामि तिविहंपि आहारं असणं पाणं खाइमं साइमं अन्नत्थणाभोगेणं सहस्सागारेणं महत्तरागारेणं सव्वसमाहिवत्तिया गारेणं वोसिरामि ।" इति सागारानशनं । अन्त्यमुहूर्त्ते अनागारमनशनं यथा—"भवचरिमं निरागारं पच्चक्खामि सव्वं असणं सव्वं पाणं सव्वं खाइमं अन्नत्थणा भोगेणं सहस्सागारेणं अइयं निंदामि पडिपुन्नं संवरेमि अणागयं पच्चक्खामि, अरिहंतसक्खियं सिद्धसक्खिअं साहूसक्खियं देवसक्खियं अप्पसक्खिअं वोसिरामि, जे मे हुज्ज पमाओ इमस्स देहस्स इमाइ वेलाए आहारमुवहिदेहं तिविहं तिविहेणं वोसिरियं, गुरुर्निस्थारग पारगो होहि" इति भणन् वासाक्षतादि ग्लानसंमुखं ससङ्घः क्षिपति शान्त्यर्थं "अट्ठावयम्मिसहो" इत्यादिस्तुतिपाठः पठनीयः । "चवणं जम्मणभूमी" इत्यादिस्तवपाठः । गुरुर्निरन्तरं ग्लानाग्रे त्रिभुवनचैत्यव्याख्यानं अनित्यादिद्वादशभावनाव्या-

ख्यानं अनादिभवस्थितिव्याख्यानं अनशनफलव्याख्यानं सर्वदा करोति। सङ्घो गीतनृत्याद्युत्सवं करोति। ग्लानो जीवितमरणेच्छां परित्यज्य समाधिना परितिष्ठति। ततोऽन्तर्मुहूर्त्ते समायाते ग्लानः "सव्वं आहारं सव्वं देहं सव्वं उवहिं वोसिरामि" इति भणति। ततः प्रान्ते ग्लानः पञ्चपरमेष्ठिस्मरणश्रवणयुक्तः शरीरं त्यजति। इत्यन्तसंस्कारे अनशनविधिः। मरणकाले ग्लानः कुसशय्यायां स्थाप्यो जन्ममरणे भूमावेव इति व्यवहारः। अथ सर्वभावभोक्तरि कर्मयोक्तरि चेतनारूपे जीवे गते अजीवपुद्गलस्य तच्छरीरस्य सनाथताख्यापनार्थं तत्सुतादीनां कृतार्थं तीर्थं संस्कारविधिरुच्यते—स यथा ब्राह्मणस्य सर्वस्य शिखावर्जितं शिरःकूर्चमुण्डनं केचित् क्षत्रियवैश्ययोरपि वदन्ति। तथा शवसंस्कारः सर्वैरपि स्ववर्णज्ञातिभिर्विधेयः तत्स्पर्शो विधेयोऽन्यवर्णज्ञातिभिः। ततो गन्धतैलादिभिः शवं सुष्ठुगन्धोदकैश्च स्नपयेत्। गन्धैः कुङ्कुमादिभिर्विलेपयेत् मालाभिरर्चयेत् स्वस्वकुलोचितैर्वस्त्राभरणैर्मण्डनैर्भूषयेत्। शूद्रप्रकृतीनां सर्वथा न मुण्डनं। ततो नवकल्पितकाष्ठशय्यायां निष्पाद्यायां शुकसंस्तीर्णायां सुवस्त्रच्छन्नायां शवं स्थापयेत् सह शय्योपकरणैः। अश्रास्य गृहिणो मृत्युनक्षत्रस्य नक्षत्रपुत्रकविधानं कुशसूत्रादिभिर्यतिवद् ज्ञेयं। नवरं कुशपुत्रका गृहस्थवेषधराः कार्याः वर्णानुसारेण तदुपरि नानाविधवस्त्रसुवर्णमणिविचित्रं वस्त्रकृतं प्रासादं स्थापयेत्। ततः स्वज्ञातीयाश्चत्वारः परिजनैः सह स्कन्धोढं शवं श्मशानं नयन्ति। तत्रोत्तराभागस्थशिरसं शवं पुत्राद्यग्निं तामारोप्य वह्निना संस्कुर्वन्ति। "अनन्नभोजिबालानां भूमिसंस्कार इष्यते। गृहिणामग्निसंस्कारः सर्वेषा-

" प्रेतप्रतिग्राहिभ्यो दानं ददति । ततः सर्वेऽपि स्नानं विधाय अनेन मार्गेण स्वगृ-
ताभस्म पुत्रादयो नद्यां प्रवाहयन्ति तदस्थीनि तीर्थेषु स्थापयन्ति । ततस्त-
न्त । चैत्येषु गत्वा सपरिजना जिनबिंबमस्पृशन्तश्चैत्यवन्दनं कुर्वन्ति । ततो
न नमस्कुर्वन्ति । गुरवोऽपि संसारानित्यतारूपां धर्मव्याख्यां कुर्वन्ति । ततः सर्वेऽपि स्वस्वकार्यं साधयन्ति । अन्त्याराधनमारभ्य शोकापनोदपर्यन्तं न मुहूर्त्ताद्यवलोकनं अवश्यकर्त्तव्यत्वात् । मृतस्नात्रकरणं वर्जयेदेषु धिष्ण्येषु—"प्रेतक्रिया न कर्त्तव्या यमले च त्रिपुष्करे । आर्द्रामूलानुराधासु-मिश्रक्रूरध्रुवेषु च ॥ १ ॥ धनिष्ठापञ्चके वर्ज्यास्तृणकाष्ठादिसङ्ग्रहाः । शय्यादक्षिणदिग्यात्रामृतकार्यगृहोद्यमाः ॥ २ ॥" एषु कर्त्तव्यं च—"रेवती श्रवणसार्पवालिनीतिष्यहस्तपवनेन्दुभेषु च । सौम्यवाक्पतिशनैश्चरेष्वपि प्रेतकर्म विबुधैर्निदिश्यते ॥ १ ॥ स्वस्ववर्णानुसारेण सूतकं मृतजातयोः । सदृशं गर्भपाते तु सूतकं स्याद्दिनत्रयम् ॥ २ ॥ यतः–अन्यवंशे समुद्भूते मृते जातेऽथ तद्गृहे । परिणीतसुतायाश्च सूतकान्नाशने तथा ॥ ३ ॥ एतेषु चैव सर्वेषु सूतकं स्याद्दिनत्रयम् । सूतकं सूतकं हन्ति जातं जातं मृतं मृतम् ॥ ४ ॥ अनन्नभोजिबालस्य सूतकं स्याद्दिनत्रयम् । अनष्टवार्षिकस्यापि त्रिभागोनं च सूतकम् ॥ ५ ॥" स्वस्ववर्णानुसारेण सूतकान्ते जिनस्नपनं साधर्मिकवात्सल्यं च ततः कल्याणं । इत्याचार्यश्रीवर्द्धमानसूरिकृते आचारदिनकरे गृहिधर्मपूर्वायने अन्तसंस्कारकीर्त्तनो नाम षोडश उदयः समाप्तः ॥ १६ ॥

# सप्तदश उदयः ।

## अथ यत्याचार आरभ्यते ।

विषमो दुष्पालो यत्याचारः । यदुक्तं—"सा पुण दुप्परिअल्ला पुरिसाण सया विवेगरहियाणं । वोढव्वाइं जम्हा पंचेव महव्वयवयाइं ॥ १ ॥ राई भोअण विरई निम्ममत्तं स एवि देहंमि । पिंडो उग्गम उप्पायणे सणाए सया सुद्धो ॥ २ ॥ इरियाइं पंचहिं समईहिं तीहिंगुत्तीहिं तवविहाणम्मि । निचुज्जुत्तो अममो अकिंचणो गुणसया वासो ॥ ३ ॥ मासाई आइ पडिमा अणेगरूवा अभिग्गहा वहवे । दव्वे खित्ताणुगया काले भावे अ वोधव्वा ॥ ४ ॥ जावज्जीवममज्जण मणवरियं भूमिसयणमुदिट्ठं । केसुद्धरणं च तहा निप्पडिकम्मत्तणमपुव्वं ॥ ५ ॥ गुरुकुलवासो अ सया खुहापिवासाइयाय सोढव्वा । बावीसं च परीसहा तहेव उवसग्गादिव्वाइं ॥ ६ ॥ लद्धाविलद्ध वित्तीसीलंगाणं च तह सहस्साइं। अट्ठारसेव सययं बोधव्वा आणुपुव्वीए ॥ ७ ॥ तरिअव्वो अ समुद्दो वाहाहि इमो महल्लकल्लोलो । निस्सायवालुयाए चावे अव्वो सया कवलो ॥८॥ चंकमि अव्वं निसिअग्गखग्गधाराइ अप्पमत्तेणं । पायव्वाइसहेलं हुअवहज्जालावली सययं ॥ ९ ॥ गंगा पडिसोएणं तोलणिअव्वो तुलाइ सुरसेलो । जइ अव्वं तह एगा गिणा विभीमारिदुट्ठवलं ॥ १० ॥ राहावे-

हविणम्मि अचक्कट्ठि अचक्कठिअलक्खमज्झपुत्तलिआ । विंधेअव्वा वस्सं उवसग्गपरिसहे जेउं ॥ ११ ॥ तिहुयणजयप्पडागा अगहियपुव्वा तहेव गहिअव्वा । इअएवमाइसाहुण दुक्करा होइ पवज्जा ॥ १२ ॥" ततो व्रते सर्वत्रापि ब्रह्मचर्यमेव दुष्करं यदुक्तमागमे—"अक्खाणसणी कम्माणमोहणी तह वयाण बंभवयं । गुत्तीणं य मणगुत्ती चउराकट्ठेण जिप्पंति ॥ १ ॥" परसमयेऽपि—"ब्रह्मचर्यं भवेन्मूलं सर्वेषां व्रतकर्मणाम् । ब्रह्मचर्येण भग्नेन व्रतं सर्वं निरर्थकम् ॥ १ ॥" दुष्करं ब्रह्मव्रतं यदुक्तं, गाथा—"दीसंते अणेगे उग्गखग्गसमरंगणे महाविसमे । भग्गे विसयलसिन्ने गंभीरा दायिणो धीरा ॥ १ ॥ दिसंति सिंहपोरस निम्महणा दलिअमइगलगणावि । कंदप्पदप्पदलणे विरलच्चि अ केवि सप्पुरिसा ॥ २ ॥" ततः पालितशुद्धसम्यक्त्वद्वादशव्रताचारः कृतचैत्यनिर्मापणजिनबिंबजिनागमचतुर्विधसङ्घविषयबहुद्रव्यव्ययः संपूर्णभोगाभिलाषः परमवैराग्यवासनः संपूर्णगार्हस्थ्यमनोरथः शान्तरसनिमग्नः कुलवृद्धसुतपत्नीस्वाम्यादिभिरनुज्ञातः प्रव्रज्याग्रहणोत्सुकः श्राद्धो ब्रह्मव्रताय योग्यो भवति । तस्य चायं विधिः—प्रथमं शान्तिकं पौष्टिकं गुरुपूजा सङ्घपूजा च । ततः प्रव्रज्योपयोगिनि लग्नदिने श्राद्धो मुण्डितशीर्षः शिखासूत्रधारी महोत्सवेन विवाहोत्सवसदृशेन यथोक्तगुणगुरुसमीपे व्रजेत् । तत्र गुरुर्नन्दिपूर्वकं सम्यक्त्वसामायिकदेशविरतिसामायिकारोपणं पूर्ववत्

१ शिष्योत्सुकैश्शिष्यसमूहेन स्थविरत्वमभिलषद्भिस्साधुसत्तमैरिदं विशेषणमभ्यसनीयम् । एतादृशशिष्यानुपलब्धेस्साधूच्छेदाद्धर्मोच्छेदः स्यादिति तु न शङ्कनीयम् अयोग्यसाधुसत्वेऽपि तदुच्छेदसंभवात्.

कुर्यात्। चैत्यवन्दनं दण्डकोच्चारक्षमाश्रमणादि सर्वं पूर्ववत्। ततस्तां सर्वां पूर्वोक्तक्रियां निर्वर्त्त्य गुरुः आ-
द्गस्य परमेष्ठिमन्त्रत्रयभणनपूर्वमिति दण्डकमुच्चारयेत्—"करेमि भंते सामाइयं सावज्जं जोगं पच्चक्खामि
जावनियमं पज्जूवासामि दुविहं तिविहेणं मणेणं वायाए कायेणं न करेमि न कारवेमि तस्स भंते पडिक्क-
मामि निंदामि गरिहामि अप्पाणं वोसिरामि सव्वं मेहुणं पच्चखामि जावनियमं पज्जुवासामि दुविहं तिवि-
हेणं मणेणं वायाए काएणं न करे० शेषं पूर्ववत्। इत्युक्त्वा "नित्थारग पारगो होहि" इति भणन् गुरुर्वा-
सान् क्षिपति ससङ्घः। ततो गुरुर्निषद्यासीनः पुरःस्थस्य ब्रह्मचारिण उपदेशं ददाति—यथा—"स्त्रीषण्ढपशु-
मद्वेश्यासनकुड्यान्तरोज्झनात्। सरागस्त्रीकथात्यागात् प्रोज्झितस्मृतिवर्जनात् ॥ १ ॥ स्त्रीरम्याङ्गेक्षणस्वाङ्ग-
संस्कारपरिवर्जनात्। प्रणीतात्यशनत्यागाद्ब्रह्मचर्यं तु भावयेत् ॥ २ ॥ न कार्यो भवता स्त्रीभिः संभाषो राग-
संयुतः। शयनासनकार्यादि न कार्यं गृहिवेश्मसु ॥ ३ ॥ अन्यनिन्दोपहासौ च वर्जनीयौ निरन्तरम्। धार्यं
सदा त्वया मौनं स्वाध्यायकरणं विना ॥ ४ ॥ भोक्तव्यमन्यगेहेषु प्रायः सचित्तवर्जनम्। धार्यं कौपीनमनिशं
मुञ्जमेखलयान्वितम् ॥ ५ ॥ नैव कार्योऽङ्गसंस्कारो न धार्यं भूषणादि च। एकं प्रच्छादनं मुक्त्वा न धार्यमपरं
वस्तु ॥ ६ ॥ मौनं द्विरावश्यकं च स्त्रीसङ्गस्य विवर्जनम्। जिनार्चनं त्रिकालं च कुर्याद्वर्षत्रयावधि ॥ ७ ॥ सचि-
त्तादिपरित्यागो नास्ति प्रायो व्रतेऽत्र च। केवलं ब्रह्मचर्यस्य धारणं परमिष्यते ॥ ८ ॥" इत्युक्त्वा वासान्
क्षिपति। ततो ब्रह्मचारी शिखासूत्रकौपीनप्रावरणधारी मौनी शुभध्यानरतो वर्षत्रयं विहरति। तत्र वर्ष-

त्रयावधिपालितत्रिकरणशुद्धिब्रह्मचर्यः क्षुल्लकत्वप्रव्रज्याद्यादाति । खण्डितव्रतस्तु पुनर्गार्हस्थ्यमुपगच्छति । इत्याचार्यश्रीवर्द्धमानसूरिकृते आचारदिनकरे यतिधर्मोत्तरायने ब्रह्मव्रतकीर्त्तनो नाम सप्तदश उदयः ॥ १७ ॥

---

## अष्टादश उदयः ।

### अथ क्षुल्लकत्वविधिः ।

वर्षत्रयं पालितत्रिकरणशुद्धिब्रह्मव्रतः शान्तरसप्रकृष्टबलतुलितशीलाङ्गभारः दीक्षां जिघृक्षुः ब्रह्मचारी क्षुल्लकत्वमर्हति । न केवलं पालितत्रिकरणशुद्धब्रह्मव्रतोऽप्यतुलितान्यचतुर्महाव्रतः प्रव्रज्यापालने समर्थो भवति । संयमपालनं हि ब्रह्मचर्यपालनं चतुर्महाव्रतपालनं विधाय कालक्रमेण सुकरं भवति । भगवानर्हन्नपि प्रव्रजितुकामः सांवत्सरिकदानव्याक्षेपेन संवत्सरं महाव्रतपालनातुलनां करोति । ततो ब्रह्मव्रतपालनानन्तरं क्षुल्लकदीक्षा, यथा—पालितत्रिकरणशुद्धब्रह्मचर्यो वर्षत्रयान्ते क्षुल्लकत्वं गृह्णाति । तत्र यथा पूर्वोक्तगुणगुरुसमीपे दीक्षोपयोगितिथिवारर्क्षलग्नेषु शिष्यः कृतस्नानो मुण्डितशीर्षः शिखाधारी सोपवीतः निषद्यानिषण्णस्य गुरोः समीपे धृतमुखवस्त्रिकः प्रतिक्रान्तेर्यापथः क्षमाश्रमणपूर्वं भणति—"भयवं इच्छाकारेण तुब्भे अम्हं पंचमहाव्वयाणं अवहिआरोपणं उद्दिसह ।" गुरुर्भणति—"आदिसामि ।" ततः क्षुल्लकत्वालापेन

सैव व्रतारोपसदृशी पूर्ववत् । ततो दण्डकोच्चारकाले
नन्दिवासक्षेपचैत्यवन्दनवन्दनककायोत्सर्गयुक्तिः भयवं इच्छाकारेण तुब्भे अम्हं पंचमहव्वयाणं अवहिआरोवणं
शिष्यो गुरोः क्षमाश्रमणपूर्वं भणति—"भयवं इच्छाकारेण तुब्भे अम्हं पंचमहव्वयाणं अवहिआरोवणं
समुद्दिसह ।" गुरुर्भणति "समुद्दिसामि ।" ततो नमस्कारत्रयपाठः । पूर्वं शिष्यो दण्डकमुच्चरति, यथा—
"करेमि भंते सामाइयं सव्वं सावज्जजोगं पच्चक्खामि जावनियमं पज्जुवासामि दुविहं तिविहेणं मणेणं वा-
याए काएणं न करेमि न कारवेमि तस्स भंते पडिक्कमामि निंदामि गरिहामि अप्पाणं वोसिरामि ।" पुन-
रपि परमेष्ठिमन्त्रं त्रिः पठित्वा—"सव्वं पाणाईवायं सव्वं मुसावायं सव्वं अदिन्नादाणं सव्वं मेहूणं सव्वं
परिग्गहं सव्वं राईभोअणं पच्चक्खामि जावनियमं पज्जूवासामि दुविहं तिविहेणं मणेणं वायाए काएणं न
करेमि न कारवेमि तस्स भंते पडिक्कमामि निंदामि गरिहामि अप्पाणं वोसिरामि ।" ततः शिष्यः क्षमाश्र-
मणपूर्वं भणति, "भयवं इच्छाकारेण तुब्भे अम्हं पंचमहव्वय अवहिपालणं अणुन्नवेह ।" गुरुर्भणति,
"अणुन्नवेमि ।" अनया रीत्या उद्देशसमुद्देशानुज्ञासु पट् क्षमाश्रमणवन्दनककायोत्सर्गादि पूर्वोक्तरीत्या त्रि-
वेलं करणीयं । नन्द्यन्ते गुरुः स्वयमभिमन्त्रितवासान् गृहीत्वा सङ्घकरे च दत्वा भणति—"ब्रह्मचर्यं पाल-
यित्वा वत्स क्षुल्लकतां गतः । महाव्रतानि पञ्चापि पालयेरवधिं कृतम् ॥ १ ॥ मुनिवद्विहरेर्नित्यं शिक्षासूत्र-
समन्वितः । शुद्धमन्नं च निर्दोषं भोज्यं मुनिभिराहृतम् ॥ २ ॥ गृहिवेश्मसु गत्वा या भोज्यं दोषविवर्जि-
तम् । सचित्तवस्तुनो नैव कार्ये स्पर्शनभोजने ॥ ३ ॥ चैत्यप्रणामः साधूनां पर्युपास्तिरनुत्तरा । आवश्यकं

द्विवेलं च स्वाध्यायः सर्वदा पुनः ॥ ४ ॥ ब्रह्मचारिसमानस्तु वेषो ब्रह्माणि गुप्तयः । शान्तेन भवतैतत्तु विधेयं मुनिवत्सदा ॥ ५ ॥ शिशूनां साधुसाध्वीनां प्रणामो न प्रणामनम् । सिद्धान्तमेकं संत्यज्य धर्मशास्त्रनियोजनम् ॥ ६ ॥ विधेया गृहिसंस्कारा व्रतारोपविवर्जिताः । शान्तिकं पौष्टिकं चैव प्रतिष्ठां च समाचरेत् ॥७॥" इत्युक्त्वा ससङ्घः सूरिः "नित्थारपारगो होहि" इति भणन् तन्मस्तके वासान् क्षिपति । ततः क्षुल्लकोऽपि गुरूपदिष्टया मुनिरीत्या धर्मशास्त्रव्याख्यानं कुर्वन् विहरति वर्षत्रयमवधिः । ततः संयमस्य यथोक्तपालने प्रव्रज्या व्रतभङ्गे पुनर्गार्हस्थ्यं । इत्याचार्यश्रीवर्द्धमानसूरिकृते आचारदिनकरे यतिधर्मोत्तरायने क्षुल्लकत्वसंकीर्त्तनो नाम अष्टादश उदयः ॥ १८ ॥

---

# एकोनविंश उदयः ।

## अथ प्रव्रज्याविधिः ।

सा च प्रवचने दीक्षाग्रहणनिषिद्धानां न भवति । ते च दीक्षानिषिद्धा यथा—"अट्ठारस पुरिसेसु वीसं इत्थीसु दस नपुंसेसु । पव्वायणा अणविहा तह वियलंगसरूवा य ॥ १ ॥" अष्टादशभेदाः पुरुषाः पुरुषेषु विंशतिभेदाः स्त्रियः स्त्रीषु दशभेदाः षण्डा नपुंसकेषु तथा विकलाङ्गस्वरूपा एते न प्रव्रज्यामर्हन्ति । परस-

मयेऽपि—“जात्यङ्गदोषसंपन्ना दूषिताः कुलकर्मभिः। शूद्राः काराश्च संन्यासं नार्हन्ति मनुवाक्यतः ॥ १ ॥”
एते परसमयोक्तव्रतदोषा अपि प्रवचनोक्तदोषेष्वन्तर्दधति पुरुषेष्वष्टादश दोषा यथा—“बाले १ वुड्ढे २
नपुंसे अ ३ कीवे ४ जड्डे य ५ वाहिए ६। तेणे ७ रायावगारी अ ८ उम्मत्ते अ ९ अदंसणे १० ॥ १ ॥ दासे
११ दुट्ठे १२ अ मूढे अ १३ अणत्ते १४ हुंगिएई अ उवद्धए अ। १६ भयए १७ सेहनिप्फेडिआइ अ १८ ॥२॥”
बालो वर्षाष्टकादर्वाक् १ वृद्धः क्षीणेन्द्रियकर्मेन्द्रियकृत्यः चतुर्थीमवस्थां प्राप्तः स संस्तारकदीक्षामेवार्हति न
प्रव्रज्यां २ नपुंसकं तृतीयाप्रकृतिः षण्ढ इत्यर्थः ३ क्लीवः यः स्त्रियाभ्यर्थितः कामाभिलाषासहः सहसा ४
जड्डः अजङ्गमकरचरणोऽतिस्थूलः ५ व्याधितः सदा रोगी स्वाध्यायावश्यकभिक्षाटनाद्यक्षमः ६ स्तेनः चोरो
राजादिनिग्रहभयाद्व्रताकाङ्क्षी ७ राजापरागी कृतनृपापराधः ८ उन्मत्तो भूतवातादिदोषेण वैकल्यमाप्तः
९ अदर्शनो मिथ्यात्वाभिलाषेण सम्यक्त्ववर्जितः अन्धो वा १० दासो मूल्यक्रीतः ११ दुष्टः कषायविषय-
दूषितः १२ मूढः कृत्याकृत्यविचाररहितः जिनादिनामस्मरणेऽपि निष्प्रज्ञः १३ ऋणार्त्तः सर्वजनस्य ऋणेन
व्याकुलः १४ हुंगितो द्विधा जातिहुङ्गितः कर्महुङ्गितश्च जातिहुङ्गितो नीचजातिः कारुकोऽन्त्यजो वा पितृमा-
तृशुद्धिविवर्जितो वेश्यादास्यादितनयः कर्महुङ्गितः कृतब्रह्महत्यादिमहापातकः हुगि वुगि वर्जने अस्य धातोः

१ अन्तर्भवन्तीत्यर्थः २ अयमप्यागमश्शास्त्रसंस्काररहितैस्सुधारकनामधारकैर्मननीयः । मेतार्यादिदृष्टान्तस्तु निषेधविधेर्दुर्बलिइतिहासत्वात् । इति-
हासेतु जन्मान्तरशुद्धानां दोषविशेषवशान्तिर्यग्भावमाप्तानामपि । स्वयंबुद्धानां केषाञ्चित्कथोपलभ्यते परन्तु न भवति तेनाधिकारानुमानम्.

प्रयोगात् वर्जनीय इत्यर्थः १५ अवबद्धः परेभ्यो द्रव्यं गृहीत्वा मासवर्षादिपर्यन्तं सेवां गतः १६ भृतको वस्त्र भोजनादिमूल्येन परस्य दास्यं गतः १७ शैक्षः निस्फोटितः पितृमातृगुरुमहत्तरादिभिरननुज्ञातः प्रव्रज्यां घलात्कारेण जिघृक्षुः १८ अमी अष्टादश पुरुषेषु दीक्षायां वर्जनीयाः । विंशतिः स्त्रीषु वर्ज्याः यथा—"जे अट्ठारस भेआ पुरिसस्स तहित्थिआइं ते चेव । गुव्विणि सबालवत्सा दोणि इमे हुंति अन्नेवि ॥ १ ॥" बालाद्या अष्टादश दोषाः स्त्रीष्वपि त एव १८ गुर्विणी १ स्तनन्धयापत्यसहिता च २ दोषद्वयमीलनाद्विंशतिः २० नपुंसकेषु दशादीक्षणीयाः यथा—"पंडए १ वाइए २ कीवे ३ कुंभी ४ ईसालूइत्ति अ ५ । सव्वणि ६ तक्कमसेवीय ७ पक्खियापक्खिए इअ ॥ १ ॥ सोगंधिए अ ९ सा सत्ते १० दस पए नपुंसगा । संकिलिट्ठति साहूणं पव्वावेउं न कप्पिआ ॥ २ ॥" तत्र षण्डः—"नारीस्वभावस्वरवर्णभेदो मेढ्रो गरीयान् मृदुला च वाणी । मूत्रं सशब्दं च सफेनकं च एषानि षट् षण्डकलक्षणानि ॥ १ ॥" १ वातिकः स्तूनलिङ्गः यस्य भगप्रवेशमात्रेण लिङ्गे श्वयथुर्भवति २ क्लीवः यस्य स्त्रीदर्शनाद्बीजं क्षरति ३ कुंभी यस्य बीजपतनकाले वृषणः कुंभवत्पीवरो भवति ४ ईर्ष्यालुः यस्य कामितस्त्रियां परपुरुषालापदर्शनमात्रेण ईर्ष्या भवति ५ शकुनिः उत्कटवेदोदयः सप्तधातुक्षयेऽपि यस्य कामोद्गमो न क्षीयते ६ तत्कर्मसेवी यस्य सर्वं व्यापारान् विमुच्य

१ एतेन ये महात्मानो बालान् कथमपि बोधयित्वा पित्राद्याज्ञामन्तरैव दीक्षन्ते देशान्तरं प्रेष्य दीक्षयन्ते वा त आज्ञाविराधका अनुत्साहिताः । उपदेशेऽधिकुर्वन्ति मुनयो नादेशे.

केवलं स्त्रीसेवा भोजनादिसर्वावस्थास्वपि संभोगः ७ पाक्षिकापाक्षिकः यस्य एकस्मिन् पक्षे कामोदयः न द्वितीये ८ सौगन्धिकः सदा गलितशुक्रः स्वलिङ्गं जिघ्रति ९ आसक्तः पतितेऽपि वीर्ये नारीशरीरमालिङ्ग्य तिष्ठति १० एते दश नपुंसकभेदाः संक्लिष्टा इति प्रव्रज्यायां अकल्पिताः । तत्रैषां दशविधानां कृतसंभोगानामपि पुंवेदोदययुक्तानां नपुंसकत्वं कथमित्युच्यते? तथा चागमे—"अच्चंतं च अदुत्तं कामं सेवंति पुरिसा जे । ते सव्वे विहुं नेया नपुंसगं वेअमावन्ना ॥ १ ॥" तथा च तत्वार्थटीकायां कामस्य वैकृत्यमन्यासक्तिर्नपुंसकत्वं अतएव दशप्रकारा नपुंसकस्यामी वर्जनीयाः तृतीयप्रकृतेर्नपुंसकस्य वर्जनं क्लीबे इति पुरुषवर्जनमध्ये कथितं । विकलाङ्गा वर्जनीया यथा—"हत्थे पाए कह्ने नासा उट्ठेवि वज्जिआ चेव । वामणगवडभकूज्जा पंगुलठुंठा य काणा य ॥ १ ॥ पच्छा विहुंति विगला आयरिय अन्नं न कप्पए तेसिं । सीसोठावे अव्वो आणगमहिसो व नन्नसि ॥ २ ॥" आजन्मकालाद्वा पश्चाद्वा हस्तहीनाः पादहीना नासाहीना ओष्ठहीना वामना वडभाः कुब्जाः पङ्गवः टूंटा काणाः प्रव्रज्यां न अर्हन्ति । तत्र वडभाः सङ्कुचितकरचरणाः शेषाः प्रसिद्धाः । कदाचित् पटुशरीरा अपि गृहीतदीक्षा गते काले हस्तहीनादिदोषान् प्राप्नुवन्ति तेषां सर्वगुरुगुणयुतानामपि नाचार्यत्वं कल्पते । शिष्यः काणकादिदोषसहितो व्रतित्व एव स्थाप्यो न पदमारोप्यः । इत्यादीक्षणीयाधिकारः । इत्यादिपूर्वदोषरहितो मार्दवार्जवक्षमानिधिः शमसंवेगनिर्वेदानुकंपास्तिक्ययुतो दीक्षायै कल्पते । यत उक्तमागमे—"सुद्धो जाइ कुलेणं रूवेणं तहय उवसमी धीरो । संविग्गमणो तुट्ठो पव्वज्जं

कप्पए पुरिसो ॥ १ ॥" परसमयेऽपि—"द्विजातिः शौचवान् विद्वान् स्वङ्गः शान्तो जितेन्द्रियः । विषयेभ्यो विरक्तश्च नरः संन्यासमर्हति ॥ १ ॥" तथा च—"गार्हस्थ्यं ब्रह्मचर्यं च क्षुल्लकत्वमुपास्य च । व्रताय कल्पते देही ब्रह्मचार्यपि कुत्रचित् ॥ १ ॥" गृही पालितगार्हस्थ्यस्तुलितब्रह्मचर्यः पूर्णीकृतक्षुल्लकत्वो यदि न प्रव्रज्याग्रहणे प्रभवति तदा तस्य पुनर्गार्हस्थ्यमुचितं प्रव्रज्याग्रहणे तु न पुनर्गार्हस्थ्यं । यदुक्तमागमे—"बालत्ते ब्रम्हचरित्ते गिहत्थत्ते विहुव्वणे । गहिऊण वयं पच्छा मरणेवि न मोयये ॥ १ ॥" यथा विध्युपनीतस्य बालस्यापि ब्रह्मचारिणो व्रतदानं युज्यते । अत्र कर्मणि गुरुः पूर्वोक्त एव । यदुक्तमागमे—"आयरिअउवज्झाओ पवत्तओ तहयवायणायरिओ । गीयत्थो वा साहू पव्वज्जं दिज्जूअ वराणं ॥ १ ॥ जेसिं वंदणकम्मं किज्जई साहुहिं सावएहिं । पित्तेपवज्जादाणे गुरुणो जुत्तान अन्नेवि ॥ २ ॥" गच्छसमाचारी विशेषेण आचार्यैरेव प्रव्रज्या दीयते क्वचिदुपाध्यायैरपि तत्र गुरुक्रमः प्रमाणं । तद्विधिरुच्यते—"दीक्षायां स्थापनायां च शस्तं मूलं पुनर्वसू । स्वातिमैत्रं करः श्रोत्रं पौष्णं ब्राह्मोत्तरात्रयम् ॥ १ ॥ समदोषोज्झिते धिष्ण्ये वारे शुक्रकुजोज्झिते । तिथिष्वदोषासु वर्षमासवासरशुद्धितः ॥ २ ॥ गोचरस्य विशुद्धौ च द्वयोश्चन्द्रबले तथा । जन्मादिमासत्यागे च सौजन्ये गुरुशिष्ययोः ॥ ३ ॥ लग्ने शुभे सर्वबलयुक्ते गुरुबलान्विते । यथोक्तगुणयुक्तस्य गुरुभिर्दीयते व्रतम् ॥ ४ ॥ भृगोरुदयवारांशभुवनेक्षणपञ्चके । चन्द्रांशोदयवारे च दर्शने च न दीक्षयेत् ॥५॥ षट्त्र्येकादशपञ्चमे दिनकरस्त्रिद्व्यायषष्ठे शशी लग्नात्सौम्यकुजौ शुभावुपचये केन्द्रत्रिकोणे गुरुः । शुक्रः

षट्त्रिनवान्त्यगोऽष्टमसुतश्चैकादशो मन्दगो लग्नांशादिगुरुज्ञचण्डमहसां शौरेश्च दीक्षाविधौ ॥ ६ ॥ रविस्तृतीयो दशमः शशाङ्को जीवेन्दुजावन्तिमनाशवर्जौ । केन्द्राष्टवर्जौ भृगुजस्त्रिशत्रुसंस्थः शनिः प्रव्रजने मतोऽन्यैः ॥ ७ ॥ शुक्राङ्गारकमन्दानां नाभीष्टः सप्तमः शशी । तमःकेतू तु दीक्षायां प्रतिष्ठावच्छुभाशुभौ ॥ ८ ॥ कलहभयजीवनाशनधनहानिविपत्तिनृपतिभीतिकरः । प्रव्रज्यायां नेष्टो भौमादियुतः क्षपानाथः ॥ ९ ॥" एवंविधे लग्ने प्रथमं दीक्षाप्रारंभः तदा पौष्टिकं विदध्यात् महादानं च दद्यात् सर्वदर्शनानि प्रीणयेत् सर्वमार्गणांश्च प्रीणयेत् । तत्र सामग्री सर्वापि वधूवर्जिता वैवाहिकी संयमश्रिया सह पुरुषस्य विवाह इति लोकव्यवहारः । तत्र ब्राह्मणः क्षत्रियो वैश्य उपनीतः पालितगार्हस्थ्यब्रह्मचर्यक्षुल्लकत्वः पूर्वेणैवोपनयनेन व्रतमर्हति । अथवा द्विजादिवर्णत्रयसंभूतः शिशुरनुपनीतोऽपि दीक्ष्यते । तस्य व्रतदानात्पूर्वमुपनयनविधिर्विधीयते । तत्र च व्रतबन्ध एव विधेयः न व्रतानुज्ञाव्रतविसर्गगोदानविधयः व्रतबन्धे तस्य द्विजातित्वमागतं ततो व्रतानुज्ञादिर्दीक्षायामप्रयोगिव्रतबन्धस्तु वर्णख्यापनाय न शूद्रो दीक्षणीय इति वचनात् । तथा द्विजातिसमाचाराणां शूद्राणामपि बाल्ये क्षुल्लकत्वपालनानन्तरं वा व्रतकाले पुरुषमन्त्रेण जिनोपवीतं तस्य शिष्यं च संस्थाप्य व्रतं देयं । संस्कार एव हि पुरुषाणां चरणप्रवेशकारणं, यदुक्तं—"जन्मना जायते शूद्रः संस्काराद् ब्राह्मणो भवेत्," अतः प्रव्रज्यां विना गार्हस्थ्ये जनापेक्षया शूद्रो नोपनयभाग् भवति व्रतदाने तूपनयनमर्हति जातिगार्हस्थ्यपरित्यागात् । पुरुषमन्त्रो यथा—"ॐ अर्हं पुरुषस्त्वं पुरुषज्ञस्त्वं पुरुषशीलस्त्वं पुरुषान्तरस्त्वं

पुरुषध्येयस्त्वं पुरुषध्याता त्वं पुरुषोपास्यस्त्वं पुरुषोपासकस्त्वं पुरुषयोज्यस्त्वं पुरुषयोजकस्त्वं पुरुषावगन्ता त्वं पुरुषावगम्यस्त्वं पुरुषावक्षेप्यस्त्वं पुरुषाक्षेप्तास्त्वं पुरुषाभिगम्यत्वं पुरुषाभिगन्तात्वं पुरुषपूज्यस्त्वं पुरुषपूजकस्त्वं पुरुषप्रणम्यस्त्वं पुरुषप्रणन्ता त्वं पुरुषप्रणेयस्त्वं पुरुषप्रणेता त्वं उपास्यस्त्वं योगस्त्वं स त्वं यस्त्वं अन्यस्त्वं परस्त्वं एष त्वं असौ त्वं अयं त्वं त्वमेव पुरुष उपसङ्गृहाणंहि अर्हं ॐ।" अयं मन्त्रः त्रिः पठनीयः ततः शूद्रस्यापि जिनोपवीतन्यासः। ततो व्रतकाले गुरुवसतौ वेदिरचना विधेया समवसरणस्थापना नानापूजोपकरणैः समवसरणपूजनं। ततो दीक्षणीयः स्वपितृपक्षगृहाद्वा स्वमातृपक्षगृहाद्वा स्वसंबन्धिगृहाद्वा संबन्धिकृतान्यगृहस्थगृहाद्वा नरयानतुरङ्गशिबिकारूढः कृतविवाहोचितमङ्गलगानवाद्यमहोत्सवः स्वस्ववर्णप्रभूतोचितवेषालङ्कारधारी चैत्येष्वर्हत्प्रतिमाः संपूज्य तथैव गुरुवसतिमागच्छेत्। तत्रान्तःप्रविश्य वस्त्रालङ्काराद्युन्मुच्य दीक्षणीयः स्वशिरसि लुञ्चनं भद्रकरणं वा कारयेत् शिखां स्थापयेत्। ततः परिधानोत्तरासङ्गधारी शिखासूत्रवान् सपरिजनो गुरुसमीपमुपगच्छति। तत्र समवसरणं गुरुवेदिमध्यगतस्त्रिस्त्रिः प्रदक्षिणयेत्। यदि चैत्ये व्रतग्रहणं तदा चैत्यस्यापि त्रिः प्रदक्षिणाकरणं प्रदक्षिणाकरणे शिष्यो गन्धाक्षतफलनालिकेरपूर्णकरः सर्वत्रापि। ततः शिष्यो गुरोरूर्ध्वस्य[2] पूर्वाभिमुखस्य क्षमाश्रमणं दत्वा भणति—"इच्छाकारेण तुब्भे अम्हं पव्वावेह"[1] गुरुर्भणति—"पव्वावेमि।" ततो गुरुः पूर्वयुक्त्या वासानभिमन्त्रयति ततः शिष्यः क्षमा-

१ माग्नप्रयोगः. २ उच्चैस्थितस्योत्थितस्य वा.

सर्वविरतिसामायिक आरोवणिअं नंदिकड्ढावणिअं वासखेवं करेह चेइयाइं च वंदावेह ।” ततो गुरुः शि-
ष्यस्य शिरसि वासान् क्षिपति कामधेनुमुद्रां रक्षां च करोति । ततो वर्द्धमानाभिः स्तुतिभिश्चैत्यवन्दनं शा-
न्तिःश्रुतक्षेत्रभुवनशासनवैयावृत्त्यकरकायोत्सर्गाः स्तुतिकथनानि च पूर्ववत् । ततः शिष्यः क्षमाश्रमणपूर्वं
भणति—“भयवं अम्हे पव्वावेह वेसं समप्पेह ।” ततो गुरुः पूर्वाभिमुख उत्तराभिमुखाय शिष्याय सुगृ-
हीतं कर्त्तव्यमिति भणन् वेषमर्पयति । वेषश्च चोलपट्टपट्टीलोमपट्टरजोहरणमुखवस्त्रिकारूपः । शिष्यश्च इ-
च्छंति भणन् दक्षिणस्कन्धसंलग्नरजोहरणदशः करद्वयेन वेषं गृह्णाति । तत ऐशानीं दिशं गत्वा पूर्वोत्तरा-
भिमुखः शिष्यो वेषं परिदधाति । धर्मध्वजदशाः दक्षिणस्कन्धकृतस्पर्शाः कुर्वन् मुखवस्त्रिकागर्भिताङ्गुलि-
गर्भो गुरुसमीपमागच्छति ततः क्षमाश्रमणपूर्वं भणति—“भयवं अम्हे मुंडावेह ।” ततो गुरुः परमेष्ठिमन्त्रं
भणन् तच्छीर्षाच्छिखाया लट्टात्रयं गृह्णाति शिखामपनयति तत्सहचारेण जिनोपवीतमप्यपनयति । ततः
पूर्ववत् सम्यक्त्वसामायिकश्रुतसामायिकदेशविरतिसामायिकसर्वविरतिसामायिक आरोवणिअं कायोत्स-
र्गकरणं चतुर्विंशतिस्तवचिन्तनं मुखेन चतुर्विंशतिस्तवनपाठः मुखवस्त्रिकाप्रतिलेखनं वन्दनकं च । ततः
शिष्यः क्षमाश्रमणदानपूर्वं भणति—“इच्छाकारेण तुब्भे अम्हं सम्यक्त्वसामायिकं श्रुतसामायिकं देशवि-
रतिसामायिकं सर्वविरतिसामायिकं आरोवेह ।” गुरुः कथयति—“आरोवेमि ।” ततस्त्रिर्नमस्कारं पठित्वा

पुरुषध्येयस्त्वं पुरुषध्याता त्वं पुरुषोपास्यस्त्वं पुरुषोपासकस्त्वं पुरुषयोज्यस्त्वं पुरुषयोजकस्त्वं पुरुषावगन्ता त्वं पुरुषावगम्यस्त्वं पुरुषावक्षेप्यस्त्वं पुरुषाक्षेप्तास्त्वं पुरुषाभिगम्यत्वं पुरुषाभिगन्तात्वं पुरुषपूज्यस्त्वं पुरुषपूजकस्त्वं पुरुषप्रणम्यस्त्वं पुरुषप्रणन्ता त्वं पुरुषप्रणेयस्त्वं पुरुषप्रणेता त्वं उपास्यस्त्वं योगस्त्वं स त्वं यस्त्वं अन्यस्त्वं परस्त्वं एष त्वं असौ त्वं अयं त्वं त्वमेव पुरुष उपसङ्गृहाणांहि अर्हं ॐ ।" अयं मन्त्रः त्रिः पठनीयः ततः शूद्रस्यापि जिनोपवीतन्यासः । ततो व्रतकाले गुरुवसतौ वेदिरचना विधेया समवसरणस्थापना नानापूजोपकरणैः समवसरणपूजनं । ततो दीक्षणीयः स्वपितृपक्षगृहाद्वा स्वमातृपक्षगृहाद्वा स्वसंबन्धिगृहाद्वा संबन्धिकृतान्यगृहस्थगृहाद्वा नरयानतुरङ्गशिबिकारूढः कृतविवाहोचितमङ्गलगानवाद्यमहोत्सवः स्वस्ववर्णप्रभूतोचितवेषालङ्कारधारी चैत्येष्वर्हत्प्रतिमाः संपूज्य तथैव गुरुवसतिमागच्छेत् । तत्रान्तःप्रविश्य वस्त्रालङ्काराद्युन्मुच्य दीक्षणीयः स्वशिरसि लुञ्चनं भद्रकरणं वा कारयेत् शिखां स्थापयेत् । ततः परिधानोत्तरासङ्गधारी शिखासूत्रवान् सपरिजनो गुरुसमीपमुपगच्छति । तत्र समवसरणं गुरुवेदिमध्यगतस्त्रिस्त्रिः प्रदक्षिणयेत् । यदि चैत्ये व्रतग्रहणं तदा चैत्यस्यापि त्रिः प्रदक्षिणाकरणं प्रदक्षिणाकरणे शिष्यो गन्धाक्षतफलनालिकेरपूर्णकरः सर्वत्रापि । ततः शिष्यो गुरोरूर्ध्वस्य पूर्वाभिमुखस्य क्षमाश्रमणं दत्वा भणति—"इच्छाकारेण तुब्भे अम्हं पव्वावेह" गुरुर्भणाति—"पव्वावेमि ।" ततो गुरुः पूर्वयुक्त्या वासानभिमन्त्रयति ततः शिष्यः क्षमा-

१ माध्रप्रयोगः. २ उच्चैस्थितस्योत्थितस्य वा.

श्रमणपूर्वं भणति—“इच्छाकारेण तुब्भे अम्हं सम्यक्त्वसामायिक–श्रुतसामायिक–देशविरतिसामायिक–
सर्वविरतिसामायिक आरोवणिअं नंदिकड्ढावणिअं वासखेवं करेह चेइयाइं च वंदावेह।” ततो गुरुः शि-
ष्यस्य शिरसि वासान् क्षिपति कामधेनुमुद्रां रक्षां च करोति। ततो वर्द्धमानाभिः स्तुतिभिश्चैत्यवन्दनं शा-
न्तिःश्रुतक्षेत्रभुवनशासनवैयावृत्त्यकरकायोत्सर्गाः स्तुतिकथनानि च पूर्ववत्। ततः शिष्यः क्षमाश्रमणपूर्वं
भणति—“भयवं अम्हे पव्वावेह वेसं समप्पेह।” ततो गुरुः पूर्वाभिमुख उत्तराभिमुखाय शिष्याय सुगृ-
हीतं कर्त्तव्यमिति भणन् वेषमर्पयति। वेषश्च चोलपट्टपट्टीलोमपट्टरजोहरणमुखवस्त्रिकारूपः। शिष्यश्च इ-
च्छंति भणन् दक्षिणस्कन्धसंलग्नरजोहरणदशः करद्वयेन वेषं गृह्णाति। तत ऐशानीं दिशं गत्वा पूर्वोत्तरा-
भिमुखः शिष्यो वेषं परिदधाति। धर्मध्वजदशाः दक्षिणस्कन्धकृतस्पर्शाः कुर्वन् मुखवस्त्रिकागर्भिताङ्गुलि-
गर्भो गुरुसमीपमागच्छति ततः क्षमाश्रमणपूर्वं भणति—“भयवं अम्हे मुंडावेह।” ततो गुरुः परमेष्ठिमन्त्रं
भणन् तच्छीर्षाच्छिखाया लट्टात्रयं गृह्णाति शिखामपनयति तत्सहचारेण जिनोपवीतमप्यपनयति। ततः
पूर्ववत् सम्यक्त्वसामायिकश्रुतसामायिकदेशविरतिसामायिकसर्वविरतिसामायिक आरोवणिअं कायोत्स-
र्गकरणं चतुर्विंशतिस्तवचिन्तनं मुखेन चतुर्विंशतिस्तवनपाठः मुखवस्त्रिकाप्रतिलेखनं वन्दनकं च। ततः
शिष्यः क्षमाश्रमणदानपूर्वं भणति—“इच्छाकारेण तुब्भे अम्हं सम्यक्त्वसामायिकं श्रुतसामायिकं देशवि-
रतिसामायिकं सर्वविरतिसामायिकं आरोवेह।” गुरुः कथयति—“आरोवेमि।” ततस्त्रिर्नमस्कारं पठित्वा

गुरुणा सह शिष्यः सम्यक्त्वसामायिकदण्डकं त्रिरुच्चरति पुनस्तयैव युक्त्या देशविरतिसामायिकदण्डकं त्रिरुच्चरति पुनस्तयैव युक्त्या सर्वविरतिसामायिकदण्डकं त्रिरुच्चरति । सम्यक्त्वसामायिकदेशविरतिसामायिकदण्डकौ पूर्वोक्तौ सर्वविरतिसामायिकदण्डकस्त्वयं—"करेमि भंते सामाइयं सव्वं सावज्जं जोगं पच्चक्खामि जावजीवाए तिविहं तिविहेणं मणेणं वायाए काएणं न करेमि न कारवेमि करंतंपि अन्नं न समणुजानामि तस्स भंते पडिक्कमामि निंदामि गरिहामि अप्पाणं वोसिरामि ।" तथा च यः पूर्वं प्रतिपन्नसम्यक्त्वसामायिकदेशविरतिसामायिकश्रुतसामायिको भवति तस्य सम्यक्त्वसामायिकदेशविरतिसामायिकदण्डकोच्चारणं । नहि पूर्वालापेऽपि सम्यक्त्वसामायिकश्रुतसामायिकदेशविरतिसामायिककथनं वक्तव्यं केवलं सर्वविरतिसामायिकदण्डकोच्चारपूर्वालापेऽप्येकस्य कथनं । यः पुनः कुमारश्रमणः अप्रतिपन्नसम्यक्त्वदेशविरतिसम्यक्त्वो भवति तस्य सामायिकत्रयालापे दण्डकत्रयोच्चारणं । ततः शिष्यो निषद्यासीनस्य गुरोः पुरः क्षमाश्रमणपूर्वं भणति—"इच्छाकारेण संदिस्सह भयवं सव्वविरइसामाइयं आरोवेह ।" एवमित्यालापेन षट् क्षमाश्रमणगुरुवाक्यादि पूर्ववत् । ततः पुनः क्षमाश्रमणपूर्वं शिष्यो भणति—"इच्छाकारेण संदिस्सह भयवं सव्वविरइसामाइअं आरोवणिअं निरुद्धं करावेह ।" गुरुराचाम्लप्रत्याख्यानं कारयति । ततो गुरुः साधूनां करे अभिमन्त्रितवासान् ददाति साध्वी श्रावकश्राविकाणां करेऽभिमन्त्रिताक्षतांश्च । ततो गुरुः शिष्यस्य नाम करोति । नामकरणं तु सप्तविशुध्या । सप्तविशुद्धिर्यथा—नक्षत्रयोन्यविरोध

१ गणाविरोध २ वर्गाविरोध ३ नाड्यविरोध ४ राश्यविरोध ५ राश्यधिपत्यविरोध ६ लभ्यालभ्यविभाग ७ एतद्विशुद्धं नाम शिष्यस्य कुर्यात् । नामकथने सर्वेऽपि साधुसाध्वीश्रावकश्राविका वासाक्षतक्षेपं शिष्यशिरसि कुर्वन्ति । ततः शिष्यः समवसरणं गुरुं प्रदक्षिणीकृत्य गुरुसाधूंश्च प्रणमति साध्वीश्रावकश्राविकास्तं प्रणमन्ति । ततो गुरुर्देशनां करोति । देशना यथा—"चत्तारि परमंगाणि दुल्लहाणिह जंतुणो । माणुसत्तं सुई सद्धा सामग्गी गुरुपुव्विआ ॥ १ ॥" इत्यादि सव्वपवज्जाविहाणव्याख्यानं । "एग दिवसंपि जीवो पवज्जमुवागओ अणन्नमणो । जइवि न पावइ मुक्खं अवस्स विमाणिओ होई ॥ १ ॥" इत्यादिदीक्षोचितगाथाव्याख्यानं । अत्र च नियमा दशवैकालिकक्षुल्लकाचारकथाध्ययनयुक्त्या सामायिकसाधूनामाचारः क्षुल्लकानामप्ययमेवाचारः क्षुल्लकाचारकथाध्ययनं यथा—"संजमे सुट्ठि अप्पाणं विप्पमुक्काणताइणं । तेसिं मे अणाइन्नं निग्गंथाणमहेसिणं ॥ १ ॥ उद्देसिअं कीयगडं निआगं अभिहडाणि य । रायभत्ते सिणाणे अ गंधमल्ले अ वीअणे ॥ २ ॥ सन्निही गिहि मत्तेअ रायपिंडे किमिच्छए संवाहणं दंत पहोवणाय संपुच्छ णं देहपलोवणा य ॥ ३ ॥ अट्ठावए अन्नालीअत्थत्तस्स य धारणट्ठाए । तिगिच्छं वाहणा पाए समारंभं च जोयणो ॥ ४ ॥ सिज्जायरपिंडं च आसंदीपलिअं कए । गिहंतरनिसिज्जाए गायसुवट्टणाणि अ ॥ ५ ॥ गिहिणो वेआवडिअं जाइआजीववित्तीआ । तत्ता निवुडइभोइत्तं आउरस्सरणाणि य ॥ ६ ॥ मूलए सिंगबेरेअ उच्छूखंडेअनिव्वुडे । कंदे मूलेअसचित्ते फले बीए अ आमए ॥ ७ ॥ सोवचले सिंधवे लोणे समालोणे अ आमए ।

सा मुद्देपं मुखारे अ काला लोणे अ आमए ॥ ८ ॥ धूवणित्ति वमणे अ वत्थी कम्मविरे अणे। अंजणे दंतवणे अगायाऽभंगविभूसणो ॥ ९ ॥ सव्वमेअ मणाइन्नं निग्गंथाणमहेसिणं। संजमंमि अज्जुत्ताणं लहूभूअविहारिणं ॥ १० ॥ पंचासवपरिन्नाया तिगुत्ता छसु संजया। पंचनिग्गहणा धीरा निग्गंथा ओज्जूदंसिणो ॥ ११ ॥ आयावयंति गिम्हेसुहेमंतेसु अवाउडा। वासासु पडिसंलीणा संजयासु समाहिआ ॥ १२ ॥ परिसहरिऊदंता धूअमोहा जिइंदिआ। सव्वदुक्खपहीणट्ठा पक्कमंति महेसिणो ॥ १३ ॥ दुक्कराइ करित्ताणं दुस्साहाई सहित्तु अ के। इत्थ देवलोएसु केइसिज्झंति नीरया ॥ १४ ॥ खवित्ता पुव्वकम्माइं संजमेण तवेण य। सिद्धिमग्गमणुपत्ता ताइणो परिनिवुडत्तिबेमि ॥ १५ ॥" देशनानियमश्चायं ततः सर्वविरति सामायिकारोवणिअं करेमि काउस्सग्गं अन्नत्थऊससिएणं जाव अप्पाणं वोसिरामि।" कायोत्सर्गे चतुर्विंशतिस्तवचतुष्टयचिन्तनं पारयित्वा मुखेन चतुर्विंशतिस्तवभणनं। ततः—"शिवमस्तु सर्वजगतः परहितनिरता भवन्तु भूतगणाः। दोषाः प्रयान्तु नाशं सर्वत्र सुखीभवतु लोकः ॥ १ ॥ सर्वमङ्गलमाङ्गल्यं सर्वकल्याणकारणम्। प्रधानं सर्वधर्माणां जैनं जयति शासनम् ॥ २ ॥" गाथा—"चिअवंदण वेसप्पण समइ अ उसग्ग लग्ग अट्ठगहे। सामाइ अतिअकट्टण तियपायाहिंण वास उसग्गो ॥ १ ॥" इति सङ्ग्रहः । तथा जिनकल्पिनां प्रव्रज्यायामयं विशेषः, अट्टाग्रहणस्थाने संपूर्णलोचकरणं प्रथमं मुण्डनं नास्ति । वेषग्रहणस्थाने तृणमयैकवस्त्रग्रहणं रजोहरणं चामरमयूरपिच्छमयं शेषं तथैव उत्थापनायोगोद्वहनादौ गृहस्थगृह एव सङ्घट्टादानं स-

गृहनिष्क्रमणं पाणिपात्रभोजनं च। शेषः सर्वोऽपि विधिस्तथैव ॥ इत्याचार्यश्रीवर्द्धमानसूरिकृते आचारदि-
नकरे यतिधर्मोत्तरायणे प्रव्रज्याकीर्त्तनो नाम एकोनविंशतितम उदयः ॥ १९ ॥

## विंशतितम उदयः ।

### उत्थापनाविधिः ।

इह हि प्रव्रज्याग्रहणमात्रेण सामायिकयतित्वेन भगवन्तोऽर्हन्तः स्वयंबुद्धा एव यतित्वमाप्नुवन्ति न बुद्ध-
बोधिताः पञ्चमहाव्रतोच्चारोत्थापनाविरहिता यतय उच्यन्ते तद्विधिरुच्यते,–प्रथमं नन्दिविधियुक्तं आव-
श्यकदशवैकालिकयोगोद्वहनं विदध्यात्। ततश्च मण्डलीप्रवेशयोगोद्वहनान्तराले अध्ययनत्रयाचाम्लत्रये
नन्दिरुत्थापनाख्या विधेया। आवश्यकदशवैकालिकमण्डलिप्रवेशयोगा योगोद्वहनाधिकारे कथयिष्यन्ते।
उत्थापनाविधिस्त्वयं,–अत्र तिथिवारर्क्षलग्नादि प्रव्रज्यासनं। अत्र शिष्यकृते वस्त्रसंस्तारकमुखवस्त्रिकारजो-
हरणपात्रादि सर्वं नवीनं विधेयं। ततश्चैत्ये वा धर्मागारे वा समवसरणं संस्थाप्य गुरुः शिष्यं समवसरणस्य
परमेष्ठिमन्त्रं भणन् पूर्वं प्रदक्षिणात्रयं कारयित्वा ततो वासान् अभिमन्त्रयेत्। ततः शिष्यः क्षमाश्रमणपूर्वं
भणति,—"इच्छाकारेण तुब्भे अम्हं महव्वयारोवणत्थं नंदिकड्ढावणिअं वासनिक्खेवं करेह चेइआइं च वं-
दावेह।" गुरुर्वासक्षेपं विधाय शिष्येण समं चैत्यवन्दनं स्तुतियुक्तं पूर्वं च करोति। श्रुतादिदेवताकायोत्स-

गस्तुतयः पूर्ववत् । नन्दिपाठस्त्रिः यथा—“नाणं पंचविहं पन्नत्तं तं जहा–आभणिवोहिअन्नाणं सुअन्नाणं ओहिमणपज्जवन्नाणं केवलन्नाणं तत्थ चत्तारि नाणाइं ठपाइं ठवणिज्जाइं नो उद्दिसिज्झंति नो समुद्दिसिज्झंति नो अणुन्नविज्झंति सुअन्नाणस्स उद्देसो समुद्देसो अणुन्नाणुउगोपवत्तइं किं अंगपविठ्ठस्स उद्देसो समुद्देसो अणुन्नाणुउगोपवत्तइं अंगबाहिरस्स उद्देसो समुद्देसो अणुन्नाणुउमो पवत्तई अंगपविठ्ठस्स विउद्देसो। समुद्देसो अणुन्नाणुउ गोपवत्तई आवस्स उद्देसो० ३ आवस्सगव इरित्तस्स उद्देसो० ३ आवस्सगस्सवि उद्देसो ३ आवस्स गवइरित्तस्स विउद्देसो ३ जई आवस्सगस्स उद्देसो० ३ किं सामाइअस्स चउवीसत्थयस्स वंदणस्स पडिकम्मणस्स काउसग्गस्स पचक्खाणस्स सव्वेसिं पिएएसिं उद्देसो ३ जई आवस्सगवइरित्तस्स उद्देसो० ३ किं कालियस्स उद्देसो० ३ उक्कालिअस्स उद्देसो० ३ कालिअस्स वि उद्देसो० ३ उक्कालिअस्स वि उद्देसो० ३ जइ उकालियस्स उद्देसो० ३ किं दसवेआलिअस्स कप्पिआकप्पिअस्स चूलकप्पसूअस्स महाकप्पसुअस्स पमायपमायस्स उवाइअस्स रायपसेणिअस्स जीवाभिगमस्स पन्नवणाए महापन्नवणाए नंदिएविज्जाचरणविणित्थयस्स विहारकप्पस्स मरणविभत्तीए वीअरागसुअस्स झाणविभत्तीए आयविसोहीए चरणविसोहीए पमायपमायस्स आउरपचक्खाणस्स महापचक्खाणस्स सव्वेसिंपि एएसिं उद्देसो० ३ जइ कालिअस्स उद्देसो ३ किं उत्तरज्झयणाणं दसाणं कप्पस्सववहारस्स णिस्सीहस्स महाणिस्सीहस्स इसि भासियाणं जंबूदीवपन्नतीए विमाणपविभत्तीए महल्लिआविमाणपविभत्तीए अंगचूलिआए बंगचूलिआए विवाहचूलिआए

अरुणोववायस्स धरणोववायस्स वरुणोववायस्स वेसमणोववायस्स देवंदोववायस्स उट्ठाणसुअस्स समुट्ठाण-सुअस्स नागपरिआवलिआणं निरयावलियाणं कप्पिआणं कप्पवडिंसयाणं पुप्फिआणं पुप्फचूलियाणं वन्हीदसाणं सव्वेसिंपि एएसिं उद्देसो० ३ जइ अंगपविट्ठस्स उद्देसो० ३ किं आयारस्स सूअगडस्स ठाणस्स समवायस्स विवाहपन्नत्तीए नायाधम्मकहाणं उवासगदसाणं अंतगडदसाणं अणुत्तरोववाइअदसाणं पन्हावागरणाणं विवागसुअस्स दिट्ठिवायस्स सव्वेसिंपि एएसिं उद्देसो समुद्देसो अणुंनाणुं ओगोपवत्तइ इमं पुणपट्ठवणं पडुच इमस्स उद्देसो अणुन्नाणुए पवत्तइ खमासमणाणं हत्थेणं सुत्तेणं अत्थेणं तदुभएणं अणुजाणामि २ अणुजाणामि ॥" ततो गुरुशिष्यौ महव्वयारोवणियं कायोत्सर्गं पूर्ववत्कुरुतः । तत ऊर्ध्वस्थौ गुरुशिष्यौ परमेष्ठिमन्त्रं त्रिर्भणतः । ततो गुरुर्योजितकरः करयुगलोपरि रजोहरणं संस्थाप्य वामकरानामिकालंबितमुखवस्त्रिकः शिष्यं कराञ्जलिधृतमुखवस्त्रिकारजोहरणमीषन्नतमेकमेकं महाव्रतं रात्रिभोजनपरित्यागव्रतसहितं त्रिस्त्रिरुच्चारयति । तानि यथा—"पढमे भंते महव्वए पाणाई वायाओ वेरमणं सव्वं भंते पाणाई वायं पच्चक्खामि से सुहमं वा वायरं वा तसं वा थावरं वा नेवसयं पाणेअइ वाइज्जा नेवन्नेहिं पाणेअइवायाविज्जा पाणेअइ वायांतेवि अन्नेन समणुं जाणामि जावजीवाए तिविहं तिविहेणं मणेणं वायाए काएणं न करेमि न कारवेमि करंतंपि अन्नं न समणुजाणामि तस्स भंते पडिक्कमामि निंदामि गरिहामि अप्पाणं वोसिरामि त्रि० पढमे भंते महव्वए उवट्ठिओमि सव्वाओ पाणाईवायाओ वेरमणं आहावरे दुच्चे भंते महव्वए मुसावायाओ

वैरमणं सव्वं भंते मुसावायं पच्चक्खामि से कोहा वा लोहा वा भया वा हासा वा नेव सयं मुसं वइज्जा नेवन्नेहिं मुसं वायाविज्जा मुसं वायंते वि अन्नेन समणु जानामि जावजीवाएति० दोचे भंते महव्वए उवट्ठिओमि सव्वाओ मुसावायाओ वेरमणं २ आहावरे तच्चे भंते महव्वए अदिन्नादाणाओ वेरमणं सव्वं भंते अदिन्नादाणं पच्चक्खामि से गामे वा नगरे वा रन्ने वा अप्पं वा बहुं वा अणुं वा थूलं वा चित्तमंतं वा अचित्तमंतं वा नेव सयं अदिन्नं गिन्हिज्जा नेवन्नेहिं अदिन्नं गिन्हाविज्जा अदिन्नं गिण्हंतेवि अन्नेन समणुजाणामि जावजीवाए तिविहं० तच्चे भंते महव्वए अवट्ठिओमि सव्वाओ अदिन्नादाणाओ वेरमणं ३ आहावरे चउत्थे भंते महव्वए मेहुणाओ वेरमणं ४ सव्वं भंते मेहुणं पच्चक्खामि से दिव्वं वा माणुसं वा तिरिक्खजोणिअं वा नेव सयं मेहुणं सेविज्जा नेवन्नेहिं मेहुणं सेवाविज्जा मेहुणं सेवंते वि अन्ने न समणुजाणामि जावजीवाए तिवि० चउत्थे भंते महव्वए उवट्ठिओमि सव्वाओ मेहुणाओ वेरमणं ४ आहावरे पंचमे भंते महव्वए परिग्गहाओ वेरमणं सव्वं भंते परिग्गहं पच्चक्खामि से अप्पं वा बहुं वा अणुं वा थूलं वा चित्तमंतं वा अचित्तमंतं वा नेव सयं परिग्गहं परिगिन्हिज्जा नेवन्नेहिं परिग्गहं परिगिन्हाविज्जा परिग्गहं परिगिन्हंतेवि अन्ने न समणुजाणामि जावजीवाए तिवि० पंचमे भंते महव्वए उवट्ठिओमि सव्वाओ परिग्गहाओ वेरमणं ५ आहावरे छट्ठ भंते वए राईभोअणाओ वेरमणं सव्वं भंते राईभोअणं पच्चक्खामि से असणं वा पाणं वा खाइमं वा साईमं वा नेव संय राईं भुज्जिज्जा नेवन्नेहिं राइ भुजाविज्जा

राईं भुञ्जंतेवि अन्ने न समणुजानामि जावजीवाए तिविहं तिविहेणं मणेणं वायाए काएणं न करेमि न कारवेमि करंतं वि अन्नं न समणुजाणामि तस्स भंते पडिक्कमामि निंदामि गरिहामि अप्पाणं वोसिरामि छट्ठे भंते वए उवट्ठिओमि सव्वाओ राईभोअणाओ वेरमणं ६” ततः संप्राप्तायां लग्नवेलायां—“इच्चे इयाइं पंचमहव्वयाइं राईभोअणवेरमणं छट्टाइं अतिहिं अट्ठयाए उवसंपज्जताणं विहरामि।” इति त्रिरुच्चारयेत्। ततो गुरुः पुनर्वासाद्यभिमन्त्रणं विधाय साधुश्रावकादिभ्यो दद्यात्। ततः शिष्यो वन्दनकदानपूर्वं क्षमाश्रमणं दत्वा भणति,—“इच्छाकारेण तुब्भे अम्हं महव्वयाइं आरोवेह।” एवं क्षमाश्रमणदानानि गुरुशिष्यवचनानि महाव्रतारोपणाभिलापेन पूर्ववत्। क्षमाश्रमणदानान्ते साधुसाध्व्यादयो वासाक्षतान् शिष्यशिरसि क्षिपन्ति। ततः पंचमहव्वयारोवणथिरीकरणत्थं करेमि काउस्सग्गं अन्नत्थ ऊससिएणं यावदप्पाणं वोसिरामि।” चतुर्विंशतिस्तवैकचिन्तनं पारयित्वा चतुर्विंशतिस्तवभणनं। तत उपविश्य शक्रस्तवपाठः। ततः शिष्यो गुरुं त्रिः प्रदक्षिणीकृत्य वन्दते यथार्हमन्यसाधूनपि। ततस्तस्य तत्र निषण्णस्याचार्योपाध्यायरूपपदावधिः क्रियते। साध्व्याश्चोत्थापनायामनेनैव विधिना कृतेन प्रवर्त्तिनीमहत्तराव्रतद्वयबन्धः तत उच्चार्यते यथाकोटिकादिको गणः व्रजादिका शाखा चान्द्रादिकं कुलं इत्युच्चार्य स्वकीयगुरुक्रमोपाध्यायक्रममुच्चारयेत्। साध्व्याः प्रवर्त्तिनीमहत्तराक्रममुच्चारयेत् यावदमुको व्रती अमुका व्रतिनीति। तद्दिनाचाम्लं ततश्चत्वार आचाम्लाः अनन्तरमपि कार्यन्ते। आचाम्लसप्तककरणं सप्तमण्डलीप्रवेशार्थं करणीयं। सप्तमण्डल्यो यथा

—"सुत्ते १ अत्थे २ भोअण ३ काले ४ आवस्सए ५ अ सज्झाए ६ संथारए विअ ७ तहा सत्ते आ मंडली
हुंति ॥ १ ॥" अनेनैव क्रमेणाचाम्लकरणेन शिष्यस्य पूर्वसाधुभिः सह मण्डलीसङ्घट्टनं । अत्रावश्यकदश-
वैकालिकसिद्धान्तपाठः । प्रज्ञाहीनस्यापि दशवैकालिकाध्ययनचतुष्कपाठमन्तरेण नोत्थापना । दशवैकालि-
कतपस्यारब्धे दशवैकालिकपाठारंभः ॥ इत्याचार्यश्रीवर्द्धमानसूरिकृते आचारदिनकरे यतिधर्मोत्तरायणे उत्था-
पनाकीर्त्तनो नाम विंशतितम उदयः ॥ २० ॥

---

## एकविंशतितम उदयः ।

### अथ योगोद्वहनविधिः ।

मनोवाक्कायानां तपःसमाधौ योजनं योगः अथवा सिद्धान्तवाचनायामन्यविहितया तपसा योजनं योगः ते चागमक्रमोद्वहनेन बहुविधाः तेषां निरुद्धपारणककालस्वाध्यायादिभिरुद्वहनं योगोद्वहनं । कीदृशः साधुर्योगोद्वहने योग्यो भवतीत्युच्यते, कीदृशश्च गुरुः कीदृशाः सङ्घट्टसहायाश्च । कार्या निमित्तं कार्यमित्येष निर्देशक्रमः इति वचनात् कार्यो योगवाही निमित्तं गुरुसहायक्षेत्रोपकरणकालभिक्षाग्रहादि कार्यं योगोद्वहनं एतत्क्रमेण व्याख्यानमुच्यते । योगवाहिलक्षणं यथा—आर्या—"मौनी परीषहसहो मानरुषालोभकपटनिर्मुक्तः । बलवान् समदृष्टिश्च क्षितिपतिरङ्कारिमित्रादौ ॥ १ ॥ गुरुभक्तिकृन्महात्मा प्रसन्नवाङ्मनसकायसं-

योगः । पटुविन्द्रियो दयालुः श्रुतशास्त्रानेकपरमार्थः ॥ २ ॥ लज्जासत्त्वसमेतो विरक्तधीर्जिततृषानिद्रः । अस्खलितब्रह्मधरः प्रायश्चित्तक्षताघगणः ॥३॥ बाह्याभ्यन्तररसलोभवर्जितो निर्जितान्तरङ्गरिपुः । त्यक्तान्यकृत्यभावो योगोद्वहने मुनिर्योग्यः ॥४॥ अथ गुरुलक्षणं—आर्या—"शान्तो दयालुरशठः प्रियवाक् षट्त्रिंशता गुणैर्युक्तः । आर्जवमार्दवसदनं कृतयोगः समयवित् सम्यक् ॥१॥ परमार्थज्ञः कुशलो जितनिद्रालस्यमोहमदमायः । सानन्दः शिष्यान् प्रति योगोद्वहने गुरुः कार्यः ॥ २॥ सहायलक्षणं यथा—आर्या—"जितनिद्रालस्यक्षुत्कृतयोगः स्नेहवान् गुणेषु रतः । उद्यमवान् सदयमतिर्जितविषयकषायपरमरिपुः ॥ १ ॥ बह्वागमविद् बहुसत्वसंयुतो बहुकलासु विमलमतिः । नीरुक् प्रसन्नचेता योगोद्वहने सहायः स्यात् ॥ २ ॥" अत्र सहायाः—दण्डधरसङ्घट्टकचारिभिक्षानेतृसर्वस्मृतिकारकधर्मोपदेशशब्दरूपाः । क्षेत्रलक्षणं यथा—आर्या—"बहुसलिलमृदुलभिक्षं स्वचक्रपरचक्रभयविनिर्मुक्तम् । बहुयतिसाध्वीश्राद्धं बहुशास्त्रविशारदाकीर्णम् ॥ १ ॥ नीरोगजलान्नयुतं चर्मास्थिकचादिसङ्करविमुक्तं । अहिजंबुकवृषदंशकवृषपल्लीसरटनिर्मुक्तम् ॥ २ ॥ प्रायः पवित्ररथ्यं रुग्मारीप्रभृतिवर्जितं नित्यम् । अल्पकषायपुरजनं योगोद्वहने शुभं क्षेत्रम् ॥ ३ ॥" वसतिलक्षणं यथा—"चर्मास्थिदन्तनखकेशगूथमूत्रापवित्रतारहितम् । अध उपरि च निश्छिद्रं निरवकरं घृष्टमृष्टं च ॥ १ ॥ सूक्ष्माङ्गिवृन्दसंवासयोग्यभूस्फोटवर्जितं परितः । रम्यमपरार्थरचितं योगोद्वहने शुभं सदनम् ॥ २ ॥" मूत्रपुरीषोत्सर्गस्थण्डिललक्षणं यथा—"निर्जनमजन्तुजातं जलहरिततृणाहिबिलरहितम् । बीजादिसूक्ष्ममुक्तं स्थण्डिलमत्र प्रशस्यं

स्यात् ॥ १ ॥" योगोद्वहने उपकरणानि यथा—"मृत्काष्ठालाबुमयं पात्रं सुविलिप्तमञ्जसा पूतम् । तद्वेष्टनबन्धनमपि नवीनमतिनिर्मलं बहुलम् ॥ १ ॥ नव्या च पात्ररज्जूः संस्तारकमुत्तमं सवस्त्रं च । लघ्वी मार्जनिकापि च समण्डला कालदण्डी च ॥ २ ॥ आचारशास्त्रपुस्तकमथ नन्द्यावाससमवसरणादि । प्रासुकजलसामग्री वस्त्रमपि विषट्टपदीकं च ॥ ३ ॥ निर्दन्ततृप्तिकरणं नित्प्रथमप्रहरजलपरित्यागः । इत्यादि चोपकरणं योगोद्वहने प्रगुणमिष्टम् ॥ ४ ॥" योगोद्वहन कालो यथा—"सुभिक्षं साधुसामग्री सर्वोत्पाताद्यभावता । कालिकेषूत्कालिकेषु योगेषु समयो ह्ययम् ॥ १ ॥ आर्द्रादिस्वात्यन्ते नक्षत्रगणे विवस्वता युक्ते । कालिकयोगानामयमुपयोगी काल उद्दिष्टः ॥ २ ॥ आर्द्रादिस्वात्यन्ते नक्षत्रगणे विवस्वता मुक्ते । स्तनिते विद्युति वृष्टौ कालग्रहणं न कर्त्तव्यम् ॥ ३ ॥" अथ योगोद्वहने चर्या यथा—"रजन्याः प्रथमे यामे चरमे च सदा यतेः । जागरो योगवाही तु जागर्त्त्येव क्षणे क्षणे ॥ १ ॥ हास्यकन्दर्पविकथाशोकरत्यरतीस्त्यजेत् । पञ्चविंशतिकोदण्डमानभूमेः परं मुनिः ॥ २ ॥ नैकाकी याति सततं योगवाही विशेषतः । धनुःशते लङ्घिते तु साधोराचाम्लमादिशेत् ॥ ३ ॥ सीवनं लेपकरणं रचनामुपधेरपि । वर्जयेत्सर्वयोगेष्वप्यागाढेषु विशेषतः ॥ ४ ॥ ताम्रसीसकांस्यलोहत्रपुरोमनखादिकम् । चर्मादि न स्पृशेत् स्पृष्टौ कायोत्सर्गो विधीयते ॥ ५ ॥ अस्पृष्टावप्येकवेलं दन्ताद्युत्सर्गसंज्ञया । कायोत्सर्गे नमस्कारं तत्रैकं च स्मरेन्मुनिः ॥ ६ ॥ योगोद्वहनमध्ये तु केशरोमनखादिकम् । नोत्सृजेत्प्रातरुत्सर्गे विधातव्योऽप्ययं विधिः ॥ ७ ॥ मुखवस्त्रं प्रतिलिख्य द्वादशावर्त्त-

कायोत्सर्गश्च पूर्ववत् ॥ ८ ॥ योगवाही नमस्कारप्रत्याख्यानं दिने दिने ।
वन्दनम् । दत्वा चैव तदुत्सर्गः
अपूर्वपठनं चैव कुर्यात्पूर्वं न विस्मरेत् । उपधिं पात्रव-
रात्रिप्रतिक्रमणान्ते कुर्यात् प्रातर्यथोचितम् ॥ ९ ॥ अपूर्वपठनं चैव कुर्यात्पूर्वं न विस्मरेत् । महाव्रतानि पञ्चैव
न्धादि द्विवेलं प्रतिलेखयेत् ॥ १० ॥ मितं वदेत् सूक्ष्मशब्दं कामक्रोधादि वर्जयेत् । शुद्धमन्नं च पानं च गृह्णीयात्पात्रवाससी
धारयेद्वादयुक्तितः ॥ ११ ॥ सङ्घट्टकप्रतिच्छेदं न कुर्यात्कालकेष्वपि । मितः संस्तारवस्त्रादेरासनादेः परिग्रहः ॥ १३ ॥ स्वाध्या-
॥ १२ ॥ उच्छिष्टान्नपरित्यागं न कुर्याद्वमनादिकम् । अस्वाध्याये न कर्त्तव्यं पाठकालादिकं क्वचित् ॥ १४ ॥ अकाले च मलो-
यकालग्रहणे विदध्यादतियत्नतः । आनीतमकृतयोगैर्न ग्राह्यमशनं जलम् ॥ १५ ॥ तैः समं नैव सङ्घट्टौ न शय्या-
त्सर्गं न कुर्वीत निशादिके । प्रतिलिखितं तैर्वसनशय्यादि न विधापयेत् ॥ १६ ॥ नाङ्गे चिकित्सितं कुर्यात् तदन्येषु न
सनसंश्रयः । न च वृष्टौ महावाते निर्गच्छेद्भिक्षणादिषु ॥ १७ ॥ इयं तु चर्या सर्वेषु योगेषु परिकीर्त्तिता । ब्रूमो
कारयेत् । बल्यर्थं विहिताहारं गर्हिताहारमेव च । तथा मृतक्रियाहारं वर्ज-
भगवतीयोगचर्यामथ यथाविधि ॥ १८ ॥ देवादिपात्रसंस्पृष्टं संस्पृष्टं तत्परं परम् । तथा विकृतिसंस्पृष्टं न कल्पं योगवाहिनाम्
येदतियत्नतः ॥ १९ ॥ कुर्यादकृतयोगैश्च न मलोत्सर्जनादिकम् । भिक्षाभ्रमे च संस्पर्शस्तेषामेव न युज्यते ॥ २१ ॥ उपधे
॥ २० ॥ पक्वान्नवर्जितामन्यां विकृतिं च करे वहन् ॥ २२ ॥ ददाति भिक्षां चेन्नैव
रचनाकर्म गुर्वादेशं विना नहि । आर्द्राङ्गश्वानमार्जारमांसाशनविहङ्गमान् ॥ २३ ॥ वत्सं स्पृष्ट्वा ददद्भिक्षां वर्जयेद्-
गृह्णीयाद्गणियोगकृत् ।

अकाल उत्सृजेद्भूयं स्थानं न प्रतिलेखयेत् । अतिक्राम्यति वा स्थानमप्रमाणं करोति वा ॥ २ ॥ कषायानपि पुष्णाति व्रतानि न करोति च । अभ्याख्यानं च पैशुन्यं परिवादं करोति वा ॥ ३ ॥ पुस्तकाशातनां चैव कुर्याद्भूपातनादिभिः । धर्मध्वजं चोलपट्टं हस्तान्मुञ्चति वा कटे ॥ ४ ॥ ऊर्ध्वो नावश्यकं कुर्यात् कुर्याद्वैरात्रिकं न वा । प्रमार्जयेन्नोपधिं वा तथा भोजनभूमिकाम् ॥ ५ ॥ उद्देशावश्यकक्षोणीं न वा मार्ष्टि प्रमादतः । इत्येतेष्वालोचनायामुपवासं समाचरेत् ॥ ६ ॥ अप्रमार्ज्य कपाटादि य उद्घाटयते यतिः । तस्य वासरपूर्वार्द्धं प्रत्याख्यानं समाचरेत् ॥ ७ ॥ कालेनावश्यकं कुर्यान्न गोचरचरीमपि । न वा नैषेधिकीं चापि तस्य निर्विकृतिः स्मृतं ॥ ८ ॥ षट्पदी पीडनादेव कुर्यादेकाशनं यतिः । भङ्गे योगविधानस्य प्रायश्चित्तमिदं स्मृतम् ॥ ९ ॥ इति योगभङ्गप्रायश्चित्तविधिः । अथ कालिकेषु योगेषु सङ्घट्टोत्क्रमाने भवतस्तद्विधिरुच्यते । तत्र प्रथमं चरसङ्घट्टमुच्यते श्लोकः। "व्यायामार्थं च भिक्षार्थं गन्तव्यं द्वितीयेन तु । व्रजेनाकृतयोगेन न स्पृशेत्कश्चनापरम् ॥ १ ॥ न वा पञ्चेन्द्रियं जीवं मध्ये कुर्यान्मुनिद्वयं । वल्लीद्रुमनिकायादि नान्तः कुर्यात्स्पृशेच्च न ॥ २ ॥ वसतेरेव निर्गच्छेत् कृत्वा सङ्घट्टयोजनम् । आगत्य चैर्यापथिकीं प्रतिक्रम्य विघट्टयेत् ॥ ३ ॥" गमने--भगवन्, संघट्टं संदिसावेमि संघट्टं करेमि संघट्टसंदिसा वणत्थं करेमि काउस्सग्गं अन्नत्थऊ० यावदप्पाणं वोसिरामि । कायोत्सर्गे नमस्कारं विचिन्त्य नमस्कारं पठेत् । आगमने ईर्यापथिकीं प्रतिक्रम्य संघट्टं पडिक्कमामि संघट्टस्स पडिक्कमणत्थं करेमि काउस्सग्गं अन्नत्थ० जाव अप्पाणं वोसिरामि । नमस्कारं विचिंत्य नमस्कारं पठेत् ।

ततो युग्मं विघट्टयेत्। इति चरसङ्घट्टविधिः॥ अथ स्थिरसङ्घट्टविधिः। तत्र स्थिरसङ्घट्टो हस्तपादधर्मध्वजपात्रदोरकझोलिकादिरूपः। स चोच्यते–पूर्वं मुनिरैर्यापथिकीं प्रतिक्रम्य पात्रदोरिकाझोलिकादि समीपे समानीय कालोचिते काष्ठासने पादप्रोञ्छने वा उपविशेत्। पादावूर्द्ध्वजानुसमौ धारयेत्। रजोहरणं सम्मुखवस्त्रिकमग्रे कृतदशं दक्षिणकट्युत्सङ्गे स्थापयेत्। तथा पूर्वं हस्तं सङ्घट्टयेत्। तस्य विधिरयं–रजोहरणदशासन्नातोपरि हस्तौ समीकृतावधोमुखौ न्यसेत् पुनरुन्मुखौ एवं त्रिः कुर्यात्। इति हस्तसङ्घट्टनं। पादौ रजोहरणेन समीकृततलौ त्रिः प्रमार्जयेत् पुनर्मीलयेत् एवं त्रिः कुर्यात्। इति पादसङ्घट्टनं। ततो हस्तौ ऊरुमध्यगतावेव स्थापयेत्। बहिः कृतावसङ्घट्टितौ भवतः। जान्वन्तरालबहिः कृतकराभ्यां गृहीतं वस्तु सङ्घट्टितमप्यसङ्घट्टितं स्यात्। पादौ अधः प्रसारितौ ततः पार्श्वनीतौ सङ्घट्टितावप्यसङ्घट्टितौ भवतः। असङ्घट्टितपादद्वयगर्भगृहीतं पात्रादिसङ्घट्टितमप्यसङ्घट्टितं स्यात् तत्पूर्वं हस्तपादयोर्यत्नः कर्त्तव्यः। अकृतयोगैः स्पृष्टं वस्तु शरीरं च सङ्घट्टितमप्यसङ्घट्टितं स्यात्। आवश्यकदशवैकालिकमण्डलीप्रवेशोत्तराध्ययनाचाराङ्गकल्पव्यवहारदशाश्रुतस्कन्धयोगवाहिनः कृतयोगा उच्यन्ते एतन्न्यूनयोगवाहिनोऽकृतयोगाः। ततो रजोहरणं सङ्घट्टयेत्। तत्सङ्घट्टनस्यायं विधिः–दक्षिणहस्ते तद्दण्डिकां गृहीत्वा वामहस्तेन तद्गर्भदशां गृह्णीयात्। दक्षिणाङ्गुल्यङ्गुष्ठपरिवर्त्तनेन दक्षिणावर्त्तेन भ्रमयेत् पुनर्वामावर्त्तेन एवं त्रिः कुर्यात्। पुनर्दक्षिणकरेण रजोहरणं गृहीत्वा वामकरचुलुकं कृत्वा रजोहरणदशाग्रं त्रिः प्रक्षिपेत्। पुनर्वामकरतलं प्रसार्य रजोहरण्या त्रिर्मार्जयेत्। एवं त्रिः

परं तदा । आर्द्रचर्मादिहस्त्यश्वखरविट्स्पर्शमात्रतः ॥ २४ ॥ तत्स्पर्शे तत्करे भिक्षां वर्जयेदतियत्नतः । क्षीर-तैलघृताभ्यक्ता न स्पृशेत्षण्ढपुंवशाः ॥ २५ ॥ तद्दिने नवनीताक्तकज्जलाङ्कितलोचना । भिक्षां ददाति न ग्राह्या सैवान्यस्मिन् दिने शुभा ॥ २६ ॥ नवनीतेन जीर्णेन तद्दिने कृतमञ्जनं । या बिभर्त्ति न तत्पाणेर्गृह्णीयात्पानभोजने ॥ २७ ॥ अकल्पितेन द्रव्येण स्पृष्टं तद्दिवसेऽखिलम् । न कल्पतेऽन्यदिवसे तत्कल्पं ज्योतिषा विना ॥ २८ ॥ बालवत्सा निजं बालं विमुच्य स्तनपायिनम् । भिक्षां ददाति सानर्हा योग्या चास्तनपायिनम् ॥ २९ ॥ एवं च गोमनुष्यादेः सा चेद्भोजनदायिकः । गृह्णीयात्तत्करे नान्नं तदभावे च कल्पते ॥ ३० ॥ शिलाकाष्ठकपाटादि यत्स्पृष्टं स्यादकल्पितैः । न स्प्रष्टव्यं तच्च तैस्तु विहीनं स्पर्शमर्हति ॥ ३१ ॥ शुष्कास्थिचर्मदशनस्पर्शो यदि कदाचन । जायते तत्र कुर्वीत कायोत्सर्गं च पूर्ववत् ॥ ३२ ॥ सन्निधिश्वानमार्जाराधाकर्मवृषमानुषैः । महिषाश्वताम्रचूडकरिभिश्चैव घट्टितैः ॥ ३३ ॥ व्रतोपघातो जायेत तथान्यकरणादपि । पात्रोपकरणादौ च कणमात्रस्थितेरपि ॥ ३४ ॥ नार्द्रेण प्रासुकेनापि पाणिना वस्तुनो ग्रहः । जलेन युज्यते चाधाकर्म स्पृष्ट्वा ततः परम् ॥ ३५ ॥ व्याख्यानपाठस्तुत्यादि कर्त्तव्यं गुर्वनुज्ञया । अनुप्रेक्षापरिवृत्तिः करणीया यथोचिता ॥ ३६ ॥ उपर्युपरि भाण्डेभ्यश्चतुः पञ्चभ्य एव च । ग्राह्यं चोपरिभाण्डस्थं वस्तु नाधःस्थमेव च ॥ ३७ ॥ परात्परस्थेभ्य एव तिर्यग् भाण्डेभ्य उत्तमः । गृह्णीयाद् द्वित्रिभाण्डेभ्यो न परेभ्यः कदाचन ॥ ३८ ॥ पायसं शर्कराखण्डं दुग्धं काञ्जिकमेव च । तिलचूर्णं तिलपिण्डं पिण्याकं वासरे परे ॥ ३९ ॥ आत्मार्थं

गृहिभिः क्षिप्तं वर्जयेत्(तद्)घृतादिना । तत्कल्पतेऽन्यदिवसे नालिकेरघृतादिकम् ॥४०॥ नालिकेरस्य खण्डं च द्राक्षा सर्वं च पानकम् । शुण्ठी कृष्णामरिचादि तद्दिने कल्पते यतः ॥ ४१ ॥ दधिक्रूसं करंबादि शिखरिण्यादि तद्दिने । न कल्पते चान्यदिने कल्पते तन्महात्मनाम् ॥ ४२ ॥ तक्रार्द्धं घृतरार्द्धं कल्पते व्यञ्जनं सदा । निर्भञ्जनं चान्यं घृताक्षेपे सर्वत्र कल्पते ॥ ४३ ॥ तत्पक्वं चैव पक्वान्नं नीरसं तच्च कल्पते । न भुञ्जीत योगवाही द्वात्रिंशत्कवलाधिकम् ॥ ४४ ॥ अह्नः प्रथमयामान्तश्चर्यायाः प्रतिपादनम् । सङ्घट्टमुक्तमानं च प्रतिपद्येत योगभाक् ॥ ४५ ॥ द्वितीये यामे भिक्षा च कल्पते योगवाहिनाम् । निर्भञ्जनैर्घृतैस्तैलैर्देहगात्रादिगुण्ठनम् ॥ ४६ ॥ वाचनाचार्यसंस्पृष्टं वासो द्वित्रिचतुर्दिनम् । अधिकं चापि सर्वार्हं कल्पते स्वसमाधिना ॥ ४७ ॥ परीषहादिसहनं कर्त्तव्यं निशि वासरे । उद्देशाद्यपि जायेत संयतिभिः समं यदि ॥ ४८ ॥ कार्यं तदा लोचपट्टग्रहणं चान्यथा तथा । व्रतिनीनां सवस्त्राणां कल्पते कर्मयौगिकम् ॥ ४९ ॥ एवमादि च यत्प्रोक्तं हेयोपादेयमञ्जसा । सिद्धान्ते तद्विधेयं स्यात्तथैव गुरुवाक्यतः ॥ ५० ॥ आगमं च गुरोर्वाक्यं विना यद्यद्विधीयते । तन्महादोषहेतुः स्यादिहामुत्र च दुःखदम् ॥ ५१ ॥ अन्यच्च भक्तपानादिग्रहणे चोक्तमानके । कायोत्सर्गादिकरणे विधिश्चिन्त्यः क्षणे क्षणे ॥ ५२ ॥ अनेन विधिना भक्तपानादि प्रतिगृह्यते । भुञ्जते साधवो ग्रासं दोषलेशापहारिणः ॥ ५३ ॥" इति गणियोगचर्या—अथ कदाचिदुक्तचर्याया भङ्गो भवति तदा तत्प्रायश्चित्तविधिरुच्यते—"सङ्घट्टरहितं भुंक्ते तल्लिप्तमथवा परम् । आधाकर्मिकमश्नाति सन्निधिं भुंक्त एव च ॥ १ ॥

अकाल उत्सृजेद्धूर्यं स्थानं न प्रतिलेखयेत् । अतिक्राम्यति वा स्थानमप्रमाणं करोति वा ॥ २ ॥ कषायानपि पुष्णाति व्रतानि न करोति च । अभ्याख्यानं च पैशुन्यं परिवादं करोति वा ॥ ३ ॥ पुस्तकाशातनां चैव कुर्याद्भूपातनादिभिः । धर्मध्वजं चोलपट्टं हस्तान्मुञ्चति वा कटे ॥ ४ ॥ ऊर्ध्वो नावश्यकं कुर्यात् कुर्याद्वैरात्रिकं न वा । प्रमार्जयेन्नोपधिं वा तथा भोजनभूमिकाम् ॥ ५ ॥ उद्देशावश्यकक्षोणीं न वा मार्ष्टि प्रमादतः । इत्येतेष्वालोचनायामुपवासं समाचरेत् ॥ ६ ॥ अप्रमार्ज्य कपाटादि य उद्घाटयते यतिः । तस्य वासरपूर्वार्द्धं प्रत्याख्यानं समाचरेत् ॥ ७ ॥ कालेनावश्यकं कुर्यान्न गोचरचरीमपि । न वा नैषेधिकीं चापि तस्य निर्विकृतिः स्मृतं ॥ ८ ॥ षट्पदी पीडनादेव कुर्यादेकाशनं यतिः । भङ्गे योगविधानस्य प्रायश्चित्तमिदं स्मृतम् ॥ ९ ॥ इति योगभङ्गप्रायश्चित्तविधिः । अथ कालिकेषु योगेषु सङ्घट्टोत्क्रमाने भवतस्तद्विधिरुच्यते । तत्र प्रथमं चरसङ्घट्टमुच्यते श्लोकः। "व्यायामार्थं च भिक्षार्थं गन्तव्यं द्वितीयेन तु । व्रजेनाकृतयोगेन न स्पृशेत्कश्चनापरम् ॥ १ ॥ न वा पञ्चेन्द्रियं जीवं मध्ये कुर्यान्मुनिद्वयं । वल्लीद्रुमनिकायादि नान्तः कुर्यात्स्पृशेच्च न ॥ २ ॥ वसतेरेव निर्गच्छेत् कृत्वा सङ्घट्टयोजनम् । आगत्य चैर्यापथिकीं प्रतिक्रम्य विघट्टयेत् ॥ ३ ॥" गमने–भगवन्, संघट्टं संदिसावेमि संघट्टं करेमि संघट्टसंदिसा वणत्थं करेमि काउस्सग्गं अन्नत्थऊ० यावदप्पाणं वोसिरामि । कायोत्सर्गे नमस्कारं विचिन्त्य नमस्कारं पठेत् । आगमने ईर्यापथिकीं प्रतिक्रम्य संघट्टं पडिक्कमामि संघट्टस्स पडिक्कमणत्थं करेमि काउस्सग्गं अन्नत्थ० जाव अप्पाणं वोसिरामि । नमस्कारं विचिंत्य नमस्कारं पठेत् ।

ततो युग्मं विघट्टयेत् । इति चरसङ्घट्टविधिः ॥ अथ स्थिरसङ्घट्टविधिः । तत्र स्थिरसङ्घट्टो हस्तपादधर्मध्वजपात्रदोरकझोलिकादिरूपः । स चोच्यते—पूर्वं मुनिरैर्यापथिकीं प्रतिक्रम्य पात्रदोरिकाझोलिकादि समीपे समानीय कालोचिते काष्ठासने पादप्रोञ्छने वा उपविशेत् । पादावूर्द्ध्वजानुसमौ धारयेत् । रजोहरणं सम्मुखवस्त्रिकमग्रे कृतदशं दक्षिणकट्युत्सङ्गे स्थापयेत् । तथा पूर्वं हस्तं सङ्घट्टयेत् । तस्य विधिरयं—रजोहरणदशासङ्घातोपरि हस्तौ समीकृतावधोमुखौ न्यसेत् पुनरुन्मुखौ एवं त्रिः कुर्यात् । इति हस्तसङ्घट्टनं । पादौ रजोहरणेन समीकृततलौ त्रिः प्रमार्जयेत् पुनर्मीलयेत् एवं त्रिः कुर्यात् । इति पादसङ्घट्टनं । ततो हस्तौ ऊरुमध्यगतावेव स्थापयेत् । बहिः कृतावसङ्घट्टितौ भवतः । जान्वन्तरालबहिः कृतकराभ्यां गृहीतं वस्तु सङ्घट्टितमप्यसङ्घट्टितं स्यात् । पादौ अधः प्रसारितौ ततः पार्श्वनीतौ सङ्घट्टितावप्यसङ्घट्टितौ भवतः । असङ्घट्टितपादद्वयगर्भगृहीतं पात्रादिसङ्घट्टितमप्यसङ्घट्टितं स्यात् तत्पूर्वं हस्तपादयोर्यत्नः कर्त्तव्यः । अकृतयोगैः स्पृष्टं वस्तु शरीरं च सङ्घट्टितमप्यसङ्घट्टितं स्यात् । आवश्यकदशवैकालिकमण्डलीप्रवेशोत्तराध्ययनाचाराङ्गकल्पव्यवहारदशाश्रुतस्कन्धयोगवाहिनः कृतयोगा उच्यन्ते एतन्न्यूनयोगवाहिनोऽकृतयोगाः । ततो रजोहरणं सङ्घट्टयेत् । तत्सङ्घट्टनस्यायं विधिः—दक्षिणहस्ते तद्दण्डिकां गृहीत्वा वामहस्तेन तद्गर्भदशां गृह्णीयात् । दक्षिणाङ्गुल्यङ्गुष्ठपरिवर्त्तनेन दक्षिणावर्त्तेन भ्रमयेत् पुनर्वामावर्त्तेन एवं त्रिः कुर्यात् । पुनर्दक्षिणकरेण रजोहरणं गृहीत्वा वामकरचुलुकं कृत्वा रजोहरणदशाग्रं त्रिः प्रक्षिपेत् । पुनर्वामकरतलं प्रसार्य रजोहरण्या त्रिर्मार्जयेत् । एवं त्रिः

कुर्यात्। इति रजोहरणीसङ्घट्टविधिः ॥ ततो झोलिकां सङ्घट्टयेत्–झोलिकायाश्चतुरः कोणकान् संमील्य हस्तद्वयगर्भे विधाय रजोहरणोपरि दक्षिणाभिपातेन त्रिन्र्यसेत् त्रिर्वामाभिपातेन एवं त्रिः कुर्यात् । ततो ग्रन्थी दत्वा वामे बाहौ निक्षिपेत्। इति झोलिकासङ्घट्टनं ॥ काष्ठपात्रनालिकेरपात्रअलाबुपात्रमृत्पात्रकटाहकपिधानसङ्घट्टनं प्रतिलेखनारूपमेव दिनचर्याधिकाराद् ज्ञेयं । पात्रादीनां धारणविधिरुच्यते–सङ्घट्टितझोलिकान्तर्यावन्ति पात्राणि संघट्टितानि क्षिप्यन्ते तावन्ति सङ्घट्टितान्येव भवन्ति। तत्र नालिकेरालाबुपात्रे सङ्घट्य पादद्वयगर्भे स्थापयेत्। ततो दवरके ग्रन्थिं दत्वा त्रिस्त्रिः रजोहरणोपरि हस्तद्वयेन परिवर्त्तयेत् । इति दोरकसङ्घट्टनं ॥ तद्दोरकं नालिकेरालाबुपात्रे न्यसेत्। तेन दोरकेण धृतं नालिकेरालाबुपात्रं हस्तपादाभ्यां मुक्तमप्यसङ्घट्टितं न भवति तदुपरि सङ्घट्टस्थापितं कटाहकमप्यसङ्घट्टितं न भवति । पिधानमपि तथैव धृतदवरकालाबुनालिकेरपात्रोपरिस्थापितं संघट्टितं काष्ठपात्रं करपादाभ्यां मुक्तमप्यसंघट्टितं न भवति तेन दोरकेण वृत्तं हस्तपादमुक्तं पात्राद्यपि असंघट्टितं भवति संघट्टितदोरकधृतं हस्तपादमुक्तमप्यसंघट्टितं न भवति तथा संघट्टितं स्यात् इत्यपि पाठः। तदुपरि यदि तृतीयं पात्रं ध्रियते तत्सङ्घट्टितमप्यसङ्घट्टितं भवति तस्मात्तन्न धार्यं। यदि हस्तपादधृते पात्रे दोरकं कराद् मुच्यते तदा दोरकमसङ्घट्टितं न भवति। तथा सङ्घट्टितमपि काष्ठपात्रं अङ्गुष्ठमध्येकृत्याङ्गुलीर्बहिर्विधाय गृह्णीयात्। अन्यथा गृहीतमसङ्घट्टितं स्यात् । नालिकेरालाबुपात्रं सङ्घट्टितमङ्गुलिमध्येकृत्याङ्गुष्ठं बहिर्विधाय गृह्णीयात् अन्यथा गृहीतमसङ्घट्टितं स्यात् । सङ्घट्टितझोलिकान्तर्ग-

तानि सङ्घट्टितानि यद्यन्यपि पात्राणि सङ्घट्टितान्येव भवन्ति । तथा सङ्घट्टितपात्रे समानीतं वस्तु सपात्रं
कृतयोगस्य सङ्घट्टितकरचरणस्य सरजोहरणमुखवस्त्रिकस्य करे दद्यात् यावता योगवाहिनौ कल्पादि मुञ्चतः ।
तत्रापि उपविष्टकरे ऊर्ध्वेन देयं ऊर्ध्वस्य करे उपविष्टेन देयं तथा कृतं सर्वमसङ्घट्टितं भवति । अर्द्धोपविष्टो
मुञ्चति गृह्णाति वा पात्रादि उपरि सङ्घट्टयति निद्रायमाणः सङ्घट्टयति विकथाः कुर्वाणः सङ्घट्टयति असंयो-
गेन सङ्घट्टयति तत्सर्वमसङ्घट्टितं भवति भूमिपतितं वस्तु गृह्णाति गच्छतः स्थितस्य वा रजोहरणमुखवस्त्रिक-
योरेकं शरीराद्विघट्टते दण्डं वा ऊर्ध्वस्थो वामाङ्गुष्ठप्रदेशिन्यन्तरालेन स्थापयति गच्छन्तौ स्थितौ वा भुजौ
वामदक्षिणतो नयति प्रकारैरेभिः सर्वमसङ्घट्टितं भवति । इति स्थिरसङ्घट्टविधिः ॥ उत्क्रमाने तु नालिकेराला-
बुपात्रेषु पादगर्भे दन्तशृङ्गादि परित्यजेत् । भग्नपात्रसन्धाने तृसीकरणं सन्धाने वा लोहताम्ररीरीरूप्यस्वर्ण-
सूत्रपट्टादिवर्जनं ताम्रवर्त्तलोहसिद्धं पानान्नं न गृह्णीयात् । दन्तशङ्खपरिधानायाः कज्जलाञ्जितनेत्रायाः करेण
पानान्नं न गृह्णीयात् । केचिदत्र काचपरिधानामपि स्त्रियं परिहरन्ति । ताम्रलोहदंतरीरीतर्द(?)भिन्नं भिक्षां
गृह्णीयात् । शेषं सङ्घट्टवत् । इत्युक्तमानविधिः ॥ अथ कालकेषु कालग्रहणं तत्रोचितानुचितं कालमाचक्षते ।
तत्र कालग्रहणं नित्यं पङ्क्त्या योगोद्वहने षण्मासान् यावद्युज्यते ततः परं योगोद्वहने न युज्यते । गणियोगव-
र्जिता योगा आषाढपूर्णिमामारभ्य कार्त्तिकपूर्णिमापर्यन्तं समाप्यन्ते निश्चयेन ततोऽन्यत्र काले मेघविद्युदा-
दिसंभवे न कालग्रहणं युज्यते गणियोगेऽपि आषाढकार्त्तिकपूर्णिमयोर्मध्य एव समाप्तिर्विधेया शेषेषु विशे-

षेण तत्रापि चैत्रशुक्लपञ्चम्या आरभ्य वैशाखकृष्णप्रतिपदं यावत् आश्विनशुक्लपञ्चमीमारभ्य कार्त्तिककृष्णप्रतिपदं यावत् द्वादश द्वादश दिनानि सर्वत्र कुलदेवतापूजार्थं कृतप्राणिवधेन महानस्वाध्यायकालः । तत्र कालग्रहणागमपाठो न युज्यते । ततः श्रावणभाद्रपदाश्विनार्द्धं एव पश्चादुपासनीयमपि कालग्रहणादि श्राद्धपक्षाद्यमावास्यान्तरे एव पूर्णीक्रियते । ततः पश्चादपि भवतु । अन्योऽप्यस्वाध्यायकालः कथ्यते—आर्द्रादिस्वात्यन्तनक्षत्रदशगते रवौ विद्युद्गर्जितवृष्टिभिर्नास्वाध्यायकाल ऋतुस्वभावात् । तत्राप्युल्कापाते प्रहरमस्वाध्यायः गर्जिते द्विप्रहरमस्वाध्यायः शेषकालेषु गर्जितविद्युदादिभिः सर्वदैवास्वाध्यायः । तथा सूर्येन्दुग्रहणे अहोरात्रमस्वाध्यायः । तथा योगोद्वहनक्षेत्राच्चतुर्दिक्षु षष्टिहस्ताद्यावत् एभिः प्रकारैरियत्कालमस्वाध्यायः स उच्यते,—पञ्चेन्द्रियजीवमरणादिभङ्गात् प्रहरत्रयमस्वाध्यायः । अथवा अस्वाध्यायकारिणी मक्षिकामात्रेऽपि जीवाङ्गे सर्वस्मिन्नपि पतिते सर्वमहोरात्रमस्वाध्यायः अन्यस्मिन् सूर्योद्गमे पूर्वाहोरात्रे व्यतीते स्वाध्याययोग्यः कालो भवति 'अहोरत्तित्ति' इत्यागमवचनात् । समीपगृहे षष्टिहस्तान्तः प्रसूतायां स्त्रियां सप्ताष्टदिनान्यस्वाध्यायः "अट्ठदिणा ते उसत्तसुकहिए" इत्यागमवचनात् । एवमस्वाध्यायकालं परित्यज्यान्यत्र कालग्रहणागमपाठस्वाध्यायप्रस्थापनादि कर्त्तव्यं । तथा च पञ्चकल्यागमे अङ्गश्रुतस्कन्धानामुद्देशः शुक्लपक्ष एव विधीयते । तृतीयापञ्चमीदशम्येकादशीत्रयोदशीतिथिष्विति आचारणाग्रन्थेषु पुनश्चन्द्रबलादि यथोक्ततिथिवारनक्षत्रेषु । इति स्वाध्यायास्वाध्यायकालपरिज्ञानं । तथा च योगवाही योगारम्भे कृतलोचः धौतोप-

ध्ययनस्य समुद्देशानुज्ञे मुवंक्षका० ५ । ६ । सप्तमदिने आ० काल० १ तृतीयाध्ययनस्योद्देशः प्रथमद्वितीययोरुद्देशयोरु० मुवंक्षका० ७ । ७ । अष्टमदिने आ० काल० १ तृतीयचतुर्थयोरुद्देशयोरु० ३ मुवंक्षका० ६ । ८ । नवमदिने आ० काल० १ पञ्चमषष्ठयोरुद्देशयोरु० मुवंक्षका० ६ । ९ । दशमदिने आ० काल० १ सप्तमाष्टमयोरुद्देशयोरु० ३ मुवंक्षका० ६ । १० । एकादशदिने आ० काल० १ नवमदशमयोरुद्देशयोरु० मुवंक्षका० ६ । ११ । द्वादशदिने आ० काल० १ एकादशद्वादशयोरुद्देशयोरु० ३ मुवंक्षका० ६ । १२ । त्रयोदशदिने आ० काल० १ त्रयोदशचतुर्दशयोरुद्देशयोरु० ३ मुवंक्षका० ६ । १३ । चतुर्दशदिने आ० का० १ पञ्चदशषोडशयोरु० अध्ययनस्य समुद्देशानुज्ञे मुवंक्षका० ६ । १४ । पञ्चदशदिने आ० काल० चतुर्थाध्ययनस्यो १ प्रथमद्वितीययोरुद्देशयोः ३ मुवंक्षका० ६ । १५ । षोडशदिने आ० का० तृतीयचतुर्थयोरुद्देशयोरु० ३ मुवंक्षका० ६ । १६ । काल० १ तृतीयचतुर्थयोरुद्देशयोरु० ३ मुवंक्षका० ६ । १६ । सप्तदशदिने आ० काल० १ पञ्चमषष्ठयोरुद्देशयोरु० ३ मुवंक्षका० ६ । १७ । अष्टादशदिने आ० का० १ सप्तमाष्टमयोरुद्देशयोरु० ३ मुवंक्षका० ६ । १८ । एकोनविंशतितमदिने आ० काल० १ नवमदशमयोरुद्देशयोरु० ३ मुवंक्षका० ६ । १९ । विंशतितमदिने आ० काल० १ एकादशद्वादशयोरुद्देशयोरु० मुवंक्षका० ६ । २० । एकविंशतितमदिने आ० काल० १ त्रयोदशचतुर्दशयोरुद्देशयोरु० मुवंक्षका० ६ । २१ । अत्र च प्रत्यहमुद्देशद्वयस्य उद्देशसमुद्देशानुज्ञा नियता एव । द्वाविंशतितमे दिने आ० काल० १ पञ्चदशषोडशयोरुद्देशयोरु० ३ । चतुर्थाध्ययनस्य समुद्दे-

शानुज्ञे मुवंक्षका ६ । २२ । त्रयोविंशतितमदिने आ० काल० १ पञ्चमाध्ययनस्योद्देशः प्रथमद्वितीययोरुद्देशयोरु० ३ मुवंक्षका० ६ । २३ । चतुर्विंशतितमदिने आ० काल० १ तृतीयचतुर्थयोरुद्देशयोरु० ३ । मुवंक्षका० ६ । २४ । पञ्चविंशतितमदिने आ० काल० १ पञ्चमपष्ठयोरुद्देशयोरु० ३ मुवंक्षका० ६ । २५ । षड्विंशतितमदिने आ० काल० १ सप्तमाष्टमयोरुद्देशयोरु० ३ मुवंक्षका० ६ । २६ । सप्तविंशतितमे दिने आ० काल० १ नवमदशमयोरुद्देशयोरु० ३ मुवंक्षका० ६ । २७ । अष्टाविंशतितमदिने आ० काल० १ एकादशद्वादशयोरु० ३ पञ्चमाध्ययनस्य समुद्देशानुज्ञे च मुवंक्षका० ८ । २८ । एकोनत्रिंशतमदिने आ० काल० १ षष्ठाध्ययनस्योद्देशः प्रथमद्वितीययोरुद्देशयोरु० ३ मुवंक्षका० ७ । २९ । त्रिंशत्तमदिने आ० काल० १ तृतीयचतुर्थयोरुद्देशयोरु० ३ षष्ठाध्ययनस्य समुद्देशानुज्ञे च मुवंक्षका० ८ । ३० । एकत्रिंशत्तमदिने आ० का० १ सप्तमाध्ययनस्योद्देशः प्रथमद्वितीययोरुद्देशयोरु० मुवंक्षका० ७ । ३१ । द्वात्रिंशत्तमदिने आ० काल० १ तृतीयचतुर्थयोरुद्देशयोरु० ३ मुवंक्षका० ६ । ३२ । त्रयस्त्रिंशत्तमदिने आ० काल० १ पञ्चमषष्ठयोरुद्देशयोरु० ३ सप्तमाध्ययनस्यसमुद्देशानुज्ञे मुवंक्षका० ८ । ३३ । चतुस्त्रिंशत्तसदिने आ० काल० १ अष्टमाध्ययनस्योद्देशः प्रथमद्वितीययोरुद्देशयोरु० ३ मुवंक्षका० ७ । ३४ । पञ्चत्रिंशत्तमदिने आ० काल० १ तृतीयचतुर्थयोरुद्देशयोरु० ३ मुवंक्षका० ६ । ३५ । षट् त्रिंशत्तमदिने आ० काल० १ पञ्चमषष्ठयोरुद्देशयोरु० मुवंक्षका० ३ । ३६ । सप्तत्रिंशत्तमदिने आ० काल० १ सप्तमाष्टमयोरुद्देशयोरु० ३ मुवंक्षका० ६ । ३७ । अष्टात्रिंशत्तमदिने आ० काल० १

नवमदशमयोरु० ३ मुवंक्षका० ६ । ३८ । एकोनचत्वारिंशत्तमदिने आ० काल० १ एकादशद्वादशयोरुद्देशयोरु० ३ मुवंक्षका० ६ । ३९ । चत्वारिंशत्तमदिने आ० काल० १ त्रयोदशचतुर्दशयोरुद्देशयोरु० मुवंक्षका० ६ । ४० । एकचत्वारिंशत्तमदिने आ० काल० १ पञ्चदशषोडशयोरुद्देशयोरु० मुवंक्षका० ६ । ४१ । द्विचत्वारिंशत्तमदिने आ० काल० १ सप्तदशाष्टादशयोरुद्देशयोरु० ३ मुवंक्षका० ६ । ४२ । त्रिचत्वारिंशत्तमदिने आ० काल० १ एकोनविंशतितमविंशतितमयोरुद्देशयोरु० ३ अष्टमाध्ययनस्य समुद्देशानुज्ञे च मुवंक्षका० ८ । ४३ । चतुश्चत्वारिंशत्तमदिने आ० काल० १ श्रुतस्कन्धसमुद्देशः मुवंक्षका० १ । ४४ । पञ्चचत्वारिंशत्तमदिने आ० काल० १ नन्दी १ श्रुतस्कन्धानुज्ञा मु० १ वं १ क्ष० १ का० १ । ४५ । इति महानिशीथश्रुतस्कन्धे दि० ४५ नन्दी १ कालिका आगाढयोगाः । अत्र पञ्चचत्वारिंशदाचाम्लानि अयुक्तपानकैरेव विधीयन्ते । यन्त्रकंन्यासः । अथसर्वयोगोद्वहनकथनानन्तरं बहुकालावधेः बहुक्रियस्य बहुवक्तव्यस्य विवाहप्रज्ञप्त्यभिधानस्य भगवत्यङ्गस्य गणियोगोद्वहनक्रमस्य [1]विधिरभिधीयते । सचायं षण्मासाः षड्दिवसान्विता अवधिः । तत्र दिनसंख्या १८६ भवति । तत्र पञ्चमाङ्गे श्रुतस्कन्धे नास्ति एकचत्वारिंशच्छतानि, एतस्य चर्याशेषयोगोद्वहनचर्याक्रमेण पूर्वमेवोक्ता, तत्र प्रथमदिने आचाम्लं १ नन्दी १ काल० १ प्रथमशतस्योद्देशः प्रथमशतस्य प्रथमद्वितीययोरुद्देशयोरुद्देशसमुद्देशानुज्ञाः मुख० ८ वन्द० ८ क्षमा० ८ कायो० ८ एवं द्वितीय-

१ विंशतितमं यन्त्रं द्रष्टव्यम् ।

तृतीयचतुर्थदिनेषु प्रथमशतस्य तृतीयाद्युद्देशद्वयं द्वयं त्रिभिःकालैस्त्रिभिः कालैस्त्रिभिर्दिनैरेकान्तनिर्विकृति-
काचाम्लैः उद्दिश्यते समुद्दिश्यते अनुज्ञायते च। एषु मुवंक्षका० षट् षट् ४ पञ्चमदिने आ० काल० १ नवम-
दशमगोरुद्देशयोरु० २ प्रथमशतस्य समुद्देशानुज्ञे च मुवंक्षका० ८। ५। षष्ठदिने आ० काल० १ द्वितीयश-
तस्य उद्देशः द्वितीयशतस्य प्रथमोद्देशस्य स्कन्धकाभिधानस्योद्देशसमुद्देशौ, यदि तस्मिन् दिने योगवाहिनः
स्कन्धकोद्देशो मुखपाठं नागतः तदा तत्रैव दिने तस्यानुज्ञा नोचेदागतः तदा तद्द्वितीयदिने आचाम्लं विधाय
मुखपाठमागतः सोनुज्ञाप्यः मुवंक्षका० ३। ६ सप्तमदिने आ० काल० १ स्कन्धकानुज्ञा मुवंक्षका० १। ७
अष्टमदिने नि० काल० १ प्रथमद्वितीययोरुद्देशयोरु० ३ मुवंक्षका० ६। ८। नवमदशमैकादशदिनेषु तृती-
यचतुर्थपञ्चमपष्ठसप्तमाष्टमोद्देशानां पूर्ववत् उद्दे० मुवंक्षका० ६ सर्वत्र दिनत्रये । द्वादशदिने आ० काल० १
नवमदशमयोरुद्देशयोरु० ३। द्वितीयशतस्य समुद्देशानुज्ञे च मुवंक्षका० ८। १२ द्वितीयशते सप्त दिनानि
दिनं प्रति पञ्चदत्तयो भवन्ति पानभोजनयोः तिस्रो भोजनस्य, द्वे पानकस्य अथ द्वे भोजनस्य तिस्रः पान-
कस्य, अथवा द्विद्विपानभोजनयोरेका लवणस्य। दत्तिसंज्ञेन–यतिर्गृहस्थगृहं गतः, प्रथमं यद्दत्तं तदेव गृहीत्वा
निर्गच्छति नान्यद्वस्तु गृह्णाति न द्वितीयं गृह्णाति इति यतीनां दत्तिः। गृहिणां तु दत्तिः प्रत्याख्यानमजानन्
पात्रे यत्प्रथममेव ददाति नरो वा नारी वा तेनैव तृप्तिः क्रियते नान्यद् गृह्यते इति गृहिणां दत्तिः। त्रयो-

1 दत्ति शब्देन इत्यपि।

दशदिने आ० काल० १ तृतीयशतस्योद्देशः प्रथमोद्देशस्योद्दे० ३ मुवंक्षका० ४। १३। चतुर्दशदिने आ० काल० १ तृतीयशतस्य द्वितीयोद्देशस्य चमराख्यस्यो० ३ मुवंक्षका० ३। १४। यतिस्तत्रैव दिने चमरोद्देशो मुखपाठमायाति, तदा तत्र दिने तस्यानुज्ञा कर्तव्या नोचेदायाति, तदा द्वितीयदिने तस्मिन् मुखपाठमागते आचाम्लेन अनुज्ञा विधेया, तत्र मुवंक्षका० १। १५। इति पञ्चदश दिनानि गतानि, एतेषु व्यतीतेषु पञ्चदशसु। कालेष्वतिक्रान्तेषु षष्ठयोगो लगति, अनुक्रमेण षष्ठयोगे पञ्चदिनानि निर्विकृतिकं षष्ठदिने आचाम्लं षट् दिनानि निर्विकृतिकं, सप्तमदिने आचाम्लं पुनरनयैव युक्त्या पञ्चदिनानि निर्विकृतिकं षष्ठदिने आचाम्लं तावद्यावद्गोशालोद्देशः, गोशालस्तु पञ्चदशदिनानन्तरं चतुस्त्रिंशद्दिनपर्यन्तं १५ षोडशदिने काल० १ तृतीयचतुर्थयोरुद्देशयोरु० ३ मुवंक्षका० ६। १६। सप्तदशदिने काल० १ पञ्चमषष्ठयोरुद्देशयोरु० ३। मुवंक्षका० ६। १७। अष्टादशदिने काल० १ सप्तमाष्टमयोरु० ३ मुवंक्षका० ६। १८। एकोनविंशतितमदिने काल० १ नवमदशमयोरुद्देशयोरु० ३ तृतीयशतस्य समुद्देशानुज्ञे मुवंक्षका० ८। १९। अत्रापि तृतीयशते पञ्च दत्तयः। विंशतितमदिने काल० १ चतुर्थशतस्योद्देशः चतुर्थशतस्य प्रथमानां चतुर्णामुद्देशानामादिमानामुद्देशसमुद्देशानुज्ञाः चतुर्णां परेषामन्तिमानामुद्देशसमुद्देशानुज्ञाः मुवंक्षका० ७। २०। एकविंशतितमदिने काल० १ नवमदशमयोरुद्देशयोरु० ३ चतुर्थशतस्य समुद्देशानुज्ञे च मुवंक्षका० ८। २१। द्वाविंशतितमदिने काल० १

१ मुखपाठे समायाति इत्यपि।

पञ्चमशतस्योद्देशः पञ्चमशतस्य प्रथमद्वितीययोरुद्देशयोरु० ३ मुवंक्षका० ७ । २२ । त्रयोविंशतितमदिने काल० १ तृतीयचतुर्थयोरुद्देशयोरु० ३ । मुवंक्षका० ६ । २३ । चतुर्विंशतितमदिने काल० १ पञ्चमषष्ठयोरुद्देशयोरु० ३ मुवंक्षका० ६ । २४ । पञ्चविंशतितमे दिने काल० १ सप्तमाष्टमयोरुद्देशयोरु० ३ मुवंक्षका० ६।२५। षड्विंशतितमदिने काल० १ नवमदशमयोरु० ३ पञ्चमशतस्य समुद्देशानुज्ञे च मुवंक्षका० ८ । २६ । षष्ठे सप्तमे अष्टमे च शते पञ्चमवत्युक्तिः, द्वाविंशतितमदिनमारभ्य एकचत्वारिंशत्तमदिनं यावत् पञ्चमाद्यानि अष्टमपर्यन्तानि शतानि पञ्चभिः पञ्चभिर्दिनैरतिक्रामन्ति ४१ । द्विचत्वारिंशत्तमदिने काल० १ नवमशतस्योद्देशः सप्तदशोद्देशानामादिमानामुद्देशः सप्तदशोद्देशानामन्तिमानामुद्देशः नवमशतस्य समुद्देशः सप्तदशोद्देशानामादिमानां समुद्देशः सप्तदशोद्देशानामन्तिमानां समुद्देशः नवमशतानुज्ञा सप्तदशानामादिमानामनुज्ञा सप्तदशानामन्तिमानामनुज्ञा मुवंक्षका० ९ नवमदशमैकादशद्वादशत्रयोदशचतुर्दशशतेषु एकैव रीतिः, चतुस्त्रिंशचतुस्त्रिंशत् द्वादश दश दश दश क्रमादुद्देशाः सर्वत्र अर्धेनान्तिमा द्विधा कृत्वा एकस्मिन्नेव एकस्मिन्नेव दिने एकेन एकेनैव कालेन शतैः सममुद्दिश्यन्ते अनुज्ञायन्ते च । द्विचत्वारिंशत्तमदिनमारभ्य सप्तचत्वारिंशद्दिनपर्यन्तमेकैव रीतिः मुवंक्षका० सर्वेषु प्रत्येकं नव नव । ४७ । अष्टचत्वारिंशत्तमदिने आ० काल० १ पञ्चदशशतस्य गोशालनाम्ना उद्देशसमुद्देशौ, यदि तस्मिन् दिने गोशालशतं योगवाही पठति तदा तत्रैव दिने अनुज्ञा, नोचेद्द्वितीयदिने द्वितीयाचाम्लं विधाय द्वितीयका-

लेनानुज्ञां करोति एकदिने मुवंक्षका० २ द्वितीयदिने मुवंक्षका० १ दिनद्वये दत्तित्रयं द्वे भोजनस्य एका पानस्य, अथवा द्वे पानस्य एका भोजनस्य, गोशालशतानुज्ञे यावदेकोनपञ्चाशदिनानि एकोनपञ्चाशत् काला जाताः, स्कन्धकचमरोद्देशगोशालशतेषु अनुज्ञापितेषु पुरतः क्षमाश्रमणकालादि कर्तुं न कल्प्यते, एतन्मध्ये एव सप्ततिः कालग्रहणानि, मुखवस्त्रिकावन्दनकक्षमाश्रमणकायोत्सर्गादि द्विवेलं विधाय समापनीयम् । एकोनपञ्चाशद्दिनेभ्यः ऊर्ध्वं गोशालेनुज्ञाते अष्टमयोगा लगन्ति, तेषु सप्तनिर्विकृतिकानि अष्टममाचाम्लं नित्यमेवैवं पुरतोपि, अथवा संप्रति स्थविराणामिति मतम् । अष्टमीषु चतुर्दशीष्वाचाम्लं, शेषदिनेषु निर्विकृतिकानि षण्मासान्तं, गोशाले दत्तित्रयभङ्गे सर्वं भग्नं भवति, चमरादूर्ध्वमष्टमयोगे लग्ने व्यञ्जनादि विकृतिगतादि गुर्वनुज्ञातकवलादि अन्ययोगनिर्विकृतिकवत् कल्पते, अतः "विगई विसज्जावणत्थं ओहडावणत्थं" वा कायोत्सर्गः क्रियते "अन्नत्थ० जाव अप्पाणं वोसिरामि" नमस्कारचिन्तनं नमस्कारभणनं च, तत्प्रथमदिनेषु पूर्वोक्तगणियोगरीत्या व्यञ्जनादिग्रहणं, गोशालादूर्ध्वं पञ्चाशत्तमादिदिनेषु एकैकस्य शतस्य एकैनैकेन कालेन षड्विंशतिशतानां पञ्चसप्ततिदिनपर्यन्तमुद्देशसमुद्देशानुज्ञाः तत्र शतमध्यगतानामुद्देशानामुद्देशसमुद्देशानुज्ञाः अर्धानामादिमसंज्ञाया अर्धानामन्तिमसंज्ञाया येषु शतेषु विषमा उद्देशास्तेषु एकाधिका आदिमा एव विधीयन्ते, तद्यथा पञ्चाशत्तमदिने काल० १ षोडशशते उद्देशाश्चतुर्दश आदिमाः सप्त अन्तिमाः सप्त एषामन्येषां च तत्रैव दिने शतैः सह उद्देशसमुद्देशानुज्ञाः मुवंक्षका० ९।५०।

सप्तदशो शते सप्तदशोद्देशाः आदिमा नव ९ अन्तिमा अष्ट ८ मुवंक्षका०
एकपञ्चाशत्तमदिने काल० १ सप्तदशो शते सप्तदशोद्देशाः आदिमा नव ९ अन्तिमा अष्ट ८ मुवंक्षका०
९ । ५१ । द्विपञ्चाशत्तमदिने काल० १ अष्टादशशते उद्देशा दश १० आदिमाः पञ्च ५ अन्तिमाः पञ्च ५
मुवंक्षका० ९ । ५२ । त्रिपञ्चाशत्तमदिने काल० १ एकोनविंशतितमे शते उद्देशा दश १० आदिमाः पञ्च ५
अन्तिमाः पञ्च ५ मुवंक्षका० ९ । ५३ । चतुष्पञ्चाशत्तमदिने काल० १ विंशतितमशते उद्देशाः दश १० आ-
दिमाः पञ्च ५ अन्तिमाः पञ्च ५ मुवंक्षका० ९ । ५४ । पञ्चपञ्चाशत्तमदिने काल० १ एकविंशतितमे शते
उद्देशाः अशीतिः ८० आदिमाश्चत्वारिंशत् ४० अन्तिमाश्चत्वारिंशत् ४० मुवंक्षका० ९ । ५५ । षट्पञ्चाशत्त-
मदिने काल० १ द्वाविंशतितमे शते उद्देशाः षष्टिः ६० आदिमास्त्रिंशत् ३० अन्तिमास्त्रिंशत् ३० मुवंक्षका०
९ । ५६ । सप्तपञ्चाशत्तमदिने काल० १ त्रयोविंशतितमे शते उद्देशाः पञ्चाशत् ५० आदिमाः पञ्चविंशतिः
२५ अन्तिमाः पञ्चविंशतिः २५ मुवंक्षका० ९ । ५७ । अष्टपञ्चाशत्तमदिने काल० १ चतुर्विंशतितमे शते
उद्देशाः चतुर्विंशतिः आदिमा द्वादश अन्तिमा द्वादश मुवंक्षका० ९ । ५८ । एकोनषष्टितमे दिने काल० १
पञ्चविंशतितमे शते उद्देशाः द्वादश आदिमाः षट् अन्तिमाः षट् मुवंक्षका० ९ । ५९ । षष्ट्यादि चतुष्पष्टि-
पर्यन्त ६० । ६१ । ६२ । ६३ । ६४ । दिनेषु काल० ५ षड्विंशतितमे बन्धिशते सप्तविंशतितमे करांशुकशते
अष्टाविंशतितमे कर्मसमार्जनशते एकोनत्रिंशत्तमे कर्मप्रस्थापनशते त्रिंशत्तमे समवसरणशते एतेषु पञ्चस्वपि
शतेषु एकादशैकादशोद्देशाः अर्धार्धेन कृत्वा उद्देशसमुद्देशानुज्ञा आरोप्यन्ते, आदिमाः षट् षट् अन्तिमाः

पञ्च पञ्च एतेषु सुवंक्षका० नव नव ६४ पञ्चषष्टितमदिने काल० १ एकत्रिंशत्तमे उपपातशते उद्देशा अष्टाविंशतिः २८ आदिमाश्चतुर्दश १४ अन्तिमाश्चतुर्दश १४ सुवंक्षका० ९। ६५। षट्षष्टितमदिने काल० १ द्वात्रिंशत्तमे उद्वर्तनाशते उद्देशाः अष्टाविंशतिः २८ आदिमाश्चतुर्दश १४ अन्तिमाश्चतुर्दश १४ सुवंक्षका० ९। ६६ सप्तषष्टितमदिने काल० १ त्रयस्त्रिंशत्तमे शते एकेन्द्रियमहाज्योत्स्नाशतानि द्वादश १२, तेषु उद्देशाश्चतुर्विंशत्यधिकशतमेकं आदिमा द्वाषष्टिः ६२ अन्तिमा द्वाषष्टिः सुवंक्षका० ९। ६७। अष्टषष्टितमदिने काल० १ चतुस्त्रिंशत्तमे शते श्रेणिशतानि द्वादश १२, तेषु उद्देशाः शतमेकं चतुर्विंशत्यधिकं १२४ आदिमा द्वाषष्टिः ६२ अन्तिमा द्वाषष्टिः ६२ सुवंक्षका० ९। ६८। एकोनसप्ततितमे दिने काल० १ पञ्चत्रिंशत्तमे शते एकेन्द्रियमहाज्योत्स्नाशतानि द्वादश, तेषु उद्देशा द्वात्रिंशदधिकं शतं १३२ आदिमाः षट्षष्टिः ६६ अन्तिमाः षट्षष्टिः ६६। सुवंक्षका० ९। ६९। सप्ततितमदिने काल० १ षट्त्रिंशत्तमे शते द्वीन्द्रियमहाज्योत्स्नाशतानि द्वादश १२ तेषु उद्देशा द्वात्रिंशदधिकं शतं १३२ आदिमाः षट्षष्टिः ६६ अन्तिमाः षट्षष्टिः ६६ सुवंक्षका० ९। ७०। एकसप्ततितमदिने काल० १ सप्तत्रिंशत्तमे शते त्रीन्द्रियमहाज्योत्स्नाशतानि द्वादश तेषु उद्देशा द्वात्रिंशदधिकं शतं १३२ आदिमाः ६६ अन्तिमाः ६६ सुवंक्षका० ९। ७१। द्वासप्ततितमदिने काल० १ अष्टात्रिंशत्तमशते चतुरिन्द्रियमहाज्योत्स्नाशतानि द्वादश १२ तेष्वपि उद्देशाः १३२ आदिमाः ६६ अन्तिमाः ६६ सुवंक्षका० ९। ७२। त्रिसप्ततितमदिने काल० १। एकोनचत्वारिंशत्तमे शते असंज्ञिप-

श्चेन्द्रियमहाज्योत्स्नाशतानि द्वादश तेषु उद्देशाः १३२ आदिमाः ६६ अन्तिमाः ६६ मुवंक्षका० ९ । ७३ चतुः-सप्ततितमदिने काल० १ चत्वारिंशत्तमे शते संज्ञिपञ्चेन्द्रियमहाज्योत्स्नाशते उद्देशा एकत्रिंशदधिकं शत-द्वयं २३१ आदिमाः ११६ अन्तिमाः ११५ मुवंक्षका० ९ । ७४ । पञ्चसप्ततितमे दिने काल० १ एकचत्वारिंशत्तमे राशिज्योत्स्नाशते उद्देशाः पण्णवत्यधिकं शतं १९६ आदिमाः ९८ अन्तिमाः ९८ मुवंक्षका० ९ । ७५ । षट्सप्ततितमदिने आ० काल० १ अङ्गसमुद्देशः मुवंक्षका० १ । ७६ । सप्तसप्ततितमदिने आ० काल० १ नन्दी १ भगवत्यङ्गानुज्ञा मुवंक्षका० १ । ७७ । एत्थसंगहणिगाहाओ "अठदसुदेसाइं दोचउत्तीसाइं बारसं-वेगं । सयं तिन्नि दसुद्देसाइं गोसालसयं तु एक्क सरं ॥ १ ॥ इत्थ अट्ठसयाइं दसगुदेसाइं इत्यर्थः । वीए पढमुद्देसे खंदोतइयंमि चमरओ वीए । गोसालो पन्नरसमे एण पणातिग हुंति दत्तीओ ॥ २ ॥ एआ सभत्तपाणा पारणदुगेण होइ अणु नवण । खंदाईण कम्मेणं वोच्छामि विहिं अणुभाए ॥ ३ ॥ चमरम्मि छट्ठ जोगो विगईए विसज्जणत्थ मुस्सग्गो । अट्ठम जोगो लग्गई गोसालसए अणुन्नाए ॥ ४ ॥ चउदससतरसतिन्निउ दस उद्देसाइं तह असी सट्ठी । पन्नासा चउवीसा वारस पंचसुएकारा ॥ ५ ॥ अट्ठावीसा दोसु चउवीससयं च पंच छत्तीसा । दोन्नि सयाई गतीसा चरिमसयं चेव छन्नऊअं ॥ ६ ॥ पनरस कालग एहिं पनरसदिवसेहिं चमर अणुन्नाए । लग्गइय छट्ठजोगो पणनिवीआ अंबिलं छट्ठं ॥ ७ ॥ अउणा वन्न दिणेहिं अउणा (४९) वन्ना सएहिं कालेहिं । अट्ठम जोगो लग्गइ अट्ठम हि अहे निरुद्धं च ॥ ८ ॥ संपइ सामायारीए गोसाल अणु-

न्नाए अट्ठमी चउद्दसीसु अंबीलं कीरइति महानिसीहे विही अज्झयणं १ नव २ सोलस ३ सोलस ४ बारस ५ चउक्क ६ छ ७ वीसा ८ अट्ठज्झयणुद्देसा तेसीइ महानिस्सीहस्सा ॥ १ ॥ यन्त्रकन्यासः[1] ॥ एवं विवाहप्रज्ञप्तिपञ्चमाङ्गयोगेषु सप्तसप्तति दिनानि सप्तति कालाश्च पूर्यन्ते। शेषाणि नवोत्तरशतदिनानि विना कालैर्विना वन्दनकक्षमाश्रमणकायोत्सर्गादिकर्मभिः संघट्टोक्तमानप्रत्याख्याननिर्विकृतिकादिमुखवस्त्रिकावन्दनकैरेवोद्देशादिवर्जितानि पूर्यन्ते। गोशालानन्तरं अष्टमीचतुर्दशीदिनयोः आचाम्लं शेषदिनेषु निर्विकृतिकानि षण्मासाः षड्दिवसपर्यन्तम्। एकोनपञ्चाशद्दिनानन्तरं षडशीत्युत्तरशतदिनानि यावदायुक्तपानकं भगवतीयोगेषु षडशीत्युत्तरशतदिनानि यावत् सर्वत्र भवति। संघट्टा कालिकयोगेषु निश्चिता एव। इति भगवत्यां गणियोगविधिः। अत्र मास ६ दिन ६ सर्वदिन १८६ काल ७७ नन्दी २ कालिका आगाढयोगाः। अत्र च सर्वयोगेषु अध्ययनवर्गशत उद्देशसमुद्देशानन्तरं तेषामध्ययनोद्देशादीनामुद्देशसमुद्देशानुज्ञाः कथिताः। इयं युक्तिरस्मत्पूर्वगुरूणां सिद्धान्ताम्बुधिपारगाणां श्रीजगत्तिलकसूरिपादानामुपदेशात्। अस्मद्गुर्वाचरणाच्च पूर्वसामाचारीषु पुनरुद्देशाध्ययनानामनुज्ञापनानन्तरं वर्गाध्ययनशतादीनामनुज्ञाः। ततः स्याद्वादशालिनि जिनमते नोभयत्रापि दोषः। स्वगुरुसंप्रदाय एव प्रमाणीकार्यः। तथा च योगोद्वहने क्रियमाणे तिथिक्षयवृद्ध्योरौदयिक्येव तिथिर्ग्राह्या। संघट्टायुक्तमानकालस्वाध्यायप्रतिक्रमणप्रत्याख्यानादिक्रियाभङ्गे वान्तरो-

---

१ एकविंशतितमं यन्त्रं द्रष्टव्यम्।

गोद्गमाकालमलोत्सर्गदेशविड्वरपलायनप्रभृत्युपद्रवेषु भग्नदिनानि योगोद्वहने परिपूर्णे तथैव रीत्या पूरणीयानि योगोद्वहनकालसंख्या यथा—आवश्यके दिन[1] ८ दशवैकालिके दिन १५ मण्डलिप्रवेशे दिन ७ उत्तराध्ययने दिन २८ आचाराङ्गे दिन ५० स्थानाङ्गे दिन १८ समवायाङ्गे दिन ३ निशीथे दिन १० कल्पव्यवहारदशाश्रुतस्कन्धेषु दिन २० सूत्रकृते दिन ३० भगवत्यङ्गे दिन १८६ ज्ञाताधर्मकथाङ्गे दिन ३३ उपासकदशाङ्गे दिन २० निरयावलिकोपाङ्गे दिन ७ अन्तकृद्दशाङ्गे दिन १२ अनुत्तरोपपातिकदशाङ्गे दिन ७ उपपातिके दिन ३ राजप्रश्नेणिके दिन ३ जीवाभिगमे दिन ३ प्रज्ञापनायां दिन ३ सूर्यप्रज्ञप्तौ दिन ३ जम्बूद्वीपप्रज्ञप्तौ दिन ३ चन्द्रप्रज्ञप्तौ दिन ३ प्रश्नव्याकरणाङ्गे दिन १४ विपाकश्रुते दिन २४ महानिशीथे दिन ४५ जीतकल्पे दिन १ पञ्चकल्पे दिन १ एवं दिन ५६१ एतेषां मासा गणने मास १८ दिन २१ इति सर्वयोगदिनमाससंख्या।

इत्याचार्यश्रीवर्धमानसूरिकृते आचारदिनकरे यतिधर्मोत्तरायने योगोद्वहनकीर्त्तनो नाम एकविंशतितम उदयः॥

## द्वाविंशतितम उदयः।

### अथ वाचनाग्रहणविधिः।

स यथा वाचनार्हो मुनिर्यथा। गुरुभक्तः क्षमावांश्च कृतयोगो निरामयः। प्रज्ञावानष्टभिश्चैव शुद्धैर्बुद्धि-

1 अत्र सर्वत्र दिनेत्यविभक्तिकमस्ति दिन दिनानि मासः मासा इति वा यथासंभवं सविभक्तिकन्तु स्वयमुन्नेयम्।

गुणैर्युतः ॥ १ ॥ विनीतः शास्त्ररागी च सर्वव्याक्षेपवर्जितः । निद्रालस्यादिजेता च विषयेच्छाविवर्जितः ॥ २॥ यतिर्विज्ञाततत्त्वश्च निर्मत्सरमनाः सदा । सिद्धान्तवाचनाकार्यमर्हतीदृश उत्तमः ॥ ३ ॥" इति वाचनायोग्यलक्षणम् । गुरुलक्षणं योगोद्वहनाधिकारे पूर्वमेवोक्तम् । वाचनासामग्रीलक्षणं यथा—"सहाया योगयोग्याश्च कालो योगसमस्तथा । बहुपुस्तकसंपत्तिः पानान्ने सुलभे तथा ॥ १ ॥ कालग्रहणयोग्यं च क्षेत्रं विघ्नविवर्जितम् । लेखिन्यश्च मषीपात्रं शयनीयाशने शुभे ॥ २ ॥ परित्यागोन्यकार्याणां पटुता दृष्टिजिह्वयोः । कर्णश्रुतिश्चेति योग्या सामग्री वाचनाक्रमे ॥ ३ ॥" इति वाचनासामग्रीलक्षणम् । एवंविधियोगे व्यूढयोगो मुनिः प्राभातिकं कालग्रहणं कुर्यात् स्वाध्यायप्रस्थापनं च, तेनैव विधिना । ततः गुरुपार्श्वे समागत्यैर्यापथिकीं प्रतिक्रम्य अनुयोगमुखवस्त्रिकां प्रतिलिख्य द्वादशावर्तवन्दनं दद्यात् । ततः क्षमाश्रमणपूर्वं गुर्वग्रे भणति "भगवन् अणुओगं आढवेह" गुरुः कथयति "आढवेमि" पुनः शिष्यः क्षमाश्रमणपूर्वकं कथयति "अणुओगस्स आढवणत्थं करेमि काउस्सग्गं अन्नत्थ० जाव अ०" कायोत्सर्गः नमस्कारचिन्तनं नमस्कारभणनं, ततो गुर्वग्रे सुखासनेनोपविश्य मुखवस्त्रिकाञ्चितः पुस्तकालोचनेन गुरुवागनुकरणेन वा गीतादिवचनदोषरहितो मधुरस्वरेण सिद्धान्तं वाचयेत् । अत्र वाचनायां परिपाटीवाचनमेव करणीयम् । अर्थग्रहणं टीकाचूर्णिप्रभृतीनां व्याख्यानं कालान्तरे, कालादिक्रियावर्जितमपि भवति । प्रथमवाचनायां दशवैकालिकं, ततः आवश्यकं, ततः उत्तराध्ययनं, ततः आचाराङ्गं, शेषागमानां यथारुचि यथायोगं क्रमोत्क्रमैरपि वाचना,

वाचनाग्रहणानन्तरं गुरुणा सह स्वाध्यायप्रस्थापना, ततः “अणओगस्स पडिक्कमणत्थं करेमि काउस्सग्गं अन्नत्थ० जाव अप्पाणं०” कायोत्सर्गः नमस्कारचिन्तनं नमस्कारभणनं ततो वाचनाक्रमे विधीयमाने संघट्टाचाम्लादि न किमपि। साधुभिः सर्वदा दिनकृत्यमेव विधेयं, प्राभातिककालस्वाध्यायप्रस्थापनद्वयानुयोगकायोत्सर्गः वाचनाग्रहणं यावत् प्रत्यहं विधेया । इत्याचार्यश्रीवर्द्धमानसूरिकृते आचारदिनकरे यतिधर्मोत्तरायने वाचनाग्रहणकीर्तनो नाम द्वाविंशतितम उदयः ॥

---

## त्रयोविंशतितम उदयः ।

### अथ वाचनानुज्ञाविधिः ।

स यथा। वाचनानुज्ञाशब्देन वाचनाचार्यपदस्थापना उच्यते, तल्लक्षणं यथा “कृतयोगश्च गीतार्थो वाचनारचितश्रमः। सर्वैर्गुरुगुणैर्युक्तो वाचनाचार्य इष्यते ॥ १ ॥” गुरुः ईदृशं शिष्यं वाचनाचार्यपदे समारोपयेत्। तत्र आचार्यपदस्थापनायोगे तिथिवारर्क्षलग्ने गुरुः कृतविशिष्टवेषः कृतलोचं कृताचाम्लं शिष्यं निजपार्श्वे-मानयेत्। ततः उत्थापनावत् समवसरणादिरचनं विधाय शिष्यैः समवसरणस्य प्रदक्षिणात्रयं दापयेत्। ततः शिष्यो गुरुः पुरः क्षमाश्रमणपूर्वं भणति “इच्छाकारेण तुज्झे अम्हं वायणा अनुज्ञापया रोवणियं नंदि-

कट्टावणियं वासक्खेवं करेह चेइयाइं च वंदावेह" उभौ पूर्ववत् । वर्द्धमानस्तुतिभिश्चैत्यवन्दनं कुरुतः, श्रुतशान्तिक्षेत्रभुवनशासनवैयावृत्यकरदेवतास्तुतिकथनं पूर्ववत् । ततः शक्रस्तवपाठभणनं, अर्हणादिस्तोत्रकथनं, जयवीयरायजगगुरुगाथापठनं, मुखवस्त्रिकाप्रतिलेखनं, द्वादशावर्तवन्दनकं, ततः शिष्यः क्षमाश्रमणं दत्वा भणति । "इच्छाकारेण तुब्भे अम्हं वायणादाणं तवाइ अणुन्नं दिसाय अणुन्नं अणुजाणह" गुरुः कथयति "अणुजाणामि" शेषं षट्क्षमाश्रमणदानादि गुरुवचनादि तथैव । ततो "वायणादाण तवाणुन्ना दिसाणुन्ना अणुजाणावणिअं करेमि काउस्सग्गं अन्नत्थ जाव अप्पाणं वो०" कायोत्सर्गः चतुर्विंशतिस्तवचिन्तनं मुखेन चतुर्विंशतिस्तवभणनं, ततो गुरुः शिष्यकर्णे वासक्षेपपूर्वकं वर्द्धमानविद्यां त्रिर्ददाति । सर्वावधिप्रभृतिमध्यगतलब्धिगतपदचतुष्टयं विहाय शिष्यः सम्यगवधारयति । ततो गुरुः शिष्यशिरसि वासक्षेपं कुर्वन् भणति "जाओसि वायणायरिओ वायणादाणं तवाणुन्नं दिसाणुन्नं विहिणा अणुज्जाणामि । ततः एकवेलं लघुनन्दीभणनं, नन्दीपठनान्ते गुरुर्भणति "इमं पुणं पट्ठवणं पडुच्च अमुगस्स साहुस्स वायणादाणाइ अणुन्ना नंदी पवट्टइ" इति भणन् शिष्यशिरसि गुरुर्वासान् क्षिपति । वासाभिमन्त्रणं वर्द्धमानविद्यया साधुसाध्व्यादिभ्यो वासदानम्, "अमुगो वायणायरिओ जाओत्ति" वदन्तः सर्वेऽपि गुरुणा सह वाचनाचार्यशिरसि वासक्षेपं कुर्वन्ति । ततो वाचनाचार्यो गुरुणा समं समवसरणं त्रिःप्रदक्षिणीकरोति । पुनः केवलं गुरुः त्रिःप्रदक्षिणी करोति । एककम्बलोपर्युपविष्टो वाचनाचार्यो देशनां करोति । ततः सर्वसङ्घप्रत्यक्षं गच्छप्रत्यक्षं

दिगाद्यनुज्ञां श्राद्धानां व्रतारोपं आराधनां साधु-
व्रतदानं नन्दीकरणं योगोद्वहनं वाचनादानं तपोविधानं दिगाद्यनुज्ञां श्राद्धानां व्रतारोपं आराधनां साधु-
श्राद्धानां प्रतिष्ठाशान्तिकं पौष्टिकमनुजानाति । वाचनाचार्यादिपदस्थापनानन्तरं मन्त्राराधनार्थं गुरुः संभि-
न्नवलयं वर्द्धमानविद्यापटं वाचनाचार्याय ददाति । वाचनाचार्यः इच्छंति कृत्वा गृह्णाति । ततो वाचनाचार्यो
गुरुं ज्येष्ठसाधूंश्च वन्दते ॥ इति वाचनाचार्यपदविधिः यथा राज्यस्थितौ राजा १ युव० २ मन्त्री ३ सेनापतिः
४ श्रेष्ठः श्राद्धाः महोत्सवं कुर्वन्ति । सामान्यसाधोर्मार्गणानुज्ञादानेप्ययमेव विधिः नवरं, गणमुख्यतादाने
"वायणायरिओ जाओसि" इति गुरुवचनं नास्ति । नन्दीपठनं मन्त्रवर्द्धमानविद्यादानं पटदानं आसनदानं
च नास्ति । गणोत्तमपदमपि गुरुगुणयुतस्य भवति ॥ इत्याचार्यश्रीवर्द्धमानसूरिकृते आचारदिनकरे यतिध-
र्मोत्तरायणे वाचनानुज्ञाकीर्त्तनो नाम त्रयोविंशतितम उदयः ॥ २३ ॥

---

## चतुर्विंशतितम उदयः ।

### अथोपाध्यायपदस्थापनविधिः ।

स यथा । आचार्यपदस्थापनविधिस्तथैव अयं किल विशेषः । उपाध्यायपदे अक्षमुष्टिवलयादि नास्ति, गुरुः

---

१ अयं पाठो मूलपुस्तके नास्ति ।

वन्दनकं च न ददाति, कालग्रहणविधिर्वृद्धनन्दीपाठश्च नावेहि जवारादि न, किन्तु त्रिर्लघुनन्दीपाठः चतुर्द्वारवर्द्धमानविद्यापटदानं संपूर्णवर्द्धमानविद्योपदेशः इति क्रियते । साधुनामापि पुरातनमेव, शेषमाचार्यपदविधेरवसेयम् ॥ इत्याचार्यश्रीवर्द्धमानसूरिकृते आचारदिनकरे यतिधर्मोत्तरायणे उपाध्यायपदस्थापनकीर्त्तनो नाम चतुर्विंशतितम उदयः ॥ २४ ॥

## पञ्चविंशतितम उदयः ।

### अथाचार्यपदस्थापनविधिः ।

स यथा। "दीक्षायां स्थापनायां च शस्तं मूलं पुनर्वसू। स्वाती मैत्रं करःश्रोत्रं पौष्णं ब्राह्म्योत्तरात्रयम् ॥१॥" एतेषु नक्षत्रेषु लत्तादिसप्तदोषरहितेषु संवत्सरमासदिनलग्नशुद्धौ पदस्थापनं विधीयते । लग्ने ग्रहयुक्तिर्दीक्षावत्। संवत्सरमासदिननक्षत्रशुद्धिर्विवाहवत् । आचार्यपदयोग्यलक्षणं यथा—"षट्त्रिंशद्गुणसंयुक्तः सुरूपोऽखण्डितेन्द्रियः । अखण्डिताङ्गोपाङ्गश्च सर्वविद्याविशारदः ॥ १ ॥ कृतयोगो द्वादशाङ्गीपरिज्ञानसचेतनः। शूरो दयालुर्धीरश्च गम्भीरो मधुरस्वरः ॥ २ ॥ रम्यार्यदेशसंभूत आद्यवर्णत्रयोद्भवः। पक्षद्वयविशुद्धश्च

१ एवं च शूद्रान्त्ययोस्सत्सु चापि वैदुष्यादिषु नाचार्यपदप्राप्तिः। एतेन कुटुम्बिजट्टादिशूद्रशरीरसाधुभ्य आचार्योदिसर्वसंघयन्धपदारोपणेन संप्रदाय विसरन्तः प्रत्याख्याताः। अनुपदमेव निषेधं च वक्ष्यति ।

॥ ३ ॥ विनीतो देशकालादिपरिज्ञाने कृतश्रमः । षड्दर्शनानां तत्वानि जानन् प्रमि-
जितक्रोधो जितेन्द्रियः ॥ ३ ॥ विनीतो देशकालादिपरिज्ञाने कृतश्रमः । चोदना तद्विशेषज्ञो द्वासप्ततिकलायुतः
तिपद्धकवित् ॥ ४ ॥ व्युत्पत्तिप्रतिभायुक्तस्तपःकार्ये सदा रतः । चतुर्दशसु विद्यासु लौकिकासु विचक्षणः ॥ ६ ॥ सौम्यः
॥ ५ ॥ षड्भाषावित् सर्वदेशभाषाभाषणसंयुतः । चतुर्दशसु विद्यासु लौकिकासु विचक्षणः ॥ ६ ॥ सौम्यः
॥ ५ ॥ षड्भाषावित् सर्वदेशभाषाभाषणसंयुतः । आवर्जकः सदाचारः कृतज्ञः प्राञ्जलाशयः ॥ ७ ॥ सलज्जो नीति-
क्षमावान् मन्त्रादि सर्वं जानन् सकारणम् । आवर्जकः सदाचारः कृतज्ञः प्राञ्जलाशयः ॥ ७ ॥ सलज्जो नीति-
क्षमावान् मन्त्रादि सर्वं जानन् सकारणम् । ईदृशो मुनिरुत्कृष्ट आचार्यपदमर्हति ॥ ८ ॥" तथागमे—"पडिरूवो तेय-
मान् योगमष्टाङ्गं प्रविशन् सदा । ईदृशो मुनिरुत्कृष्ट आचार्यपदमर्हति ॥ ८ ॥" तथागमे—"पडिरूवो तेय-
मान् योगमष्टाङ्गं प्रविशन् सदा । गंभीरो धीमंतो उवएसपरो अ आयरिओ ॥ ९ ॥" गुरुगुणाः पूर्वमेवोक्ताः ।
स्सी जुगप्पहाणागमो महुरवक्को । गंभीरो धीमंतो उवएसपरो अ आयरिओ ॥ ९ ॥" गुरुगुणाः पूर्वमेवोक्ताः ।
स्सी जुगप्पहाणागमो महुरवक्को । कुरूपः खण्डिताङ्गश्च दुष्टदेशसमु-
आचार्यपदायोग्यलक्षणं यथा—"पञ्चाचारविनिर्मुक्तः क्रूरः परुषभाषणः । कुरूपः खण्डिताङ्गश्च दुष्टदेशसमु-
आचार्यपदायोग्यलक्षणं यथा—"पञ्चाचारविनिर्मुक्तः क्रूरः परुषभाषणः । विकत्थनश्च सासूयो बाह्यदृष्टिश्चलेन्द्रियः ॥ २ ॥
द्भवः ॥ १ ॥ हीनजातिकुलो मानी निर्विद्यश्चाविशेषवित् । विकत्थनश्च सासूयो बाह्यदृष्टिश्चलेन्द्रियः ॥ २ ॥
द्भवः ॥ १ ॥ हीनजातिकुलो मानी निर्विद्यश्चाविशेषवित् । साधुर्नाचार्यपदमर्हति ॥३॥" तथा चोक्तमागमे—
जनद्वेष्यः कातरश्च निर्गुणो निष्कलः खलः इत्यादिदोषभाग् साधुर्नाचार्यपदमर्हति ॥३॥" तथा चोक्तमागमे—
जनद्वेष्यः कातरश्च निर्गुणो निष्कलः खलः इत्यादिदोषभाग् पंगुलटुंटा य काणा य ॥ १ ॥ पच्छावि
"हत्थे पाए कन्ने नासा उट्ठे विवज्जिया चेव । वामणगवडभखुज्जा पंगुलटुंटा य काणा य ॥ १ ॥ पच्छावि
"हत्थे पाए कन्ने नासा उट्ठे विवज्जिया चेव । नन्नम्मि ॥ २ ॥" इति आचा-
हुंति विगला आयरियत्तं न कप्पए । तेसिं सीसो ठावे अव्वो काणगमहिसोव नन्नम्मि ॥ २ ॥" इति आचा-
हुंति विगला आयरियत्तं न कप्पए । पूर्वोक्तगुणयुक्ते पात्रे आचा-
र्यपदायोग्याः । वडभः क्षीणबलः, खुज्जा कुब्जः, इत्यमी आचार्यपदं नार्हन्ति । पूर्वोक्तगुणयुक्ते पात्रे आचा-
र्यपदायोग्याः । वडभः क्षीणबलः, खुज्जा कुब्जः, इत्यमी आचार्यपदं नार्हन्ति । भोजनदानामारि-
र्यपदारोपणं, तस्यायं विधिः । पूर्वं वेदियवादिवापननिरुञ्छनमहोत्सवमहादानानिवारितभोजनदानामारि-

[1] एतच यथासंभवं विहर्तव्यविषयभाषापरतया व्याख्येयं नो चेत्सादसंभवः ।

शासन ५ वैयावृत्यकर ६ देवतास्तुतयः पूर्ववत्तथैव । ततः शक्रस्तवभणनपूर्वमर्हणादिस्तोत्रभणनम्, जयवीयरायगाथाकथनम्, ततः शिष्यो मुखवस्त्रिकां प्रतिलिख्य द्वादशावर्तिवन्दनं ददाति । ततो द्वावपि कायोत्सर्गं कुरुतः, "अणुओगपट्ठावणनिमित्तं करेमि काउस्सग्गं अन्नत्थ उ० यावदप्पाणं वोसिरामि" चतुर्विंशतिस्तवचिन्तनं मुखेन चतुर्विंशतिस्तवभणनं, तत ऊर्ध्वस्थ एव सूरिर्भविष्यत्सूरिर्वा गीतार्थः कृतयोगोन्यो यतिर्वा नमस्कारत्रयं पठित्वा मुखपाठेन वा पुस्तकाधारेण वा सप्तशतीं नन्दीं पठति । भाव्याचार्यो मुखवस्त्रिकाच्छन्नमुख एकचित्तः शृणोति । नन्दीसमाप्तौ गन्धाभिमन्त्रणं, गन्धानां तीर्थकरपादस्पर्शनं, चतुर्विधसङ्घस्य गन्धाक्षतदानं, ततः शिष्यः क्षमाश्रमणपूर्वं भणति "इच्छाकारेण तुज्झे अह्मं अणुओगं अणुजाणह" गुरुर्भणति "अहं एयस्स दव्वगुणपज्जवेहिं खमासमणाणं हत्थेणं अणुओगं अणुजाणामि" पुनः शिष्यः क्षमाश्रमणपूर्वं भणति "संदिसह किं भणामि" गुरुर्भणति "वंदित्तापवेयया" पुनः शिष्यः क्षमाश्रमणपूर्वं भणति "तुब्भे अह्मं अणुओगो अणुन्नाओ इच्छामि अणुसिट्ठं" गुरुर्भणति "सम्मं अवधारय अन्नेसिं च प्रवेअय" पुनः शिष्यः क्षमाश्रमणपूर्वं भणति "तुम्हाणं पवेइयं संदिसह साहूणं पवेएमि" गुरुः कथयति "खमासमणाणं हत्थेणं सुत्तेणं अत्थेणं तदुभएणं गुरुगुणेहिं वुड्ढाहि नित्थारगपारगो होइ" ततो लघुसूरिः समवसरणं सूरिं च त्रिः प्रदक्षिणयति । ततः शिष्यः कायोत्सर्गं करोति "अणुओग अणुजाणावणियत्थं करेमि काउस्सग्गं अन्नत्थ ऊ० यावदप्पाणं वो०" कायोत्सर्गे चतुर्विंशतिस्तवचिन्तनं मुखे च भणनं, पुनर्ले-

घुसूरिः समवसरणं गुरुं च त्रिः प्रदक्षिणयति । एवं क्षमाश्रमणकायोत्सर्गप्रदक्षिणाकर्म त्रिवेलं कुर्यात् । ततो लघुसूरिः गुरोर्दक्षिणभुजासन्ने नवकल्पितायां निषद्यायां निषीदति । ततः प्राप्तायां लग्नवेलायां गुरुः लघुसूरेर्दक्षिणकर्णं गन्धाक्षतपुष्पैः संपूज्य गुरुपरम्परागतं सकलर्द्धिसिद्धिदायकं निलं चिन्तामणिकल्पद्रुमाधिकप्रभावं सूरिमन्त्रं त्रिवेलं तत्कर्णे कथयति । अक्षपोट्टलिकां च गन्धाक्षतैः समं तत्करे ददाति । शिष्योप्यवहितो मन्त्रमक्षपोट्टलिकां च गन्धाक्षतैः परमास्तिक्यशाली गृह्णाति । गुरुस्तस्य निजनामाविरोधि ससकशुद्धं गुरुपरम्परागतं वा दैवतोपदिष्टं वा नाम कुर्यात् । ततः सङ्घो वासान् क्षिपति, ततो गुरुः स्वनिषद्यात उत्तिष्ठति, तत्र शिष्य उपविशति, गुरुरपि सर्वसाधुसहितः मुखवस्त्रिकां प्रतिलिख्य नव्याचार्यपदयोर्वन्दनं ददाति । पुनर्नव्याचार्योऽपि निषद्यासीनस्य गुरोस्तथैव वन्दनं ददाति । तुल्यगुणख्यापनार्थं द्वयोरपि न दोषः । ततो गुरुर्नव्याचार्यस्य जीव इति कथयित्वा "वक्खाणं करेहि" इति कथयति । नव्याचार्योऽपि स्वविद्यानुरूपं च नन्द्यादिव्याख्यानं करोति । व्याख्यानानन्तरं साधवः साध्व्यः श्रावकः श्राविकाश्च वन्दनं ददति । ततो नव्याचार्यो गुरुनिषद्यात उत्थाय स्वनिषद्यामधितिष्ठति । गुरुर्मूलनिषद्यायामुपविश्य नव्याचार्यस्योपबृंहणं करोति । यथा—"धन्यस्त्वं येन विज्ञातः संसारगिरिदारकः । वज्रवद्दुर्भिदश्चायं महाभाग जिनागमः ॥ १ ॥ इदं चारोपितं यत्ते पदं सत्संपदां पदम् । अत्युत्तममिदं लोके महासत्वनिषेवितम् ॥ २ ॥ धन्येभ्यो दीयते तात धन्या एवास्य पारगाः । गत्वास्य पारं ते धन्याः पारं गच्छन्ति संसृतेः ॥ ३ ॥ भीतं संसार-

घोषणामार्गणतोषणादिकर्म श्राद्धैर्विधीयते । अयं लोकव्यवहारः, पदस्थापनानन्तरं च श्राद्धैः सगृहभोजनवाराः सङ्घार्चनादिकर्म विधीयते । एतत्कर्मद्वयं शोभानिमित्तं श्राद्धानां पुण्यवृद्ध्यर्थं च । मूलविधिस्त्वयं । तत्र लग्नदिनात् प्रथमे दिने सन्ध्यायां गुरुः सदशवस्त्रमयं आचारवेषं खड्गाङ्कितस्फुरमध्ये निधाय गणिविद्यया इति मन्त्रयेत् निशि संस्थापयेच्च । सर्वश्राद्धाश्च वेषसमीपे गीतवाद्यादिमहोत्सवैश्च जागरणं कुर्वन्ति । ततो लग्नदिने भविष्यदाचार्यः कृतलोचो ब्राह्मे मुहूर्ते काष्ठग्रहणं करोति स्वाध्यायं प्रस्थापयति च । अत्रत्यं करणीयं कर्म भगवतीप्रत्यक्षभाषितं पत्रान्तरे लिखितमस्ति । निषद्यास्थापनं सिंहासनेनैव पूर्यते । ततः आसन्ने लग्नावसरे प्रतिलेखितभूमौ कम्बलादि प्रतिलिख्य द्वे निषद्ये क्रियेते । ते च निषद्ये संघट्टा अक्षयोग्यं गुरुयोग्यं च स्थाप्येते । ततो गुरुरेकत्र निषद्यायां अक्षग्रन्थिं स्थापयति । द्वितीयनिषद्यायां स्वयमुपविशति । ततो भविष्यदाचार्यः चोलपट्टमुखवस्त्रिकारजोहरणमात्रधारी गुरोरग्रे क्षमाश्रमणपूर्वं भणति "भगवत्याभाइयकालं पवेएमि" गुरुः कथयति "पवेएहि" पुनः शिष्यः क्षमाश्रमणपूर्वं भणति "भगवत्याभाइयकालं पवेइअं" गुरुः कथयति "पवेइअं खमासमणाणं हत्थेणं सुत्तेणं अत्थेणं तदुभएणं गुरुगुणेहिं बुड्ढाहिं नित्थारगपारगो होहि" ततः शिष्यो गुर्वग्रे वन्दित्वा मुखवस्त्रिकां प्रतिलेखयति । ततो गुरुः शिष्यश्च द्वावपि स्थापनाचार्यपुरो द्वादशावर्तवन्दनं दत्वा, शिष्यः क्षमाश्रमणपूर्वं भणति "भगवन् सज्झायं पठवेमि" ततो गुरुशिष्यावपि स्वाध्यायं प्रस्थापयतः पूर्ववत् । ततो द्वावपि "सज्झायपट्ठवणत्थं करेमि काउस्सग्गं अन्नत्थ उ०

यावत् अप्पाणं वोसिरामि" कायोत्सर्गे नमस्कारं चिन्तयतः। ततो द्वावपि ऊर्ध्वीकृतभुजौ चतुर्विंशतिस्तवं
पठित्वा धम्मो मंगलमारभ्य संयमे सुट्ठिअप्पाणं इतिपर्यन्तगाथासप्तदशकं मौनेन पठतः, पुनर्मुखवस्त्रिकां
प्रतिलिख्य वन्दनं ददतः, पुनः क्षमाश्रमणपूर्वं स्वाध्यायं प्रवेदयतः, पुनर्मुखवस्त्रिकां प्रतिलिख्य वन्दनं ददतः,
ततो गुरुः स्वनिषद्यायामुपविशति। शिष्यः शेषस्वाध्यायं विधिना प्रस्थापयति। ततश्चैत्ये विशुद्धपौषधागारे
तीर्थे वा रम्यारामे वा समवसरणं संस्थापयेत्। भाव्याचार्यः समवसरणं प्रदक्षिणीकरोति त्रिः, गुरुश्च निष-
योपरिस्थितामक्षपोट्टलिकां सूरिमन्त्रेण श्रीखण्डकर्पूरादिभिर्ग्रन्थैरभिमन्त्रयति। अक्षपोट्टलिकावलययन्त्रस्था-
पनाप्रतिष्ठाविधिः कल्पनाविधिश्च प्रतिष्ठाधिकारे कथयिष्यते। ततो गुरुः निषद्यात उत्थाय निषद्यां पुरस्कृत्य
ऊर्ध्वीभवति। शिष्यः क्षमाश्रमणपूर्वं भणति "भगवन् इच्छाकारेण तुज्झे अम्हं दव्वगुणपज्जवेहिं अणुओग
अणुजाणावणियं नंदि कट्टावणिअं वासक्खेवं करेह चेइआइंतु वंदावेह" ततो गुरुः श्रीखण्डवासान् कर्पूरक-
स्तूरिकाकालागरुकुङ्कुमवासितान् सूरिमन्त्रेणाभिमन्त्रयति। वासाभिमन्त्रेण मुद्राः षोडश। परमेष्ठिमुद्रा १
कामधेनुमुद्रा २ गरुडमुद्रा ३ आरात्रिकमुद्रा ४ सौभाग्यमुद्रा ५ गणधरमुद्रा ६ अञ्जलिमुद्रा ७ मुक्ताशुक्ति-
मुद्रा ८ यथाजातमुद्रा ९ वज्रमुद्रा १० मुद्गरमुद्रा ११ योनिमुद्रा १२ स्नानमुद्रा १३ छत्रमुद्रा १४ समाधान-
मुद्रा १५ कल्पवृक्षमुद्रा १६ इति मुद्रादिभिः सूरिमन्त्रेण वासानभिमन्त्र्य भाव्याचार्यशिरसि क्षिपेत्। ततो
गुरुशिष्यौ दक्षिणवामस्थौ वर्द्धमानस्तुतिभिश्चैत्यवन्दनं कुरुतः। ततः श्रुत १ शान्ति २ क्षेत्र ३ भुवन ४

शासन ५ वैयावृत्यकर ६ देवतास्तुतयः पूर्ववत्तथैव । ततः शक्रस्तवभणनपूर्वमर्हणादिस्तोत्रभणनम्, जयवीयरायगाथाकथनम्, ततः शिष्यो मुखवस्त्रिकां प्रतिलिख्य द्वादशावर्तवन्दनं ददाति । ततो द्वावपि कायोत्सर्गं कुरुतः, "अणुओगपट्ठावणनिमित्तं करेमि काउस्सग्गं अन्नत्थ ऊ० यावदप्पाणं वोसिरामि" चतुर्विंशतिस्तवचिन्तनं मुखेन चतुर्विंशतिस्तवभणनं, तत ऊर्ध्वस्थ एव सूरिर्भविष्यत्सूरिर्वा गीतार्थः कृतयोगोन्यो यतिर्वा नमस्कारत्रयं पठित्वा मुखपाठेन वा पुस्तकाधारेण वा सप्तशतीं नन्दीं पठति । भाव्याचार्यो मुखवस्त्रिकाच्छन्नमुख एकचित्तः शृणोति । नन्दीसमाप्तौ गन्धाभिमन्त्रणं, गन्धानां तीर्थंकरपादस्पर्शनं, चतुर्विधसङ्घस्य गन्धाक्षतदानं, ततः शिष्यः क्षमाश्रमणपूर्वं भणति "इच्छाकारेण तुब्भे अह्मं अणुओगं अणुजाणह" गुरुर्भणति "अहं एयस्स दव्वगुणपज्जवेहिं खमासमणाणं हत्थेणं अणुओगं अणुजाणामि" पुनः शिष्यः क्षमाश्रमणपूर्वं भणति "संदिसह किं भणामि" गुरुर्भणति "वंदित्तापवेययहा" पुनः शिष्यः क्षमाश्रमणपूर्वं भणति "तुब्भे अह्मं अणुओगो अणुन्नाओ इच्छामि अणुसिट्ठं" गुरुर्भणति "सम्मं अवधारय अन्नेसिं च प्रवेअय" पुनः शिष्यः क्षमाश्रमणपूर्वं भणति "तुम्हाणं पवेइयं संदिसह साहूणं पवेएमि" गुरुः कथयति "खमासमणाणं हत्थेणं सुत्तेणं अत्थेणं तदुभएणं गुरुगुणेहिं वुड्ढाहि नित्थारगपारगो होइ" ततो लघुसूरिः समवसरणं सूरिं च त्रिः प्रदक्षिणयति । ततः शिष्यः कायोत्सर्गं करोति "अणुओग अणुजाणावणियत्थं करेमि काउस्सग्गं अन्नत्थ ऊ० यावदप्पाणं वो०" कायोत्सर्गे चतुर्विंशतिस्तवचिन्तनं मुखे च भणनं, पुनर्ल-

घुसूरिः समवसरणं गुरुं च त्रिः प्रदक्षिणयति । एवं क्षमाश्रमणकायोत्सर्गप्रदक्षिणाकर्म त्रिवेलं कुर्यात् । ततो लघुसूरिः गुरोर्दक्षिणभुजासन्ने नवकल्पितायां निषद्यायां निषीदति । ततः प्राप्तायां लग्नवेलायां गुरुः लघुसूरेर्दक्षिणकर्णे गन्धाक्षतपुष्पैः संपूज्य गुरुपरम्परागतं सकलर्द्धिसिद्धिदायकं नित्यं चिन्तामणिकल्पद्रुमाधिकप्रभावं सूरिमन्त्रं त्रिवेलं तत्कर्णे कथयति । अक्षपोट्टलिकां च गन्धाक्षतैः समं तत्करे ददाति । शिष्योप्यवहितो मन्त्रमक्षपोट्टलिकां च गन्धाक्षतैः परमास्तिक्यशाली गृह्णाति । गुरुस्तस्य निजनामाविरोधि सप्तकशुद्धं गुरुपरम्परागतं वा दैवतोपदिष्टं वा नाम कुर्यात् । ततः सङ्घो वासान् क्षिपति, ततो गुरुः स्वनिषद्यात उत्तिष्ठति, तत्र शिष्य उपविशति, गुरुरपि सर्वसाधुसहितः मुखवस्त्रिकां प्रतिलिख्य नव्याचार्यपदयोर्वन्दनं ददाति । पुनर्नव्याचार्योऽपि निषद्यासीनस्य गुरोस्तथैव वन्दनं ददाति । तुल्यगुणख्यापनार्थं द्वयोरपि न दोषः । ततो गुरुर्नव्याचार्यस्य जीव इति कथयित्वा "वक्खाणं करेहि" इति कथयति । नव्याचार्योऽपि स्वविद्यानुरूपं च नन्द्यादिव्याख्यानं करोति । व्याख्यानानन्तरं साधवः साध्व्यः श्रावकः श्राविकाश्च वन्दनं ददति । ततो नव्याचार्यो गुरुनिषद्यात उत्थाय स्वनिषद्यामधितिष्ठति । गुरुर्मूलनिषद्यायामुपविश्य नव्याचार्यस्योपबृंहणं करोति । यथा—"धन्यस्त्वं येन विज्ञातः संसारगिरिदारकः । वज्रवद्दुर्भिदश्चायं महाभाग जिनागमः ॥ १ ॥ इदं चारोपितं यत्ते पदं सत्संपदां पदम् । अत्युत्तममिदं लोके महासत्वनिषेवितम् ॥ २ ॥ धन्येभ्यो दीयते तात धन्या एवास्य पारगाः । गत्वास्य पारं ते धन्याः पारं गच्छन्ति संसृतेः ॥ ३ ॥ भीतं संसार-

कान्तारात् समर्थस्य विमोचने । साधुवृन्दमिदं सर्वं भवतश्शरणागतम् ॥ ४ ॥ संप्राप्य गुणसंदोहं निर्मलं परमेश्वरम् । त्राणं संसारभीतानां धन्याः कुर्वन्ति देहिनाम् ॥ ५ ॥ तदेते भावरोगार्तास्त्वं च भावभिषग्वरः । अतस्त्वयामी सज्जीवा मोचनीयाः प्रयत्नतः ॥ ६ ॥ गुरुश्च मोचयत्येतानप्रमत्तो हितोद्यतः । बद्धलक्षो दृढं मोक्षे निःस्पृहो भव चारके ॥ ७ ॥ कल्पोयमिति कृत्वा त्वमीदृशोपि प्रणोदितः । निजावस्थानुरूपं हि चेष्टितव्यं सदा त्वया ॥ ८ ॥" अथ शिष्यशिक्षणम् "युष्माभिरपि नैवैष सुस्थबोहित्थसन्निभः । संसारसागरोत्तारी विमोक्तव्यः कदाचन ॥ ९ ॥ प्रतिकूलं न कर्तव्यमनुकूलरतैः सदा । भाव्यमस्य गृहत्यागो येन वः सफलो भवेत् ॥ १० ॥ अन्यथा जन्तुबन्धूनामाज्ञालोपः कृतो भवेत् । ततो विडम्बना शेषा भवेदत्र परत्र च ॥ ११ ॥ ततः कुलवधून्यायात् कार्ये निर्भर्त्सितैरपि । यावज्जीवं न मोक्तव्यं पादमूलममुष्य भोः ॥ १२ ॥ ते ज्ञानभाजनं धन्यास्ते सद्दर्शननिर्मलाः । ते निष्प्रकम्पचारित्रा ये सदा गुरुसेविनः ॥ १३ ॥ धन्नोसि तुमं नायं जिणवयणं जेण सव्वदुक्खहरं । ता संममिमं भवया पउंजियव्वं सया कालं ॥ १ ॥ इह गउरिणं च परमं असंमजोगो य जोगओ अवरो । तात ह इह जअइव्वं जह एत्तो केवलं होइ ॥ २ ॥ परमो य एस हेऊ केवलनाणस्स अन्नपाणीणं । मोहावणयणओ तह संवेगाईसभावेणं ॥ ३ ॥ उत्तम मियं पयं जिणवरेहिं लोगुत्तमेहिं पन्नत्तं । उत्तमफलसंजणयं उत्तमजणसेविअं लोए ॥ ४ ॥ धन्नाणनिवेसिज्जाइ धन्ना गच्छंति पारमेयस्स । गंतुं इमस्स पारं पारं वच्चंति दुक्खाणं ॥ ५ ॥ संपाविऊण परमे नाणाई दुहि अतायणसमत्थे । भव-

भयभीयाण दढं ताणं जो कुणइ सो धन्नो ॥ ६ ॥ अन्नाण वाहिगहिया जइवि न समं इहा उरा हुंति । तहवि पुण भाववेज्जा तेसिं अवणेंति तं वाहिं ॥ ७ ॥ ता तंसि भाववेज्जो भवदुक्खनिवीडिया तुहं एए । हंदि सरणं पवन्ना मो एयव्वा पयत्तेणं ॥ ८ ॥ मोएइ अप्पमत्तो परहिअकरणंमि निचमुज्जुत्तो । भवसोक्खापडियद्धो पंडियद्धो मोक्खसोक्खम्मि ॥ ९ ॥ ता एरिसो च्चिय तुमं तहवि अभणिओसि समयनीईए । नियावत्थासरिसं भवया निचंपि कायव्वं ॥ १० ॥" अथ शिष्यशिक्षादानम् "तुब्भेहिंपि न एसो संसाराडविमहाकडिल्लंमि । सिद्धिपुरसत्थवाहो जत्तेण खणंपि मोत्तव्वो ॥ ११ ॥ नयपडिकूले अव्वं वयणं एयस्स नाणरासिस्स । एवं गिहवासचाओ जंसफलो होइ तुम्हाणं ॥ १२ ॥ इहरा परमगुरूणं आणाभंगो निसेविओ होइ । विहला य हुंति तम्मी नियमा इहलोअ परलोअ ॥ १३ ॥ ता कुलवहुनाएणं कज्जे निब्भच्छिएहिवि कहिंचि । एअस्स पायमूलं आमरणं तं न मोत्तव्वं ॥ १४ ॥ नाणस्स होइ भागी थिरयरओ दंसणे चरित्ते य । धन्ना आवकहाए गुरुकुलवासं न मुंचंति ॥ १५ ॥ एवं च्चिय वयणीणं अणुसट्ठिं कुणइ एत्थ आयरिओ । तह अज्ज चंदणभिगा वईण साहेइ परमगुणे ॥ १६ ॥" ततः उपबृंहणानन्तरं साधवः सूरेः पुस्तकोपकरणाद्युपदां कुर्वन्ति । श्रावकाश्च दशाहं सङ्घपूजादि महोत्सवं कुर्वन्ति, अष्टाह्निकास्नात्रादि च । गुरुश्चोपबृंहणां कृत्वा शेषशिष्याणां तदुपासनविनयानुशास्तिं करोति । तत उभावपि कायोत्सर्गं कुरुतः "अणुओग विसज्जणत्थं करेमि काउस्सग्गं अन्नत्थ ऊ० यावदप्पाणं वोसिरामि" चतुर्विंशतिस्तवचिन्तनं पार-

यित्वा मुखेन च चतुर्विंशतिस्तवभणनं "कालस्स पडिक्कमणत्थं यावदप्पाणं वोसिरामि" चतुर्विंशतिस्तवचिन्तनं पारयित्वा मुखेन च चतुर्विंशतिस्तवभणनं । ततो नव्याचार्यः क्षमाश्रमणपूर्वं भणति "भगवन् अणुओग अणुजाणावणिअं निरुद्धं करावेह" ततो गुरुराचाम्लप्रत्याख्यानं कारयति । अत्र नव्यसूरेः कङ्कणबन्धमुद्रिकादिपरिधापनं लोकाचारं पूर्वमेव क्रियते ॥ इत्याचार्यश्रीवर्द्धमानसूरिकृते आचारदिनकरे यतिधर्मोत्तरायणे आचार्यपदस्थापनाकीर्तनो नाम पञ्चविंशतितम उदयः ॥ २५ ॥

## षड्विंशतितम उदयः ।

### अथ यतीनां द्वादशप्रतिमोद्वहनविधिः ।

तत्र च यतिप्रतिमा द्वादश, ताश्च दुःषमाकाले दुष्कराः सेवार्तसंहननवशात्, धैर्यबलपरीषहसहनाभावाच्च । तथापि श्रीआर्यमहागिरेर्जिनकल्पतुलनान्यायेन कश्चनापि धृतिमान् धीरो मुनिः कियतीरपि प्रतिमाः साधयति, तदर्थं तद्विधिरभिधीयते । ताश्च प्रतिमा द्वादश यथा—"मासाइ सतंता पढमा दुतइय सत्तराइंदी । अहराई इगराई भिक्खूपडिमाण बारसगं ॥ १ ॥" एकमासिकी १ द्वैमासिकी २ त्रैमासिकी ३ चातुर्मासिकी ४ पाञ्चमासिकी ५ षाण्मासिकी ६ साप्तमासिकी ७ पुनः साप्तरात्रिकी ८ साप्तरात्रिकी ९ पुनः साप्तरात्रिकी १० अहोरात्रिकी ११ एकरात्रिकी १२ चेति द्वादशयतिप्रतिमाः । प्रतिमोद्वहनयोग्यमुनिलक्षणं

यथा—"संपूर्णविद्यो धृतिमान् वज्रसंहननं वहन्। महासत्त्वो जिनमते सम्यग् ज्ञाता स्थिराशयः ॥ १ ॥ गुर्वनुज्ञां वहन् चित्ते श्रुताभिगमतत्त्ववित्। विसृष्टदेहो धीरश्च जिनकल्पार्हशक्तिभाक् ॥ २ ॥ परीषहसहो दान्तो गच्छेपि ममतां त्यजन्। दोषधातुप्रकोपेपि न वहन् रागसंभवम् ॥ ३ ॥ अव्यञ्जनं रसत्यक्तं पानान्नं क्रापि कल्पयन्। ईदृशोर्हति शुद्धात्मा प्रतिमोद्वहनं मुनिः ॥ ४ ॥" प्रतिमोद्वहनविधिर्यथा—"सर्वगच्छपरित्यागो निर्ममत्वं च साधुषु। पुस्तकेषु च पात्रेषु वस्त्रेषु वसतावपि ॥ ५ ॥ रसोज्झितस्य भक्तस्य ग्रहणं वनवासिता। अक्षोभो वज्रपातेपि निर्भयत्वं हरावपि ॥ ६ ॥ अलोभो निजदेहेपि सुखित्वं यातनास्वपि। शीतेऽप्रकम्पो माघेपि तापेऽतापो तपेऽपिहि ॥ ७ ॥ तृडुद्गमेपि नैर्मूर्च्छ्यं नैष्क्रोध्यं देहतक्षके। अविस्मयत्वं सर्वत्र चक्रिशक्रर्द्धिदर्शने ॥ ८ ॥ हास्यादिषट्कत्यागश्च सर्वभावेष्वलोभता। इत्यादि चर्या सर्वत्र प्रतिमोद्वहने मता ॥ ९ ॥" इति सर्वप्रतिमोद्वहनचर्या। "मृदुध्रुवचरक्षिप्रैर्वारैर्भौमं शनिं विना। आद्यादनतपोनन्द्यालोचनादिषु भं शुभम् ॥ १ ॥" ईदृशे चन्द्रबले प्रतिमारम्भः। सर्वासु प्रतिमासु एषैव चर्या, प्रथमा प्रतिमा एकमासिकी सा चैकमासं वोढव्या, अरण्ये स्थितः साधुरेकमासं सदाकायोत्सर्गकारी न किञ्चित् चिन्तयन् प्रतिमां पालयति। तत्राहार एकदत्त्या, एकैव दत्तिः पानस्य भोजनस्य वा, कदाचित् पानस्य कदाचिद्भोजनस्य, कदाचिद्दत्तियुक्त्या लब्धेन पानेन दिनमतिवाहयति। कदाचिद्भोजनेन दत्तियुक्तिलब्धेन आस्वादमात्रेण, द्वयोरलाभे संतोष एव। इति एकमासिकी प्रतिमा प्रथमा १ द्वितीया द्वैमासिकी अनयैव युक्त्या, तत्र द्वे दत्ती,

एका पानस्य द्वितीया भोजनस्य २ तृतीया त्रैमासिकी तथैव, तत्र तिस्रो दत्तयः, द्वे भोजनस्य एका पानस्य, अथवा द्वे पानस्य एका भोजनस्य, मासत्रयमेव ३ चतुर्थी चातुर्मासिकी, मासचतुष्टयमित्थमेव, तत्र चतस्रो दत्तयः, द्वे पानस्य द्वे भोजनस्य ४ पञ्चमी प्रतिमा पाञ्चमासिकी, पञ्चमासान् यावत्तथैव, तत्र पञ्च दत्तयः, तिस्रो भोजनस्य द्वे पानकस्य, अथवा द्वे भोजनस्य तिस्रः पानकस्य ५ षष्ठी प्रतिमा षाण्मासिकी षण्मासान् यावत्तथैव, तत्र षड् दत्तयः, तिस्रो भोजनस्य तिस्रः पानस्य ६ सप्तमी प्रतिमा साप्तमासिकी, सप्तमासान् यावत्तथैव, तत्र सप्त दत्तयः, चतस्रो भोजनस्य तिस्रः पानस्य, अथवा चतस्रः पानस्य तिस्रो भोजनस्य ७ एतासु सप्तस्वपि प्रतिमासु उक्तदत्तीनां नूनं ग्रहणं विधेयं, न प्राणान्तेप्यधिकदत्तिग्रहणम् । उक्तदत्तीनामलाभे संतोष एव इति सप्त प्रतिमाः, तत्र अष्टमी प्रतिमा सप्ताहोरात्राणि पूर्वमेकभक्तं, प्रथमदिने द्वितीयदिने अपानकोपवासः, तृतीये एकभक्तं, चतुर्थे अपानकोपवासः, पञ्चमे एकभक्तं, षष्ठे अपानकोपवासः, सप्तमे एकभक्तम्, इति चतुर्थत्रयतपसा समाप्यते । तत्रैकभक्तेषूज्झितभिक्षाग्रहणं, सप्ताहोरात्रं सर्वपरीषहोपसर्गसहः कायोत्सर्गोत्तानासनस्थो निष्प्रकम्पो गमयेत् । भिक्षाग्रहणवर्जितं सदैव प्रतिमासु कायोत्सर्गसंलीनतायुतउत्कासनकारी तिष्ठेत् इत्यष्टमी प्रतिमा ८ नवमी प्रतिमापि सप्ताहोरात्राणि, तत्र तपश्चरणमष्टमी प्रतिमावत् तत्र सप्ताहोरात्रमुत्कटिकासनदण्डासनयुतस्तिष्ठेत् इति नवमी ९ । दशमी प्रतिमा सप्ताहोरात्राणि, तपोऽष्टमीप्रतिमावत्परा, तत्र सदैव गोदोहिकासनवीरासनकुब्जकासनस्थितिः इति दशमी १० एका-

दशी प्रतिमा अहोरात्रिकी तत्र पानवर्जितमुपवासद्वयं व्याघ्राश्रितपाणिपादस्थितिः इत्येकादशी ११ द्वादशी प्रतिमैकरात्रिकी, तत्र पानवर्जितमुपवासत्रयं, तत्र निर्निमेषनयनो व्याघ्राश्रितपाणिपादस्तिष्ठेत् १२ इति यतिप्रतिमाद्वादशकम् । सर्वास्वपि प्रतिमासु सर्वगच्छपरित्याग इत्यादिचर्या सर्वप्रतिमासु सदृशी, भिन्नभिन्नोक्ताः प्रत्येकं प्रतिमासु तथैव चर्या विधेयाः । "द्रव्यक्षेत्रकालभावान् दृष्ट्वा मुनिरनामयः । प्रतिमां पूर्वसमये करोतिस्म नचाधुना ॥ १ ॥" द्वादशस्वपि यतिप्रतिमासु सर्वदिनसंख्या मास २८ दिन २६ तत्र तपः संख्या-दत्ति ८४० उपवास २६ एकभक्त २८ ॥ इत्याचार्यश्रीवर्द्धमानसूरिकृते आचारदिनकरे यतिधर्मोत्तरायणे प्रतिमोद्वहनकीर्तनो नाम षड्विंशतितम उदयः ॥ २६ ॥

---

१ एकैकांभोजनेपाने दत्ति गृह्णात्यसौमुनि. यावन्मासंतत्रपूर्णे मासेगच्छेविशेत्पुन· १ एवंसदत्तेर्मासस्य वृद्धिमेकैकशोकरोत् तावद्यावदियंसप्तमासैरजनिसप्तमी २ एकांतरोपवासैश्च विहितावाम्लपारणे. पानाहारोशितेर्ग्रामा-द्बहिरुत्तानशायिना ३ निःप्रकंपेनसर्वेपि सर्गवर्गसहिष्णुना अष्टमीप्रतिमासप्ता-होरात्रैर्विदधेमुना ४ युग्मं द्वस्यंनिष्ठागारिष्ठेन प्रतिमासप्तभिर्दिनै· उत्कविकासनस्थेन तेनतेनेनवम्यपि ५ एवंसप्तदिनैरेव दशमीप्रतिमामुना चक्रेवीरासनस्थेन सद्ध्यानस्थिरचेतसा ६ कृत्वाषष्ठमहोरात्र उवलंबितपाणिना स्थित्वावीरासनेचक्रे प्रतिमैकादशीशुभा ७ कृत्वाष्टममसकोच्य पादौलंबकरःस्थिरः चक्रेमुक्तिशिलादृष्टिर्द्वादशीमेकरात्रिकी ८ द्वादशी-प्रतिमैकरात्रे इति पुस्तकान्तरेऽधिकः पाठः ।

# सप्तविंशतितम उदयः ।

## अथ व्रतिनीव्रतदानविधिः ।

तत्र विंशतिः स्त्रियो व्रतं नार्हन्ति, तासु अष्टादशभिर्दोषैर्यैः पुरुषा व्रतं नार्हन्ति त एव दोषाः अष्टादश गुर्विणी बालवत्सा चेति स्त्रीणां व्रतोपघातकरा दोषा विंशतिः, विंशतिदोषवर्जितां स्त्रियं दीक्षयेत् । कुमारीं वा भुक्तभोगां विरक्तां वा यथायोगेन पतिपुत्रपितृबन्धुभिरनुज्ञातां स्त्रियं दीक्षमाणस्य गुरोः संयमाव्यवच्छेदः साधुवादश्च । यदुक्तमागमे—"पुरिसो अणणुन्नाओ अम्मापि अराइएहि नियसत्ते । इच्छाओ दिक्खग्गहणं पुरिसाणं न परतंतत्तं ॥ १ ॥ इत्थी पुण परतंता अणणुन्नाया पियापईहिंपि । पुन्नाइ अणाएसा न जुग्गा दिक्खगहणंमि ॥ २ ॥" इति सर्वानुमतायाः स्त्रिया व्रतदानं कार्यम् । तस्य च विधिः । सर्वोपि मुनिव्रतदानसदृश एव नवरम् । उपनयनं शिखासूत्रापनयनं गुरुकरेण वेषदानं नास्ति । वेषदानमन्यव्रतिनीकरेण, शेषं यतिव्रतदानवत् ॥ इत्याचार्यश्रीवर्द्धमानसूरिकृते आचारदिनकरे यतिधर्मोत्तरायणे व्रतिनीव्रतदानकीर्तनो नाम सप्तविंशतितम उदयः ॥ २७ ॥

---

# अष्टाविंशतितम उदयः ।

## अथ प्रवर्तिनीपदस्थापनाविधिः ।

इह केचित् प्रवर्तिनीपदं महत्तरापदमेकाभिधानमेव भाषन्ते। केचिच्च पृथक्। अस्माभिश्च सर्वगच्छाचार्योपाध्यायसम्मततया पृथगेव उच्यते । तत्र प्रवर्तिनीपदार्हा व्रतिनी यथा—"जितेन्द्रिया विनीता च कृतयोगा धृतागमा। प्रियंवदा प्राञ्जला च दयार्द्रीकृतमानसा ॥ १ ॥ धर्मोपदेशनिरता सस्नेहा गुरुगच्छयोः । शान्ता विशुद्धशीला च क्षमावल्यतिनिर्मला ॥ २ ॥ निःसङ्गा लिखनाद्येषु कार्येषु सततोद्यता । धर्मध्वजाद्युपधिषु करणीयेषु सत्तमा ॥ ३ ॥ विशुद्धकुलसंभूता सदा स्वाध्यायकारिणी । प्रवर्तिनीपदं सा तु व्रतिनी ध्रुवमर्हति ॥ ४ ॥ इति प्रवर्तिनीपदयोग्यव्रतिनीलक्षणम् ॥ प्रवर्तिनीपदस्थापनाविधिरभिधीयते । यथोक्तगुणयुक्ताया व्रतिन्याः कृतलोचायाः कृतप्रासुकस्तोकजलस्नानायाः श्राद्धजनकृतेन महता महोत्सवेन प्रवर्तिनीपदग्रहणं विधीयते। तत्र समवसरणस्थापनं प्रवर्तिनी पूर्ववत् त्रिः समवसरणं प्रदक्षिणयेत् । ततः सदशवेषरजोहरणमुखवस्त्रिकाधारिणी क्षमाश्रमणपूर्वं निषद्यासीनस्य गुरोर्भणति "इच्छाकारेण तुज्झे अम्हं पवत्तिणीपयारोवणियं नंदिकड्ढावणियं वासक्खेवं करेह चेइ आइं च वंदावेह" ततो गुरुर्वर्द्धमानविद्याभिमन्त्रितवासैर्वासक्षेपं करोति। ततो गुरुप्रवर्तिन्यौ वर्द्धमानाभिः स्तुतिभिश्चैत्यवन्दनं कुरुतः । श्रुतशान्तिक्षेत्रादि-

देवताकायोत्सर्गस्तुतिकथनानि पूर्ववत् । ततः "पवत्तिणीपयारोवणियं करेमि काउस्सग्गं अन्नत्थ ऊ० याव-दप्पाणं वो०" कायोत्सर्गश्चतुर्विंशतिस्तवचिन्तनं चतुर्विंशतिस्तवभणनं । ततः प्रवर्तिनी मुखवस्त्रिकां प्रतिलिख्य द्वादशावर्तवन्दनं ददाति, ततः क्षमाश्रमणपूर्वं भणति "इच्छाकारेण तुज्झे अह्मं गच्छसाहुसाहुणीपवत्तणं अणुजाणह" गुरुः कथयति "अणुजाणामि" ततः षट्क्षमाश्रमणयुक्तिर्गुरुवचनयुक्तिश्च पूर्ववत् । ततः संप्राप्तायामाचार्यपदोचितायां लग्नवेलायां गुरुः प्रवर्तिन्या दक्षिणकर्णे गन्धपुष्पाक्षतैः संपूज्य त्रिः षोडशाक्षरीं परमेष्ठिविद्यां दद्यात् । संपूजनार्थमष्टादशवलयं परमेष्ठिमन्त्रचक्रपटं च दद्यात् । तत एकवेलं लघुनन्दीपाठः, चतुर्विधसङ्घस्य वासदानं, सर्वेपि तच्छिरसि वासाक्षतान्निक्षिपन्ति । ततो गुरुर्द्विगुणपादप्रोञ्छनोपविष्टायास्तस्या अनुज्ञां ददाति । यथा—"व्रतिनीवाचनादानं साध्वीनां च प्रवर्तनम् । धर्मव्याख्यापि सततं साधूनामुपधिक्रिया ॥ १ ॥ उपधिग्रहणं चैव साधुसाध्व्योश्च शिक्षणम् । श्राद्धश्राद्ध्योस्तपोनुज्ञा कार्या वत्से सदा त्वया ॥ २ ॥" इति प्रवर्तिन्यां गुर्वाज्ञाः । अथ निषेधाः—व्रतिन्या व्रतदानं च वन्दनकादिदापनम् । कम्बलाद्युपवेशश्च व्रतानुज्ञा तथैव च ॥ १ ॥ इत्यादि वर्जनीयं तु वत्से विनतया त्वया । गुरोर्महत्तरायाश्च लङ्घनीयं च वो नहि ॥ २ ॥" ततः साध्व्यः श्रावकश्राविकास्तां वन्दन्ते श्राविका वन्दनकं न ददाति ॥ इत्याचार्यश्रीवर्द्धमानसूरिकृते आचारदिनकरे यतिधर्मोत्तरायणे प्रवर्तिनीपदस्थापनाकीर्तनो नाम अष्टाविंशतितम उदयः ॥ २८ ॥

---

# एकोनत्रिंशत्तम उदयः ।

## अथ महत्तरापदस्थापनाविधिरभिधीयते ।

महत्तरापदानर्हा यथा—"कुरूपा खण्डिताङ्गी च हीनान्वयसमुद्भवा । मूढा दुष्टा दुराचारा सरोगा कटुभाषिणी ॥ १ ॥ सर्वकार्येष्वनभिज्ञा कुमुहूर्तोद्भवा तथा । कुलक्षणाचारहीना युज्यते न महत्तरा ॥ २ ॥" महत्तरापदार्हा यथा—"सिद्धान्तपारगा शान्ता कृतयोगोत्तमान्वया । चतुःषष्टिकलाज्ञात्री सर्वविद्याविशारदा ॥ १ ॥ प्रमाणादिलक्षणादिशास्त्रज्ञा मञ्जुभाषिणी । उदारा शुद्धशीला च पञ्चेन्द्रियजये रता ॥ २ ॥ समस्तोपधिसंदर्भकृताभ्यासातिधैर्ययुक् ॥ ३ ॥ दयापरा सदा धर्मव्याख्याननिपुणा लब्धियुक्ता प्रबोधकृत् । गच्छानुरागिणी नीतिनिपुणा गुणभूषणा ॥ ४ ॥ सबला च विहारादौ पञ्चानन्दा तत्त्वज्ञा बुद्धिशालिनी । तिथिचारपरायणा । महत्तरापदार्हा स्यादीदृशी व्रतिनी ध्रुवम् ॥ ५ ॥" इति महत्तरापदार्हा लक्षणम् । तत्र तिथिवारर्क्षलग्नप्रभृति आचार्यपदस्थापनायोग्यम्, अमारिघोषणावेदियवारादिनिरुञ्छनप्रभृति श्राद्धैर्व्यवहारार्थं विधीयते, सङ्घपूजादिमहोत्सवः सर्वोऽप्याचार्यपदवत् तथा प्रवर्तिनीपदयोग्या व्रतिनी कृतलोचा लग्नदिने प्राभातिककालग्रहणं स्वाध्यायप्रस्थापनं च कुर्यात् । ततो व्रतिनी चैत्ये धर्मागारे वा समवसरणं त्रिः प्रदक्षिणयेत् । ततो व्रतिनी गुरोः पुरः क्षमाश्रमणपूर्वं भणति "भगवन् इच्छाकारेण तुज्झे अम्हं पुव्वअज्जा चंदण-

*

त्ताइ निसेविअ महत्तरापयस्स अणुजाणावणिअं नंदिकड्ढावणिअं वासक्खेवं करेह चेइआइं च वंदावेह" ततो गुरुशिष्ये वर्द्धमानस्तुतिभिश्चैत्यवन्दनं कुरुतः । महत्तरा गुरोः वामपार्श्वे तिष्ठति । श्रुतशान्त्यादिकायोत्सर्गस्तुतिपठनं पूर्ववत्, पुनः शक्रस्तवपठनं, अर्हणादिस्तोत्रभणनं ततो "महत्तरापय अणुजाणावणिअं करेमि काउस्सग्गं अन्नत्थऊ० यावदप्पाणं वो० चतुर्विंशतिस्तवचिन्तनं चतुर्विंशतिस्तवपठनं इति गुरुमहत्तरे कुरुतः । ततो गुरुरूर्ध्वसंस्थितो नमस्कारत्रयभणनपूर्वं लघुनन्दीं पठति, तत्पठनानन्तरं "इमं पुण पट्टवणं पडुच्च अमुगाए महत्तरापयस्स अणुन्ना नंदी पवट्टइ" गुरुरित्युक्त्वा महत्तराशिरसि वासान् क्षिपति। ततो गुरुरुपविश्य गन्धाभिमन्त्रणं मुद्रापञ्चकेन परमेष्ठि १ सौभाग्य २ गरुड ३ मुद्गर ४ कामधेनु ५ मुद्रारूपेण करोति । सङ्घादेरपि वासदानं करोति । ततो महत्तरा क्षमाश्रमणपूर्वं भणति "इच्छाकारेण तुज्झे अह्मं महत्तराणयं अणुजाणह" गुरुः कथयति "अणुजाणामि" ततः षट् क्षमाश्रमणगुरुवाक्यादि पूर्ववत् नवरं। पञ्चमक्षमाश्रमणान्ते महत्तरा समवसरणं त्रिः प्रदक्षिणयेत् । ततः षष्ठं क्षमाश्रमणं दत्त्वा "तुम्हाणं पवेइअं संदिसह साहूणं पवेएमि संदिसह काउस्सग्गं करेमि महत्तरापयं अणुजाणावणिअं करेमि काउस्सग्गं अन्नत्थ ऊ० यावदप्पाणं वोसिरामि" चतुर्विंशतिस्तवचिन्तनं चतुर्विंशतिस्तवभणनं च करोति, ततः प्राप्तायां लग्नवेलायां गुरुः महत्तरां स्कन्धकम्बलोपरि निवेशयति निषद्यां च तत्करे ददाति । ततस्तत्काललग्नवेलायां गुरुः महत्तरादक्षिणकर्णे गन्धपुष्पाक्षतैः संपूज्य गुरुपरम्परागतां पूर्णां वर्धमानविद्यां त्रिः पठति, चतुर्वारं

वर्द्धमानविद्यापटं च पूजार्थं ददाति, नामकरणं च अमुकश्रीरिति श्रीवर्णान्तं करोति । ततः आर्यचन्दनामृगावतीसदृशी भवेति आगास्य अनुशास्तिं ददाति । अनुशास्तिर्यथा—"व्रतिनीव्रतदानं च व्रतानुज्ञा च गेहिनाम् । साधुसाध्व्यनुशास्तिस्तु श्राद्धीवन्दनदापनम् ॥ १ ॥ इत्यादि कर्म वत्से त्वं कुर्याः काले यथाविधि । व्रतिनां व्रतदानं च प्रतिष्ठां च विवर्जयेः ॥ २ ॥" इति गुरुभिरनुशासिता महत्तरा वन्दनकं दत्त्वा निरुद्धमाचाम्लं गुरुसकाशाद् गृह्णाति । साध्वीश्रावकश्राविकाजनस्तां वन्दते, श्राविकाश्च द्वादशावर्तिवन्दनं ददाति । महत्तरा धर्मव्याख्यानं करोति । अन्यगच्छेषु सर्वेषु पूर्वावस्यादीक्षिता व्रतिन्यो महत्तरापदमाप्नुवन्ति । असद्गच्छे तु कौमार्यदीक्षितैव महत्तरा भवति । महत्तरा व्रतिन्याः प्रवर्तिनीपदं ददाति न महत्तरापदं । प्रवर्तिनीपदे स्कन्दकम्बलिकासनवर्द्धमानविद्यापटदानवर्जितोऽयमेव विधिः पूर्वोदये कथितः ॥ इत्याचार्यश्रीवर्द्धमानसूरिकृते आचारदिनकरे यतिधर्मोत्तरायणे महत्तरापदस्थापनकीर्तनो नाम एकोनत्रिंशत्तम उदयः ॥ २९ ॥

---

## त्रिंशत्तम उदयः ।

### अथ अहोरात्रचर्याविधिः ।

अथाहोरात्रचर्या व्रतिनो व्रतिन्याः, सा च व्रतिनां व्रतिनीनां चाहोरात्रिकी चर्या न धर्मोपकरणैर्विना

भवति । तदर्थमुपकरणानां संख्याः प्रमाणयुक्तयः कथ्यन्ते । ततो जिनकल्पिनां स्थविरकल्पिनां व्रतिनीनां चोपकरणानि । तत्र च तेषां तासां च पुस्तकमषीभाजनलेखनीपट्टिकापुस्तकबन्धपिच्छप्रमार्जनीप्रभृति ज्ञानोपकरणं भूयस्तरमपि यतेर्निष्परिग्रहव्रतं नोपहन्ति । तथा च कृपणीसूचीकर्त्तरीशिलापाषाणदलकदोरककङ्कतवर्तनककाष्ठपात्रीकाष्ठपट्टचतुष्किकादेवसरोपकारिप्रभृति वस्तु पुस्तकादिज्ञानोपकरणसाधनं साधूपकरणसमारचनकरं वसतिनिर्वाहहेतु च न परिग्रहव्रतस्य साधोर्व्रतभङ्गाय, उपकरणं तु साधुशरीरप्रतिबद्धं संयमनिर्वाहकरमुच्यते । तज्जिनकल्पिकानामुपकरणं द्वादशधा । यथा—"पत्तं १ पत्ताबंधो २ पायट्ठवणं ३ च पायकेसरिआ ४ । पडलाइं ५ रयत्ताणं ६ च गुच्छगो ७ पायनिज्जोगो ८ ॥ १ ॥ तिन्नेव ९ य पच्छागा १० रयहरणं ११ चेव होइ मुहपत्ती १२ । एसो दुवालसविहो उवही जिणकप्पियाणं तु ॥ २ ॥ जिणकप्पिया वि दुविहा पाणी पाया पडिग्गहधरा य । पाउरणमपाउरणा इक्किक्का ते भवे दुविहा ॥ ३ ॥ दुग २ तिग ३ चउक्क ४ पणगं ५ नव ९ दस १० इक्कारसेव ११ बारसगं १२ । एए अट्ठ विकप्पा जिणकप्पे हुंति उवहिस्स ॥ ४ ॥ पुत्तीरयहरणेहिं दुविहो २ तिविहो अ इक्ककप्पजओ ३ । चउहा कप्पदुगेण ४ कप्पतिगेणं तु पंचविहो ५ ॥५॥ दुविहो तिविहो चउहा पंचविहोवि सपाय निज्जोगो । जायइ नवहा ९ दसहा १० इक्कारसहा ११ दुवालसहा १२ ॥ ६ ॥ अहवा दुगं च नवगं उवगरणे हुंति दुन्नि ओ विगप्पा । पाउरणवज्जियाणं विसुद्धजिणकप्पियाणं तु ॥ ७ ॥ तवेण १ सुत्तेण २ सत्तेण ३ एकत्तेण ४ बलेण व ५ । तुलणा पंचहा वुत्ता जिणकप्पे पडिवज्जिए

|| ८ || स्थविरकल्पितानामुपकरणानि यथा—एए चेव दुवालस मत्तगअइरेग चोलपट्टो ओ । एसो चउद्स-
रूवो उवगरणो थेरकप्पम्मि || ९ || स यथा—पत्तं १ पत्ताबंधो २ पायट्ठवणं च ३ पायकेसरिया । पडलाय ५
रयत्ताणं ६ गुच्छगो ७ पायनिज्जोगो ८ || १० || तिन्नेव य ९ पच्छागा १० रयहरणं चेव ११ होइ मुहपत्ती
१२ । इत्तो अ मत्तए खलु १३ चउद्समे कमढए चेव १४ || ११ || इति साधूनामुपकरणसंख्या || अथोपधी-
नां प्रमाणम् । तिन्निविहत्थी चउरंगुलं च भाणस्स मज्झिमपमाणं । इत्तो हीणजहन्नं अइरेगयरं तु उक्कोसं ||१२||
पत्ताबंधपमाणं भाणपमाणेण होइ कायव्वं । जह गंठम्मि कयम्मी कोणा चउरंगुला हुंति || १३ || पत्तगठ-
वणं तह गुच्छगो अ पायपडिलेहणं चेव । तिन्हं चेव पमाणं विहत्थि चउरंगुलं चेव || १४ || अड्डाइज्जा हत्था
दीहा छत्तीस अंगुले रुंदा । बीअं पडिग्गहाओ ससरिआओ अ निप्पन्नं || १५ || कयलीगब्भदलसमा पडला
उक्किट्ठमज्झिमजहन्ना । गिम्हे हेमं तंमि आवासासु अ पाणरक्खट्ठा || १६ || तिन्नि चउ पंच गिम्हे चउरो पंच
छगं च हेमंते । पंच च्छसत्त वासासु हुंति घणमसिणरूवा ते || १७ || माणं तु रयत्ताणे भाणपमाणेण होइ
निप्पन्नं । पायाहिणं करतं मज्झे चउरंगुलं कमई || १८ || कप्पा आयपमाणा अड्डाइज्जा य वित्थडाहत्था । दो
चेव सुत्तिया उन्नओ अ तइओ मुणेयव्वो || १९ || छत्तीसंगुलहीहं[1] चउवीसं अंगुलाइ दंडो सो । अट्ठंगुला
दसाओ एगयरं हीणमहियं च || २० || चउरंगुलं विहत्थी एअं मुहणं तयस्सउ पमाणं । बीओ विय आएसो

१ वत्तीसं इत्यपि पुस्तकान्तरे दृश्यते ।

मुहप्पमाणेण निप्पन्नं ॥ २१ ॥ जो मागहो अ पत्थो सविसेसयरं तु मत्तगपमाणं । दोसुवि दव्वग्गहणं वासावासे अ अहिगारो ॥ २२ ॥ सूओ अणस्स भरियं दुगाउसद्धाण मागओ साहू । भुंजइ एगट्ठाणे एअं किर मत्तगपमाणं ॥ २३ ॥ दुगुणो चउग्गुणो वा हत्थो चउरस्सु चोलपट्टो अ । थेरजु वाणणट्ठा सण्हे थूलम्मि य विसेसो ॥ २४ ॥ संघारुत्तरपट्टो अड्ढारज्जा य आयया हत्था । दुन्हंपि अवित्थारो हत्थो चउरंगुलं चेव ॥ २५ ॥ उपकरणानामर्थो यथा—आयाणे निक्खेवे ट्ठाणनिसी अण तु अट्ठ संकोए । पुव्विं पमज्जणट्ठा लिंगट्ठा चेव रयहरणम् ॥ २६ ॥ संपाइमरयरेणु पमज्जणट्ठा वयंति मुहपत्तिं । नासं मुहं च बंधइ तीए वसइं पमज्जंतो ॥ २७ ॥ छक्कायरक्खणट्ठा पायग्गहणं जिणेहिं पन्नत्तं । जे य गुणा संभोए हवंति ते पायग्गहणे वि ॥ २८ ॥ तणगहणानलसेवा निवारणं धम्मसुक्क जाणट्ठा । दिट्ठं कप्पग्गहणं गिलाणमरणट्ठया चेव ॥ २९ ॥ वेउव्व वाउडे वाइए यन्ही क्खद्ध पज्जणणे चेव । तेसिं अणुग्गहट्ठा लिंगुदयट्ठा य पट्टो उ ॥ ३० ॥ अथ प्रत्येकबुद्धोपकरणानि अवरे वि सयंबुद्धा हवंति पत्तेअ बुद्धमुणिणोवि । पढमा दुविहा एगे तित्थयरा तद्वियरा अवरे ॥ ३१ ॥ तित्थयरवज्जिआणं बोही १ उवही २ सुअं च ३ लिंगं च ४ । मेआइं तेसिं बोहि जाइस्सरणाइणा होइ ॥ ३२ ॥ मुहपत्ती १ रयहरणं २ कप्पातिगं ५ सत्तपायनिज्जोगे १२ । इय बारसहा उवही होइ सयं बुद्धसाहूणं ॥ ३३ ॥ हवइ इमेसि मुणीणं सुत्ताहीअं सुअं अहव ने अं । जइ होइ देवसया से लिंगं अप्पइ अहव गुरुणो ॥ ३४ ॥ जइ एगागीवि हु विहरणक्खमो तारिसी व से इच्छा । तो कुणइ त मन्नह

गच्छवास मणुसरइ निअमेण ॥ ३५ ॥ पत्ते अवुद्धसाहूण होइ वसहाइ दंसणे बोही । पुत्तियरयहरणेहिं तेसिं जहन्नो दुहा उवही ॥ ३६ ॥ मुहपत्ती रयहरणं तह सत्तय पत्तयाइ निज्जोगो । उक्कोसो वि नवविहो सुअं पुणो पुव्वभवगहि अं ॥ ३७ ॥ इक्कारस अंगाइं जहन्नओ होइ तं तहोक्कोसुं । देसेण असंपुन्नाइं हुंति पुव्वाइं दस तस्स ॥ ३८ ॥ लिंगं तु देवयादइ होइ कइयावि लिंगरहिओ वि । एगागि च्चिय विहरइ नागच्छे गच्छवासे सो ॥ ३९ ॥ पत्ते अ वुद्धमुणिणो इमाइ माइ एअ मुवगरणं । अर्धगाथैव ॥ ४० ॥ अथ साध्वीनामुपकरणानि यथा—उवगरणाइं चउदस य चोलपट्टाइ कमटयज्ज आइं । अज्जाणवि भणिआइं अहिआणि अ हुंति ता णवरं ॥ ४१ ॥ ओगहणंतम १ पट्टो २ अद्धोरुअ ३ चलणिआ य ४ वोधव्वा । अब्भितर ५ बाहिणिअंसिणीअ ६ तह कंचुए चेव ७ ॥ ४२ ॥ उक्कत्थिअ ८ वेकत्थी ९ संघाडी १० चेव खंधगरणी ११ अ । ओहो वहिम्मि एए अज्जाण पन्नवीसं तु ॥ ४३ ॥ अथ प्रत्युपकरणोपयोगो यथा—अह उग्गजणं तरता घसंचियं गुज्झदेसरक्खट्ठा । तं तु पमाणे णिक्कं घणमसिणं देह मासज्जा ॥ ४४ ॥ पट्टो वि होइ एगो देहपमाणेण सो उ भणियव्वो । डायंतो गहणंतं पडिवद्धो मल्लकच्छोव्व ॥ ४५ ॥ अद्धोरुओ वि ते दोवि गिन्हिओ तथा यए कडीभागं । जाणुपमाणा चलणी असीविआ लंखिआ एव ॥ ४६ ॥ अंतो निअंसणी पुणलीणतरी जाव अद्धजंघाओ । वाहिरगा जाखलु सावि कडिअदोरेण पडिवद्धा ॥ ४७ ॥ छाएइ अणुकुइए उरोरुहे कंचुओ असिव्विओ । एमेव य ओ कच्छिअ सा नवरं दाहिणे पासे ॥ ४८ ॥ वेकच्छिया उ पट्टो कंचुगमुक्कच्छियं

च छायंतो । संघाडीओ चउरो तत्थ दुहत्था उवसयम्मि ॥ ४९ ॥ दुन्निति हत्थायामा सिक्खट्ठा एग एग उच्चारो । ओसरणे चउहत्था निसन्न पच्छायणा मसिणा ॥ ५० ॥ खंधगरणी उ चउहत्थवित्थडा वायविहुय रक्खट्ठा । खुज्जा करणीओ कीरइ सूववईणं कुडहहेउं ॥ ५१ ॥" पत्तं इत्यादि, पात्रं भाजनं पानान्नग्रहणस्थापनप्राशनयोग्यं, तच्च त्रिविधं, काष्ठालाबुमृण्मयं नतु स्वर्णरूप्यमणिताम्रकांस्यलोहदन्तचर्ममयम् । यत उक्तमागमे—"कंसेसु कंसपाएसु कुंडमोएसु वा पुणो । भुंजंतो असणपाणाइ आयारा परिभस्सइ ॥ १ ॥ सीओदगसमारंभे मत्तधोयणछड्डुणे । जाइं छन्नंति भूआइं दिट्ठो तत्थ असंयमो ॥ २ ॥ पच्छाकम्मं पुरेकम्मं सिआ तत्थ न कप्पई । एअमट्ठं न भुंजंति निग्गंथा गिहिभायणे ॥ ३ ॥" अलाबुपात्रकथने नालिकेरपात्रमप्यन्तर्भवति १ पात्रबन्धः बन्धनझोलिका २ पात्रस्थापनं यस्यां झोलिकायां पात्राणि संस्थाप्य मुनयो भिक्षाटनं कुर्वन्ति तत् पात्रस्थापनं ३ पात्रकेशरी लघुरजोहरणी पात्रप्रतिलेखनार्थं युज्यते ४ पटलाः वस्त्रमयानि पात्राच्छादनार्थं भुजोपरि क्षेप्यवस्त्राणि ५ रजस्त्राणं पात्रवेष्टनकं ६ गुच्छकः पात्रबन्धस्य अधउपरि ऊर्णामयः छादनरूपः प्रतिष्ठानमिति कथ्यते । तच्च अधः पृथिव्यम्बुवनस्पतिसंघट्टनिवारणाय, उपरि चातपनिवारणाय धार्यते ७ पात्रनिर्योगः गुच्छकबन्धनार्थं तृसिकरणबन्धनार्थं च दोरकोपकरणादि सर्वमेतत्पूर्वो-



१ जिणकप्पियाण संखाओ क्तिथाएगवसहीएत्ति जिणकप्पियायसाहू । उक्कोसेणंतुएगवसहीए सत्त य हवंतिकहमवि अहियाकइयाविनोहुंति ॥ ५२ ॥ ग्रंथान्तरे इय गाथा दृश्यते ।

क्तमपि पात्रोपकरणं सर्वं पात्रनिर्योगस्यान्तर्भवति । त्रयः प्रच्छादाः पटीद्वयं तृतीया कम्बली १० रजोहरणं धर्मध्वजः ११ मुखवस्त्रिका मुखाच्छादनवस्त्रम् १२ एष द्वादशविधो जिनकल्पिनां साधूनामुपधिः । जिण-कप्पिआ इति०—जिनकल्पिनोपि द्विविधाः पाणिपात्रभुजः १ पात्रभुजश्च २ तौ द्वावपि द्विद्विविकल्पौ, पाणि-पात्रा द्विविधाः सप्रावरणा १ अप्रावरणाश्च २। दुगतिग इति—पाणिपात्राणामप्रावरणानां जिनकल्पिनामु-पकरणद्वयं त्रयं। पात्रभृतामप्रावरणानां जिनकल्पिनामुपधिः नवविधो दशविधो वा। सप्रावरणानां पात्र-भृतां जिनकल्पिनामुपधिरेकादशविधो द्वादशविधो वा इति जिनकल्पे अष्टप्रकार उपधिभेदः । पुत्तिरय० इति—मुखवस्त्रिकारजोहरणाभ्यां द्विविध उपधिः १ सचैककल्पयुतस्त्रिविधः २ स च कल्पद्वययुतश्चतुर्विधः ३ स च कल्पत्रययुतः पञ्चविधः ४ तथाच द्विविधो मुखवस्त्रिकारजोहरणरूपः सप्तविधपात्रनिर्योगयुतो नवधा भवति ५ त्रिविधो रजोहरणमुखवस्त्रिकैककल्परूपः सप्तविधपात्रनिर्योगयुतो दशधा भवति ६ चतुर्विधो मुखवस्त्रिकारजोहरणकल्पद्वयरूपः सप्तविधपात्रनिर्योगयुत एकादशधा भवति ७ पञ्चविधो मुखवस्त्रिकारजो-हरणकल्पत्रयरूपः सप्तविधपात्रनिर्योगयुतो द्वादशधा भवति ८ आद्यमुपकरणविकल्पचतुष्कमप्रावरणानां पाणिपात्राणां जिनकल्पिनां भवति। अपरं चोपकरणविकल्पचतुष्कं सप्रावरणानां पात्रभृतां जिनकल्पिनां भवति। अथवा विशुद्धजिनकल्पिनां द्विभेदमेवोपकरणं भवति । पाणिपात्राणां रजोहरणमुखवस्त्रिकारूपं द्विविधमेवोपकरणं भवति। पात्रभृतां च मुखवस्त्रिकारजोहरणे सप्तविधपात्रनिर्योगश्च नवविधमुपकरणं भ-

वति इति विशुद्धजिनकल्पिनामुपकरणविकल्पद्वयं, कल्पत्रयेण प्रावरणधारणं जिनकल्पिनां न खलु जिनकल्पविशुद्धिं करोति। जिनकल्पतुलना तु पञ्चविधा। तवेण इति–तपसा १ सूत्रेण २ सत्त्वेन ३ एकत्वेन ४ बलेन च ५ तत्र जिनकल्पे तपः षण्मासं पानान्ने विनापि नेन्द्रियग्लानिहेतु १ सूत्रं च द्वादशाङ्गीपाठः ससूत्रः सार्थः सग्रन्थः साङ्गः सभेदः सोपाङ्गः सनिर्युक्तिः ससंग्रहः सव्याकरणः सनिरुक्तः सपरमार्थः सहेतुः सदृष्टान्तः २ सत्त्वं च वज्रपातेप्यप्रकम्पता, शक्रस्योत्तरवैक्रिये सर्वर्द्धित्ववरेप्यलोभता, रम्भाद्यप्सरोदर्शनेप्यकामता, षण्मासोपवासेपि नानारसलाभेप्यनभिलाषः ३ एकत्वं च सर्वशक्रचक्रयर्द्धचक्रिबले दृष्टेपि नान्यापेक्षा, नचापि दुष्टदैवतश्वापदरोगाभिभवेपि परावलोकरक्षणशुश्रूषाभिलाषः, न चापि जिनकल्पिन आत्मसदृशस्यापि स्वपार्श्वे संवासः किं पुनः परेषाम् ४ बलं च मत्तगजसिंहादिव्यालानां चक्रवर्तिकटकस्यापि न मार्गदानम् ५ इति पञ्चविधा जिनकल्पग्रहणे तुलना इति जिनकल्पिनामुपकरणचर्यायुक्तिः ॥ अथ स्थविरकल्पिनामुपकरणानि द्वादश तान्येव पूर्वोक्तानि यथा। पत्तं इति– पात्रं १ पात्रबन्धः २ पात्रस्थापनं ३ पात्रकेशरी ४ पटलाः ५ रजस्त्राणं ६ गुच्छकः ७ इति सप्तविधः पात्रनिर्योगः कल्पत्रयं द्विपटी कम्बलीरूपं १० रजोहरणं ११ मुखवस्त्रिका १२ इति द्वादशधा स एव मात्रकोत्तरपट्टाभ्यां १४ स्थविरकल्पिनां चतुर्दशधोपकरणमित्युपकरणसंख्या ॥ अथोपकरणानां प्रमाणम्। पात्रस्य मध्यमस्य स्वभावेन वितस्तित्रयमङ्गुलचतुष्कं परिधिः प्रमाणमुत्सेधप्रमाणं च, ततश्चेतो हीनं जघन्यमितोधिकमुत्कृष्टम् इति काष्ठपात्रप्रमाणम्, तथा च

यथाप्रासं यथायोग्यं यथाप्रयोजनं प्रमाणं, मृत्पात्रेषु च घटकु-
नालिकेरालाबुमयेषु तृप्तिकरणकटाहटकादिषु यथाप्रासं यथायोग्यं यथाप्रयोजनं प्रमाणं, तथा च सर्वत्र यतिपात्रे दृष्टिप्रसरप्रतिलेखनाकरणं शुद्धिर्गवे-
ण्डादिषु साधुसंख्यापानान्नगवेषणाप्रमाणं, तथा च सर्वत्र यतिपात्रे दृष्टिप्रसरप्रतिलेखनाकरणं शुद्धिर्गवे-
ण्डादिषु साधुसंख्यापानान्नगवेषणाप्रमाणं, "जत्थ य कप्पवेसो जत्थ य सव्वत्थ दिट्ठिपसरो अ।
घ्यते इत्येव संस्थानं प्रमाणं च । यत उक्तमागमे— "जत्थ य कप्पवेसो जत्थ य सव्वत्थ दिट्ठिपसरो अ।
तं किर मुणिणो पत्तं जुग्गं सेसं पुण अजुग्गं ॥ १ ॥ वारस बाहिं ठाणा बारसठाणा य हुंति मज्झंमि । पत्त-
पडिलेहणाए पणवीसयमो कप्पंसो ॥ २ ॥" पात्रबन्धप्रमाणं तु। पात्रप्रमाणेन व्यतिरिक्तं कर्तव्यं यथा पात्र-
बन्धने ग्रन्थौ दत्तौ कोणौ चतुरङ्गुलौ तिष्ठतः । पात्रकस्थापनं गुच्छकश्च पात्रप्रतिलेखनं च त्रयाणां प्रमाणं
वितस्तिश्चत्वारोङ्गुलाश्च पात्रस्थापने पात्रस्थापनादनन्तरं वितस्तिश्चत्वारोङ्गुलाश्च बाहुक्षेपार्थं ग्रन्थिदानार्थं च
गवेष्यन्ते । गुच्छश्च तद्वत्, पात्रप्रतिलेखन्यां वितस्तिमात्रो दण्डकः, चतुरङ्गुला दशा, तथा च पटलाः सार्द्ध-
हस्तद्वयदीर्घाः षड्त्रिंशदङ्गुलपृथुलाः कदलीगर्भपत्रसमा भवन्ति, पुनरपि तेषां प्रमाणं यतिशरीरपात्रोत्से-
धप्रमाणेन भवति, ते च ग्रीष्महेमन्तवर्षासु उत्कृष्टमध्यमजघन्याः प्राणिरक्षार्थं भवन्ति, त्रिश्चतुःपञ्चप्रमाणा
ग्रीष्मे, चतुःपञ्चषट्प्रमाणा हेमन्ते, पञ्चषट्सप्तप्रमाणा वर्षासु, ते च निबिडसूत्रव्यूतमसृणवस्त्रमया भवन्ति ।
रजस्त्राणे प्रमाणं पात्रप्रमाणं, न ततोपि पात्रवेष्टने क्रियमाणे सर्वपरिधिकोणैश्चतुरोङ्गुलान्न क्रामति तथा
विधेयं, कल्पाः साध्वङ्गदीर्घताप्रमाणदैर्घ्याः सार्धद्वयहस्तपृथुला भवन्ति, तत्र द्वौ कार्पासवस्त्रमयौ एकश्च
ऊर्णामयः, रजोहरणं च द्वात्रिंशदङ्गुलप्रमाणं, तत्र चतुर्विंशत्यङ्गुलो दण्डः, अष्टाङ्गुला दशाः, क्वचिद्दीर्घं हीन-

मधिकं च भवति, दशानां दण्डस्य च क्वचिन्मुनिकायप्रमाणाद्वा गच्छाचाराद्वा हीनाधिकता भवति, पूर्वं च कम्बलखण्डान्निषद्यारूपाकृष्टा एव दशा आसन्, सांप्रतं तु भिन्नोर्णामय्यः निषद्यायास्तु प्रसाधनं दृढीकरणार्थं धर्मोपकरणसौन्दर्यकरणार्थं च। यत उक्तमागमे—"नियदेहं भूसंतो अणंतसंसारिओ इवई। साहू उपगरणाणं भूसाजुत्ता जिणधम्मकंक्खट्टा ॥ १ ॥" तत्र रजोहरणे दण्डभागद्वयच्छादिन्यूर्णानिषद्याः दशावर्जितनिषद्या सर्वदण्डाच्छादिनी वस्त्रमयी निरवद्या। तत्र च कैश्चित् वस्त्रनिषद्योपरि पादप्रोञ्छनकबन्धनं विधीयते। तत्र गच्छाचारः प्रमाणम्। दण्डे च दशाबन्धनं, पूर्वं क्वचिद्रजोहरणदण्डे पतिते केनचित्सादिना गृहीते कसात्वं नीते तदनन्तरं विधीयते, तत्रापि गच्छाचारः प्रमाणम्। तत्र च निषद्योपर्यधोदोरकबन्धनं दशामूलादेकाङ्गुले ततो निषद्यायाः सदण्डायाः द्वौ भागौ अधो मुक्त्वा भागत्रये चोपरि शेषे मध्ये द्वितीयदोरकबन्धनं वितस्तिश्चत्वारोङ्गुलाश्चेति चतुरस्रं मुखवस्त्रिकाप्रमाणं तस्य समारचनावस्त्रस्य पालीं वामतो विधाय स्वतः परत्र भञ्जनेन द्विगुणं कुर्यात्। ततः पुनस्ततोपि द्विगुणं ततस्तिर्यग्भङ्गेनाष्टगुणं कुर्यात्। मुखवस्त्रिकायाः वामपार्श्वे बहिः वस्त्रपालीधारणं दशानां तु धारणं चोपरि, अत्र द्वितीयोप्यादेशः मुखप्रमाणेन कपोलपृथुलताद्वियोगेन मुखवस्त्रिकाया आधिक्यमपि भवति न दोषस्तत्र, मागधप्रस्थप्रमाणेन सविशेषे न मात्रकप्रमाणं पूर्णप्रस्थप्रमाणेन शेषकालेषु द्रव्यग्रहणं, तदधिकेन वर्षासु द्रव्यग्रहणं, तच्च मात्रकं सूपेन भोज्येन भरितं गव्यूतद्वयं गतः साधुरेकस्थाने भुङ्क्ते, एतत्किल मात्रकप्रमाणं चोलपट्टस्तु स्थविराणां कृते कटि-

परिधेर्द्विगुणः, बृहत्कुक्षीणां मुनीनां कृते कटिपरिधेश्चतुर्गुणः सूक्ष्मस्थूलयोरिति विभाषा, चोलपट्टपरिधानं तु नाभिजान्वोरधउपरि चतुरङ्गुलप्रकटीकरणं, संस्तारकोत्तरच्छदयोर्दीर्घत्वं सार्धहस्तद्वयं, द्वयोरपि पृथुत्वं चतुरङ्गुलयुतो हस्तः ॥ अथ साधूपकरणानामुपयोगित्वं यथा—वस्तुन आदाननिक्षेपयोः स्थानोपवेशनशयनेषु पूर्वं प्रमार्जनार्थं च रजोहरणमिति रजोहरणोपयोगः । मुखवस्त्रिका तु निरन्तरसूक्ष्मजीवनिवारणार्थं त्रसरेणुप्रमार्जनार्थं भवति, तयाच्छादितवदनस्य नासामुखमारुतेन न हन्यन्ते सूक्ष्मजीवाः, प्रमार्जनकाले च मुनिस्तया कर्णद्वयावलम्बनेन नासां मुखं च रुणद्धि, इति मुखवस्त्रिकोपयोगः । पात्रग्रहणं तु भूमिपट्टवस्त्रादिषु जीवरक्षार्थं भोजनसंलीनतार्थं च, ये गुणाः संभोगे ते गुणाः पात्रग्रहणेपि । संभोगे यथा एकप्रणिधानैकसंस्थानतल्लीनता भवति, तथैव पात्रभोजनेनान्नपानादिविकिरणमेकचित्ततापरोपेक्षाभावश्च भवति, इति पात्रोपयोगः । शेषाणां पात्रनिर्योगाणां ग्रहणं पात्ररक्षार्थमेव कल्पत्रयग्रहणं च वनज्वलनजलवायुनिवारणार्थं शुक्लधर्मध्यानार्थं च समाधिनिमित्तग्लानानां मरणे आच्छादनार्थं च, इति कल्पोपयोगः । चोलपट्टग्रहणं तु पुरुषवेदोदयोद्भवरक्षार्थं दीर्घलिङ्गानां लिङ्गरोगिणां लज्जानिवारणार्थं च, इति चोलपट्टोपयोगः । मात्रकोपयोगः पूर्वमेवोक्तः, इह कमठशब्देन केचिच्चोलपट्टं, केचित्संस्तारकोत्तरपटमामनन्ति । पात्रस्थापनं केचिद्भिक्षाटनं झोलिकां केचिदधःसत्कंप्रतिष्ठानं कथयन्ति इत्युपकरणोपयोगाः। अथ प्रत्येकबुद्धोपकरणानि—प्रथमं तेषां व्याख्यानत उपकरणानां तत्रैके स्वयंबुद्धाः एके प्रत्येकबुद्धाः, स्वयंबुद्धा द्विविधा एकेर्हन्तः परे च कैश्चिद्दृष्टान्तैः

स्वयमेव बोधिमाप्ताः, अर्हतां तु चोलपट्टाद्युपधिश्रुतलिङ्गादि न, तदपरेषां स्वयंबुद्धानां बोध्युपधिश्रुतलिङ्गादि भवति, तेषां बोधिः पूर्वजन्मस्मरणेन, उपधिस्तु तस्य द्वादशधा—मुखवस्त्रिका रजोहरणं २ कल्पत्रयं ३ पात्र-निर्योगः १२ इति स्वयंबुद्धसाधूनां द्वादशधोपधिः । तेषां च श्रुतं पूर्वाधीतं तद्भवाधीतं च भवति, तस्य च लिङ्गं देवतार्पयति । अथ कल्पिताः सुगुरवः, स यद्येकाकी विहरति तादृशी वा तस्येच्छा तदा तथैव विहरति, नो चेद्गच्छवासमनुसरति च । अथ प्रत्येकबुद्धसाधूनामस्यामवसर्पिण्यां चतुर्णां करकण्डु १ दुर्मुख २ नमि ३ नग्नकनाम्नां ४ वृषभदृष्टान्तेन जलददृष्टान्तेन वलयदृष्टान्तेन रसालद्रुमदृष्टान्तेन क्रमाद्बोधिरभूत् । तेषां जघन्य उपधिर्मुखवस्त्रिकारजोहरणाभ्यामेव, अथवा मुखवस्त्रिकारजोहरणाभ्यां सप्तविधपात्रनिर्योगेन च उत्कृष्टो नवविध उपधिर्भवति । तेषां श्रुतं पुनस्तेषां पूर्वभवाधीतमेव जघन्यमेकादशाङ्गी, उत्कृष्टं च दशोनानि दशपूर्वाणि, तेषां लिङ्गं रजोहरणादि शासनदेवता ददाति, अथवा लिङ्गरहिता अपि भवन्ति, ते महारण्यं गृहमिव विहरन्ति । प्रत्येकबुद्धानामियं स्थितिरिदमुपकरणम् । अथ साध्वीनामुपकरणानि यथा —चतुर्दश तान्येव स्थविरकल्पियतिसत्कानि एकादश चान्यानि यथा—अवग्रहणांतकं १ पट्ट २ अर्द्धोरुकं ३ चलणिका ४ आभ्यन्तरी ५ बाह्यनिवसनी ६ कञ्चुकं ७ उत्कक्षी ८ वैकक्षी ९ संघाती १० स्कन्धकरणी च ११ इत्योघेन व्रतिनीनां पूर्वैस्सह पञ्चविंशतिरुपकरणानि । अथ तेषामुपयोगो यथा—अवग्रहणान्तकं गुह्यरक्षार्थं देहसङ्गेन घनमसृणवस्त्रमयं सुष्ठु बद्धं धार्यते गुह्यदेहप्रमाणं १ पट्टस्तु देहप्रमाण एकः कटिप्रतिबद्धो मल्लक-

क्षावद्भवति । अर्द्धोरुकमपि तादृशमेव ताभ्यां पट्टाद्धोरुकाभ्यां मीलिताभ्यां कटिश्छाद्यते ३ चलनी जानुप्रमाणा अस्यूता लम्बिता च ४ आभ्यन्तरी यावदर्द्धजङ्घामन्तः परिधीयते ५ बहिर्निवसनी तु कटिदोरकेण प्रतिबद्धं घुंटापर्यन्तं धार्यते ६ कञ्चुकस्तु अस्यूत एव स्तनौ छादयति ७ एवमेवोत्कक्षी दक्षिणपार्श्वप्रतिबद्धा ८ वैकक्षी कञ्चुकमौत्कक्षीं च छादयति ९ संघाती चतुर्विधा द्विहस्तप्रमाणोपाश्रये भवति पादप्रोंछनकलक्षणेत्यर्थः १० तत्र द्वे संघाट्टे त्रिहस्ता ग्रामे भिक्षार्थमेकैकोचारप्रस्रवणयोः अपसरणे तु चतुर्हस्ता निखण्डप्रच्छादनी मसृणा १० स्कन्धकरणी चतुर्हस्तविस्तरा वायुविधूतिरक्षार्थं कुब्जकरणी सा प्रच्छादनी रूपवतीनां रूपप्रच्छादनहेतुः ११ ॥ इति साधुसाध्वीनामुपकरणानि ॥ तत्र दण्डाश्चोपकरणबहिर्भूता अपि पशुसर्पनिवारणार्थं मुनिभिरादीयन्ते, ते च साधूनां साध्वीनां च पञ्चविधाः, सहजग्रहणे भूमेः स्कन्धपर्यन्ताः १ ग्लानावष्टम्भे सार्धहस्तद्वयप्रमाणाः २ जलावगाहे संपूर्णकायमानात् सार्धहस्तेनाधिकाः ३ पङ्किलभूमौ प्रावृषि स्थूला देहप्रमाणाः ४ मार्गचङ्क्रमणे स्कन्धपर्यन्ता अनम्राश्च ५ ते च वंश १ श्रीपर्णी २ वटपाद ३ क्षीरवृक्ष ४ सरलकाष्ठमयाः ५ यथालाभेन भवन्ति । ब्रह्मचारिणां च क्षुल्लकानां च प्रथमोपनीतानां च कायप्रमाणाः पलाशचन्दनमया एव दण्डा भवन्ति । व्रतविशेषेषु च ब्राह्मणक्षत्रियवैश्यानां बिल्वोदुम्बरादिकाष्ठमया यथा लोकेषु प्रसिद्धाः । साधूनां दण्डप्रोंछनं तु मयूरपिच्छमयं मुञ्जमयं वा दण्डप्रतिबद्धं भवति । तथा च धर्मोपकरणादिसंकरापनयनार्थं विज्ञेयम्, एवमुपकरणयुक्ताः साधवः साध्व्यः संयमं पालयन्ति, चर्मादिपरिमाणं

प्रवचनाद्विज्ञेयम् । अथ साधुः साध्वी च रजनीपश्चिमयामे परमेष्ठिमन्त्रं पठन् संस्तारकादुत्तिष्ठेत्, ततो दण्डप्रोंछनेन प्रतिलिख्य पादपदानि परिमार्जयन् प्रश्रवणमात्रकं यावद्गच्छेत् । ततः प्रश्रवणमात्रकं दण्डप्रोंछनेन प्रतिलिख्य शनैर्मूत्रमुत्सृजेत्, ततश्च तयैव युक्त्या वसतेर्बहिर्गत्वा सायं प्रमार्जितस्थंडिले परिष्ठापयेत्, ततश्च तथैव संस्तारकपार्श्वमागच्छेत्, प्रतिलिख्य संस्तारकं संवृणुयात् । ततश्च काष्ठासनं पादप्रोंछनं वा सायं प्रतिलेखितं निवेश्य तदुपरीर्यापथिकीं प्रतिक्रामेत्, शक्रस्तवं च पठेत् दुःस्वप्नरात्रिप्रायश्चित्तकायोत्सर्गं च कुर्यात् । तत "इच्छामि पडिक्कमिउं पगाम सिज्जाए० यावच्चो मे राईओ अइयारो कओ तस्स मिच्छामि दुक्कडं" इति पर्यन्तं कायोत्सर्गपारणचतुर्विंशतिस्तवपाठानन्तरं पठेत्, ततः स्वाध्यायपाठेन नमस्कारजापेन शनैः स्वरेण परेषां विद्याभ्यासं कारयन् निशामतिवाहयेत्, ततश्च घटिकाशेषायां रात्रौ रात्रिप्रतिक्रमणं कुर्यात् । प्रतिक्रमणकायोत्सर्गप्रत्याख्यानादिविधिरावश्यकोद्यादवसेयः । ततः अरुणोदये श्रीमदिन्द्रभूतिगणधरस्तुतिपाठपूर्वं प्रतिलेखनामङ्गप्रतिलेखनासुपधिप्रतिलेखनां वसतिप्रतिलेखनां च कुर्यात्, ततः स्वाध्यायं च कुर्यात्, ततो धर्मव्याख्यानं शिष्यपाठनं साध्वीपाठनं स्वयं पठनं श्राद्धश्राद्धीपाठनं धर्मशास्त्रलिखनं च कुर्यात् । ततः पादोने प्रहरे जाते पौरषीप्रतिलेखनां कुर्यात्, ततश्च तृप्तिकरणं गृहीत्वा प्राशुकजलमादाय जिनायतनेषु चतुर्भिः स्तुतिभिश्चैत्यवन्दनं कुर्यात्, ततश्च बहिर्भूमौ मलमूत्रोत्सर्गं विधाय पुनर्वसतिमागच्छेत्, तत्र पुनरीर्यापथिकीं प्रतिक्रामेत् । तथा यत उक्तम्—"सर्वत्र गमनस्यान्ते त्यागे च मलमूत्रयोः ।

कथान्ते क्रमणान्ते च चैत्यमध्यप्रवेशने ॥ १ ॥ स्थिरवस्त्रप्रयोगे च वन्दनावश्यकादिषु । शक्रस्तवस्य पाठे च
भोजनाद्यन्तकर्मणि ॥ २ ॥ अवग्रहग्रहणे च प्रत्याख्यानेष्ववधीतिषु । षड्जीवकायसंस्पर्शे संघट्टादिपरिग्रहे
॥ ३ ॥ कालग्रहणे च स्वाध्याये जलपाने क्रियाविधौ । सर्वत्र साधुसाध्वीनां सदैर्यापथिकी मता ॥ ४ ॥ साधु-
साध्वीभिः सदैवैर्यापथिकीप्रतिक्रमणशीलैर्भाव्यम्, तेषां हि सर्वविरतिसामायिकमाजन्म प्रतिपन्नं नैर्याप-
थिकीं विना शुद्धिमेति, ततः पुनः शक्रस्तवं पठित्वा पारणमुखवस्त्रिकां प्रतिलेखयेत्, तदन्ते इति कथयेत्
"पारावेमि भत्तपाणीयं अमुगपच्चक्खाणागारेण पोरसी चउविहारेण" गुरुः कथयति "जाकावि वेलातीए
पारावेह" ततो विधिना त्रिविधपात्राणि प्रतिलिख्य, पिण्डनिर्युक्तिशास्त्रोक्तविधिना भक्तपानगवेषणां
कुर्यात्, ततो द्विचत्वारिंशद्दोषविशुद्धं भक्तपानं गृह्णीयात् । साधवः साध्व्यश्च हस्तशतादनन्तरं व्यायामार्थं
भिक्षार्थं चान्यकार्यार्थं वानैकाकितया गच्छन्ति । साधुसाध्वीनां विचरं सर्वत्रैव । यदुक्तमागमे—"कतो
सुत्तत्थागम परिपुच्छणचो अणा य इक्कस्स । विणओ वेयावच्चं आराहणया य मरणंते ॥ १ ॥ पिल्लेज्जेसण-
मिक्को पइन्नपमयाजणाओ निच्चभयं । काउमणोवि अकज्जं न तरइ काऊण बहुमज्झे ॥ २ ॥ उच्चारपासवण-
वंतपित्तमुच्छाविमोहिओ इक्को । सद्दविभाणविहत्थो निक्खिवइ व कुणइ उड्डाहं ॥ ३ ॥ एगदिवसेण बहुला[1]
सुहाय असुहाय जीवपरिणामा । एगो असुहपरिणओ चइज्ज आलंबणं लद्धुं ॥ ४ ॥ सव्वजिणपडिकुट्ठं अण-

1 बहुआ इति पाठान्तरम् ।

वत्था थेरकप्पतेओ अ। एगो असुहाउत्तो विहसइ तवसंजमं अइरा ॥ ५ ॥" ततो दशवैकालिकपिण्डैषणाध्ययनोक्तयुक्त्या भक्तपानादि गृहीत्वा पुनर्वसतिमागच्छेत्। ऐर्यापथिकीं प्रतिक्रम्य गमनागमनाद्यालोचनं कुर्यात्। तद्यथा—"भगवन् गमणागमणं आलोएमि मग्गे आवंतेहिं जंतेहिं पुव्वउत्तरअवरदक्खिणदिसि गएहिं कायसन्नावोसिरिया हरियकाय तसकाय थावरकाय संघट्टिया जं खंडिअं जं विराहिअं तस्स मिच्छामि दुक्कडं" इति गमनागमनाद्यालोचनं चैत्यपरिपाट्यागतैर्वा यामागतैर्भिक्षागतैः साधुसाध्वीजनैः सदैव विधेयम्। ततः गोचरचर्या प्रतिक्रमणार्थं कायोत्सर्गं कुर्यात्। तत्र नमस्कारं चिन्तयित्वा मुखेन नमस्कारभणनपूर्वं "पडिक्कमामि गोअरचरिआ ए०" इत्यादि दण्डकं पठेत्। ततः "अहो जिणेहिं सावज्जा वित्ती साहूण देसिआ। मुक्खसाहुणहेउस्स साहुदेहस्स धारणा" इति मौनेन पठेत्। ततो गुर्वग्रे यथागृहीतं सर्वमन्नपानमालोचयेत्। ततः क्षणं विश्रम्य पञ्च ग्रासैषणादोषान् वर्जयन् भुञ्जीत। आचार्योपाध्यायवाचनाचार्यमहत्तराः साधुसाध्वीजने भिक्षां गते अक्षपोट्टलिकापटेष्टदेवतापूजनमन्त्रस्मरणकर्माणि कुर्वते। ततो भुक्त्वा पात्राणि सम्यक् संलिह्य प्रक्षाल्य संमार्ज्य यथायुक्त्या बध्नीयात्। ततः पुनरैर्यापथिकीं प्रतिक्रम्य शक्रस्तवपाठं कुर्यात्, ततश्च क्षणं विश्रम्य गुरुसाधुवैयावृत्यं बालसाध्वध्यापनमुपकरणसमारचनं पात्रादिलेपकरणं लिखनं पठनं च कुर्वन्ति मुनयः। ततश्चतुर्थयामे लग्ने मुनयः प्रतिलेखनां कुर्वन्ति स्वाध्यायं च, तद्विधिस्तु सर्वोऽप्यावश्यकोदये कथयिष्यते। ततः षट्पदीवस्त्राणि षट्पदीजीवनार्थं मुहूर्तं जङ्घासु बध्नन्ति, ततो लघु-

साधवश्चतुर्थषष्ठाष्टमभक्ताश्च मुनयः पुनरपि भिक्षाटनं विधाय भुञ्जते। भिक्षाटनभोजनविधिः पूर्ववत्, ततः सायमावश्यककर्म विधेयम्, चतुर्थे प्रहरे शेषे प्रतिलेखना प्रभातवत्, तदन्ते स्वाध्यायपाठश्च, ततो रजनीप्रथमयामे व्यतीते साधवः मुखवस्त्रिकां प्रतिलिख्य "भयवं बहुपडिपुन्ना पोरसी राइ संथारए ठाह" इत्युक्त्वा शक्रस्तवं पठन्ति, ततः साधवो यथायोग्यसंस्तारके शेरते। शयनविधिश्चायम्–मुनिः संस्तारकं विधाय तदुपर्युपविष्टः परमेष्ठिमन्त्रं जपेत् अन्यमिष्टमन्त्रं वा, ततः संकोचितकरचरणो वामबाहूपधानेन वामपार्श्वेन शेते। करपादादिप्रसारणे संकोचने च तदङ्गप्रतिलेखनां तत्स्थानप्रतिलेखनां च कुर्यात्। तथा रजनीप्रथमयामे व्यतीते ब्राह्ममुहूर्तादर्वाक् जाग्रदपि साधुः गाढस्वरपाठालापैर्नान्यं जागरयेत् इत्युत्तराध्ययनरहस्यम्, इत्येवं मुनयो व्रतिन्यश्चाहोरात्रमवहिताः कषायविनिर्मुक्ताः समरसलीनाः संयमपालनं कुर्वते॥ इत्याचार्यश्रीवर्द्धमानसूरिकृते आचारदिनकरे यतिधर्मोत्तारायणे अहोरात्रचर्याकीर्त्तनो नाम त्रिंशत्तम उदयः॥ ३०॥

---

## एकत्रिंशत्तम उदयः।

अथ साधूनामृतुचर्या व्याख्यानविधियुक्ता कथ्यते।

सा यथा—"हेमन्ततौं भवेत्साधुः प्रायो वसनवर्जितः। अल्पनिद्रस्तथाहारमल्पं भुञ्जीत कर्हिचित्॥ १॥

न तैलाभ्यञ्जनं कुर्यान्न वा कुन्तलधारणम् । न तूलं न निकामं च शयनं नाग्निसेवनम् ॥ २ ॥ नोष्णतीक्ष्णाम्लमधुरभोजनेच्छा रसोद्गमात् । न चान्यकायसंस्पर्शं न पादत्राणमेव च ॥ ३ ॥ न शीतजलपानं च कुर्यान्नो शान्तभोजनम् । रम्यनिर्वातगेहेषु न रतिं पशुवत्सु च ॥ ४ ॥ नारीषण्ढादिभिः संगं न कुर्वीत कदाचन । नोष्णोदकादिभिः स्नानं न दीपोद्योतमर्शनम् ॥ ५ ॥ नाच्छादिते च शयनं नोर्णावस्त्रं विना भ्रमः । मूत्रनिष्ठीवनादीनां न च स्थापनमञ्जसा ॥ ६ ॥ पात्रे मात्रे च शुचये देहे भूमौ नखान्तरे । न स्थापयेज्जलावेशं कदाचन मनागपि ॥ ७ ॥ देहसंयमरक्षार्थं संग्रहं कम्बलादिना । कुर्वीत वस्त्रसंयुक्तं वस्त्रहीनं न कम्बलम् ॥ ८ ॥ मार्गाद्याषाढपर्यन्तं मासे मासे महर्षयः । विहारं कुर्वते तेषां स्थितिरेकत्र नोचिता ॥ ९ ॥ स्नेहद्वेषावसौभाग्यं धनस्थानपरिग्रहः । सुखासिका च साधूनां दोषा एकत्र संस्थितेः ॥ १० ॥ मासान्ते ऋतुपर्यन्ते ऋतुद्वित्रिषु चायने । वर्षान्ते वा मुनीन्द्राणां विहार उचितो ध्रुवम् ॥ ११ ॥ यत उक्तमागमे—सवत्सरं वावि परं पमाणं बीअं च वासं न तहिं पसज्जा । सुत्तस्स मग्गेण चरिज्ज भिक्खू सुत्तस्स अत्थो जह आणवेइ ॥ १२ ॥ विमृश्येति विहारेषु नालसाः स्युर्महर्षयः । अतोऽभिधीयते कश्चिद्विहारविधिरुत्तमः ॥ १३ ॥ यथा । विहारस्य कालो यथा—वर्षाशरद्वर्जिताश्च चत्वार ऋतवोऽद्भुताः । अमेघता सुभिक्षं च पथामपि मनोज्ञता ॥ १४ ॥ अविड्वरो नृपादीनां परचक्राद्यभावता । विहार ईदृशः कालो युज्यते यतिनां परम् ॥ १५ ॥ विहारयोग्या मुनयो यथा—नीरुजः करजङ्घाश्च गतिशक्तिगुणान्विताः । सर्वदेशस्थितिज्ञाश्च सर्वभाषाविचक्षणाः

संयमैकधुरंधराः ॥ १७ ॥ पट्विन्द्रिया
॥ १६ ॥ अलुब्धाश्च रसस्पर्शस्थानेष्वपि कलाविदः । सर्वविद्याप्रवक्तारः संयमैकधुरंधराः ॥ १७ ॥ पट्विन्द्रिया
॥ १६ ॥ अलुब्धाश्च रसस्पर्शस्थानेष्वपि कलाविदः । सर्वविद्याप्रवक्तारः ॥ १८ ॥ बहूपकरणाः शान्ता गुर्वा-
गुवानश्च परोपेक्षाविवर्जिताः । शीतोष्णतृष्णाक्षुन्निद्राविबाधासहनक्षमाः ॥ १८ ॥ बहूपकरणाः शान्ता गुर्वा-
ज्ञापालनोद्यताः । अर्हन्ति साधवो नित्यं विहारं नापरे पुनः ॥ १९ ॥ विहारोपकरणानि यथा—सुसार्थो वा-
सराः श्लाघ्या बहुता वस्त्रपात्रयोः । सर्वोपकरणव्रातो दण्डप्रोंछनकादिकः ॥ २० ॥ दण्डा अनेकधा भूरि-
पुस्तकत्वं च कम्बलाः । देहे समर्थता धैर्यं विहारेषु गवेष्यते ॥ २१ ॥ विहारायोग्यो देशो यथा—अनार्येषु
सपापेषु सद्दुर्भिक्षेष्वसाधुषु । सविड्वरेष्वल्पजलश्राद्धेषूपप्लवेषु च ॥ २२ ॥ अनार्यदेशो यथा—सग १ जवण २
सबर ३ बबर ४ काय ५ मुरंड ६ उड्ड ७ गुड्ड ८ फक्कणया ९ । अक्खायग १० होण ११ रोमय १२ पारस १३
खस १४ खासिया १५ चेव ॥ २३ ॥ दुंबिलय १६ लउस १७ बुक्कस १८ भिलिंद १९ पुलिंद २० कुंच २१
भमर २२ भया २३ । कोवाय २४ वीण २५ पंचुअ २६ मोलव २७ मालव २८ कुलग्घाय २९ ॥ २४ ॥ किक्कय
३० किराय ३१ हयमुह ३२ खरमुह ३३ गय ३४ तुरय ३५ मिंढय ३६ हाय ३७ मुहयकन्ना ३८ गयकन्ना ३९
अण्णेवि अणारिआ बहवो ॥ २५ ॥ पावाय चंडकम्मा अणारिआ निग्घिणा निरणुतावी । धम्मुत्ति अक्ख-
राइं सुमिणे वि न नज्जए जेसु ॥ २६ ॥ विहारयोग्या यथा—आर्याः सुभिक्षसंपन्नाः परचक्रादिवर्जिताः ।
अविड्वराः सुपूजाश्च बहुश्राद्धर्षिसंकुलाः ॥ २७ ॥ आर्यदेशा यथा—रायगिहमगह १ चंपा अंगा २ तह ताम-
लित्ति वंगाय ३ । कंचणउरं कालिंगा ४ वाणारसी चेव कासीअ ५ ॥ २८ ॥ साकेय कोसला ६ गयपुरं च कुरु

७ सोरियं च कुसट्टा य ८। कंपिल्लं पंचाला ९ अहिच्छता जंगला १० चेव ॥ २९ ॥ बारवइ य सुरट्ठा ११ मिहिल विदेहा य १२ वत्थ कोसंबी १३। वंदीपुर संडिब्भा १४ भद्दिलपुरमेव मलया १५ य ॥ ३० ॥ वेरसउवत्थ १६ वरुणा अच्छा १७ तह मति आवइ दसणा १८ । सुत्तीमई इचेई १९ वीयभयं सिंधुसोवीरा २० ॥ ३१ ॥ महुरा य सूरसेणा २१ पावाभंगीअ २२ मासपुरिवट्टा २३ । सावत्थी अ कुणाला २४ कोकोडिवरिसं च लाडा २५ ॥ ३२ ॥ से अंबिआ वि अनयरी केअर अद्धं च २६ आरियं भणिअं । जत्थुप्पत्तिजिणाणं चक्कीणं रामकन्हाणं ॥ ३३ ॥ एतद्देशस्थितः साधुर्विहरेदीदृशो पदे । अनन्तरोक्तमालम्ब्य विधिं श्रेयस्करं सदा ॥ ३४ ॥ प्रस्थानमूर्ध्वमुदितं दशकादनून-मर्वाक् धनुःशतकपञ्चकतः शुभाय । तत्रैव मण्डलिकभूपतिशेषलोकैः स्थेयं नु सप्तदशपञ्चदिनं क्रमेण ॥ ३५ ॥ बुधेन्दुशुक्रजीवानां दिने प्रस्थानमुत्तमम् । पूर्णमास्याममायां च चतुर्दश्यां च नेष्यते ॥ ३६ ॥ अश्विनी पुष्यरेवत्यौ मृगो मूलं पुनर्वसू । हस्तज्येष्ठानुराधाः स्युर्यात्रायै तारकाबले ॥ ३७ ॥ विशाखाश्चोत्तरास्तिस्रस्तथार्द्रा भरणीमघाः । अश्लेषा कृत्तिकाश्चैव मृत्यवेन्यास्तु मध्यमाः ॥ ३८ ॥ ध्रुवैर्मिश्रैर्न पूर्वाह्ने क्रूरैर्मध्यदिने न भैः । अपराह्ने न च क्षिप्रैः प्रदोषे मृदुभिर्न च ॥३९॥ निशीथकाले नो तीक्ष्णैर्निशान्ते च चरैर्नहि। दिने शुभे दिवा यात्रा यात्रा निशि तु भैः शुभैः ॥४०॥ प्राच्यादिदिक्चतुष्के क्रमाच्छुभोग्र्यादिसप्तकचतुष्कः । प्रागुत्तरयोः प्रत्यग्याम्योर्मध्योर्मिथोन्यथा परिघः ॥ ४१ ॥ सर्वदिग्गमने हस्तः श्रवणं रेवतीद्वयम् । मृगः पुष्यश्च सिद्ध्यै स्युः कालेषु निखिलेष्वपि ॥ ४२ ॥ प्रस्थानम्—न

गुरौ दक्षिणां गच्छेन्न पूर्वां शनिसोमयोः । शुक्रार्कयोः प्रतीचीं न नोत्तरां बुधभौमयोः ॥ ४३ ॥ मङ्गले मारुते शूलमीशाने शनिसौम्ययोः । नैर्ऋते शुक्रसूर्याभ्यामाग्नेये गुरुसोमयोः ॥ ४४ ॥ श्रीखण्डदधिमृत्तैलपिष्टसर्पिः खलान् क्रमात् । वारेर्कादौ सदा वन्द्या दिग्शूलाशुभभेदिनः ॥ ४५ ॥ दिक्शूलम् । पूर्वस्यामाषाढाश्रवणधनिष्ठा विशाखिका याम्याम् । पूष्यो मूलमपाच्यां हस्तोदीच्यां च धिष्ण्यशूलानि ॥ ४६ ॥ नक्षत्रशूलम् । ज्येष्ठा भद्रपदा पूर्वा रोहिण्युत्तरफाल्गुनी । पूर्वादिषु क्रमात् कीला गतस्यैतेषु नागतिः ॥ ४७ ॥ कीला । पूर्वोत्तराग्निनैर्ऋतयमवरुणसमीरशंकरककुप्सु । प्रतिपद्मादौ कृत्वा नवम्यन्ताः भवन्ति योगिन्यः ॥ ४८ ॥ यत्रोपरि गता देवी ततो यामार्द्धभुक्तिका । भ्रमन्ती तेन मार्गेण भवेत्तत्कालयोगिनी ॥ ४९ ॥ योगिन्यः । अष्टासु प्रथमाद्येषु प्रहरार्द्धेष्वहर्निशम् । पूर्वस्या वामतो राहुस्तुर्यं सुर्यां व्रजेद्दिशम् ॥ ५० ॥ राहुः । जयाय दक्षिणे राहुर्योगिनी वामतस्तथा । पृष्ठतो द्वयमप्येतच्चन्द्रमाः संमुखः पुनः ॥ ५१ ॥ चन्द्रश्चरति पूर्वादौ क्रमाच्च दिक्चतुष्टयम् । मेषादिक्षेपु यात्रायां संमुखस्त्वतिशोभनः ॥ ५२ ॥ शशिप्रवाहे गमनादि शस्तं सूर्यप्रवाहे नहि किंचनापि । प्रष्टुर्जयः स्याद्वहमानभागे रिक्ते तु भागे विफलं समस्तम् ॥ ५३ ॥ प्राणप्रवेशे वहनाडिपादं कृत्वा पुरो दक्षिणमर्कबिम्बम् । गच्छेच्छुभायारिवधे तु सूर्यं पृष्ठे रिपुं शून्यगतं च कुर्यात् ॥ ५४ ॥ हंसः । यामयुग्मेषु रात्र्यन्तयामात् पूर्वदिशो रविः । यात्रास्मिन् दक्षिणे वामे प्रवेशः पृष्ठगे द्वयम् ॥ ५५ ॥ रविचारः । प्रतिदिनमेकैकस्यां दिशि पाशः संमुखोस्य कालः स्यात् । प्राच्यां शुक्लप्रतिपदमारभ्य ततः क्रमान्मासम्

॥ ५६ ॥ पाशकालौ । कन्यात्रये स्थितेऽर्के प्राच्यां धनुषस्त्रयेपि याम्याम् । मीनत्रये परस्यां मिथुनत्रयेपि कौबेर्याम् ॥ ५७ ॥ वत्सोभ्युदेति यस्मिन्न संमुखः शस्यते प्रवासविधिः । चैत्यादीनां द्वारं नार्चादीनां प्रवेशश्च ॥५८॥ अग्रतो हरते आयुः पृष्ठतो हरते धनम् । वामदक्षिणयोर्वत्सः सर्वकालं पुनः शुभः ॥ ५९ ॥ वत्सः । उदयति दिशि यस्यां याति यत्र भ्रमेद्वा विचरति नभचक्रे येषु दिग्द्वारभेषु । त्रिविधमिह सितस्य प्रोच्यते संमुखत्वं मुनिभिरुदय एव त्यज्यते तत्र यत्नात् ॥ ६० ॥ संमुखो लोचनं हन्ति दक्षिणेऽशुभकारकः । वामतः पृष्ठतश्चैकः प्रोक्तः शुक्रः शुभो बुधैः ॥ ६१ ॥" इति श्लोकोक्ततिथिवारलग्नेषु नक्षत्रचन्द्रताराबलयोः शकुनानुकूल्ये च विहरेत् । शकुनानुकूल्यं तु वसन्तराजशकुनार्णवयोरवसेयम् । तथा च चतुर्मास्यनन्तरं पौर्णमास्यां विहारकर्मणि वर्जितायां तदर्वाक् त्रयोदश्यामपि विहारमनुमन्यन्ते गीतार्थाः ॥ "आपृच्छ्य श्राद्धजनं क्षेत्रसुरं नृपतिमथ सुसाधुजनं । गुरुणानुज्ञातः सन् विहरेद्दिवसे न च रजन्यां ॥ १ ॥ मासमपि यत्र तिष्ठति साधुर्गृह्णाति तत्र षडनुज्ञाः । शक्रक्षेत्रामरनृपतिसाधुपुरमुख्यगुरुकथिताः ॥ २ ॥" यदुक्तमागमे "देविंदरायगिहवइसागरसाहम्मि उग्गहे पंच । गुरु ऊग्गहिइ पुणो इह आउपमाणो चउदिसंपि ॥ ३ ॥" मुनिर्यत्र तिष्ठेत्तत्र षड्भिरनुज्ञातः, अन्यथा तु षडनुज्ञारहितः स्थितिप्रस्थितिभ्यां मुनेरदत्तादानव्रतभङ्गः इति हेमन्त ऋतुचर्या । "शिशिरे मुनिराधत्ते चर्यां हेमन्तवत् पुनः । न श्लेष्मलं किंचनापि भुञ्जीत न जलं बहु ॥ १ ॥" इति शिशिरचर्या । "वसन्तेथ मुनिः कुर्याद्भूषात्यागं तु सर्वथा । गृह्णीयाद्विरसाहारं न वस्त्रं चैव

शोभनम् ॥ १ ॥ सर्वदा मुनयो ब्रह्मयुक्तियुक्ता भवन्ति हि । विशेषेण वसन्ते तु स कालो हि सरोल्यणः
॥ २ ॥ भिक्षाविशुद्धिं कुर्वीत विहारं च दिने दिने । प्रायेण निर्जनेरण्ये वसेत् स्त्रीपशुवर्जिते ॥ ३ ॥ व्याया-
मशीलो हि मुनिस्तिष्ठेत् सुरभिसंगमे । अस्वाध्यायनिवृत्त्यर्थं विदध्यात् कल्पतर्पणम् ॥ ४ ॥” अत्र च चैत्र-
शुक्लपञ्चमीमारभ्य वैशाखकृष्णप्रतिपदं यावत् भूमण्डले सर्वत्र निजनिजकुलदेवतापूजनार्थं जनाः सर्वेपि
पशुमहिषवधं विदधति, तेन मुनीनामस्वाध्यायः कालः, न तत्रागमपाठकालग्रहणादि कल्पते । ततस्तदप-
नयनार्थं कल्पतर्पणं कुर्यात्। तस्य चायं विधिः, वैशाखकृष्णप्रतिपदि व्यतीतायामालोचनात्तपोयोग्ये दिने
“मृदुध्रुवचरक्षिप्रैर्वारे भौमं शनिं विना । आघाटनतपोनन्द्यालोचनादिषु भं शुभम् ॥ १ ॥” मुनयोल्पजलै-
र्वस्त्राणि क्षालयन्ति, ततः पूर्वाह्णे अपराह्णे वा ऐर्यापथिकीं प्रतिक्रम्य मुखवस्त्रिकां प्रतिलिख्य द्वादशावर्तव-
न्दनकं दत्त्वा क्षमाश्रमणपूर्वं भणति “भगवन् छमासिकायसंदिसावओ भगवन् छमासिकायपडिगाहउं”
गुरुः कथयति “संदिसावेह पडिगाहेह” ततो मुनियुग्मं संघट्टं विधाय पूर्वोक्तयुक्त्या तृसिकरणं गृहीत्वा गृह-
स्थगृहं प्रतिनिर्गच्छति, तत्र शुभाशुभशकुनान्वेषणं कुर्यात्, यदि शुभं शकुनादि भवति तदा गन्तव्यं,
नोचेदन्यस्मिन् शुभदिने कल्पतर्पणारम्भो विधेयः, शुभे शकुने तु गृहस्थगृहं गत्वा तृसिकरणे प्रासुकजलं
गृहीत्वा ततो गृहस्थकांस्यकच्चोलकेन सधवाकरेण कल्पतर्पणजलं स्कन्धकम्बलिकाञ्चलयुतेन दक्षिणहस्तेन
धारयित्वा तथैव रीत्या वसतिमानयेत् शुभपट्टकोपरि स्थापयेच्च । ततः सर्वेपि साधव ऐर्यापथिकीं प्रतिक्रम्य

गुरुज्येष्ठान् क्रमेण स्तोकोदकेन पादौ प्रक्षाल्य कल्पतर्पणं गृह्णन्ति, तस्येयं रीतिः—कल्पतर्पणग्राही पट्टकस्थः पादौ भूमावस्पृष्टौ कुर्यात्, मिलितौ करौ च प्रसारयेत्, ततोन्ययतिर्लघुरजोहरण्यग्रेण कल्पतर्पणजलं मनाग्मनाग् विकिरति, स च तद्ग्राही पूर्वं कराभ्यां गृह्णाति, तत अध उपरि करौ निधाय च, ततः स्कन्धसंमुखं स्नानमुद्रया, ततः पट्टसंमुखं च, ततो मुनयः स्वस्वोपकरणानि प्रतिलिख्य प्रतिलिख्य कल्पतर्पणजलेनाभिषिञ्चन्ति वसतिं च तथैव। इति कल्पतर्पणविधिः। अयं च विधिः कार्तिककृष्णप्रतिपदनन्तरमपि विधीयते, तथा च प्रमादात् संनिधिस्थित्यां सिद्धान्तस्य च वाचने ॥ नवरात्रद्वयेऽतीते कल्पतर्पणमिष्यते ॥ इति वसन्तचर्या ॥ "अथ ग्रीष्मे च मुनयः कायोत्सर्गपरायणाः। आतापयन्त आत्मानं कुर्वन्त्यातपसेवनम् ॥ १ ॥ न शीतलजलाकाङ्क्षां न शीतस्थानसेवनम्। न पानकादिपानं च कुर्वते स्नानमेव च ॥ २ ॥ वैयावृत्यकृतां क्वापि सन्तोषाय मुनीश्वराः। गृह्णन्ति पानकादीनि शीतस्थानजलादि च ॥ ३ ॥ सहन्ते प्रायशस्तत्र मलदंशपरीषहम्। नार्तिं च कुर्वते क्वापि न रतिं च मुनीश्वराः ॥ ४ ॥ अस्नानव्रतमादिष्टं मुनीनां सर्वदा जिनैः। ग्रीष्मे विशेषात् सिद्धान्तमध्योक्तमभिधीयते ॥ ५ ॥ संतिमे सुहमा पाणा घसासु भिलुगासु य। जेउ भिक्खू सिणायंतो (ते) विडे लुप्पिलाधए ॥ ६ ॥ तम्हा ते न सिणायंति सीएण उसिणेण वा। जावज्जीवं वयं घोरं असिणाणमहिट्ठगा ॥ ७ ॥ सिणाणं अदुवा कप्पं लद्धं पउमगाणिआ। गायस्सु वट्टणट्ठाए नायरंति कयाइवि ॥ ८ ॥ ग्रीष्मे षट्पदिकारक्षां विशेषात् कुरुते मुनिः। चिरकालोषितं पानमन्नं प्रासुकमुज्झति ॥ ९ ॥" इति

गवेष्यते । “अथ वर्षासु साधुः स्याद्विहा-
ग्रीष्मऋतुचर्या । वर्षाकाले साधूनामुच्चारप्रस्रवणखेलहेतुमात्रकत्रयं
रक्रिययोज्झितः । एकस्थाने स्थितिं कुर्यात् सुखिते निरुपद्रवे ॥ १ ॥ गृहस्थैरात्मनोर्थे च कृतानि रुचिराणि
च । वृष्टमृष्टानि सद्मानि श्रयेत् खातजलानि च ॥ २ ॥ प्रहरे प्रहरे पात्रं मार्जयेत् फुल्लिभीतितः । आरो-
ग्यार्थं संयमार्थं विकृतीः सर्वथा त्यजेत् ॥ ३ ॥ ग्लानः कश्चन गृह्णाति न दोषस्तत्र विद्यते । नियमांश्च पुनः
कुर्याद्यथाशक्ति घनागमे ॥ ४ ॥ काष्ठासनेष्वासनं च काष्ठपट्टेषु संलयम् । तदा विदधते धीराः प्राणिरक्षा-
र्थमेव च ॥ ५ ॥ पक्वान्नमपि सिद्धान्नं न गृह्णीयाच्चिरोषितम् । न ग्राह्यं गृहिवेश्मभ्यः पानान्नौषधवर्जितम् ॥ ६ ॥
पूर्वं परिगृहीतं च पात्रपट्टादि न त्यजेत् । नव्यं न परिगृह्णीयात् पौषधागारमध्यगम् ॥ ७ ॥ निर्जलायां दिशि
प्राप्ते कार्ये महति सांघिके । सपादयोजनं पञ्चयोजनीं वा व्रजेन्मुनिः ॥ ८ ॥ निशायां तत्र न स्थेयं दिवैवा-
लयमाव्रजेत् । पानीयं प्रायशश्चोष्णं गृह्णीयात् काञ्जिकं च वा ॥ ९ ॥ पाणिपात्रो मुनिस्तत्र सूक्ष्ममेघेपि
वर्षति । न गच्छेत् क्वापि भिक्षार्थं यावन्निर्मेघता भवेत् ॥ १० ॥ साधुः पात्रधरो मेघे सूक्ष्मे वर्षति कर्हिचित् ।
निर्याति कम्बलच्छन्नो भिक्षायै क्षुत्परीषहात् ॥ ११ ॥ तत्र याते महत्यब्दे तिष्ठेद्देवकुलेऽथवा । उपाश्रयेष्वा-
रामे वा चरेदल्पे घने ततः ॥ १२ ॥ स्नेहं पुष्पं तथोत्तिंगं प्राणमण्डं च फुल्लिकाम् । बीजं च हरितां चाष्ट
सूक्ष्माणि परिरक्षति ॥ १३ ॥ तानि सूक्ष्माणि च स्वस्ववर्णैर्वस्तुभिराश्रयात् । भवन्ति प्रतिलेख्यानि साधु-
भिश्च समाहितैः ॥ १४ ॥ गृहस्थगृहमायाति मुनौ वर्षति वारिदे । यदृष्ट्वा पच्यते तत्र गृह्णन्ति मुनिपुङ्गवाः

॥ १५ ॥ मुनिर्वर्षागमे किंचित् तपः संधातुमिच्छति । कायोत्सर्गे तथा योगोद्वहनं लीनतामपि ॥ १६ ॥ विकृत्याहरणं चैव तथा दिग्गमनं क्वचित् । ईहते तत्परं सर्वं गुर्वादेशाद्विधीयते ॥ १७ ॥ प्रमार्जनादिकं कर्म विधेयं च पुनः पुनः । दिशं वा विदिशं गच्छेदन्यसाधौ प्रकाश्य ताम् ॥ १८ ॥ एवं भाद्रपदे शुक्लपञ्चम्यां पर्वसत्तमम् । भवेत् पर्युषणा नाम चतुर्थ्यामपि वा क्वचित् ॥ १९ ॥ पर्युषणापरिवर्जितमन्यत् पर्वोत्सवश्रुततपांसि । कुर्वीत न मलमासे प्रारब्धतपस्तु विदधीत ॥ २० ॥ उपवासव्रतं चैव मुक्त्वा पर्युषणामपि । देवपित्र्यादिकं चान्यत् मलमासे न कारयेत् ॥ २१ ॥ विवाहदीक्षाव्रतबन्धकर्माण्यारम्भमुद्यापनमुज्झयित्वा । अन्यानि पित्र्याणि सदैवतानि विधापयेदेव बुधोपि मासे ॥ २२ ॥ लौकिकेपि—अग्न्याधेयं प्रतिष्ठां च यज्ञादानप्रतिग्रहान् । वेदव्रतवृषोत्सर्गचूडाकरणमेखलाः ॥ २३ ॥ मङ्गल्यमभिषेकं च मलमासे विवर्जयेत् । मलमासज्ञानं यथा—अमावास्याद्वयं यत्र द्वयसंक्रमणान्तरे । मलमासः स विज्ञेयस्त्यक्त्वा पञ्च तुलादिकाः ॥२४॥ अमावास्यामतिक्रम्य यदा स्यात्संक्रमो रवेः । स पाश्चात्यो मलो मासः शुद्धोऽग्रे मास उच्यते ॥ २५ ॥ पज्जुसणे चउमासे पक्खियपव्वट्ठमीसु नायव्वा । ताओ तिहिओ जासिं उवेइ सूरो न अन्नाओ ॥ २६ ॥ पच्चक्खाणं पूआ जिणंदचंदाण तासु कायव्वा । इहरा आणाभंगो आणाभंगंमि मिच्छत्तं ॥ २७ ॥ दशाश्रुतस्कन्धभाष्यात्—उदये या तिथिः प्रोक्ता घटिकैकापि या भवेत् । सा तिथिः सकला ज्ञेया विपरीता तु पैतृके ॥ २८ ॥ यां तिथिं समनुप्राप्योदयं याति दिवाकरः । पलार्द्धं च पलांशं च तां प्रशंसन्ति दैविकाः ॥ २९ ॥

अन्यच्च मलमासवर्ज्यमाह—सर्वं विवर्जितं कर्म भानुलङ्घाधिमासयोः । पैतृकं त्वधिमासेपि कुर्यान्नो भानुलङ्घिते ॥ ३० ॥ यथा—अनित्यमनिमित्तं च दानं च महदादिकम् । अग्न्याधानाध्वरास्तीर्थदेवयात्रामरेक्षणम् ॥ ३१ ॥ देवारामतडागादिप्रतिष्ठा मौञ्जिबन्धनम् । अग्नीनां स्वीकृतिः काम्यवृषोत्सर्गस्य निष्क्रमः ॥३२॥ राज्ञोभिषेकः प्रथमश्चूडाकर्मव्रतानि च । अन्नप्राशनमारम्भो गृहाणां च प्रवेशनम् ॥ ३३ ॥ व्रतारम्भसमाप्तिं च कर्म काम्यं च पाप्मनः । प्रायश्चित्तं च सर्वस्य मलमासे विवर्जयेत् ॥ ३४ ॥ तत्र सङ्घसमक्षं च विदध्यात् कल्पवाचनाम् । तथा केशापनयनं विधिस्तस्याभिधीयते ॥ ३५ ॥" यथा तत्र साधूनां केशापनयनं त्रिधा, क्षुरमुण्डनं कर्त्तरीमुण्डनं लोचश्च पक्षे २ कर्तरीमुण्डनम्, मासे २ क्षुरमुण्डनम्, चतुर्मासान्ते षण्मासान्ते वर्षान्ते वा लोचः, क्षुरमुण्डनकर्तरीमुण्डनयोरपि क्षमाश्रमणवन्दनकादि सर्वं लोचवत् नवरं "दुक्करं कियं इगिणी·साहिया" इति गुरुवचनं लोचं विना अन्यत्र न । "हस्तत्रये मृगज्येष्ठे पौष्णादित्यश्रुतिद्वये । क्षुरकर्म शुभं प्रोक्तं कार्यौत्सुक्ये तु सर्वदा ॥ १ ॥" इह यदुक्तं कार्यौत्सुक्ये तु सर्वदेति—"तीर्थे प्रेतक्रियायां च दीक्षायामौपपातिके । पितृमातृक्षये क्षौरे नक्षत्रादि न चिन्तयेत् ॥ १ ॥" तत्रोपनयनप्रव्रज्याचार्यपदस्थापनपर्युषणादिषु नियमाल्लोचमुण्डनादि कर्तव्यमेव । तत्र यदि क्षौरनक्षत्रं न स्यात् तथापि तत्कार्यौत्सुक्ये प्रोक्तव्यतिरिक्तेऽपि नक्षत्रे लोचादिक्षुरकर्म विधेयम् । स च लोचः कैश्चिद्भाद्रपदपौषवैशाखेषु चातुर्मासिको विधीयते, कैश्चिच्च भाद्रपदफाल्गुनयोः षाण्मासिकः क्रियते, कैश्चित्सांवत्सरिको भाद्रपदे पर्युषणासन्न एव विधी-

यते। अथ तदर्थं लोचविधिरभिधीयते—यथा कायौंत्सुक्यवर्जिते लोचे शुभेषु क्षौरनक्षत्रतिथिवारेषु चन्द्रबले च लोचकारयिता दृढसत्त्वो गुरुपुरतः ऐर्यापथिकीं प्रतिक्रम्य क्षमाश्रमणपूर्वं भणति "भगवन् लोचमुहपत्तिअं पडिलेहेमि" ततो मुखवस्त्रिकां प्रतिलिख्य क्षमाश्र० "भगवन् लोयं संदिसावेमि" गुरुः कथयति "संदिसावेह अणुन्नायं मए" ततो लोचकारयिता साधून् विनयपूर्वकमर्थयित्वा लोचं कारयति, ततो लोचानन्तरं मुनिरैर्यापथिकीं प्रतिक्रम्य चैत्यवन्दनं कुर्यात्, ततो गुरुपुरः समेत्य मुखवस्त्रिकां प्रतिलिख्य द्वादशावर्तवन्दनकं ददाति ततः क्षमाश्र० भगवन् "लोयं पवेएमि संदिसह किं भणामो" गुरुः कथयति "वंदित्ता पवेएह" पुनः शिष्यः क्षमाश्रम० "केसा मे पज्जुसिआ इच्छामि अणुसट्ठिं" गुरुः कथयति "दुक्करं कियं इगिणी साहिआ" पुनः शिष्यः क्षमाश्रम० "तुम्हाणं पवेइयं संदिसह साहूणं पवेएमि" गुरुः कथयति "खमासमणाणं हत्थेणं सुत्तेणं अत्थेणं तदुभएणं गुरुगुणेहिं वुड्ढाहिं नित्थारग पारगो होइ" ततः शिष्यः क्षमाश्रम० "संदिसह काउस्सग्गं करेमि ततः केसेसु पज्जवसिज्जमाणेसु सम्मं जन्न अहिआसिअं कूइयं कक्कराइअं तस्स ओहडावणिअत्थं करेमि काउस्सग्गं अन्नत्थ उ० जाव अप्पाणं वोसिरामि" चतुर्विंशतिस्तवचिन्तनं चतुर्विंशतिस्तवभणनं। केचिन्नमस्कारं चिन्तयन्ति भणन्ति च। ततो लोचकारयिता यथायुक्त्या साधून् वन्दते। जिनकल्पिनां लोचदिने उपवासः स्थविरकल्पिनामाचाम्लमन्यद्वा प्रत्याख्यानं यथाशक्ति। इति लोचविधिः। "सामान्यमुनयो वस्त्रक्षालनं प्रावृषि क्वचित्। कुर्वन्ति श्रूयते यस्माद्वाक्यं प्रवचनोदितम् ॥ १ ॥

अप्पसि अंचिअ वासे सव्वं उवहिं धुवंति जयणाए । असईए उदगस्स ऊ जन्नओ पायनिज्जोगो ॥ २ ॥ आयरियगिलाणाणं मयला मयला पुणो वि धोविज्जा । साहुगुरुणन्नो लोगम्मिवि जीरणं इयरे ॥ ३ ॥" साधवः सर्वेपि ग्रीष्मान्ते सर्वाणि वस्त्राणि क्षालयन्ति न वर्षासु उपधिं विशेषेण । तथा च आचार्योपाध्याय-ग्लानवस्त्राणि दैवतवस्त्राणि च मलिनानि मलिनानि सर्वदैव क्षालयन्ति । तथा च प्रहरत्रयादुपरि प्रासुकं वारि तिलोदगं तुपोदकं यवोदकं उष्णोदकं न कल्पते तच्च सचित्ततामेति । यत उक्तमागमे—"उसिणोदकं निदंडुक्कलिअं फासुअ जलं च जइ कप्पं । नवरि गिलाणाइकए पहरतिगोवरि वि अरि अव्वं ॥ १ ॥ जायइ सचित्तयासे गिम्हंमि य पहरपंचगस्सुवरि । चउ पहरुवरि सिसिरे वासासु पुणो तिपहरुवरि ॥ २ ॥ इमामेवंविधां चर्यां वहन्तो मुनिकुञ्जराः । वर्षाकालमतिक्रम्य शरदं प्राप्नुवन्ति ते ॥ ३ ॥ इति वर्षर्तुचर्या । शरत्कालेपि साधूनामियं चर्या प्रकीर्तिता । न विहारो न वा वस्त्वादानं पानान्नवर्जितम् ॥ ४ ॥" इति शरच्चर्या । अथ व्याख्याविधिः । "आचार्या वा उपाध्याया मुनयश्च महत्तराः । सङ्घाग्रतो यद् व्याख्यानं कुर्वन्ति तदिहोच्यते ॥ १ ॥ उत्कालिकं कालिकं च सिद्धान्तं द्वादशाङ्गकम् । व्याख्येयमत्र योगादि कायोत्सर्गसमन्वितम् ॥ २ ॥ त्रिषष्टिशलाकापुंसां चरितान्यखिलान्यपि । तथा च गणभृत्साधुसाध्वीनां च पुरातनम् ॥३॥ श्रावकाणां श्राविकाणां धर्मदृष्टान्तहेतवे । कथानकानि मुनयः कथयन्ति सविस्तरम् ॥ ४ ॥ अनित्यतामशरणं भवमेकत्वमन्यताम् । अशौचमाश्रवविधिं संवरं कर्मनिर्जरम् ॥ ५ ॥ धर्मस्वाख्याततालोकं द्वादशीं बोध-

भावनाम् । व्याख्यान्ति मुनयः प्राय इति द्वादश भावनाः ॥ ६ ॥ सिद्धान्तटीकाचूर्ण्यादिप्रसङ्गादपरं पुनः । प्रमाणशास्त्रं जैनं च व्याख्येयं ध्येयमेव च ॥ ७ ॥ अन्यानि पठनीयानि तर्कसंवादहेतवे । तत्त्वं धर्मानुषंगत्वं व्याख्येयं परमार्हतम् ॥ ८ ॥ निरुक्तिज्योतिषं छन्दः शिक्षा व्याकरणं तथा । कल्पः षडङ्ग्यध्येतव्या शास्त्रव्याख्यानहेतवे ॥ ९ वेदाः पुराणानि तथा स्मृतयः शिल्पभाषितम् । एतानि नाध्येतव्यानि व्याख्येयानि न कुत्रचित् ॥ १० ॥ वैद्यकं कामशास्त्रं च दण्डनीतिं च जीविकाम् । मीमांसामिति शास्त्राणि न पठन्ति मुनीश्वराः ॥ ११ ॥ वर्षाकाले विशेषेण साधुर्धर्मकथां वदेत् । यतो हि धर्मकालस्सोपरकार्यविवर्जितः ॥ १२ ॥ तथा पर्युषणासन्ने काले कल्पस्य वाचनाम् । कुर्वन्ति मुनयः शान्ताः सर्वथैव दिनत्रयम् ॥ १३ ॥ तत्र श्राद्धप्रार्थनायां विधेयो वाचनाक्रमः । यत्तत्र ते विदधति सङ्घार्चनमहोत्सवम् ॥ १४ ॥ अथवा सर्वशास्त्राणि पठनीयानि साधुभिः । व्याख्यानं चरणं चैव विधेयं परमागमे ॥ १५ ॥ यत उक्तमागमे—सव्वं सिक्खियव्वं न समायरियव्वम् ॥ इत्याचार्यश्रीवर्द्धमानसूरिकृते आचारदिनकरे यतिधर्मोत्तरायणे ऋतुचर्याव्याख्यानकीर्तनो नाम एकत्रिंशत्तम उदयः ॥ ३१ ॥

---

## द्वात्रिंशत्तम उदयः ।

### अथ मुनीनामन्तसंलेखनाविधिः ।

सा च नीरोगाणां कर्मक्षयमोक्षकाङ्क्षिणामप्राप्तेपि मरणकाले द्वादशवर्षा भवति । सायथा—"चत्तारि

आयामं ॥ १ ॥ ताइं निविगओ अ
विचित्ताइं विगइनिज्जूहियाइं चत्तारि । संवत्सरे अ दुन्निउ एगंतरिअं च आयामं ॥ २ ॥ वासं कोडी स-
तवो छम्मासे परिमिअं च आयामं । अवरे वि अ छमासे होइ विगिट्ठं तवो कम्मं ॥ ३ ॥" चतुःसंवत्सरीं यावत्
हिअं आयामं कट्टु आणुपुव्वीए । गिरिकंदरं च गंतुं पाओवगमं पव्वज्जेइ ॥ ३ ॥" चतुःसंवत्सरीं यावत्
विचित्राणि तपांसि अन्तरितान्येकभक्तैः षष्ठाष्टमदशमद्वादशचतुर्दशपक्षक्षपणमासक्षपणादीनि । ततः पुनः
चतुःसंवत्सरीं यावत्तान्येव तपांसि निर्विकृतिकान्तरितानि । ततः संवत्सरद्वयं यावत् निर्विकृतिकान्तरि-
तान्याचाम्लानि । ततः षण्मासीं यावत् चतुर्थषष्ठादितपःकरणे परिमितभोजनमाचाम्लम् । ततः षण्मासीं
यावद्दशमतप आचाम्लान्तरितम् । ततो वर्षं यावत् कोटिसहितमाचाम्लमाचाम्लस्य कोट्याग्रभागेणान्या-
चाम्लकोटिं मीलयति निरन्तराचाम्लमित्यर्थः । ततो गिरिगह्वरे गत्वा पादपोपगमानशनं कृत्वा वाञ्छितां
गतिं प्राप्नोति । इति द्वादशवार्षिकीसंलेखना अन्तरापि द्वादशवर्षाणां मृतस्य साधोर्न दोषः । "अथागमोक्त-
रीत्या च व्रतं पालयतो मुनेः । कदाचिज्जायते रोगः कष्टाद्वा पूर्वकर्मतः ॥ १ ॥ चिकित्सा तत्र नो कार्या स चे-
दार्तिं न गच्छति । आर्तिं गच्छति कर्तव्या प्रधानस्य मुनेः पुनः ॥ २ ॥ कर्तव्यैव स रक्ष्यः स्यादुपायैर्विषमै-
रपि । अकृत्यैरपि तेन स्याद्विना शून्यं च शासनम् ॥ ३ ॥" यत उक्तमागमे "मा कुणउ जइ तिगिच्छं अहि-
यासेउण जइ तरइ सम्मं । अहिया संतस्स पुणो जइसे जोगा न हायंति ॥ ४ ॥ निच्चं पवयणसोहा (करण)
चरणुज्जुयाणं साहूणं । संविग्गविहारीणं सव्वपयत्तेण कायव्वं ॥ ५ ॥ हीणस्स विसुद्धपरूवगस्स नाणाहि-

अस्स कायव्वं । जिणकप्पग्गहणत्थं करंति लिंगावसेसे वि ॥ ६ ॥ कृते चिकित्सिते बाढं यदि रोगो न शाम्यति । तदा ध्रुवं मुनेर्ज्ञेयं मरणं पूर्णे आयुषि ॥ ७ ॥" तथा च श्रीयोगशास्त्रपञ्चमप्रकाशोदितबाह्याभ्यन्तरकालज्ञानचिह्नैर्मरणमासन्नं विज्ञाय मुनेरन्त्याराधना विधेया, तस्या ईदृशो विधिः—"नाव(श्यं)भाविनि मरणे दिनमुहूर्तादिशुद्धिर्गवेष्या, तत्र ग्लानसमीपे चतुर्विधसङ्घसंघट्टनापूर्वं जिनबिम्बमानयेत् । ततो ग्लानस्य दृष्टौ प्राप्तसत्वे वा ग्लाने सहचारिणि स्थापितार्हत्स्तुतिचतुष्कयुक्तां चैत्यवन्दनां कुर्यात् । ततः शान्तिनाथश्रुतक्षेत्रभुवनशासनवैयावृत्यकरदेवताकायोत्सर्गस्तुतयः पूर्ववत् । ततः आराधनादेवताकायोत्सर्गश्चतुर्विंशतिस्तवचतुष्कचिन्तनं मुखेन चतुर्विंशतिस्तवपठनं पुनः शक्रस्तवं पठित्वा शान्तिनाथस्तोत्रभणनं, जयवीयरायगाथाकथनं, ततः आराधनाकारकः आचार्य उपाध्यायः साधुर्वाचनाचार्यौ वा निषद्यायामुपविश्य वासाभिमन्त्रणं करोति । ततः उत्तमार्थाराधनार्थं "वासक्खेवं करेह" इतिग्लानमुखात् कथापयित्वा तच्छिरसि वासाक्षतक्षेपं कुर्यात् । ततो ग्लानो नमस्कारत्रयं पाठपूर्वकं पठति । "जेमे जाणं ति जिणा अवराहा जेसु जेसु ठाणेसु । तेहिं आलोएमि आउवठिओ सव्व कालं पि ॥ १ ॥ छउमत्थो मूढमणो कित्तिअमित्तं पि संभरइ जीवो । जं चन समरामि अहं मिच्छामिदुक्कडं तस्स ॥ २ ॥ जंजं मणेणं बद्धं जंजं वायाइ भासिअं किंचि । जं जं काएण कयं मिच्छामि दुक्कडं तस्स ॥ ३ ॥ गहि ऊणय मुक्कायं जम्मणमरणेसु जाइं देहाइं ।

१ जणचित्तगाहत्थं इति पाठान्तरम् ।

कुर्यात्, तत्र श्वेतसुगन्धिकुङ्कुमाञ्चितं श्वेतवस्त्रत्रयं धारयेत्, एकं मध्यप्रस्तरणे एकं प्रावरणे एकमुपरिप्रच्छा-
दनं, दिवा वा रात्रौ वा मृतस्य साधोर्मुखं तत्कालमेव मुखवस्त्रिकया प्रच्छादयेत् । पाणिपादाङ्गुष्ठाङ्गुलिम-
ध्यानि ईषदीषद् विदारयेत्, करपादाङ्गुष्ठाङ्गुलीः परस्परं बध्नीयात्, यदा रात्रौ म्रियते तदा जागरणं का-
र्यम् । तत्र ये शिष्याः शिशवः कातराः अगीतार्थाः ते सर्वे ततोऽपसारणीयाः । ये पुनर्गीतार्था अभीरवो
जितनिद्रा उपायकुशला आशुकारिणः अप्रमादास्तैस्तन्निकटे स्थातव्यं, प्रस्रवणमात्रमपि अपरिष्ठापितं पार्श्वे
स्थापयितव्यं हृदये शिला दातव्या यदि शव उत्तिष्ठति ततो गीतार्था वामहस्तेन मात्रकात् सूत्रं गृहीत्वा
नमाच्छोटयन्ति । मन्त्रो यथा "गाहाय मा उट्ठ बुज्झ बुज्झ गुज्झ मा मुज्झ" इति निशि शवजागरण-
विधिः । ततो मृतकदेहं स्नपयित्वा कुंकुमकर्पूरादिभिर्विलिप्य तन्मुखे पञ्चरत्नं संस्थाप्य चोलपट्टपट्टीभ्यामा-
वृत्य पूर्वं प्रतिपादितवस्त्रान्वितायां सिढिकायां स्थापयेत् । मुखवस्त्रिकाविरोलिकाप्रभृति लिङ्गं पार्श्वे स्थाप-
येत् । केचिज्जिनकल्पिस्थविरकल्पिव्रतिन्यनुसारेण द्वादशचतुर्दशपञ्चविंशत्युपकरणस्थापनमप्यामनन्ति ।
काञ्चनं कलधौतं च प्रवालं मौक्तिकं तथा । पञ्चमो रजपट्टश्च पञ्चरत्नमिति स्मृतम् ॥ १ ॥" यत्र नक्षत्रे साधोः
प्राणप्रयाणं स्यात् तत्र नक्षत्रं चिंत्यम् "विशाखा रोहिणी चैव त्र्युत्तराश्च पूनर्वसू । पञ्चचत्वारिंशन्मुहूर्तान्ये-
तानि प्रकीर्तयेत् ॥ १ ॥" एतेषु नक्षत्रेषु मृतस्य साधोः पार्श्वे कुशामयं पुत्रकद्वयं कृत्वा लघुरजोहरणं मुखव-
स्त्रिकां हस्ते स्थापयेत् । मृतस्य वामबाहौ सचिह्नौ पुत्रकौ दोरकैर्बध्येते, तयोरकरणे अन्ययोर्विपत्तिर्भवति

पावेसु पसत्ताइं वोसिरि आइं मए ताइं ॥ ४ ॥" इति (गाथा) ग्लानाद्भाणयित्वा तस्यालोचनां दद्यात्। आलोचनाविधिस्तु प्रायश्चित्ताधिकारादवसेयः। ततो ग्लानः प्रत्येकमाचार्योपाध्यायसाधुसाध्वीश्रावकश्राविकाः क्षमयति। तत इतिगाथां कथयेत्—"साहूय साहूणीओ सावय सावीओ चउ विहो संघो। जम्मणवइ काए हिआ आ साइओ तंपि खामेमि ॥ १ ॥ आयरिय उवज्झाए सीसे साहम्मिए कुलगणे अ। जे मे कया कसाया सव्वे तेसिंच खामेमि ॥ २ ॥ खामेमि सव्वजीवे सव्वे जीवा खमंतु मे। मित्ति मे सव्वभूएसु वेरं मज्झ न केणइ ॥ ३ ॥ अरिहंत देवो गुरुणो सुसाहुणो महप्पमाणं इअ समत्तं गहिअं मए विसेसेण चरणम्मि ॥ ४ ॥" ततो ग्लानः "करेमि भंते सामाइयं० इति सर्वविरतिसामायिकदण्डकं त्रिरुच्चरति। तत उत्थापनावत् त्रिः पञ्चमहाव्रतोच्चारणं करोति। ततः चत्तारि मंगलं इत्यारभ्य केवलिपन्नत्तं धम्मं सरणं पवज्जामि इति पर्यन्तं त्रिरुच्चरति, ततो नमस्कारभणनपूर्वं नमो समणस्स भगवओ महइ महावीरस्स उत्तिमट्ठिए ठाइमाणो पच्चक्खाइ सव्वं पाणाइवायं १ सव्वं मुसावायं २ सव्वं अदिन्नादाणं ३ सव्वं मेहुणं ४ सव्वं परिग्गहं ५ सव्वं कोहं ६ सव्वं माणं ७ सव्वं मायं ८ सव्वं लोहं ९ पिज्जं १० दोसं ११ कलहं १२ अज्झक्खाणं १३ अरइरइ १४ पेसुन्नं १५ परपरिवायं १६ मायामोसं १७ मिच्छादंसणसल्लं १८ इच्चेइयाइं अट्ठारसपावट्ठाणाइं तिविहं तिविहेणं वोसरइ, ततो भवचरिमं पच्चक्खाइ तिविहंपि आहारं असणं खाइमं साइमं अन्नत्थणा भोगेणं सहसागारेणं महत्तरागारेणं सव्वसमाहिवत्तिआगारेणं वोसिरामि। इति सागा-

"अश्विनी कृत्तिका चैव पुष्यो मृगशिरो मघा । पूर्वाफाल्गुनिका हस्तश्चित्रा मैत्रं च वासवः ॥ १ ॥ पूर्वाभाद्रपदा पूर्वाषाढा मूलं श्रुतिस्तथा । रेवती चेति धिष्ण्यानि तानि पञ्चदशापि हि ॥ २ ॥ त्रिंशन्मुहूर्तेनामानि कथयन्ति विचक्षणाः । एतेष्वेकं पुत्रकं च कुर्वीत खलु पूर्ववत् ॥ ३ ॥ तस्मिन्नकृते अन्यस्यैकस्य विनाशः । आर्द्राश्लेषाशतभिषग्भरणीस्वातिरैन्द्रिकाः। एतेषु पञ्चदशसु मुहूर्तेषु न च किंचन ॥४॥" इति नक्षत्रविधानं । ततः स्कन्धिकचतुष्टयं प्रगुणीक्रियते तद्विधिश्चायम्—तैर्वामकक्षाधः कृत्वा कल्पप्रावरणं विपरीतं कार्यं, रजोहरणं मुखवस्त्रिकादि तैः कटोत्कटिसूत्रे दोरिकां विच्छिन्नांचलपं तथैव विपरीतं प्रावृत्य दण्डं विपरीतं संस्थाप्य कनिष्ठसाधुं पुरतः कृत्वा सर्वज्येष्ठं पश्चात् कृत्वा चैत्ये व्रजन्ति । तत्र प्रविश्य विपरीतं रजोहरणं विपरीतां मुखवस्त्रिकां धारयित्वा कनिष्ठमग्रे कृत्वा विपरीतं शक्रस्तवं कथयन्ति "पुव्व जइ वीराइ" पश्चात् शांतिस्तवः पश्चात् शक्रस्तवः ततः ऐर्यापथिकी ततः पुनः निरन्तरयुक्त्या कल्पं प्रावृत्य ज्येष्ठमग्रे कृत्वा समरजोहरणमुखवस्त्रिकाभ्यामैर्यापथिकी । शक्रस्तवशान्तिस्तवक्रमकथनेन चैत्यवन्दनं कुर्वन्ति जयवीय रायपर्यन्तं, ततः "शिवमस्तु सर्वजगताम्" इत्यादि पठन्ति, ततो भगवन् "आवस्सी" इति कथयित्वा निजवसतौ यान्ति, वसतिद्वारमागताः पुनः कल्पमुत्तार्य सुवर्णजलेनाभ्युक्षणं गृह्णन्ति, वसतिमध्ये प्रविष्टा उष्णजलेन देहक्षालनं कुर्वन्ति, तत आचार्यमहर्द्धिककृतानशनमहातपस्विबहुसुजनवल्लभस्य मरणे दिनत्रयमस्वाध्यायः एकदिनमुपवासः अन्येषां मरणे द्वयमपि न, ततोऽशुभे दिने उत्थापनं कायोत्सर्गाद्यारम्भो न क्रियते, शुभ-

पावेसु पसत्ताइं वोसिरि आइं मए ताइं ॥ ४ ॥" इति (गाथा) ग्लानाद्धाणयित्वा तस्यालोचनां दद्यात्। आलोचनाविधिस्तु प्रायश्चित्ताधिकारादवसेयः। ततो ग्लानः प्रत्येकमाचार्योपाध्यायसाधुसाध्वीश्रावकश्राविकाः क्षमयति। तत इतिगाथां कथयेत्—"साहूय साहूणीओ सावय सावीओ चउ विहो संघो। जम्मणवइ काए हिआ आ साइओ तंपि खामेमि ॥ १ ॥ आयरिय उवज्झाए सीसे साहम्मिए कुलगणे अ। जे मे कया कसाया सव्वे तोसिंच खामेमि ॥ २ ॥ खामेमि सव्वजीवे सव्वे जीवा खमंतु मे। मित्ति मे सव्वभूएसु वेरं मज्झ न केणइ ॥ ३ ॥ अरिहंत देवो गुरुणो सुसाहुणो महप्पमाणं इअ समत्तं गहिअं मए विसेसेण चरणम्मि ॥ ४ ॥" ततो ग्लानः "करेमि भंते सामाइयं० इति सर्वविरतिसामायिकदण्डकं त्रिरुचरति। तत उत्थापनावत् त्रिः पञ्चमहाव्रतोचारणं करोति। ततः चत्तारि मंगलं इत्यारभ्य केवलिपन्नत्तं धम्मं सरणं पवज्जामि इति पर्यन्तं त्रिरुचरति, ततो नमस्कारभणनपूर्वं नमो समणस्स भगवओ महइ महावीरस्स उत्तिमट्ठिए ठाइमाणो पच्चक्खाइ सव्वं पाणाइवायं १ सव्वं मुसावायं २ सव्वं अदिन्नादाणं ३ सव्वं मेहुणं ४ सव्वं परिग्गहं ५ सव्वं कोहं ६ सव्वं माणं ७ सव्वं मायं ८ सव्वं लोहं ९ पिज्जं १० दोसं ११ कलहं १२ अज्झक्खाणं १३ अरइरइ १४ पेसुन्नं १५ परपरिवायं १६ मायामोसं १७ मिच्छादंसणसल्लं १८ इच्चेइयाइं अट्ठारसपावट्ठाणाइं तिविहं तिविहेणं वोसरइ, ततो भवचरिमं पच्चक्खाइ तिविहंपि आहारं असणं खाइमं साइमं अन्नत्थणा भोगेणं सहसागारेणं महत्तरागारेणं सव्वसमाहिवत्तिआगारेणं वोसिरामि। इति सागा-

# पाठान्तरैः सहितः शुद्धपाठः ।

| पत्रं | पंक्तिः | पाठान्तराणि । |
| --- | --- | --- |
| नि. २ | २ | तत्क्रियात्यागा. |
| ,, २ | ११ | खंधो अ |
| सा. २ | १ | पक्खपहो |
| सा. २ | ११ | प्रीणनकरं |
| सा. २ | १४ | तएणं समणस्स |
| ,, | ,, | विईं वडियं- |
| नि ३ | १ | धम्मजागरिअं |
| ,, | ,, | बारसाहिमे |
| ,, | ७ | निर्मिमयति |
| ,, | १४ | व्रतिनीव्रतदानं |
| सा. ३ | ७ | षष्ठीजागरणं |
| नि. ४ | ५ | चतुस्सरणमेव |
| ,, | ६ | क्षामणं चैव |
| सा. ४ | १२ | शक्रार्हच्छुत |
| सा. ५ | ३ | विज्जयं जोइसं |
| नि. ६ | १ | दक्षिणकरसावित्रीकः |
| ,, | ३ | कर्मप्रभृतिमर्हति |
| ,, | ७ | भूपतिदुर्गतः |
| सा. ६ | ४ | यस्येति नाम |
| ,, | ६ | तुष्टिपुष्टिप्रदे |
| ,, | ९ | विपात् रक्ष २ विष- |
| | | धरेभ्यो रक्ष २ |
| | | दुष्टग्रहेभ्यो रक्ष २ |
| | | राजभ्यो रक्ष २ |
| | | रोगभयेभ्यो रक्ष २ |
| | | रणभयेभ्यो रक्ष २ |
| | | राक्षसेभ्यो रक्ष. २ |

१ प्रतिपत्र निरक-सांकगतपंक्तिनिर्देशस्थलेषु पाठान्तराणि शुद्धपाठाश्चसंगृहीताः सन्ति ।

दिने जिनपूजापूर्वकमुत्थापनं शुभकर्मप्रारम्भश्च । इति महापरिष्ठापनविधिः । तथा आचार्यादीनां कृतानशनानां वा मृतौ श्राद्धा रथिकादिशोभां कुर्वन्ति, परिष्ठापितशवस्यापि संस्कारकरणं श्राद्धानां कृत्यमिदम्- "व्रते च योगोद्वहने तपस्युत्थापनाकृतौ । आवश्यके च सर्वत्र साम्यं साध्वीतपस्विनोः ॥ १ ॥ वन्दने स्थापनाकार्ये सवस्त्रावश्यके तथा । एतेषु साधुसाध्वीनां भेदो नान्यत्र कुत्रचित् ॥ २ ॥ सवस्त्रावश्यके चैव परमेष्ठिप्रवन्दने । श्राद्धीश्राद्धयोर्गुरौ कार्ये भेदो नान्यत्र कुत्रचित् ॥ ३ ॥ सूतकं पिण्डदानं च परमप्यौर्ध्वदेहिकम् । शोको मृते परे साधौ मुनीनां नैव विद्यते ॥ ४ ॥ इत्याचार्यश्रीवर्द्धमानसूरिकृते आचारदिनकरे यतिधर्मोत्तरायणे यत्यन्तक्रियाकीर्तनो नाम द्वात्रिंशत्तम उदयः ॥ ३२ ॥ संपूर्णं यतिधर्मोत्तरायणम् । सर्वाग्रं यतिधर्मोत्तराणां श्लोका उभयमिलने आदितः गृहिधर्मयतिपूर्वोत्तरायन ग्रंथाग्रं ४५००।९० ॥

## इति श्रीमण्डलाचार्यकमलसूरिविकासित—खरतरगच्छमालाद्वितीयपुष्परूपे श्रीवर्धमानसूरिविरचित आचारदिनकरस्य प्रथमविभागः संपूर्णः ।

१ मुनिमरणेपिण्डप्रतिषेधेन गृहिणां तदावश्यकत्वमवगम्यते ।

## पाठान्तरैः सहितः शुद्धपाठः ।

| पत्रं | पंक्तिः | पाठान्तराणि । |
|---|---|---|
| नि. २ | २ | तक्रियात्यागा. |
| ,, २ | ११ | खंधो अ |
| सा. २ | १ | पक्खपहो |
| सा. २ | ११ | प्रीणनकरं |
| सा. २ | १४ | तएणं समणस्स |
| ,, | ,, | विईं वडियं- |
| नि. ३ | १ | धम्मजागरिअं |
| ,, | ,, | वारसाहिमे |
| ,, | ७ | निर्मम्रयति |

| पत्रं | पंक्तिः | पाठान्तराणि । |
|---|---|---|
| ,, | १४ | व्रतिनीव्रतदानं |
| सा. ३ | ७ | षष्ठीजागरणं |
| नि. ४ | ५ | चतुस्सरणमेव |
| ,, | ६ | क्षामणं चैव |
| सा. ४ | १२ | शक्रार्हत्स्तुत |
| सा. ५ | ३ | विज्जयं जोइसं |
| नि. ६ | १ | दक्षिणकरसावित्रीकः |
| ,, | ३ | कर्मप्रभृतिमर्हति |
| ,, | ७ | भूपतिदुर्गतः |

| पत्रं | पंक्तिः | पाठान्तराणि । |
|---|---|---|
| सा. ६ | ४ | यस्येति नाम |
| ,, | ६ | तुष्टिपुष्टिप्रदे |
| ,, | ९ | विषात् रक्ष २ विष- |
| | | धरेभ्यो रक्ष २ |
| | | दुष्टग्रहेभ्यो रक्ष २ |
| | | राजभ्यो रक्ष २ |
| | | रोगभयेभ्यो रक्ष २ |
| | | रणभयेभ्यो रक्ष २ |
| | | राक्षसेभ्यो रक्ष. २ |

1 प्रतिपत्रं निरक-सांकगतपंक्तिनिर्दशस्थलेषु पाठान्तराणि शुद्धपाठाश्चसंगृहीताः सन्ति ।

| | पत्रं | पंक्तिः | पाठान्तराणि । |
|---|---|---|---|
| नि. | ७ | ४ | व्यन्तरज्वरराक्षस |
| | | ७ | वा सहस्रमूलीकं |
| सा. | ७ | १ | जन्मासि-संसारवानसि-भवविभ्रमिपुरसि |
| | ,, | ३ | तत्कुर्या येन न |
| ति. | ८ | ३ | संस्थापनपरा |
| | ,, | ५ | हारोपदर्शनधर्मोप. |
| | ,, | १० | मित्थत्ते |
| | ,, | ११ | काइया तेहिं |
| सा. | ८ | ९ | नृनामविहिते |
| नि. | ९ | ४ | स्वयं गुरुर्वा |
| | ,, | ८ | आत्मन् त्वमात्मा-प्राप्यं |

| | पत्रं | पंक्तिः | पाठान्तराणि । |
|---|---|---|---|
| | | | मनुष्य. |
| | ,, | १० | तुष्टिः पुष्टिर्वृद्धिः |
| सा. | ९ | १० | कमइ सुरनाह । संपत्त-जोगहुत्ती |
| सा. | १० | ४ | श्रीं ह्रीं ॐ |
| | ,,* | ६ | सिद्धार्था लवणं |
| | ,, | ७ | सूतिकाः कुल. |
| नि. | ११ | ५ | ततश्च सुस्नातां |
| नि. | १२ | ३ | जन्मदिनात्तृतीये |
| | ,, | ४ | शिशुं मातुः स्तनौ |
| सा. | १२ | ३ | विधिमारभेत |
| | ,, | ९ | 'नलिखवओ' अंशः तत्र |

| | पत्रं | पंक्तिः | पाठान्तराणि । |
|---|---|---|---|
| | | | 'यथा' इत्यादि पठनीयं |
| नि. | १३ | १२ | वरदाभयकरे |
| सा. | १३ | १ | पूज्यन्ते । मातॄणां ऊर्ध्वोपविष्टसुप्तध्यानलिखने विशेषः । तत्र स्थाने स्थिरीकरणं सुखहेतुः । एवं मातॄः |
| | ,, | ३ | षष्ठीमस्वारूपां |
| | ,, | ७ | यथा ॐ भगवति |
| नि. | १५ | १४ | ढौकनिकां |
| नि. | १६ | ११ | देशोत्पन्नान्यनगरप्राप्याणि सर्वाणि |

मध्यांगुलीद्वयोर्ध्वीकरणेन रौद्रदृष्ट्या तर्जनीमुद्रां दर्शयति । ततो वामकरेण जलं गृहीत्वा रौद्रदृष्ट्या
विम्बमाच्छोटयति । केषांचिन्मते स्नात्रकारा एव वामहस्तोदकेन प्रतिमामाच्छोटयन्ति । ततो गुरुर्विम्बस्य
तिलकं पूजनं च स्नात्रकारकरात् कारयति, ततो गुरुर्विम्बस्य मुद्गरमुद्रां दर्शयति, ततोऽक्षततन्दुलभृतं
स्थालं ददाति, ततो वज्रमुद्रया गरुडमुद्रया विम्बस्य नेत्ररक्षां करोति, ततो वलिमन्त्रेण करामर्शेन
विम्बस्य सर्वशरीरे कवचं करोति । वलिमन्त्रो यथा—ॐ ह्रीँ क्ष्वीँ सर्वोपद्रवं विम्बस्य रक्ष रक्ष स्वाहा,
अनेनैव मन्त्रेण दशस्वपि दिक्षु त्रिस्त्रिः पठनेन पुष्पाक्षतक्षेपेण दिग्बन्धः । ततः श्राद्धाः स्नात्रकारा वा
विम्बोपरि सणलाजकुलत्थयवकंगुमाषसर्षपरूपं सप्तधान्यकं क्षिपन्ति । सप्तधान्यक्षेपवृत्तम्—"सर्वौष-
धीयद्बुलमंगलयुक्तिरूपं संप्रीणनाकरमपारशरीरिणां च। आदौ प्रभोः प्रतिनिधेरधिवासनायां सप्तान्नमस्तु
निहितं दुरितापहारि ॥ १ ॥" ततो गुरुर्जिनमुद्रया कलशमभिमन्त्रयति । मन्त्रो यथा—ॐ नमो यः सर्वश-
रीरावस्थिते महाभूते आगच्छ २ जलं गृहाण २ स्वाहा । ततः सर्वौषधिचंदनाद्यभिमन्त्रयति । मन्त्रो यथा—
ॐ नमो यः सर्वशरीरावस्थिते महाभूते आगच्छ २ सर्वौषधिचंदनसमालंभनं गृहाण २ स्वाहा । समालंभनं
चार्चिकमुच्यते । ततः पुष्पाणि अभिमन्त्रयति । मन्त्रो यथा—ॐ नमो यः सर्वशरीरावस्थिते महाभूते आ-
गच्छ २ सर्वतो मेदिनी पुष्पं गृहाण स्वाहा ॐ नमो यः वलिं दह २ महाभूते तेजोधिपते धुंधु धूपं गृह्ण २
स्वाहा । तत एभिरेव मन्त्रैर्विम्बस्य जलसर्वौषधिचंदनपुष्पधूपोद्ग्राहणपूजा क्रमात् कर्तव्या मनाक् २ ततो वि-

स्वांगुलौ पञ्चरत्नं बध्यते । वृत्तं—"स्वर्णमौक्तिकसविद्रुमरूप्यै राजपट्टशकलेन समेतम् । पञ्चरत्नमिह मंगलकार्ये देव दोषनिचयं विनिहन्तु ॥ १ ॥" ततः स्नात्रकाराः पूर्वोक्तरूपाः प्रत्येकं चतुः चतुः कलशैः कलशमुद्रया बल्गुगीताद्यविस्तरेण स्नात्रं कुर्वन्ति, चत्वारोपि कलशचतुष्कं जिनबिम्बोपरि प्रक्षिपन्ति । कलशक्षेपानन्तरं चंदनतिलककरणं पुष्पारोपणं धूपोत्क्षेपणं बिम्बस्य कुर्वन्ति । एतेषु कलशक्षेपेषु नमस्कारपाठ एव । ततः प्रथमं हिरण्योदकेन स्नपनं । वृत्तं—"सुपवित्रतीर्थनीरेण संयुतं गन्धपुष्पसंमिश्रम् । पततु जलं बिम्बोपरि सहिरण्यं मन्त्रपरिपूतम् ॥ १ ॥" द्वितीयं पञ्चरत्नस्नात्रं, अत्र पञ्चरत्नं प्रवालमौक्तिकसुवर्णरजतताम्ररूपं । वृत्तं यथा—"नानारत्नौघयुतं सुगंधि पुष्पाधिवासितं नीरम् । पतताद्विचित्रवर्णं मन्त्राढ्यं स्थापनाबिम्बे ॥ १ ॥" तृतीयं प्लक्षाश्वत्थशिरीषोदुम्बरवटमध्यछल्लीकषायजलस्नानं । वृत्तं—"प्लक्षाश्वत्थोदुम्बरशिरीषवल्कादिकल्कसंसृष्टम् । बिम्बे कषायनीरं पततादधिवासितं जैने ॥ १ ॥" चतुर्थं पर्वतपद्मतडागनदीसंगमनदीतटद्वयमृत्तिकागोशृंगवल्मीकमृत्तिकादिस्नानं ; वृत्तं—"पर्वतसरोनदीसंगमादिमृद्भिश्च मन्त्रपूतानि । उद्वर्त्य जैनबिम्बं स्नपयाम्यधिवासनासमये ॥ १ ॥" पञ्चमं पञ्चगव्यदर्भोदकस्नात्रं । वृत्तं—"दधिदुग्धघृतछगणप्रस्रवणैः पञ्चभिर्गवांगभवैः । दर्भोदकसंमिश्रैः स्नपयामि जिनेश्वरप्रतिमाम् ॥ १ ॥" षष्ठं सहदेवीबलाशतमूलीशतावरीकुमारीगुहासिंहीव्याघ्रीसदौषधिस्नात्रं । वृत्तं यथा—"सहदेव्यादिसदौषधिवर्गेणोद्वर्तितस्य बिम्बस्य । संमिश्रं बिम्बोपरि पतज्जलं हरतु दुरितानि ॥ १ ॥" सप्तमं मयूरशिखाविहरकअंकोल्ललक्ष्मणाप्रभृतिपवित्र-

सौख्यानि मूलिकास्नात्रं। वृत्तं—"स्नपवित्रमूलिकावर्गमर्दिते तदुदकस्य शुभधारा। बिम्बेधिवाससमये यच्छतु
मूलिकास्नात्रं। वृत्तं यथा—"नानाकुष्टाद्यौषधिसंमिश्रे तद्युतं
निपतन्ती ॥ १ ॥" ततः कुष्टादिप्रथमाष्टकवर्गस्य अष्टमं स्नात्रं। वृत्तं यथा—"नानाकुष्टाद्यौषधिसंमिश्रे तद्युतं
पतत्क्षीरम्। बिम्बे कृतसन्मन्त्रं कर्मौघं हन्तु भव्यानाम् ॥ १ ॥" ततो नवमं मेदादिद्वितीयाष्टकवर्गस्नात्रं। वृत्तम्
—"मेदाद्यौषधिभेदोपरोष्टवर्गः स्वमन्त्रपरिपूतः। जिनबिम्बोपरि निपतत् सिद्धिं विदधातु भव्यजने ॥ १ ॥"
इति नव स्नात्राणि। ततः सूरिरुत्थाय गरुडमुद्रया मुक्ताशुक्तिकमुद्रया परमेष्ठिमुद्रया वा प्रतिष्ठाप्यदेवताह्वानं
तदग्रतो भूत्वा ऊर्ध्वः सन् करोति। मन्त्रो यथा—ॐ नमोऽर्हत्परमेश्वराय चतुर्मुखपरमेष्ठिने त्रैलोक्यगताय
अष्टदिग्भागकुमारीपरिपूजिताय देवाधिदेवाय दिव्यशरीराय त्रैलोक्यमहिताय आगच्छ २ स्वाहा। ततो
दिक्पालाह्वानं संक्षेपेण करोति यथा—"इन्द्रमग्निं यमं चैव नैर्ऋतं वरुणं यथा। वायुं कुबेरमीशानं नागं ब्रह्मा-
णमेव च ॥ १ ॥" मन्त्रो यथा—ॐ इन्द्राय सायुधाय सवाहनाय सपरिजनाय इह जिनेन्द्रस्थापने आगच्छ
२ स्वाहा। एवमग्नये एवं दशानामपि दिक्पालानामाह्वानमात्रमेव। ततो बिम्बोपरि पुष्पांजलिक्षेपः। वृत्तम्—
"सर्वस्थिताय विबुधासुरपूजिताय सर्वात्मकाय विदुदीरितविष्टपाय। स्थाप्याय लोकनयनप्रमदप्रदाय पुष्पां-
जलिर्भवतु सर्वसमृद्धिहेतुः ॥ १ ॥" ततो दशमं हरिद्रादिसर्वौषधिस्नात्रं। वृत्तं यथा—"सकलौषधिसंयुक्त्या
सुगन्धया घर्षितं सुगतिहेतोः। स्नपयामि जैनबिम्बं मन्त्रिततन्नीरनिवहेन ॥ १ ॥" ततो द्वितीयं सहदेव्या-
दिसर्वौषधि एकादशं स्नात्रं। वृत्तं यथा—"सर्वामयदोषहरं सर्वप्रियकारकं च सर्वविदः। पूजाभिषेककाले

निपततु सर्वौषधीघृन्दम् ॥ १ ॥" द्वादशं विष्णुक्रान्तादिशतमूलस्नात्रं। वृत्तं यथा—"अनन्तसुखसंघातकन्द-कादम्बिनीसमम्। शतमूलमिदं बिम्बस्नात्रे यच्छतु वांच्छितम् ॥ १ ॥" त्रयोदशं शतावर्यादिसहस्रमूली-स्नात्रं। वृत्तं—"सहस्रमूलसर्वर्द्धिसिद्धिमूलमिहार्हतः। स्नात्रे करोतु सर्वाणि वांछितानि महात्मनाम् ॥ १ ॥" ततो गुरुणा दृष्टिदोषघाताय सिद्धजिनमन्त्रो दक्षिणहस्तामर्शेन बिम्बे न्यसनीयः। मन्त्रो यथा—इहागच्छन्तु जिनाः सिद्धा भगवन्तः स्वसमयेनेहानुग्रहाय भव्यानां स्वाहा। अथवा हुँ क्षुँ ह्रीँ क्ष्वीँ ॐ भः स्वाहा। अथ लोहेनास्पृष्टसिद्धार्थरक्षापोट्टलिकाः सूरिणाभिमन्त्रिताः स्नात्रकारैः बिम्बदक्षिणकरे बन्धनीयाः। तदभि-मन्त्रो यथा—ॐ क्षाँ क्षीँ क्ष्वीँ स्वीँ स्वाहा। चन्दनतिलकं च विधेयं बिम्बस्य। ततो गुरुरूर्ध्वीभूय कृताञ्जलिः जिनपुरतो विज्ञप्तिकां करोति। साचेयं—स्वागताः जिनाः सिद्धाः प्रसाददाः सन्तु, प्रसादं धिया कुर्वन्तु, अ-नुग्रहपरा भवन्तु, स्वागतमनुस्वागतम्। ततो गुरुरञ्जलिमुद्रया मन्त्रपूर्वकं सुवर्णभाजनस्थमर्घं पूर्वोक्तं बिम्बा-ग्रतो निवेदयेत्। मन्त्रो यथा ॐभः अर्घं प्रतिच्छन्तु पूजां गृह्णन्तु जिनेन्द्राः स्वाहा। ततः पुनर्दिक्पालाह्वानं तेषां प्रत्येकमर्घदानं यथा—ॐ इन्द्राय सायुधाय सवाहनाय सपरिकराय इह प्रतिष्ठामहोत्सवे आगच्छ २ इदमर्घ्यं गृहाण २ स्वाहा, एवं ॐ अग्नये सा० ॐ नैर्ऋताय सा०, ॐ वरुणाय सा०, ॐ वायवे सा०, ॐ कु-बेराय सा०, ॐ ईशानाय सा० शेषं पूर्ववत्। ॐ नागेभ्यः सा०, ॐ ब्रह्मणे सा०, एवं सायुधाय सवाहनाय कथनपूर्वं अर्घ्यदानं। ततश्चतुर्दशं पुष्पस्नात्रं वृत्तं—"अधिवासितं सुमन्त्रैः सुमनःकिञ्जल्कराजितं तोयम्।

तीर्थजलादिसुयुक्तं कलशोन्मुक्तं पततु विम्बे ॥ १ ॥” पञ्चदशं सिल्हककुष्टमांसीमुराचंदनागुरुकर्पूरादियुक्त-
गन्धस्नानिकास्नात्रं। वृत्तं यथा—“गन्धांगस्नानिकया सन्मृष्टं तदुदकस्य धाराभिः। स्नपयामि जैनविम्बं कर्मौ-
घोच्छित्तये शिवदम् ॥ १ ॥” ततः षोडशं वासस्नात्रं शुक्ला गन्धा वासा उच्यन्ते, ते च मनाक् कृष्णा गन्धा
इति। वृत्तं—“हृद्यैराह्लादकरैः स्पृहणीयैर्मन्त्रसंस्कृतैर्जैनीम्। स्नपयामि सुगतिहेतोः प्रतिमामधिवासितैर्वासैः
॥ १ ॥” सप्तदशं चन्दनस्नात्रं। वृत्तं—“शीतलसरससुगन्धिर्मनोमतश्चन्दनद्रुमसमुत्थः। चन्दनकल्कः सजलो
मन्त्रयुतः पततु जिनविम्बे ॥ १ ॥” अष्टादशं कुंकुमस्नात्रं। वृत्तं—“काश्मीरजलसुविलिप्तं विम्बं तन्नीरधार-
याभिनवम्। सन्मन्त्रयुक्तया शुचि जैनं स्नपयामि सिद्ध्यर्थम् ॥ १ ॥” एतैर्वस्तुभिर्जिनविम्बमालिप्य एत-
द्वस्तुसंमिश्रेण जलेन स्नात्रं सर्वेषु स्नात्रेष्वन्तराले चन्दनचर्चनं पुष्पारोपणं धूपदानं ततो विम्बस्यादर्शं दर्श-
येत्। आदर्शदर्शनमन्त्रो यथा—“आत्मावलोकनकृते कृतिनां यो वहति[1] सच्चिदानन्दम्[2]। भवति स आद-
र्शोयं गृह्णातु जिनेश्वरप्रतिच्छन्दम् ॥ १ ॥” तत एकोनविंशतितमं तीर्थोदकस्नात्रं। वृत्तं यथा—“जलधिनदी-
ह्रदकुण्डेषु यानि सलिलानि तीर्थशुद्धानि। तैर्मन्त्रसंस्कृतैरिह विम्बं स्नपयामि सिद्ध्यर्थम् ॥ १ ॥” विंशति-
तमं कर्पूरस्नात्रं। वृत्तं—“शशिकरतुषारधवला निर्मलगन्धा सुतीर्थजलमिश्रा। कर्पूरोदकधारा सुमन्त्रपूता प-
ततु विम्बे ॥ १ ॥” ततः पुष्पाञ्जलिक्षेपः। वृत्तं—नानासुगन्धपुष्पौघरञ्जिता चिंचिरीककृतनादा। धूपामोदवि-

१ यद्दति इति पाठान्तरम्। २ सर्वदानन्दम् इति पाठान्तरम्।

मिश्रा पततात्पुष्पांजलिर्बिम्बे ॥ १ ॥" ततएकविंशतितममष्टोत्तरशतमृन्मयकलशैः शुद्धजलैः स्नात्रम् । वृत्तं यथा—"चक्रे देवेन्द्रराजैः सुरगिरिशिखरे योभिषेकः पयोभिर्नृत्यन्तीभिः सुरीभिर्ललितपदगमं तूर्यनादैः सुदीपैः । कर्तुं तस्यानुकारं शिवसुखजनकं मन्त्रपूतैः सुकुम्भैर्बिम्बं जैनं प्रतिष्ठाविधिवचनपरः पूजयाम्यत्र काले ॥ १ ॥" ततो गुरुरभिमन्त्रितचन्दनेन वामकरधृतां प्रतिमां दक्षिणकरे सर्वाङ्गमालिम्पति । चन्दनाभिमन्त्रणं सूरिमन्त्रेण अधिवासनामन्त्रेण वा कार्यम् । अधिवासनामन्त्रो यथा—ॐ नमः शान्तये हूँ क्षूँ हूँ सः अथवा ॐ नमो पयाणुसारीणं कविलपर्यंतः सूरिमन्त्रः । ततः कुसुमारोपणं धूपोत्क्षेपणं वासक्षेपं च करोति, ततो गुरुः प्रियंगुकर्पूरगोरोचनाभिर्हस्तलेपं विधाय मदनफलसहितं कङ्कणबन्धं करोति बिम्बस्य । तन्मन्त्रो यथा—ॐ नमो खीरासवलद्धीणं, ॐ नमो महुयासवलद्धीणं, ॐ नमो संभिन्नसोईणं, ॐ नमो पयाणुसारीणं, ॐ नमो कुठबुद्धीणं जंमियं विज्जं पउंजामि सा मे विज्जा पसिज्झओ ॐ अवतर २ सोमे २ कुरु २ वग्गु २ निवग्गु २ सुमणे सोमणसे महुमहुरे कविल ॐ कक्षः स्वाहा कंकणबन्धनम् कौसुम्भसूत्रमदनफलारिष्टमयं कण्ठबाहुप्रकोष्ठचरणेषु क्रियते । ततोधिवासनामन्त्रेण गुरुर्मुक्ताशुक्तिमुद्रया मस्तकस्कन्धद्वयजानुद्वयरूपाणि बिम्बस्य पञ्चाङ्गानि ससर्वेलं स्पृशति । अधिवासनामन्त्रो यथा ॐ नमः शान्तये हूँ क्षूँ हूँ सः । धूपश्च देयः । ततः परमेष्ठिमुद्रां कृत्वा गुरुः पुनरपि जिनाह्वानं करोति । मन्त्रो यथा—ॐ नमोर्हत्परमेश्वराय चतुर्मुखपरमेष्ठिने त्रैलोक्यगताय अष्टदिग्भागकुमारीपरिपूजिताय देवाधिदेवाय दिव्यशरीराय त्रैलोक्यमहिताय आ-

गच्छ २ स्वाहा। ततो नन्द्यावर्तपूजा। चलबिम्बे नन्द्यावर्तविधिं विधाय नन्द्यावर्तोपरि प्रतिमां स्थापयेत्। स्थिरबिम्बे तु निश्चलस्थिते बिम्बाग्रतः वेदिमध्ये वा नन्द्यावर्तपूजनं। तद्विधिश्चायं गुरुर्निषद्यायामुपविश्य नन्द्यावर्तं पूजयति, कर्पूरसंमिश्रश्रीखण्डससलेपलिप्ते श्रीपर्णीपट्टे कर्पूरकस्तूरिकागोरोचनासंमिश्रकुंकुमरसेन प्रथमं नवकोणः प्रदक्षिणतया नन्द्यावर्तो लिख्यते। यथा मध्याद्बहिर्वलयक्रमः तन्मध्ये नन्द्यावर्तं दक्षिणपार्श्वे सौधर्मेन्द्रशक्रस्थापना वामे च ईशानेन्द्रस्थापना अधः श्रुतदेवतास्थापना तत्र सौधर्मेन्द्रः काञ्चनवर्णश्चतुर्भुजः गजवाहनः पञ्चवर्णवस्त्रावरणः पाणिद्वयेनाञ्जलिबद्धः एकपाणौ अभयं एकपाणौ वज्रं। ईशानेन्द्रस्तु श्वेतवर्णो वृषभवाहनः नीललोहितवस्त्रः चतुर्भुजः जयभृत् शूलचापभृत् २ करद्वयेनांजलिकृच्च। श्रुतदेवता श्वेतवर्णा श्वेतवस्त्रधारिणी हंसवाहना श्वेतसिंहासनासीना भामण्डलालंकृता चतुर्भुजा श्वेताब्जवीणालंकृतवामकरा पुस्तकमुक्ताक्षमालालंकृतदक्षिणकरा ततस्तत्परिधौ वृत्तवेष्टनं बहिर्गृहाष्टकविरचनं तत्राष्टदलेषु क्रमेण न्यासः ॐ नमोऽर्हद्भ्यः स्वाहा, ॐ नमः सिद्धेभ्यः स्वाहा, ॐ नम आचार्येभ्यः स्वाहा, ॐ नमः उपाध्यायेभ्यः स्वाहा, ॐ नमः सर्वसाधुभ्यः स्वाहा, ॐ नमो ज्ञानाय स्वाहा, ॐ नमो दर्शनाय स्वाहा, ॐ नमश्चारित्राय स्वाहा। ततः परिधौ वृत्तवलयं तद्बहिश्चतुर्दिक्षु चतुर्विंशतिदलस्थापनं, तेषु क्रमेण स्थापनं यथा—ॐ नमो मरुदेव्यै स्वाहा १ ॐ नमो विजयायै स्वाहा २ ॐ नमः सेनायै स्वाहा ३ ॐ नमः सिद्धार्थायै स्वाहा ४ ॐ नमो मङ्गलायै स्वाहा ५ ॐ नमः सुसीमायै स्वाहा ६ ॐ नमः पृथ्व्यै स्वाहा ७ ॐ नमो लक्ष्मणायै स्वाहा ८ ॐ नमो

रामायै स्वाहा ९ ॐ नमो नन्दायै स्वाहा १० ॐ नमो विष्णवे स्वाहा ११ ॐ नमो जयायै स्वाहा १२ ॐ नमः श्यामायै स्वाहा १३ ॐ नमः सुयशसे स्वाहा १४ ॐ नमः सुव्रतायै स्वाहा १५ ॐ नमोऽचिरायै स्वाहा १६ ॐ नमः श्रिये स्वाहा १७ ॐ नमो देव्यै स्वाहा १८ ॐ नमः प्रभावत्यै स्वाहा १९ ॐ नमः पद्मावत्यै स्वाहा २० ॐ नमो वप्रायै स्वाहा २१ ॐ नमः शिवायै स्वाहा २२ ॐ नमो वामायै स्वाहा २३ ॐ नमस्त्रिशलायै स्वाहा २४। ततः पुनः परिधिमण्डलं तत्र षोडशदलरचना तेषु दलेषु ॐ नमो रोहिण्यै स्वाहा १ ॐ नमः प्रज्ञप्त्यै स्वाहा २ ॐ नमो वज्रशृंखलायै स्वाहा ३ ॐ नमो वज्रांकुश्यै स्वाहा ४ ॐ नमोऽप्रतिचक्रायै स्वाहा ५ ॐ नमः पुरुषदत्तायै स्वाहा ६ ॐ नमः काल्यै स्वाहा ७ ॐ नमो महाकाल्यै स्वाहा ८ ॐ नमो गौर्यै स्वाहा ९ ॐ नमो गन्धार्यै स्वाहा १० ॐ नमो महाज्वालायै स्वाहा ११ ॐ नमो मानव्यै स्वाहा १२ ॐ नमोऽच्छुप्तायै स्वाहा १३ ॐ नमो वैरोट्यायै स्वाहा १४ ॐ नमो मानस्यै स्वाहा १५ ॐ नमो महामानस्यै स्वाहा १६। ततो बहिःपरिधिं विधाय चतुर्विंशति दलानि कुर्यात् तेषु क्रमेण ॐ नमः सारस्वतेभ्यः स्वाहा १ ॐ नम आदित्येभ्यः स्वाहा २ ॐ नमो वह्निभ्यः स्वाहा ३ ॐ नमो वरुणेभ्यः स्वाहा ४ ॐ नमो गर्दतोयेभ्यः स्वाहा ५ ॐ नमस्तुषितेभ्यः स्वाहा ६ ॐ नमोऽव्याबाधितेभ्यः स्वाहा ७ ॐ नमोरिष्टेभ्यः स्वाहा ८ ॐ नमोऽग्याभेभ्यः स्वाहा ९ ॐ नमः सूर्याभेभ्यः स्वाहा १० ॐ नमश्चन्द्राभेभ्यः स्वाहा ११ ॐ नमः सत्याभेभ्यः स्वाहा १२ ॐ नमः श्रेयस्करेभ्यः स्वाहा १३ ॐ नमः क्षेमंकरेभ्यः स्वाहा १४ ॐ नमो वृषभेभ्यः स्वाहा १५ ॐ नमः कामचारेभ्यः स्वाहा १६ ॐ

नमो निर्याणेभ्यः स्वाहा १७ ॐ नमो दिशान्तरक्षितेभ्यः स्वाहा १८ ॐ नम आत्मरक्षितेभ्यः स्वाहा १९ ॐ
नमः सर्वरक्षितेभ्यः स्वाहा २० ॐ नमो मारुतेभ्यः स्वाहा २१ ॐ नमो वसुभ्यः स्वाहा २२ ॐ नमोऽश्वेभ्यः
स्वाहा २३ ॐ नमो विश्वेभ्यः स्वाहा २४। ततो बहिः परिधिं विधाय चतुःषष्टिदलानि विधाय ततोऽनुक्रमेण
ॐ नमश्चमराय स्वाहा १ ॐ नमो वलये स्वाहा २ ॐ नमो धरणाय स्वाहा ३ ॐ नमो भूतानन्दाय स्वाहा ४
ॐ नमो वेणुदेवाय स्वाहा ५ ॐ नमो वेणुदारिणे स्वाहा ६ ॐ नमो हरिकान्ताय स्वाहा ७ ॐ नमो हरिस-
हाय स्वाहा ८ ॐ नमोऽग्निशिखाय स्वाहा ९ ॐ नमोऽग्निमानवाय स्वाहा १० ॐ नमः पुण्याय स्वाहा ११ ॐ
नमो वशिष्ठाय स्वाहा १२ ॐ नमो जलकान्ताय स्वाहा १३ ॐ नमो जलप्रभाय स्वाहा १४ ॐ नमोऽमितग-
तये स्वाहा १५ ॐ नमो मितवाहनाय स्वाहा १६ ॐ नमो वेलंबाय स्वाहा १७ ॐ नमः प्रभञ्जनाय स्वाहा १८
ॐ नमो घोषाय स्वाहा १९ ॐ नमो महाघोषाय स्वाहा २० ॐ नमः कालाय स्वाहा २१ ॐ नमो महाकालाय
स्वाहा २२ ॐ नमः सुरूपाय स्वाहा २३ ॐ नमः प्रतिरूपाय स्वाहा २४ ॐ नमः पूर्णभद्राय स्वाहा २५ ॐ
नमो मणिभद्राय स्वाहा २६ ॐ नमो भीमाय स्वाहा २७ ॐ नमो महाभीमाय स्वाहा २८ ॐ नमः किंनराय
स्वाहा २९ ॐ नमः किंपुरुषाय स्वाहा ३० ॐ नमः सत्पुरुषाय स्वाहा ३१ ॐ नमो महापुरुषाय स्वाहा ३२ ॐ
नमोऽतिकायाय स्वाहा ३३ ॐ नमो महाकायाय स्वाहा ३४ ॐ नमो गीतरतये स्वाहा ३५ ॐ नमो गीतय-
शसे स्वाहा ३६ ॐ नमः संनिहिताय स्वाहा ३७ ॐ नमो महाकायाय स्वाहा ३८ ॐ नमो धात्रे स्वाहा ३९

ॐ नमो विधात्रे स्वाहा ४० ॐ नम ऋषये स्वाहा ४१ ॐ नम ऋषिपालाय स्वाहा ४२ ॐ नम ईश्वराय स्वाहा ४३ ॐ नमो महेश्वराय स्वाहा ४४ ॐ नमः सुवक्षसे स्वाहा ४५ ॐ नमो विशालाय स्वाहा ४६ ॐ नमो हासाय स्वाहा ४७ ॐ नमो हासरतये स्वाहा ४८ ॐ नमः श्वेताय स्वाहा ४९ ॐ नमो महाश्वेताय स्वाहा ५० ॐ नमः पतंगाय स्वाहा ५१ ॐ नमः पतंगरतये स्वाहा ५२ ॐ नमः सूर्याय स्वाहा ५३ ॐ नमश्चन्द्राय स्वाहा ५४ ॐ नमः सौधर्मेन्द्राय स्वाहा ५५ ॐ नम ईशानेन्द्राय स्वाहा ५६ ॐ नमः सनत्कुमारेन्द्राय स्वाहा ५७ ॐ नमो माहेन्द्राय स्वाहा ५८ ॐ नमो ब्रह्मेन्द्राय स्वाहा ५९ ॐ नमो लान्तकेन्द्राय स्वाहा ६० ॐ नमः शुक्रेन्द्राय स्वाहा ६१ ॐ नमः सहस्रारेन्द्राय स्वाहा ६२ ॐ नम आनतप्राणतेन्द्राय स्वाहा ६३ ॐ नम आरणाच्युतेन्द्राय स्वाहा ६४। तद्बहिः परिधिं विधाय चतुःषष्टि दलानि कृत्वाऽनुक्रमेण च तेषु दलेषु ॐ नमश्चरमदेवीभ्यः स्वाहा १ ॐ नमो बलिदेवीभ्यः स्वाहा २ ॐ नमो धरणदेवीभ्यः स्वाहा ३ ॐ नमो भूतानन्ददेवीभ्यः स्वाहा ४ ॐ नमो वेणुदेवदेवीभ्यः स्वाहा ५ ॐ नमो वेणुदारिदेवीभ्यः स्वाहा ६ ॐ नमो हरिकान्तदेवीभ्यः स्वाहा ७ ॐ नमो हरिसहदेवीभ्यः स्वाहा ८ ॐ नमोऽग्निशिखदेवीभ्यः स्वाहा ९ ॐ नमोऽग्निमानवदेवीभ्यः स्वाहा १० ॐ नमः पूर्णदेवीभ्यः स्वाहा ११ ॐ नमो वशिष्ठदेवीभ्य स्वाहाः १२ ॐ नमो जलकान्तदेवीभ्यः स्वाहा १३ ॐ नमो जलप्रभदेवीभ्यः स्वाहा १४ ॐ नमोऽमितगतिदेवीभ्यः स्वाहा १५ ॐ नमोऽमितवाहनदेवीभ्यः स्वाहा १६ ॐ नमो वेलम्बदेवीभ्यः स्वाहा १७ ॐ नमः प्रभञ्जनदेवीभ्यः स्वाहा १८ ॐ नमो घोषदे-

वीभ्यः स्वाहा १९ ॐ नमो महाघोपदेवीभ्यः स्वाहा २० ॐ नमः कालदेवीभ्यः स्वाहा २१ ॐ नमो महाकाल-देवीभ्यः स्वाहा २२ ॐ नमः सुरूपदेवीभ्यः स्वाहा २३ ॐ नमः प्रतिरूपदेवीभ्यः स्वाहा २४ ॐ नमः पूर्णभद्र-देवीभ्यः स्वाहा २५ ॐ नमो मणिभद्रदेवीभ्यः स्वाहा २६ ॐ नमो भीमदेवीभ्यः स्वाहा २७ ॐ नमो महाभी-मदेवीभ्यः स्वाहा २८ ॐ नमः किंनरदेवीभ्यः स्वाहा २९ ॐ नमः किंपुरुषदेवीभ्यः स्वाहा ३० ॐ नमः सत्पु-रुषदेवीभ्यः स्वाहा ३१ ॐ नमो महापुरुषदेवीभ्यः स्वाहा ३२ ॐ नमोऽहिकायदेवीभ्यः स्वाहा ३३ ॐ नमो महाकायदेवीभ्यः स्वाहा ३४ ॐ नमो गीतरतिदेवीभ्यः स्वाहा ३५ ॐ नमो गीतयशोदेवीभ्यः स्वाहा ३६ ॐ नमः संनिहितदेवीभ्यः स्वाहा ३७ ॐ नमः सन्मानदेवीभ्यः स्वाहा ३८ ॐ नमो धातृदेवीभ्यः स्वाहा ३९ ॐ नमो विधातृदेवीभ्यः स्वाहा ४० ॐ नम ऋपिदेवीभ्यः स्वाहा ४१ ॐ नमऋषिपालदेवीभ्यः स्वाहा ४२ ॐ नम ईश्वरदेवीभ्यः स्वाहा ४३ ॐ नमो महेश्वरदेवीभ्यः स्वाहा ४४ ॐ नमो सुवक्षोदेवीभ्यः स्वाहा ४५ ॐ नमो विशालदेवीभ्यः स्वाहा ४६ ॐ नमो हासदेवीभ्यः स्वाहा ४७ ॐ नमो हासरतिदेवीभ्यः स्वाहा ४८ ॐ नमः श्वेतदे-वीभ्यः स्वाहा ४९ ॐ नमो महाश्वेतदेवीभ्यः स्वाहा ५० ॐ नमः पतङ्गदेवीभ्यः स्वाहा ५१ ॐ नमः पतङ्गरतिदेवीभ्यः स्वाहा ५२ ॐ नमः सूर्यदेवीभ्यः स्वाहा ५३ ॐ नमश्चन्द्रदेवीभ्यः स्वाहा ५४ ॐ नमः सौधर्मेन्द्रदेवीभ्यः स्वाहा ५५ ॐ नम ईशानेन्द्रदेवीभ्यः स्वाहा ५६ ॐ नमः सनत्कुमारेन्द्रपरिजनाय स्वाहा ५७ ॐ नमो माहेन्द्रपरिजनाय स्वाहा ५८ ॐ नमो ब्रह्मेन्द्रपरिजनाय स्वाहा ५९ ॐ नमो लान्तकेन्द्रपरिजनाय स्वाहा ६० ॐ नमः शुक्रेन्द्रपरिजनाय

स्वाहा ६१ ॐ नमः सहस्रारेन्द्रपरिजनाय स्वाहा ६२ ॐ नम आनतप्राणतेन्द्रपरिजनाय स्वाहा ६३ ॐ नम आरणाच्युतेन्द्रपरिजनाय स्वाहा ६४ ततो बहिः परिधिं विधाय चतुर्विंशति दलानि कुर्यात् तेषु दलेषु क्रमेण ॐ नमो गोमुखाय स्वाहा १ ॐ नमो महायक्षाय स्वाहा २ ॐ नमस्त्रिमुखाय स्वाहा ३ ॐ नमो यक्षनायकाय स्वाहा ४ ॐ नमस्तुम्बरवे स्वाहा ५ ॐ नमः कुसुमाय स्वाहा ६ ॐ नमो मातङ्गाय स्वाहा ७ ॐ नमो विजयाय स्वाहा ८ ॐ नमोऽजिताय स्वाहा ९ ॐ नमो ब्रह्मणे स्वाहा १० ॐ नमो यक्षाय स्वाहा ११ ॐ नमः कुमाराय स्वाहा १२ ॐ नमः षण्मुखाय स्वाहा १३ ॐ नमः पातालाय स्वाहा १४ ॐ नमः किंनराय स्वाहा १५ ॐ नमो गरुडाय स्वाहा १६ ॐ नमो गन्धर्वाय स्वाहा १७ ॐ नमो यक्षेशाय स्वाहा १८ ॐ नमः कुबेराय स्वाहा १९ ॐ नमो वरुणाय स्वाहा २० ॐ नमो भृकुटये स्वाहा २१ ॐ नमो गोमेधाय स्वाहा २२ ॐ नमः पार्श्वाय स्वाहा २३ ॐ नमो मातंगाय स्वाहा २४। ततो बहिः परिधिं विधाय चतुर्विंशति दलानि कुर्यात् तेषु दलेषु गोमुखादिक्रमेण ॐ नमश्चक्रेश्वर्यै स्वाहा १ ॐ नमोऽजितबलायै स्वाहा २ ॐ नमो दुरितारये स्वाहा ३ ॐ नमः कालिकायै स्वाहा ४ ॐ नमो महाकालिकायै स्वाहा ५ ॐ नमः श्यामायै स्वाहा ६ ॐ नमः . शान्तायै स्वाहा ७ ॐ नमो भृकुटये स्वाहा ८ ॐ नमः सुतारिकायै स्वाहा ९ ॐ नमोऽशोकायै स्वाहा १० ॐ नमो मानव्यै स्वाहा ११ ॐ नमश्चण्डायै स्वाहा १२ ॐ नमो विदितायै स्वाहा १३ ॐ नमोंऽकुशायै स्वाहा १४ ॐ नमः कन्दर्पायै स्वाहा १५ ॐ नमो निर्वाण्यै स्वाहा १६ ॐ नमो बलायै स्वाहा १७ ॐ नमो धारिण्यै स्वाहा १८ ॐ

नमो धरणप्रियायै स्वाहा १९ ॐ नमो नरदत्तायै स्वाहा २० ॐ नमो गान्धार्यै स्वाहा २१ ॐ नमोम्बिकायै स्वाहा २२ ॐ नमः पद्मावत्यै स्वाहा २३ ॐ नमः सिद्धायिकायै स्वाहा २४। ततो बहिः परिधिं विधाय दश दलानि कृत्वा क्रमेण ॐ नम इन्द्राय स्वाहा १ ॐ नमोग्नये स्वाहा २ ॐ नमो नागेभ्यः स्वाहा ३ ॐ नमो यमाय स्वाहा ४ ॐ नमो नैर्ऋतये स्वाहा ५ ॐ नमो वरुणाय स्वाहा ६ ॐ नमो वायवे स्वाहा ७ ॐ नमः कुबेराय स्वाहा ८ ॐ नम ईशानाय स्वाहा ९ ॐ नमो ब्रह्मणे स्वाहा १० तत उपरि परिधिं विधाय दश दलानि कृत्वा क्रमेण ॐ नमः सूर्याय स्वाहा १ ॐ नमश्चन्द्राय स्वाहा २ ॐ नमो भौमाय स्वाहा ३ ॐ नमो बुधाय स्वाहा ४ ॐ नमो गुरवे स्वाहा ५ ॐ नमः शुक्राय स्वाहा ६ ॐ नमः शनैश्चराय स्वाहा ७ ॐ नमो राहवे स्वाहा ८ ॐ नमः केतवे स्वाहा ९ ॐ नमः क्षेत्रपालाय स्वाहा १० ततः परिधिं विदध्यात् ततो बहिश्चतुष्कोणं भूमिपुरं चतुश्चतुर्वज्राङ्कितं कोणेषु लक्षवर्णाङ्कितं च तत्र तन्मध्ये ईशानदिशि ॐ नमो वैमानिकेभ्यः स्वाहा १ आग्नेये ॐ नमो भुवनपतिभ्यः स्वाहा २ नैर्ऋते ॐ नमो व्यन्तरेभ्यः स्वाहा ३ वायव्ये ॐ नमो ज्योतिष्केभ्यः स्वाहा। इति नन्द्यावर्तस्थापना। अथ पूजा। "कल्याणवल्लीकन्दाय कृतानन्दाय साधुषु। सदा शुभविवर्त्ताय नन्द्यावर्त्ताय ते नमः॥ १॥" अनेन नन्द्यावर्तोपरि कुसुमाञ्जलिक्षेपः नन्द्यावर्ते ॐ नमः सर्वतीर्थकरेभ्यः सर्वगतेभ्यः सर्वविद्भ्यः सर्वदर्शिभ्यः सर्वहितेभ्यः सर्वदेभ्यः इह नन्द्यावर्तस्थापनायां स्थिताः सातिशयाः सप्रातिहार्याः सवचनगुणाः सज्ञानाः ससंघाः सदेवासुरनराः प्रसीदन्तु इदमर्घ्यं गृह्णन्तु २. गन्धं गृ-

ह्णन्तु २ पुष्पं गृह्णन्तु २ धूपं गृह्णन्तु २ दीपं गृह्णन्तु २ अक्षतान् गृह्णन्तु २ नैवेद्यं गृह्णन्तु २ स्वाहा। एवं क्रमेणार्घ्यपाद्यगन्धपुष्पधूपदीपाक्षतनैवेद्यदानम्। आर्या—"सौधर्माधिप शक्र प्रधान चेशाननाथ जनवरद। भगवति वाग्देवि शिवं यूयं रचयध्वमासन्नम्॥ १॥" अनेन सौधर्मेन्द्रेशानेन्द्रवाग्देवतासु पुष्पाञ्जलिक्षेपः। ततो नन्द्यावर्तदक्षिणे शक्रं प्रति—"उद्वृत्तासुरकोटिकूटघटनासंघट्टसंहारणः स्फारः स्फूर्जितवज्रसज्जितकरः शच्यङ्गसंगातिमुत्। क्लृप्तानेकवितानसंततिपराभूताघविस्फूर्जित श्रीतीर्थंकरपूजनेत्र भवतु श्रीमान् हरिः सिद्धये॥ १॥" ॐ नमः सौधर्मेन्द्राय तप्तकाञ्चनवर्णाय सहस्राक्षाय पाकपुलोमजम्भविध्वंसनाय शचीकान्ताय वज्रहस्ताय द्वात्रिंशल्लक्षविमानाधिपतये पूर्वदिगधीशाय सामानिकपार्षद्यत्रयस्त्रिंशल्लोकपालानीकप्रकीर्णकलौकान्तिकाभियोगिककैल्बिषिकयुतः स्वदेवीतद्देवीयुतः इह प्रतिष्ठामहोत्सवे आगच्छ २ इदमर्घ्यं पाद्यं बलिं चरुं गृहाण २ संनिहितो भव २ स्वाहा ततो जलं गृहाण २ स्वाहा गन्धं गृहाण २ स्वाहा पुष्पं गृहाण २ स्वाहा अक्षतान् गृहाण २ स्वाहा फलानि गृहाण २ स्वाहा धूपं गृहाण २ स्वाहा दीपं गृहाण २ स्वाहा नैवेद्यं गृहाण २ स्वाहा सर्वोपचारान् गृहाण २ स्वाहा इत्येतैराह्वानं संनिहितीकरणं जलगन्धपुष्पाक्षतफलधूपदीपनैवेद्यदानमर्घ्यपाद्यदानं च। ततः "शूलालंकृतहस्तशस्तकरणश्रीभूषितप्रोल्लसद्देवारातिसमूहसंहृतिपरः त्विड्निर्जितागेश्वरः। ईशानेन्द्रजिनाभिषेकसमये धमार्थसंपूजितः प्रीतिं यच्छ समस्तपातकहरां विघ्नौघविच्छेदनात्॥ १॥" ॐ नम ईशानेन्द्राय स्फटिकोज्वलाय शूलहस्ताय यज्ञविध्वंसनाय अष्टाविंशतिलक्षविमा-

लक्ष्मणे इह० शेषं पूर्ववत् ।८। "काकन्दीसुन्दरावासे सुग्रीवश्रीवलप्रदे । रामेऽभिरामां मे बुद्धिं चिदानन्दे प्रदीयताम् ॥ १ ॥" ॐ नमः श्रीरामायै श्रीसुविधिस्वामिजनन्यै भगवति रामे इह प्रति० शेषं पूर्ववत् । ९ । "भद्रिलाभद्रशमने श्रीमदृढरथप्रिये । नन्दे मे परमानन्दं प्रयच्छ जिनपूजने ॥ १ ॥" ॐ नमः श्रीनन्दायै शीतलस्वामिजनन्यै भगवति श्रीनन्दे इह० शे० । १० । "कृतसिंहपुरावासा विष्णुर्विष्णुहृदि स्थिता । वेवेष्टु भविनां चित्तमहानन्दाध्वसिद्धये ॥ १ ॥" ॐ नमः श्रीविष्णवे श्रीश्रेयांसस्वामिजनन्यै भगवति श्रीविष्णो इह प्रति० शेषं पू० । ११ । "चंपानिष्कम्पताकृत्ये वसुपूज्यप्रमोददे । जये जयं षडङ्गस्यारिषड्वर्गस्य दीयताम् ॥ १ ॥" ॐ नमः श्रीजयायै वासुपूज्यस्वामिजनन्यै भगवति जये इह० शे० । १२ । "कांपीलपुरसंवासा कृतवर्मकृतादरा । श्यामा क्षामां विदध्यान्मे मतिं दुष्टत्वशालिनीम् ॥ १ ॥" ॐ नमः श्रीश्यामायै श्रीविमलस्वामिजनन्यै भगवति श्रीश्यामे इह० शे० । १३ । "सिंहसेनेशितुः कान्तायोध्यावोधप्रदायिनी । सुयशा यशसे भूयाद्विमलायाचलाय च ॥ १ ॥" ॐ नमः श्रीसुयशसे श्रीमदनन्तस्वामिजनन्यै भगवति श्रीसुयशः इह प्रति० शेषं पू० । १४ । "श्रीमद्रत्नपुरावासा भानुदेवहृदि प्रिया । सुव्रता सुव्रते बुद्धिं करोतु परमेश्वरी । १५ । ॐ नमः श्रीसुव्रतायै श्रीधर्मस्वामिजनन्यै भगवति सुव्रते इ० प्र० शे० । १६ । "हस्तिनापुरसंस्थायै दयामयपरात्मने । प्रियायै विश्वसेनस्य अचिरायै चिरं नमः ॥ १ ॥" ॐ नमः श्रीअचिरायै शान्तिस्वामिजनन्यै भगवति श्रीअचिरे इह० शे० । १६ । "हस्तिनापुरवासिन्यै प्रियायै शूरभूपतेः । नमः श्रियै श्रियां वृद्धिकारिण्यै

करुणावताम् ॥ १ ॥" ॐ नमः श्रीश्रियै श्रीकुन्थुनाथजनन्यै भगवति श्रीः इह० शे० । १७ । "सुदर्शनस्य कान्तायै नमो हस्तिपुरस्थिते । तुभ्यं देवि महादेवि भृत्यकल्पद्रुमप्रभे ॥ १ ॥" ॐ नमः श्रीदेव्यै अरनाथजनन्यै भगवति श्रीदेवि इ० शे० । १८ । "मिथिलाकृतसंस्थाना कुम्भभूपालवल्लभा । प्रभावती प्रभावत्यै देहस्थित्यै सदास्तु नः ॥ १ ॥" ॐ नमो भगवत्यै श्रीप्रभावत्यै श्रीमल्लिनाथजनन्यै भगवति श्रीप्रभावति इ० शे० । १९ । "श्रीमद्राजगृहावासा सुमित्रक्ष्मापतिप्रिया । पद्मा पद्मावबोधं नः करोतु कुलवर्द्धिनी ॥ १ ॥" ॐ नमः श्रीपद्मायै श्रीसुव्रतस्वामिजनन्यै भगवति श्रीपद्मे इ० शे० । २० । "मिथिलाकृतसंस्थाने विजयक्ष्मापवल्लभे । वप्रे त्वं वप्रतां गच्छ क्रोधादिद्विड्भयादिषु ॥ १ ॥" ॐ नमः श्रीवप्रायै नमिनाथजनन्यै भगवति श्रीवप्रे इ० शे० । २१ । श्रीसौर्यपुरसंसक्ता समुद्रविजयप्रिया । शिवा शिवं जिनार्चायां प्रददातु दयामयी ॥ १ ॥" ॐ नमः श्रीशिवायै नेमिनाथजनन्यै भगवति श्रीशिवे इ० शे० । २२ । "वाणारसीकृतस्थानेऽश्वसेनाङ्गपरिष्ठिते । वामे सर्वाणि वामानि निकृन्तय जिनार्चने ॥ १ ॥" ॐ नमः श्रीवामायै श्रीपार्श्वनाथजनन्यै भगवति श्रीवामे इ० शे० । २३ । "श्रीमत्कुण्डपुरावासे सिद्धार्थनृपवल्लभे । त्रिशले कलयाजस्रं संघे सर्वत्र मङ्गलम् ॥ १ ॥" ॐ नमः श्रीत्रिशलायै श्रीवर्द्धमानस्वामिजनन्यै भगवति श्रीत्रिशले इ० शे० । २४ । ॐ नमो भगवतीभ्यः सर्वजिनजननीभ्यो विश्वमातृभ्यो विश्वहिताभ्यः करुणात्मिकाभ्यः सर्वदुरितनिवारणीभ्यः समस्तसंतापविच्छेदिनीभ्यः सर्ववाञ्छितप्रदाभ्यः सर्वाशापरिपूरणीभ्यः भगवत्यो जिनजनन्यः इह प्रतिष्ठाम-

होत्सवे आगच्छन्तु २ इदमर्घ्यं पाद्यं बलिं चरुं गृह्णन्तु संनिहिता भवन्तु स्वाहा जलं गृह्णन्तु २ गन्धं गृह्णन्तु २ पुष्पं गृह्णन्तु २ अक्षतान् गृ० फ० गृ० मुद्रां० धूपं० दीपं० नैवेद्यं सर्वोपचारान् गृह्णन्तु शान्तिं कुर्वन्तु २ तुष्टिं० पुष्टिं० ऋद्धिं० वृद्धिं० सर्वसमीहितानि यच्छन्तु २ स्वाहा । अनेन सर्वजिनजननीनां परिपिण्डित-पूजा ॥ ॥ अथ तृतीयवलये "यासां मन्त्रपदैर्विशिष्टमहिमप्रोद्भूतभूत्युत्करैः षट् कर्माणि कुलाध्वसंश्रितधियः क्षेमात्क्षणात् कुर्वते । ता विद्याधरवृन्दवन्दितपदा विद्यावलीसाधने विद्यादेव्य उरुप्रभावविभवं यच्छन्तु भक्तिस्पृशाम् ॥ १ ॥" अनेन वृत्तेन तृतीयवलये पुष्पाञ्जलिक्षेपः । "शङ्खाक्षमालाशरचापशालिचतुःकरा कुन्दतुषारगौरा । गोगामिनी गीतवरप्रभावा श्रीरोहिणी सिद्धिमिमां ददातु ॥ १ ॥" ॐ ह्रीं नमः श्रीरोहिण्यै विद्यादेव्यै भगवति श्रीरोहिणि इह प्रति० आगच्छ २ इदमर्घ्यं पाद्यं बलिं चरुं गृहाण २ संनिहिता भव २ स्वाहा जलं गृहाण २ पुष्पं २ अक्षतान् २ फलानि २ मुद्रां० धूपं० दीपं० नैवेद्यं० सर्वोपचारान् गृहाण २ शान्तिं कुरु २ तुष्टिं० २ पुष्टिं० २ ऋद्धिं० २ वृद्धिं० २ सर्वसमीहितानि कुरु २ स्वाहा । १ । "शक्तिसरोरुहहस्ता मयूरकृतयानलीलया कलिता । प्रज्ञप्तिर्विज्ञप्तिं शृणोतु नः कमलपत्राभा ॥ १ ॥" ॐ हँसँक्लीँ नमः श्रीप्रज्ञप्त्यै विद्यादेव्यै भगवति श्रीप्रज्ञप्ति इ० शे० । २ । "सशृङ्खलगदाहस्ता कनकप्रभविग्रहा । पद्मासनस्था श्रीवज्रशृङ्खला हन्तु नः खलान् ॥ १ ॥" ॐ नमः श्रीवज्रशृङ्खलायै विद्यादेव्यै भगवति वज्रशृङ्खले इह० शेषं पूर्ववत् । ३ । "निस्त्रिंश १ वज्र २ फलको ३ त्तमकुन्त ४ युक्तहस्ता सुतसविलसत्कलधौतकान्तिः । उन्मत्त-

दन्तिगमना भुवनस्य विघ्नं वज्रांकुशी हरतु वज्रसमानशक्तिः ॥ १ ॥" ॐ लँ लँ लँ नमः श्रीवज्रांकुशायै विद्यादेव्यै भगवति श्रीवज्रांकुशे इ० शे० । ४ । "गरुत्मत्पृष्ठ आसीना कार्तस्वरसमच्छविः । भूयादप्रतिचक्रा नः सिद्धये चक्रधारिणी ॥ १ ॥" ॐ नमः श्रीअप्रतिचक्रायै वि० अप्रतिचक्रे इ० शे० । ५ । "खड्गस्फरांकितकरद्वयशासमाना मेघाभसैरिभपटुस्थितिभासमाना । जात्यार्जुनप्रभतनुः पुरुषाग्रदत्ता भद्रं प्रयच्छतु सतां पुरुषाग्रदत्ता ॥ १ ॥" ॐ हं सः नमः श्रीपुरुषदत्तायै वि० श्रीपुरुषदत्ते इह० शेषं० । ६ । "शरदम्बुधरप्रमुक्तचञ्चद्गगनतलाभतनुद्युतिर्दयाढ्या । विकचकमलवाहना गदाभृत् कुशलमलंकुरुनात्सदैव काली ॥ १ ॥" ॐ ह्रौँ नमः श्रीकालिकायै विद्या० श्रीकालिके इह० शेषं० । ७ । "नरवाहना शशधरोपलोज्वला रुचिराक्षसूत्रफलविस्फुरत्करा । शुभघंटिकापविवरेण्यधारिणी भुवि कालिका शुभकरा महापरा ॥ १ ॥" ॐ ह्रैं घें नमो महामहाकाल्यै विद्या० श्रीमहाकालिके इह० शेषं० । ८ । "गोधासनसमासीना कुन्दकर्पूरनिर्मला । सहस्रपत्रसंयुक्तापाणिर्गौरी श्रियेस्तु नः ॥ १ ॥" ॐ ऍं नमः श्रीगौर्यै वि० श्रीगौरि इह० शेषं० । ९ । "शतपत्रस्थितचरणा मुसलं वज्रं च हस्तयोर्दधती । कमनीयांजनकान्तिर्गान्धारी गां शुभां दद्यात् ॥ १ ॥" ॐ गं गां नमः श्रीगान्धारि इह० शेषं० । १० । "मार्जारवाहना नित्यं ज्वालोद्भासिकरद्वया । शशाङ्कधवला ज्वाला देवी भद्रं ददातु नः ॥ १ ॥" ॐ क्लीँ नमः श्रीमहाज्वालायै वृषवाहना वि० श्रीमहाज्वाले इह० शे० । ११ । "नीलाङ्गी नीलसरोजवाहना वृक्षभासमानकरा । मानवगणस्य सर्वस्य मङ्गलं मानवी दद्यात् ॥ १ ॥" ॐ वचनमः श्रीमा-

नाथिनाथाय सामानिकपार्षद्य० शेषं पूर्ववत् । अथ सरस्वतीं प्रति—"जनतान्धकारहरणार्कसंनिभे गुणसं-
ततिप्रथनवाक्समुच्चये । श्रुतदेवतेऽत्र जिनराजपूजने कुमतीर्विनाशय कुरुष्व वाञ्छितम् ॥ १ ॥" संधिवर्षणी
छन्दः । ॐ ह्रीं श्रीं भगवति वाग्देवते वीणापुस्तकमौक्तिकाक्षवलयश्वेताब्जमण्डितकरे शशधरनिकरगौरि
हंसवाहने इह प्रतिष्ठामहोत्सवे आगच्छ २ शेषं पूर्ववत् । ततः प्रथमवलये "अर्हन्त ईशाः सकलाश्च सिद्धा
आचार्यवर्या अपि पाठकेन्द्राः । मुनीश्वराः सर्वसमीहितानि कुर्वन्तु रत्नत्रययुक्तिभाजः ॥ १ ॥" अनेन प्रथ-
मवलये अर्हदादिषु पुष्पाञ्जलिक्षेपः । ततः—"विश्वाग्रस्थितिशालिनः समुदया संयुक्तसन्मानसा नानारूप-
विचित्रचित्रचरिताः संत्रासितांतर्द्विषः । सर्वाध्वप्रतिभासनैककुशलाः सर्वैर्नताः सर्वज्ञाः श्रीमत्तीर्थकरा
भवन्तु भविनां व्यामोहविच्छित्तये ॥ १ ॥" ॐ नमो भगवद्भ्योऽर्हद्भ्यः सुरासुरनरपूजितेभ्यस्त्रिलोकनायके-
भ्योऽष्टकर्मनिर्मुक्तेभ्योऽष्टादशदोषरहितेभ्यः चतुस्त्रिंशदतिशययुक्तेभ्यः पञ्चत्रिंशद्वचनगुणसहितेभ्यः भगव-
न्तोऽर्हन्तः सर्वविदः सर्वगा इहप्रतिष्ठामहोत्सवे आगच्छत २ इदमर्घ्यं पाद्यं बलिं चरुं गृह्णन्तु २ संनिहिता भवन्तु
स्वाहा जलं गृह्णन्तु २ स्वाहा गन्धं गृह्णन्तु २ स्वाहा अक्षतान् गृह्णन्तु २ स्वाहा फलानि गृह्णन्तु २ स्वाहा मुद्रां
गृह्णन्तु २ स्वाहा धूपं गृह्णन्तु २ स्वाहा दीपं गृह्णन्तु २ स्वाहा नैवेद्यं गृह्णन्तु २ स्वाहा सर्वोपचारान् गृह्णन्तु २
स्वाहा शान्तिं कुर्वन्तु २ तुष्टिं कुर्वन्तु २ पुष्टिं कुर्वन्तु २ स्वाहा ऋद्धिं कुर्वन्तु २ वृद्धिं कुर्वन्तु २ सर्वसमीहितं
कुर्वन्तु स्वाहा । ततः—"यद्दीर्घकालसुनिकाचितबन्धबद्धमष्टात्मकं विषमचारमभेद्यकर्म । तत्संनिहत्य परमं

पद्मापि यैस्ते सिद्धा दिशन्तु महतीमिह कार्यसिद्धिम् ॥१॥" ॐ नमः सिद्धेभ्योऽशरीरेभ्यो व्यपगतकर्मबन्धनेभ्यश्चिदानन्दमयेभ्योऽनन्तवीर्येभ्यो भगवन्तः सिद्धाः इह प्रतिष्ठामहोत्सवे आगच्छन्तु २ इदमर्घ्यं शेषं पूर्ववत्। ततः—"विश्वस्मिन्नपि विष्टपे दिनकरीभूतं महातेजसा यैरर्हद्भिरितेषु तेषु नियतं मोहान्धकारं महत्। जातं तत्र च दीपतामविकलां प्रापुः प्रकाशोद्गमादाचार्याः प्रथयन्तु ते तनुभृतामात्मप्रबोधोदयम् ॥ १ ॥" ॐ नम आचार्येभ्यो विश्वप्रकाशकेभ्यो द्वादशाङ्गगणिपिटकधारिभ्यः पञ्चाचाररतेभ्यो भगवन्त आचार्याः इह प्रतिष्ठामहोत्सवे आगच्छन्तु २ इदमर्घ्यं० शेषं पूर्ववत्। ततः—"पाषाणतुल्योपि नरो यदीयप्रसादलेशाल्लभते सपर्याम्। जगद्धितः पाठकसंचयः स कल्याणमालां वितनोत्वभीक्ष्णम् ॥ १ ॥" ॐ नम उपाध्यायेभ्यो निरन्तरद्वादशाङ्गपठनपाठनरतेभ्यः सर्वजन्तुहितेभ्यः दयामयेभ्यो भगवन्त उपाध्याया इह प्रतिष्ठामहोत्सवे आगच्छन्तु २ इदमर्घ्यं पाद्यं० शेषं पूर्ववत्। ततः—"संसारनीरधिमवेत्य दुरन्तमेव यैः संयमाख्यवहनं प्रतिपन्नमाशु। ते साधकाः शिवपदस्य जिनाभिषेके साधुव्रजा विरचयन्तु महाप्रबोधम् ॥ १ ॥" ॐ नमः सर्वसाधुभ्यो मोक्षमार्गसाधकेभ्यः शान्तेभ्योऽष्टादशसहस्रशीलाङ्गधारिभ्यः पञ्चमहाव्रतनिष्ठितेभ्यः परमहितेभ्यो भगवन्तः साधवः इह प्रति० शेषं पूर्ववत्। ततः—"कृत्याकृत्ये भवशिवपदे पापपुण्ये यदीयप्राप्त्या जीवाः सुषमविषमा विन्दते सर्वथैव। तत्पश्चाङ्गं प्रकृतिनिचयैरप्यसंख्यैर्विभिन्नं ज्ञानं भूयात् परमतिमिरव्रातविध्वंसनाय ॥ १ ॥" ॐ नमो ज्ञानायानन्ताय लोकालोकप्रकाशकाय निर्मलायाप्रतिपातिने सप्ततत्त्वनिरूपणाय

भगवन् ज्ञान इह प्रतिष्ठामहोत्सवे आगच्छ २ इदमर्घ्यं पाद्यं वलिं चरुं गृहाण २ संनिहितो भव २ स्वाहा
जलं गृह्याण २ गन्धं गृहाण २ पुष्पं गृहाण २ अक्षतान् गृहाण २ फलानि गृहाण २ मुद्रां गृहाण २ धूपं
गृहाण २ दीपं गृहाण २ नैवेद्यं गृहाण २ सर्वोपचारान् गृहाण २ शान्तिं कुरु २ तुष्टिं कुरु २ पुष्टिं कुरु २
ऋद्धिं कुरु २ वृद्धिं कुरु २ सर्वसमीहितानि कुरु २ स्वाहा। ततः—"अविरतिविरतिभ्यां जातखेदस्य जन्तो-
र्भवति यदि विनष्टं मोक्षमार्गप्रदायि। भवतु विमलरूपं दर्शनं तन्निरस्ताखिलकुमतविषादं देहिनां बोधि-
भाजाम्॥ १॥" ॐ नमो दर्शनाय मुक्तिमार्गप्रापणाय निष्पापाय निर्बन्धनाय निरञ्जनाय निर्लेपाय भगवन्
दर्शन इह प्रति० शेषं पूर्ववत्। ततः—"गुणपरिचयं कीर्तिं शुभ्रां प्रतापमखण्डितं दिशति यदिहामुत्र स्वर्गं
शिवं च सुदुर्लभम्। तदमलमलं कुर्याच्चित्तं सतां चरणं सदा जिनपरिवृढैरप्याचीर्णं जगत्स्थितिहेतवे॥ १॥"
ॐ नमश्चारित्राय विश्वत्रयपवित्राय निर्मलाय स्वर्गमोक्षप्रदाय वाञ्छितार्थप्रदाय भगवंश्चारित्र इह प्रतिष्ठा०
शेषं पूर्ववत्॥ ततो द्वितीयवलये—"महादयामयहृदः श्रीतीर्थंकरमातरः। प्रसन्नाः सर्वसंघस्य वाञ्छितं ददतां
परम्॥ १॥" अनेन द्वितीयवलये जिनमातृयुक्ते पुष्पाञ्जलिक्षेपः "इक्ष्वाकुभूमिसंभूता नाभिवामाङ्गसंस्थिता।
जननी जगदीशस्य मरुदेवास्तु नः श्रिये॥ १॥" ॐ नमः श्रीमरुदेव्यै नाभिपत्न्यै श्रीमदादिदेवजनन्यै विश्व-
हितायै करुणात्मिकायै आदिसिद्धायै भगवति श्रीमरुदेवि इह प्रतिष्ठामहोत्सवे आगच्छ २ इदमर्घ्यं पाद्यं
बलिं चरुं गृहाण २ संनिहिता भव स्वाहा जलं गृहाण २ गन्धं गृहाण २ पुष्पं गृहाण २ अक्षतान् गृहाण २

फलानि गृहाण २ मुद्रां गृहाण २ धूपं गृहाण २ दीपं गृहाण २ नैवेद्यं गृहाण २ सर्वोपचारान् गृहाण २ शान्तिं कुरु २ तुष्टिं कुरु २ पुष्टिं कुरु २ ऋद्धिं कुरु २ वृद्धिं कुरु २ सर्वसमीहितानि कुरु २ स्वाहा ।१। "अयोध्यापुरसंसक्ता जितशत्रुनृपप्रिया । विजया विजयं दद्याज्जिनपूजामहोत्सवे ॥ १ ॥" ॐ नमः श्रीविजयायै श्रीअजितस्वामिजनन्यै भगवति श्रीविजये इह प्रति० शेषं पूर्ववत् । २ । "श्रावस्तीरचितावासा जितारिहृद्यप्रिया । सेना सेनां परां हन्यात्सदा दुष्टाष्टकर्मणाम् ॥ १ ॥" ॐ नमः श्रीसेनायै श्रीसंभवस्वामिजनन्यै भगवति श्रीसेने इह प्रति० शेषं पूर्ववत् । ३ । "विनीताकृतवासायै प्रियायै संवरस्य च । नमः सर्वार्थसिद्ध्यर्थं सिद्धार्थायै निरन्तरम् ॥ १ ॥" ॐ नमः श्रीसिद्धार्थायै श्रीमदभिनन्दनस्वामिजनन्यै भगवति श्रीसिद्धार्थे इह प्रतिष्ठामहोत्सवे० शेषं पूर्ववत् । ४ । "कोशला कुशलं धात्री मेघप्रमददायिनी । सुमङ्गला मङ्गलानि कुरुताज्जिनपूजने ॥ १ ॥" ॐ नमः श्रीसुमङ्गलायै सुमतिस्वामिजनन्यै भगवति श्रीसुमङ्गले इह प्रति० शेषं पूर्ववत् । ५ । "धरधाराधरे विद्युत्कोशाम्बीकुशलप्रदा । सुसीमा गतसीमानं प्रसादं यच्छतु ध्रुवम् ॥ १ ॥" ॐ नमः श्रीसुसीमायै श्रीपद्मप्रभस्वामिजनन्यै भगवति सुसीमे इह प्रति० शेषं पूर्ववत् । ६ । "वाणारसीरसाधात्रीप्रतिष्ठे सुप्रतिष्ठिता । पृथ्वी पृथ्वीं मतिं कुर्यात् प्रतिष्ठादिषु कर्मसु ॥ १ ॥" ॐ नमः श्रीपृथ्व्यै श्रीसुपार्श्वस्वामिजनन्यै भगवति श्रीपृथ्वि इह प्रति० शेषं पूर्ववत् । ७ । "देवि चन्द्रपुरीवासे महसेननृपप्रिये । लक्ष्मणे लक्ष्मनिर्मुक्तं सज्ज्ञानं यच्छ साधुषु ॥ १ ॥" ॐ नमः श्रीलक्ष्मणायै श्रीचन्द्रप्रभस्वामिजनन्यै भगवति

नव्यै वि० श्रीमानवि इ० शेपं० । १२ । "खड्गस्फुरत्स्फुरितवीर्यवदूर्ध्वहस्ता मदन्दशूकवरदापरहस्तयुग्मा ।
सिंहासनाब्जमुदतारतुपारगौरा वैरोट्ययाप्यभिधयास्तु शिवाय देवी ॥ १ ॥" ॐ जं जः नमः श्रीवैरोट्यायै
विद्या० श्रीवैरोट्ये इह० शेपं० । १३ । "सव्यपाणिधृतकार्मुकस्फरान्यस्फुरद्विशिखखड्गधारिणी । विद्युदाभ-
तनुरश्ववाहनाऽच्छुप्तिका भगवती ददातु शम् ॥ १ ॥" ॐ अं एँ नमः श्रीअच्छुप्तायै विद्या० श्रीअच्छुप्ते
इह० शेपं० । १४ । "हंसासनसमासीना वरदेन्द्रायुधान्विता । मानसी मानसीं पीडां हन्तु जाम्बूनदच्छविः
॥ १ ॥" ॐ ह्रीं अर्हं नमः श्रीमानस्यै वि० श्रीमानसि इह० शेपं० । १५ । "करखड्गरत्नवरदाढ्यपाणिभृच्छशि-
निभा मकरगमना । संघस्य रक्षणकरी जयति महामानसी देवी ॥ १ ॥" ॐ हं हं हं सं नमः श्रीमहामानस्यै
विद्या० भ० श्रीमहामा० इह० शेपं० । १६ । ॐ ह्रौं नमः षोडश विद्यादेवीभ्यः सायुधाभ्यः सवाहनाभ्यः
सपरिकराभ्यः विघ्नहरीभ्यः शिवंकरीभ्यः भगवत्यः विद्यादेव्यः इह० प्रति० आगच्छन्तु २ इदमर्घ्यं पाद्यं
बलिं चरुं गृह्णन्तु २ संनिहिता भवन्तुस्वाहा जलं गृह्णन्तु २ गन्धं० पुष्पं० अक्षतान्० फलानि० मुद्रां० धूपं०
दीपं० नैवेद्यं० सर्वोपचारान् गृह्णन्तु शान्तिं कुर्वन्तु २ तुष्टिं० पुष्टिं० ऋद्धिं० वृद्धिं० सर्वसमीहितानि यच्छ-
न्तु स्वाहा अनेन सर्वविद्यादेवीनां परिपिण्डितपूजा ॥ ततश्चतुर्थवलये "सम्यग्दृशः सुमनसो भवससकान्तः-
संप्राप्तनिर्वृतिपथाः प्रथितप्रभावाः । लौकान्तिका रुचिरकान्तिभृतः प्रतिष्ठाकार्ये भवन्तु विनिवारितसर्वविघ्नाः
॥१॥" अनेन वृत्तेन लौकांतिकवलये पुष्पाञ्जलिप्रक्षेपः । "शुभ्रामरालगमनाः प्रियंगुपुष्पाभवसनकृतशोभाः ।

सारस्वता अनिमिषा जयन्ति वीणानिनादभृतः ॥ १ ॥" ॐ नमः सारस्वतेभ्यो लौकान्तिकेभ्यः सारस्वताः सायुधाः सवाहनाः सपरिच्छदाः इह प्रतिष्ठामहोत्सवे आगच्छत इदमर्घ्यं पाद्यं बलिं चरुं गृह्णीत संनिहिता भवत २ स्वाहा जलं गृह्णीत गन्धं गृह्णीत पुष्पं० अक्षतान्० फलानि० मुद्रां० धूपं० दीपं० नैवेद्यं० सर्वोपचारान् गृह्णीत शान्तिं कुरुत तुष्टिं कुरुत पुष्टिं कु० ऋद्धिं कु० वृद्धिं कु० सर्वसमीहितानि यच्छत २ स्वाहा । १ । "आदित्यसमशरीरकान्तयोरुणसमानवरवसनाः । आदित्याः श्वेततुरंगवाहनाः कमलहस्ताश्च ॥ १ ॥" ॐ नमो आदित्येभ्यो लौकान्तिकेभ्यः आदित्याः सायुधाः शे० पू० । २ । "नीलाम्बराः कपिलकान्तिधारिणश्छागवाहनासीनाः । शकटीकरा वरेण्या दहन्तु जडतां च वह्निसुराः ॥ १ ॥" ॐ नमो वह्निभ्यो लौकान्तिकेभ्यो वह्नयः सायुधाः शेषं पूर्ववत् । ३ । "घनवर्णा झषगमनाः पीतसुसिचयाः स्वहस्तधृतपाशाः । वरुणा वरेण्यबुद्धिं विदधतु सर्वस्य संघस्य ॥ १ ॥" ॐ नमो वरुणेभ्यो लौकान्तिकेभ्यो वरुणाः सायुधाः शेषं पू० । ४ । "नीला मयूरपत्राः सुपीतवसनाश्च धान्ययुतहस्ताः । रचयन्तु गर्दतोयाः सर्वं वाञ्छितफलं सुहृदः ॥ १ ॥" ॐ नमो गर्दतोयेभ्यो लौकान्तिकेभ्यो गर्दतोयाः सायु० शे० । ५ । "शशधरकरसमवर्णा हरहारसमानवसनकृतशोभाः । हंसासनाः करयुगे सरोजसहिताः सदा तुषिताः ॥ १ ॥" ॐ नमस्तुषितेभ्यो लौका० सायु० शेषं पू० । ६ । "नरयानस्था धृतपञ्चवर्णवसनाः प्रियंगुतुल्यरुचः । अव्याबाधा वीणासनाथहस्ताः शुभं ददताम् ॥ १ ॥" ॐ नमोऽव्याबाधेभ्यो लौका० अव्याबाधाः सा० शेषं पू० । ७ । "श्यामाश्च शोणवसनाः कुरङ्गयानाः कुठार-

हस्ताश्च । मङ्गलकरा अरिष्टा अरिष्टघातं विरचयन्तु ॥ १ ॥" ॐ नमोऽरिष्टेभ्यो लौका० अरिष्टाः सा० शेषं
पू० । ८ । "अरुणा अरुणनिवसनाः पाशाङ्कुशधारिणः ससम्यक्त्वाः । अग्न्याभाः शूकरगा निघ्नन्तु समस्तदु-
रितसंघातम् ॥ १ ॥" ॐ नमोऽग्न्याभेभ्यो लौ० अग्न्याभाः सायु० शे० । ९ । "कुलिशाङ्कितनिजहस्ताः सूर्य-
निभाः शुभनिवसनकृतशोभाः । रचिताः स्वरथविमानाः सूर्याभा ददतु वः शौर्यम् ॥ १ ॥" ॐ नमः सूर्या-
भेभ्यो लौ० सूर्याभाः सा० शेषं पू० । १० । "चन्द्राभाश्चन्द्ररुचः क्षमाशुभाप्त्यै शुभैर्युता वसनैः । कलशस्थाः
कुमुदभृतो हरन्तु दुरितानि सर्वलोकानाम् ॥ १ ॥" ॐ नमश्चन्द्राभेभ्यो लौ० चन्द्राशाः सा० शेषं पूर्ववत्
। ११ । "शुक्लाः शुक्लनिवसनाः सत्याभाः सत्यवृषभकृतगमनाः । शुभ्राभ्रसूत्रमालां दधतो हस्तद्वये नित्यम्
॥१॥" ॐ नमः सत्याभेभ्यो लौ० सत्याभाः सा० शे० । १२ । "भविषु सदा श्रेयस्करधवलाः शुचिनीलनिव-
सना गजगाः । कुर्वन्तु शिवं श्रेयस्करा वरदाभयोर्जिकरद्वयाः ॥१॥" खंधा । ॐ नमः श्रेयस्करेभ्यो लौ० श्रेय-
स्कराः सा० शेषं पू० । १३ । "पीताम्बरकायरुचः कमलधराः कमलवाहना धवलाढ्याः । क्षेमंकरा जिनार्चन-
भाजः क्षेमंकराः सदा सुमनोमुख्याः ॥ १ ॥" खंधा । ॐ नमः क्षेमंकरेभ्यो लौ० क्षेमंकरा० सा० शेषं० । १४ ।
"दूर्वाङ्कुशाङ्किताभ्यां हस्ताभ्यां लक्षिताश्च माञ्जिष्ठाः । हरितसिगुदयरुचिरिरितिवृषगतिवरचरणयुगवृषभाः
॥ १ ॥" ॐ नमो वृषभेभ्यो लौ० वृषभाः सा० शेषं० । १५ । "संध्यारुचिवसना गरुडवाहनाः पञ्चवर्णकाय-
रुचः । रचयन्तु कामचाराश्चक्रकरा निर्मलं चरिताम् ॥ १ ॥" ॐ नमः कामचारेभ्यो लौ० कामचाराः सा०

शेषं० । १६ । "श्वेता हंसासीनाः श्वेतैर्वस्त्रैः शुभावयवपुष्टाः । निर्वाणा निर्वाणं यच्छन्तु प्रौढशक्त्यङ्काः ॥१॥" ॐ नमो निर्वाणेभ्यो लौं० निर्वाणाः सा० शेषं० । १७ । "नीला अरुणनिवसनाः पाशच्छुरिकाकरा गरुडगमनाः । नित्या दिगन्तरक्षितदेवा विजयं प्रयच्छन्तु ॥ १ ॥" ॐ नमो दिगन्तरक्षितेभ्यो लौं० दिगन्तरक्षिताः सा० शे० । १८ । "तरणीसंस्थाः कदलीदलाभवस्त्राः कपोतकायरुचः । वरदाभयहस्ता आत्मरक्षिताः कुशलमादधताम् ॥ १ ॥" ॐ नम आत्मरक्षितेभ्यो लौं० आत्मरक्षिता० सा० शेषं० । १९ । "कुर्कुटरथाश्च हरिताः पीताम्बरधारिणः कुलिशहस्ताः । जिनपूजनपर्वणि सर्वरक्षिताः सन्तु संनिहिताः ॥ १ ॥" ॐ नमः सर्वरक्षितेभ्यो लौं० सर्वरक्षिताः सा० शेषं० । २० । "हरिणगमनहरिततरकरणशुकमुखनिभवसनरुचिरमरुतः । केतूच्छाया नित्यं देयासुर्मंगलं देवाः ॥ १ ॥" वैश्या आर्या । ॐ नमो मरुद्भ्यो लौं० मरुतः सा० शेषं० । २१ । "विशिखधनुरुदितकरयुगलिततरसुधवलकरणवसनभृतः । कमठगतिरचितपदरचनविततिभुवनवरवस्तुनिवहम् ॥ १ ॥" सर्वलघुरार्या । ॐ नमो वसुभ्यो लौं० वसवः सा० शेषं० । २२ । "अश्वमुखाः कपिलरुचः श्वेताम्बरधारिणः सरोजकराः । अश्वा महिषारूढा विस्रोतसिकां विघटयन्तु ॥ १ ॥" ॐ नमोऽश्वेभ्यो लौं० अश्वाः सा० शेषं० । २३ । "कुशदूर्वाङ्कितहस्ताः काञ्चनरुचयः सिताम्बरच्छन्नाः । गजगा विश्वेदेवा लोकस्य समीहितं ददताम् ॥ १ ॥" ॐ नमो विश्वेदेवेभ्यो लौं० विश्वेदेवाः सा० शेषं । २४ । ॐ नमः सर्वेभ्यो लौकान्तिकेभ्यः सम्यग्दृष्टिभ्योर्हद्भक्तेभ्यो भवाष्टकान्तः प्राप्य मुक्तिपदेभ्यः सर्वे लौकान्तिकाः इह प्रतिष्ठामहोत्सवे आग-

गृह्णन्तु २ संनिहिता भवन्तु स्वाहा गन्धं गृह्णन्तु पुष्पं० अक्षतान्० मुद्रां०
च्छन्तु २ इदमर्घ्यं पाद्यं बलिं चरुं गृह्णन्तु २ संनिहिता भवन्तु स्वाहा गन्धं गृह्णन्तु पुष्पं० अक्षतान्० मुद्रां०
धूपं० दीपं० नैवेद्यं० सर्वोपचा० शान्तिं कुर्वन्तु २ तुष्टिं० पुष्टिं० ऋद्धिं० वृद्धिं० सर्वसमीहितानि यच्छन्तु
स्वाहा इति सर्वलौकान्तिकानां परिपिण्डितपूजा ॥ अथ पञ्चमवलये—"ये तीर्थेश्वरजन्मपर्वणि समं देवाप्सरः-
संचयैः शृङ्गे मेरुमहीधरस्य मिमिलुः सर्वर्द्धिवर्द्धिष्णवः । ते वैमानिकनागलोकगगनावासाः सुराधीश्वराः प्रत्यू-
हप्रतिघातकर्मणि चतुःषष्टिः समायान्त्विह ॥१॥" अनेन वृत्तेन इन्द्रवलये पुष्पाञ्जलिप्रक्षेपः । "मेघाभो रक्तव-
वसनश्चूडामणिविराजितः । असुराधीश्वरः क्षेमं चमरोऽत्र प्रयच्छतु ॥ १ ॥" ॐ नमः श्रीचमराय असुरभवन-
पतीन्द्राय श्रीचमरेन्द्रः सायुधः सवाहनः सपरिच्छदः अङ्गरक्षकसामानिकपार्षदत्रयस्त्रिंशल्लोकपालानकप्रकी-
र्णकाभियोगिककैल्बिषिकयुतः इह प्रतिष्ठामहोत्सवे आगच्छ २ इदमर्घ्यं पाद्यं बलिं चरुं गृहाण २ संनिहितो
भव स्वाहा जलं गृहाण २ गन्धं गृ० पुष्पं० अक्षतान् फलं० मुद्रां० धूपं० दीपं० नैवेद्यं० सर्वोप० शान्तिं कुरु
२ तुष्टिं० पुष्टिं० ऋद्धिं० वृद्धिं० सर्वसमीहितानि देहि २ स्वाहा ।१। "पयोदतुल्यदेहरुग् जपासुमाभवस्त्रभृत् ।
परिस्फुरच्छिरोमणिर्बलिः करोतु मङ्गलम् ॥ १ ॥" प्रमाणिका ।ॐ नमः श्रीबलये असुरभवनपतीन्द्राय श्रीब-
लीन्द्रः सायुधः सवाहनः शेषं पू० । २ । "स्फटिकोज्ज्वलचारुच्छविर्नीलाम्बरभृत्फणत्रयाङ्कशिराः । नानायुध-
धारी धरणनागराट् पातु भव्यजनान् ॥ १ ॥" आर्या । ॐ नमः श्रीधरणाय नागभवनपतीन्द्राय श्रीधरणेन्द्र
सा० शेष० । ३ । "काशश्वेतः शौर्योपेतो नीलाच्छायो विद्युन्नादः । ढक्कणाद्यं चिह्नं बिभ्रद्भूतानन्दो भूयाद्भूत्यै

॥ १ ॥" विद्युन्माला । ॐ नमः श्रीभूतानन्दाय नागभवनपतीन्द्राय श्रीभूतानन्देन्द्र सा० शे० । ४ । "हेमकान्तिर्विशुद्धिवस्त्रस्तार्क्ष्यकेतुः प्रधानशस्त्रः । शुद्धिचेताः सुदृष्टिरत्नं वेणुदेवः श्रियं करोतु ॥ १ ॥" लघुमुखीछन्दः । ॐ नमः श्रीवेणुदेवाय सुपर्णभवनपतीन्द्राय श्रीवेणुदेवेन्द्र सा० शेषं० । ५ । "तार्क्ष्यधारी चामीकरप्रभः श्वेतवासा विद्रावयन्द्विषः । देवभक्तोपि विस्फारयन् मनो वेणुदारी लक्ष्मीं करोत्वलम् ॥ १ ॥" पङ्क्तिजातिः । ॐ नमः श्रीवेणुदारिणे सुवर्णभवनपतीन्द्राय श्रीवेणुदारीन्द्र सा० शे० । ६ । "रक्ताङ्गरुग् नीलवरेण्यवस्त्रः सुरेशशस्त्रध्वजराजमानः । इह प्रतिष्ठासमये करोतु समीहितं श्रीहरिकान्तदेवः ॥ १ ॥" ॐ नमः श्रीहरिकान्ताय विद्युद्भवनपतीन्द्राय श्रीहरिकान्त सा० शे० । ७ । "रक्तप्रभाधः कृतपद्मरागो वज्रध्वजोत्पादितशक्रभीतिः । रम्भादलाभाद्भुतनक्तकश्रीः सहानुवादो हरिसंज्ञ इन्द्रः ॥ १ ॥" उपजातिः । ॐ नमः श्रीहरिसंज्ञाय श्रीहरिसंज्ञ सा० शेषं० । ८ । "कुम्भध्वजश्चारुतरारुणश्रीः सुचङ्गदेहो हरितान्तरीयः । भक्त्या विनम्रोऽग्निशिखो महेन्द्रो दारिद्र्यमुद्रां श्लथतां करोतु ॥ १ ॥" उपजातिः । ॐ नमः श्रीअग्निशिखाय अग्निभवनपतीन्द्राय श्रीअग्निशिख सा० शे० । ९ । "अग्निमानवविभुर्घटध्वजः पद्मरागसमदेहदीधितिः । इन्द्रनीलसमवर्णवस्त्रभो मङ्गलानि तनुताज्जिनार्चने ॥ १ ॥" रथोद्धता । ॐ नमः श्रीअग्निमानवाय अग्निभवनपतीन्द्राय श्रीअग्निमानव सा० शे० । १० । "विद्रुमद्रुमजपल्लवकान्तिः क्षेमपुष्पसमचीरपरीतः । सिंघलाञ्छनधरः कृतपुण्योऽगण्यसद्गुणगणोस्तु स पुण्यः ॥ १ ॥" स्वागता । ॐ नमः श्रीपुण्याय द्वीपभवनपतीन्द्राय श्रीपुण्य सा० शेषं० । ११ । "सान्ध्यदिवाकरसमदेहः शारदगगनसमावृत-

वस्त्रः। हरिणमृगारियुतोद्धतकेतुर्भद्रकरः प्रभुरस्तु वशिष्ठः ॥१॥” उपचित्रा। ॐ नमः श्रीवशिष्ठाय द्वीपभवनपती-
न्द्राय श्रीवशिष्ठ सा० शेषं० । १२ । “पयोदनिर्मुक्तशशाङ्कसत्करः प्रभाभिरामद्युतिरश्वकेतनः । कलिन्दक-
न्याजलधौतकालिमा सुवर्णवस्त्रो जलकान्त उत्तमः ॥ १ ॥” वंशस्थम् । ॐ नमः श्रीजलकान्ताय उदधिभवन-
पतीन्द्राय जलकान्त सा० शे० । १३ । “कैलासलास्योद्यतयज्ञसूदनप्रख्याङ्गकान्तिः कलिताश्वलाञ्छनः ।
भग्नेन्द्रनीलाभशिवातिरोचनः श्रेयःप्रबोधाय जलप्रभोस्तु नः ॥ १ ॥” इन्द्रवं० । ॐ नमः श्रीजलप्रभाय उद-
धिभ० श्रीजलप्रभ सा० शेषं । १४ । “कनककलितकान्तिरम्यदेहः कुमुदविततिवर्णवसुधारी । धवलकरटिकेतु
राजमानोप्यमितगतिरिहास्तु विघ्नहर्ता ॥ १ ॥” जगत्याम् । ॐ नमः श्रीअमितगतये दिग्भवनपतीन्द्राय श्री-
अमितगते सा० शेषं० । १५ । “कृतमालसमद्युतिदेहधरः कलधौतदलोपमवस्त्रधरः । सुरवारणकेतुवरिष्ठरथो
मितवाहनराट् कुरुतात् कुशलम् ॥१॥” जगत्याम् । ॐ नमः श्रीमितवाहनाय दिग्भव० श्रीमितवाहन सा०
शेष० । १६ । “लसच्चारुवैराटकोदश्चिकायः प्रवालाभशिग्युग्ममिष्टं दधानः । मरुद्वाहिनीवाहनप्रष्ठकेतुः स वे-
लम्बदेवेश्वरः स्तान्मुदे नः ॥ १ ॥” भुजङ्गप्रयातं । ॐ नमः श्रीवेलम्बाय वायुभवनपतीन्द्राय श्रीवेलम्ब सा०
शेषं ।१७। “नवार्कसंस्पृष्टतमालकायरुक् सुपक्वबिम्बोपमवर्णकर्पटः। सुतीक्ष्णदंष्ट्रं मकरं ध्वजे वहन् प्रभञ्जनोऽ-
स्त्वामयभञ्जनाय नः ॥१॥” वंशस्थं । ॐ नमः श्रीप्रभञ्जनाय वायुभवन० श्रीप्रभञ्जन सा० शेषं० । १८ । “तप्त-
कलधौतगात्रद्युतिभ्राजितश्चन्द्रकिरणाभवस्त्रैरदभ्राजितः । वर्द्धमानध्वजः शक्रविभाजितो घोषनामा शिवे

लोचनभ्राजितः ॥१॥" चन्द्राननं। ॐ नमः श्रीघोषाय स्तनितभवनपतीन्द्राय श्रीघोष सा० शेषं। १९। "ज्वलद्भ्रहितसार्जुनप्रख्यकायः पशुस्वामिहासद्युतिव्यूतवासाः। शरावध्वजालिङ्गितश्रीविलासो महाघोषदेवाधिराजः श्रियेस्तु ॥ १ ॥" भुजङ्गप्रयातं। ॐ नमः श्रीमहाघोषाय स्तनितभव० श्रीमहाघोष सा० शेषं०। २०। "विलसत्तमालदलजालदीधितिर्दिवसादिसूर्यसदृशान्तरीयकः। धृतपुष्पनीपकलितध्वजोदयो जयतात् स कालकृतसंज्ञकः प्रभुः ॥१॥" संधिवर्षिणी। ॐ नमः श्रीकालाय पिशाचव्यन्तरेन्द्राय श्रीकालः सायुधः सवाहनः सपरिच्छदः अङ्गरक्षकसामानिकपार्षद्यानीकप्रकीर्णकाऽऽभियोगिककैल्बिषिकयुतः इह प्र० शेषं० । २१। "गगनतलबलवद्वरिष्ठवर्णः कपिलतराम्बरवर्धमानशोभः। कुसुमयुतकदम्बकेतुधारी स महाकालसुराधिपोऽद्भुतश्रीः ॥ १ ॥" वृत्तम्। ॐ नमः श्रीमहाकालाय पिशाचव्यन्तरेन्द्राय श्रीमहाकाल सा० शे०। २२। "भुजगश्रेणीयामुनवेणीसमवर्णो हेमच्छेदारग्वधपुष्पोपमवासाः। केतुस्थानस्फूर्जन्निर्गुण्डीवरवक्षाः सर्वैर्मान्यो भूयाद्भूत्यै स सुरूपः ॥१॥" मत्तमयूरं। ॐ नमः श्रीसुरूपाय भूतव्यन्तरेन्द्राय श्रीसुरूप सा० शेषं०। २३। "नन्दीश्वरोऽञ्जनगिरीश्वरशृङ्गतेजाः सचम्पकद्रुकुसुमप्रतिरूपवस्त्रः। शेफालिकाविरचितोन्नतभावकेतुः सेतुर्विपज्जलनिधौ प्रतिरूप इष्टः ॥ १ ॥" वसन्ततिलका। ॐ नमः श्रीप्रतिरूपाय भूतव्यन्तरेन्द्राय श्रीप्रतिरूप सा० शेषं। २४। "विरचितबहुकामश्यामदेहप्रभाढ्यो लसदरुणपटाभान्यकृतोरुप्रवालः। प्रकटवटवरिष्ठं केतुमुच्चैर्दधानः परमरिपुविघातं पूर्णभद्रः करोतु ॥१॥" मालिनी। ॐ नमः श्रीपूर्णभद्राय श्रीपूर्णभद्र सा० शे०। २५। "कुवल-

गदलकान्तिप्राप्तसौभाग्यशोभः प्रसृमरवरजावारक्तसुव्यक्तवासाः । अनुपमवहुपादक्ष्मारुहत्केतुमिच्छन् जयति जिनमतस्यानन्दको माणिभद्रः ॥१॥" मालिनी । ॐ नमः श्रीमाणिभद्राय यक्षव्यन्तरेन्द्राय श्रीमाणिभद्र सा० शे० । २६ । "स्फटिकनिभैः शरीरभवरोचिषां समूहैर्गगनतलाङ्कुताविगमनाम्बराभिषक्तैः । शयनपदाधिरूढचिरध्वजाभियोगैः पटुतरभूरिलक्ष्मकलितः स भीमदेवः ॥ १ ॥" अष्टौजातिः । ॐ नमः श्रीभीमदेवाय राक्षसव्यन्तरेन्द्राय श्रीभीम सा० शेषं० । २७ । "शरच्चन्द्रज्योतिर्निचयरचिताशां धवलयन् स्फुरद्राजावर्तप्रभवसनशोभाप्रकटनः । स्वकेतौ खट्वाङ्गं दधदविकलं कल्मषहरो महाभीमः श्रीमान् विदलयतु विघ्नं तनुभृताम् ॥१॥" शिखरिणी । ॐ नमः श्रीमहाभीमाय राक्षसव्यन्तरेन्द्राय श्रीमहाभीम सा० शे० । २८ । "नीलाश्माभच्छविमविकलामङ्गसङ्गे दधानो वासः पीतं परिणतरसालाभमाभासयंश्च । रक्ताशोकं कुवलयनयनापादसंस्पर्शयोग्यं विभ्रत्केतौ प्रभुरभिभवं किंनरो न्यक्करोतु ॥ १ ॥" ॐ नमः श्रीकिंनराय किंनरव्यन्तरेन्द्राय श्रीकिंनर सा० शेषं० । २९ । "रम्येन्दीवरचञ्चरीकविकसद्वर्धिष्णुदेहद्युतिः सज्जाम्बूनदपुष्पवर्णवसनप्रोद्भूतशोभाभरः । रक्ताशोकपिशङ्गितध्वजपटः प्रस्फोटितारिव्रजः स्वामी किंपुरुषः करोतु करुणां कल्पद्रुकल्पं स्पृशन् ॥ १ ॥ ॐ नमः श्रीकिंपुरुषाय किंनरव्यन्तरेन्द्राय किंपुरुष सा० शेषं० । ३० । "शरदुद्गतचन्द्रदेहरुक् फलिनीनीलवरेण्यवस्त्रभाक् । कृतचम्पकभूरुहो ध्वजे विपदं सत्पुरुषो निहन्तु नः ॥ १ ॥" तिष्ठत्रजातौ । ॐ नमः श्रीसत्पुरुषाय किंपुरुषव्यन्तरेन्द्राय श्रीसत्पुरुष सा० शे० । ३१ । "शशाङ्कमणिसंकुलद्युतिविराजिताङ्गः सदा

तमालदलनिर्मलप्रवरवाससां धारणः। सुवर्णकुसुमक्षमारुहविलासिकेतूद्गमो महापुरुषदेवराड् भवतु सुप्रसन्नोऽधुना ॥१॥" पृथ्वी। ॐ नमः श्रीमहापुरुषाय किंपुरुषव्यन्तरेन्द्राय श्रीमहापुरुष सा० शे०।३२। "अम्भोदश्रेणिमुक्तत्रिदशपतिमणिस्पष्टरूपान्तरीक्ष छायापायप्रदायिखचरणमहसा भूषितारक्तवस्त्रः। नागाख्यक्ष्मारुहोद्यद्ध्वजपटलपरिच्छन्नकाष्ठान्तरालः कल्याणं वो विदध्यादविकलकलया देवराजोहिकायः ॥ १ ॥" स्रग्धरा। ॐ नमः श्रीअहिकायाय महोरगव्यन्तरेन्द्राय श्रीअहिकाय सा० शे०। ३३। "ईषन्नीलाभदेहोऽस्तशिखरिशिखरासीनपीनप्रभाढ्यप्रादुर्भूतार्कवर्णप्रकटसमुदयस्तैन्यकृद्वस्त्रलक्ष्मीः। नागद्रुस्फारधाराधरपथगमनोद्यत्पताकाविनोदः श्रीवृद्धिं देहभाजां वितरतु सुरराट् श्रीमहाकायनामा ॥ १ ॥" स्रग्धरा। ॐ नमः श्रीमहाकायाय महोरगव्य० श्रीमहाकाय सा० शेषं०। ३४। "क्षीरोदसलिलस्नातलक्ष्मीकान्तवर्णविराजितः संध्याभवस्त्रविलानविस्तृतचेष्टितैरपराजितः। केतुधृततुम्बरुवृक्षलक्षितसर्वदा[1]रिपुनिर्जयः श्रीगीतरते नु कृतोद्यमखण्डितोरुविपद्भयः ॥ १ ॥" गीता। ॐ नमः श्रीगीतरतये गन्धर्वव्यः श्रीगीतरते सा० शे०। ३५। "श्यामलकोमलाभकरुणार्जितबहुसौभाग्यसंहतिः कुङ्कुमवर्णवर्णनीयद्युतिमत्सिचयनिवारितांहसिः। कुसुमोद्भासचारुतरतरुवरतुम्बरुकेतुधारणो रचयतु सर्वमिष्टमतिगुणगणगीतयशाः सुदारुणः ॥१॥" द्विपदी। ॐ नमः श्रीगीतयशसे गन्धर्वव्य० श्रीगीतयशः सा० शेषं०। ३६। "विशदशरदिन्दुकरकुन्दसमदेहरुग् नीलमणिवर्णवस-

१ सर्वदानवनिर्जयः इत्यपि पाठः।

नप्रभाजालयुक् । विश्वरूपोल्लसद्यानकेतूच्छ्रितः संनिहितदेवराडस्तु निकटस्थितः ॥ १ ॥" चन्द्राननं । ॐ नमः श्रीसंनिहिताय अणपन्निव्य० श्रीसंनिहित सा० शेपं० । ३७ । "स्फटिकोज्वलप्रचलदंशुसंवरो विलसत्तमा-लदलसंनिभाम्बरः । सन्माननायकहरिर्गरुत्मता ध्वजसंस्थितेन कलितः श्रियेस्तु नः ॥ १ ॥" उपजातिः। ॐ नमः श्रीसन्मानाय अणपन्निव्य० श्रीसन्मान सा० शेपं० । ३८ । "जम्बूनदाभवपुरुत्थदीधितिः प्रस्फारितो-रुफलिनीसमाम्बरः । फलहस्तवानरवरिष्ठकेतुभाग् धाता दधातु विभुतामनिन्दिताम् ॥ १ ॥" उपजातिः। ॐ नमः श्रीधात्रे पणपन्निव्य० श्रीधातः सा० शेपं०। ३९ । "आरग्वधाङ्गकुसुमोपमकायकान्तिर्मोचादलप्रतिमव-स्त्रविराजमानः । केतुमदसवरवानरचित्तहारी विश्वं विशेषसुखितं कुरुताद्विधाता ॥ १ ॥" वसन्ततिलका । ॐ नमः श्रीविधात्रे पणन्निव्य० श्रीविधातः सा० शे० । ४० । "चन्द्रकान्तकमनीयविग्रहः सांध्यरागसमसम्वरं वहन् । कुम्भविस्फुरितशालिकेतनो भूरिमङ्गलमृषिः प्रयच्छतु ॥ १ ॥" रथोद्धता । ॐ नमः श्रीऋषये ऋषिपात-व्यन्तरेन्द्राय श्रीऋषे सा० शे० । ४१ । "कृतकलधौतशङ्खाब्धिफेनेश्वरस्मितसमश्लोकगुणवृन्दहृत्संवरः । साधु-बन्धूकबन्धुप्रकृष्टाम्बरः कुम्भकेतुः स ऋषिपालदेवेश्वरः ॥१॥" श्रीचन्द्राननं । ॐ नमः श्रीऋषिपालाय ऋषिपा-तिव्य० श्रीऋपिपाल सा० शे० । ४२ । "शङ्खकुन्दकलिकाभतनुश्रीः क्षीरनीरनिधिनिर्मलवासाः । उक्षरक्षित-महाध्वजमाली संप्रयच्छतु स ईश्वर ईशः ॥ १ ॥" स्वागता । ॐ नमः श्रीईश्वराय भूतवादिव्यन्तरेन्द्राय श्रीई-

---

१ अमीप्सिताम् इत्यपि पाठः ।

श्वर सा० शे० । ४३ । "महेश्वरः शङ्करशोभमानः पताकयाविष्कृतवैरिघातः । शुक्लाङ्गकान्त्यम्बरपूरितश्रीः श्रेयांसि संघस्य सदा ददातु ॥ १ ॥" उपजातिः । ॐ नमः श्रीमहेश्वराय भूतवादिव्य० श्रीमहेश्वर सा० शे० । ४४ । "विक्षिप्तदानवचयः कलधौतकान्तिः श्रीवत्सकेतुरतिनीलमनोज्ञवासाः । संक्षिप्तपापकरणः शरणं भयार्त्तौ वक्षः समाश्रयतु शुद्धहृदां सुवक्षाः ॥१॥" वसन्ततिलका । ॐ नमः श्रीसुवक्षसे क्रन्दिव्य० श्रीसुवक्षः सा० शे० । ४५ । "सुहेमपुष्पिकाविकाशसप्रकाशविग्रहः प्रियङ्गुनीलशीलिताम्बरावलीकृतग्रहः । मुकुन्दहृद्यलक्ष्मकेतुरेनसां विघातनो विशालनामकः सुरः सुरेश्वरः सनातनः ॥ १ ॥" नाराचं । ॐ नमः श्रीविशालाय क्रन्दिव्य० श्रीविशाल सा० शेषं० । ४६ । "क्षमापुष्पस्फूर्जत्तनुविरचनावर्णललितः सुवर्णाभैर्वस्त्रैः समणिवलयैश्चापि कलितः । निजे चोच्चैः केतौ मृगपतियुवानं परिवहन् यशोहासं हासः प्रदिशतु जिनार्चाधृतधियाम् ॥१॥" शिखरिणी । ॐ नमः श्रीहासाय महाक्रन्दिव्य० श्रीहास सा० शे० ।४७। "फलिनीदलाभविमलाङ्गरुचिः कृतमालपुष्पकृतवस्त्ररुचिः । हरिकेतुरुल्लसितहास्यरतिः कुशलं करोतु विभुहास्यरतिः ॥ १ ॥" जगत्यां । ॐ नमः श्रीहास्यरतये महाक्रन्दितव्य० श्रीहास्यरते सा० शे० । ४८ । "क्षीराम्भोधिप्रचलसलिलापूर्णकम्बुप्रणालीनिर्यद्धाराधवलवसनक्षेत्रवित्रस्तपापः । चक्रं केतौ दशशतविशिष्टारयुक्तं दधानः श्वेतः श्वेतं गुणगणमलंकाररूपं करोतु ॥ १ ॥" मन्दाक्रान्ता । ॐ नमः श्रीश्वेताय कूष्माण्डव्यन्तरेन्द्राय श्रीश्वेत सा० शेषं० । ४९ । "वलक्षं स्वंदेहं वसनमपि बिभ्रद्ध्वजपटप्रतिक्रीडचक्रोन्मथितरिपुसंघातपृतनः । लसल्लीलाहे-

लादलितभविकापायनिचयो महाश्वेतस्त्राता भवतु जिनपूजोत्सुकधियाम् ॥ १ ॥" ॐ नमः श्रीमहाश्वेताय कूष्माण्डव्य० श्रीमहाश्वेत सा० शे० । ५० । "विमलविद्रुमविभ्रमभृत्तनुर्धवलवस्त्रसमर्पितमङ्गलः । वरमरालमनोहरकेतनः पतगराट् परिरक्षतु सेवकान् ॥ १ ॥" ॐ नमः श्रीपतगाय पतगव्य० श्रीपतग सा० शे० । ५१ । "पतगरतिरवासपद्मरागच्छविरतिशुभ्रसिचाविचार्यशोभः । प्रगुणितजनसंसहंसकेतुः किसलयतां कुशलानि सर्वकालम् ॥१॥" पुष्पिताग्रा । ॐ नमः श्रीपतगरतये पतगव्य० श्रीपतगरते सा० शे० । ५२ । "ससाश्वप्रचलरथप्रतिष्ठिताङ्ग धृतहरिकेतन इष्टपद्मचक्रः । सकलशुपविधानकर्मसाक्षी दिवसपतिर्दिशतात्तमोविनाशम् ॥१॥" उपच्छन्दसिकं । ॐ नमः श्रीसूर्याय ज्योतिष्केन्द्राय श्रीसूर्य सा० शे० । ५३ । "अमृतमयशरीरविश्वपुष्टिप्रदकुमुदाकरदत्तबोधनित्यम् । परिकरितसमस्तधिष्ण्यचक्रैः शशधर धारय मानसप्रसादम् ॥ १ ॥" पुष्पिताग्रा । ॐ नमः श्रीचन्द्राय ज्योतिष्केन्द्राय श्रीचन्द्र सा० शे० । ५४ । "सम्यक्त्वव्यतिरेकतर्जितमहामिथ्यात्वविस्फूर्जितः पाणिप्रापितवज्रखण्डितमहादैत्यप्रकाण्डस्थितिः । पौलोमीकुचकुम्भसंभ्रमधृतध्यानोद्यदक्षावलिः श्रीशक्रः क्रतुभुक्पतिर्वितनुतादानन्दभूतिं जने ॥१॥" शार्दूलविक्रीडितं । ॐ नमः श्रीशक्राय सौधर्मकल्पेन्द्राय श्रीशक्र सायुधः सवाहनः सपरिच्छदः सामानिकाङ्गरक्षत्रयस्त्रिंशल्लोकपालानीकप्रकीर्णिकाभियोगिककैल्बिषिकयुतः इह प्रति० शेषं० । ५५ । "ईशानाधिपते ककुद्मदयनश्वेताङ्गशूलायुधः श्रीतीर्थंकरपादपङ्कजसदासेवैकपुष्पव्रतः । यज्ञध्वंसवरिष्ठविक्रमचमत्कारक्रियामन्दिर श्रीसंघस्य समस्तविघ्ननिवहं द्रागेव दूरीकुरु ॥ १ ॥"

ॐ नमः श्रीईशानाय ईशानकल्पेन्द्राय श्रीईशान इह प्रतिं० शेषं० । ५६ । "किरीटकोटिप्रतिकूटचञ्चचामीकरासीनमणिप्रकर्षः । सनत्कुमाराधिपतिर्जिनार्चाकाले कलिच्छेदनमातनोतु ॥ १ ॥" ॐ नमः श्रीसनत्कुमाराय सनत्कुमारकल्पेन्द्राय श्रीसनत्कुमार इह० शेष० । ५७ । "महैश्वर्यो वर्यार्यमकिरणजालप्रतिनिधिप्रतापप्रागल्भ्याद्भुतभवनविस्तारितयशाः । चमत्काराधायिध्वजविधुततोरासमुदयः ध्वजिन्या दैत्यान् घ्नन् सपदि स महेन्द्रो विजयते ॥ १ ॥" ॐ नमः श्रीमहेन्द्राय माहेन्द्रकल्पेन्द्राय श्रीमहेन्द्र इह० शेषं० । ५८ । "हंसावियोजनवियोजितवातसाम्यभ्राम्यद्विमानरुचिरीकृतदेवमार्गः । ब्रह्मा हिरण्यसमगण्यशरीरकान्तिः कान्तो जिनार्चन इह प्रकटोऽस्तु नित्यम् ॥ १ ॥ ॐ नमः श्रीब्रह्मणे ब्रह्मकल्पेन्द्राय श्रीब्रह्मन् इह शेषं० । ५९ । "षड्विधाविधुतदैत्यमण्डली मण्डितोत्तमयशश्रयाचिरम् । अर्हतां विपुलभक्तिभासिनी लान्तकेश्वरचमूर्विराजताम् ॥१॥" ॐ नमः श्रीलान्तकाय लान्तककल्पेन्द्राय श्रीलान्तक इह शेषं० । ६० । "दिनेशकान्ताश्ममयं विमानमधिश्रितः श्रीधनरूपदृष्टिः । शुक्रः परिक्रान्तदनूद्भवालिर्लौलित्यमर्हद्भवने करोतु ॥ १ ॥" ॐ नमः श्रीशुक्राय शुक्रकल्पेन्द्राय श्रीशुक्र इह शेषं० । ६१ । "सहस्रग्भिरुल्लासितोद्यत्किरीटः सहस्रासुराधीश्वरोद्भासनार्थी । सहस्रारकल्पेऽद्भुतश्चक्रवर्ती सहस्रारराजोऽस्तु राज्यप्रदाता ॥ १ ॥' ॐ नमः श्रीसहस्राराय सहस्रारक० श्रीसहस्रार इह शेषं । ६२ । "सैन्यसंहतिविनाशितासुराधीशपूःसमुदयो दयानिधिः । आनतो विनतिमञ्जसा दधत्तीर्थनायकगणस्य नन्दतु ॥ १ ॥" ॐ नमः श्रीआनतेन्द्राय आनतप्राणतकल्पेन्द्राय श्रीआनत

शेषं० । ६३ । "जिनपतिजिनस्नात्रे पूर्वं कृताधिकगौरवे विपुलविमलां सम्यग्दृष्टिं हृदि प्रचुरां दधत् । त्रिद-
शनिवहे कल्पोद्भूते सुकर्ममतिं ददत् जगति जयति श्रीमानिन्द्रो गुणानतिरच्युतः ॥१॥" ॐ नमः श्रीअच्यु-
ताय आरणाच्युतकल्पेन्द्राय श्रीअच्युत इह शेषं० । ६४ । ॐ नमः चतुःषष्टिसुरासुरेन्द्रेभ्यः सम्यग्दृष्टिभ्यः
जिनच्यवनजन्मदीक्षाज्ञाननिर्वाणनिर्मितमहिमभ्यः सर्वे चतुःषष्टिसुरासुरेन्द्रा भवनपतिव्यन्तरज्योतिष्क-
वैमानिकाधिपत्यभाजो निजनिजविमानवाहनारूढा निजनिजायुधधारिणः निजनिजपरिवारपरिवृताः अङ्ग-
रक्षकसामानिकपार्षद्यत्रायस्त्रिंशल्लोकपालानीकप्रकीर्णकाभियोगिककैल्विषिकजुष इह प्रतिष्ठामहोत्सवे आग-
च्छत २ इदमर्घ्यं पाद्यं बलिं चरुं गृह्णन्तु २ संनिहिता भवन्तु स्वाहा जलं गृह्णन्तु गन्धं० पुष्पं० अक्षता०
फलानि० मुद्रां० धूपं० दीपं० नैवेद्यं सर्वोपचारान् गृह्णन्तु शान्तिं कुर्वन्तु २ तुष्टिं० पुष्टिं २ ऋद्धिं २ वृद्धिं २
सर्वसमीहितानि कुर्वन्तु स्वाहा । अनेन सर्वेन्द्राणां परिपिण्डितपूजा ॥ ततः षष्ठवलये—"स्वं स्वं पतिं नित्यम-
नुव्रजन्त्यः सम्यक्त्वकाम्यं तु हृदं वहन्त्यः । परिच्छदैः स्वैरनुयातमार्गाः सुरेन्द्रदेव्योऽत्र भवन्तु तुष्टाः । १ ।"
अनेन षष्ठवलये पुष्पाञ्जलिक्षेपः । "कौसुम्भवस्त्राभरणाः श्यामाङ्ग्योऽद्भुततेजसः । देव्यः श्रीचमरेन्द्रस्य कृत-
रक्षा भवन्त्विह ॥ १ ॥" ॐ नमः श्रीचमरेन्द्रदेवीभ्यः श्रीचमरेन्द्रदेव्यः सायुधाः सवाहनाः सपरिच्छदाः सस-
खीकाः इह प्रतिष्ठामहोत्सवे आगच्छत २ इदमर्घ्यं पाद्यं बलिं चरुं गृह्णीत २ संनिहिता भवत २ स्वाहा जलं
गृह्णीत २ गन्धं० पुष्पं० अक्ष० फला० मुद्रां० धूपं० दीपं० नैवेद्यं० सर्वोपचारान् गृ० २ शान्तिं कुरु० २

तुष्टिं० पुष्टिं० ऋद्धिं० वृद्धिं० सर्वसमीहितं यच्छत स्वाहा । १ । "प्रियंगुश्यामकरणाः शरणं भयभागिनाम् । बलिदेव्यः प्रभातार्कसमवासोधराः स्फुटम् ॥ १ ॥" ॐ नमः श्रीबलीन्द्रदेवीभ्यः श्रीबलिदेव्यः सायुधाः सवाहनाः शेषं० पूर्ववत् । २ । "नीलाम्बरपरिच्छन्नाः पुण्डरीकसमप्रभाः । धरणेन्द्रप्रियाः सन्तु जिनस्नात्रे समाहिताः ॥ १ ॥" ॐ नमः श्रीधरणेन्द्रदेवीभ्यः श्रीधरणेन्द्रदेव्यः सा० शे० । ३ । "तुषारहारगौराङ्ग्यः प्रियङ्गुसमवाससः । आयान्तु जिनपूजायां भूतानन्दवधूव्रजाः ॥ १ ॥" ॐ नमः श्रीभूतानन्ददेवीभ्यः श्रीभूतानन्देन्द्रदेव्यः सा० शे० । ४ । "तप्तचामीकरच्छेदतुल्यनिःशल्यविग्रहाः । लूताजालसमाच्छादा वेणुदेवस्त्रियः श्रिये ॥१॥" ॐ नमः श्रीवेणुदेवेन्द्रदेवीभ्यः श्रीवेणुदेवेन्द्रदेव्यः सा० शे० । ५ । "आरग्वधसुमश्रेणीसमसंवरतेजसः । श्वेताम्बरा वेणुदारिदेव्यः सन्तु समाहिताः ॥१॥" ॐ नमः श्रीवेणुदारीन्द्रदेवीभ्यः श्रीवेणुदारीन्द्रदेव्यः सा० शे० । ६ । "पद्मरागारुणरुचो हरिकान्तमृगेक्षणाः । विष्णुक्रान्तापुष्पसमवाससः सन्तु सिद्धये ॥१॥" ॐ नमः श्रीहरिकान्तेन्द्रदेवीभ्यः श्रीहरिकान्तेन्द्रदेव्यः सा० शे० । ७ । "कृतविद्रुमसंकाशकायकान्तिविराजिताः । प्रियङ्गुवर्णवसनाः श्रिये हरिसहस्त्रियः ॥ १ ॥" ॐ नमः श्रीहरिसहेन्द्रदेवीभ्यः श्रीहरिसहेन्द्रदेव्यः सा० शे० । ८ । "बन्धूककलिकातुल्यां बिभ्रत्यो वपुषि श्रियम् । अतसीपुष्पसंकाशवस्त्रा अग्निशिखस्त्रियः ॥ १ ॥" ॐ नमः श्रीअग्निशिखेन्द्रदेवीभ्यः श्रीअग्निशिखेन्द्रदेव्यः सा० शे० । ९ । "रक्ताशोकलसत्पुष्पवर्णनीलतमाम्बराः । अग्निमानवदेवेन्द्ररमण्यः सन्तु भद्रदाः ॥ १ ॥" ॐ नमः श्रीअग्निमानवदेवेन्द्रदेवीभ्यः श्रीअग्निमान-

वदेभ्यः सा० शे० । १० । नवोदितार्ककिरणकरणा अरुणाधराः । नीलाम्बराः पुण्यराजकान्ताः कान्तिं
ददत्वरम् ॥ १ ॥ ॐ नमः श्रीपूर्णेन्द्रदेवीभ्यः श्रीपूर्णेन्द्रदेव्यः सा० शे० । ११ । लसत्कोकनदच्छायां दधत्यो
निजवर्ष्मणि । फलिनीवर्णवस्त्राढ्या वशिष्टमहिलाः श्रिये ॥ १ ॥ ॐ नमः श्रीवशिष्ठेन्द्रदेवीभ्यः श्रीवशि-
ष्ठेन्द्रदेव्यः सा० शे० । १२ । "स्फटिकच्छायसत्कायनीलवर्णाढ्यवाससः । कुर्वन्तु सर्वकार्याणि जलका-
न्तमृगेक्षणाः ॥ १ ॥" ॐ नमः श्रीजलकान्तेन्द्रदेवीभ्यः जलकान्तेन्द्रदेव्यः सा० शे० । १३ । "भागी-
रथीप्रवाहाभदेहद्युतिमनोहराः । नीलाम्बराः श्रिये सन्तु जलप्रभमृगीदृशः ॥ १ ॥" ॐ नमः श्रीज-
लप्रभेन्द्रदेवीभ्यः श्रीजलप्रभेन्द्रदेव्यः सा० शे० । १४ । "हेमपुष्पीपुष्पसमं बिभ्रत्यो धाम विग्रहे । श्री-
मदमितगतीन्द्रप्रियाः शुभ्राम्बराः श्रिये ॥ १ ॥" ॐ नमः श्रीअमितगतीन्द्रदेवीभ्यः श्रीअमितगतीन्द्र-
देव्यः सा० शे० । १५ । "खर्जूरतर्जनाकारिविलसद्वर्ष्मतेजसः । श्वेतवस्त्रा श्रिये सन्तु मितवाहनव-
ल्लभाः ॥ १ ॥" ॐ नमः श्रीमितवाहनेन्द्रदेवीभ्यः श्रीमितवाहनेन्द्रदेव्यः सा० शे० । १६ । "प्रियङ्गुचङ्गिमो-
त्तुङ्गभङ्गदायग्ङतेजसः । वेलम्बवल्लभाः सांध्यरागारुणसिचः श्रिये ॥ १ ॥" ॐ नमः श्रीवेलम्बेन्द्रदेवीभ्यः
श्रीवेलम्बेन्द्रदेव्यः सा० शे० । १७ । "कदलीदललालित्यविलम्बिवपुषः श्रिया । प्रभञ्जनप्रियाः प्रीताः सन्तु
मञ्जिष्ठवाससः ॥ १ ॥" ॐ नमः श्रीप्रभञ्जनदेवेन्द्रदेवीभ्यः श्रीप्रभञ्जनेन्द्रदेव्यः सा० शे० । १८ । "सच्चम्प-
कोल्लसत्कोरकाभकायाः सिताम्बराः । घोषप्रियतमाः प्रेम पुष्णन्तु पुरुषस्त्रियः ॥ १ ॥" ॐ नमः श्रीघोषेन्द्र-

देवीभ्यः श्रीघोषेन्द्रदेव्यः सा० शे० । १९। "महाघोषमहिष्यस्तु धृतचन्द्राभवाससः । हारिद्रहारिकरणाः कुर्वन्तु करुणां सताम् ॥ १ ॥" ॐ नमः श्रीमहाघोषेन्द्रदेवीभ्यः श्रीमहाघोषेन्द्रदेव्यः सा० शे० । २० । "कज्जलश्यामलरुचो धृतपीततराम्बराः । कालकान्ताः शुभं कालं कलयन्तु महात्मनाम् ॥ १ ॥" ॐ नमः श्रीकालेन्द्रदेवीभ्यः श्रीकालेन्द्रदेव्यः सा० शे० । २१ । "भ्रमद्भ्रमरविभ्राजिशरीरोग्रमनोहराः । वर्षाविद्युत्समसिचो महाकालप्रियाः श्रिये ॥ १ ॥" ॐ नमः श्रीमहाकालेन्द्रदेवीभ्यः श्रीमहाकालेन्द्रदेव्यः सा० शे० । २२ । "भाद्रवारिधरश्यामकामप्रदतनुत्विषः । सुरूपकान्ता रात्रीशकान्तवस्त्राः समाहिताः ॥ १ ॥" ॐ नमः श्रीसुरूपेन्द्रदेवीभ्यः श्रीसुरूपेन्द्रदेव्यः सा० शे० । २३ । "कालिन्दीजलकल्लोलविलोलवपुरिङ्गिताः । स्फटिकोज्ज्वलचीराश्च प्रतिरूपस्त्रियः श्रिये ॥ १ ॥" ॐ नमः श्रीप्रतिरूपेन्द्रदेवीभ्यः श्रीप्रतिरूपेन्द्रदेव्यः सा० शे० । २४ । "शातकुम्भनिभैर्वस्त्रैः कलिताः श्यामलत्विषः । पूर्णभद्रस्त्रियः पूर्णभद्रं कुर्वन्तु सर्वतः ॥ १ ॥" ॐ नमः श्रीपूर्णभद्रेन्द्रदेवीभ्यः श्रीपूर्णभद्रदेव्यः सा० शे० । २५ । "नवार्ककरसंस्पृष्टतमालोत्तममूर्तयः । कर्पूरोपमवस्त्राश्च माणिभद्राङ्गनाः श्रिये ॥ १ ॥" ॐ नमः श्रीमाणिभद्रदेवीभ्यः श्रीमाणिभद्रदेव्यः सा० शे० । २६ । "चन्द्रकान्तप्रतीकाशसप्रकाशवपुर्धराः । नीलाम्बरा भीमनार्यः सन्तु सर्वार्थसिद्धये ॥ १ ॥" ॐ नमः श्रीभीमेन्द्रदेवीभ्यः श्रीभीमेन्द्रदेव्यः सा० शे० । २७। "क्षीरोदधिक्षीरधौतमुक्ताहारसमप्रभाः । इन्द्रनीलोपमसिचो महाभीमस्त्रियोऽद्भुताः ॥ १ ॥" ॐ नमः श्रीमहाभीमेन्द्रदेवीभ्यः श्रीमहाभीमेन्द्रदेव्यः सा० शे० । २८ । "प्रिय-

दुरङ्गाङ्गरुचः स्फटिकोज्ज्वलवाससः । प्राणेश्वर्यः किंनरस्य कुर्वन्तु कुशलं सताम् ॥ १ ॥" ॐ नमः श्रीकिंनरेन्द्रदेवीभ्यः श्रीकिंनरेन्द्रदेव्यः सा० शे० । २९ । "नीलकायरुचः कान्ताः कान्ताः किंपुरुषस्य च । चन्द्रोज्ज्वलाच्छादधराः सन्तु विघ्नभिदाकृतः ॥ १ ॥" ॐ नमः श्रीकिंपुरुषेन्द्रदेवीभ्यः श्रीकिंपुरुषेन्द्रदेव्यः सा० शे० । ३० । "सत्कुन्दकलिकाजालवलक्षतनुतेजसः । नीलवस्त्राः सत्पुरुपवशा वाञ्छितदायिकाः ॥ १ ॥" ॐ नमः श्रीसत्पुरुपेन्द्रदेवीभ्यः श्रीसत्पुरुषेन्द्रदेव्यः सा० शे० । ३१ । "महापुरुषदेव्यस्तु शङ्खोज्ज्वलतनूधराः । प्रियङ्गुप्रियवर्णाभवस्त्राः सन्त्वत्र संस्थिताः ॥ १ ॥" ॐ नमः श्रीमहापुरुषेन्द्रदेवीभ्यः श्रीमहापुरुषेन्द्रदेव्यः सा० शे० । ३२ । "अन्तरिक्षप्रख्यरुचो धृतपीताम्बरस्रजः । अहिकायमहिष्यस्तु घ्नन्तु विघ्नं जिनार्चने ॥ १ ॥" ॐ नमः श्रीअहिकायेन्द्रदेवीभ्यः श्रीअहिकायेन्द्रदेव्यः सा० शे० । ३३ । "महाकायस्त्रियः श्यामकमनीयाङ्गराजिताः । पीताम्बराश्च सङ्घस्य कुर्वन्तु कुलवर्द्धनम् ॥ १ ॥" ॐ नमः श्रीमहाकायेन्द्रदेवीभ्यः श्रीमहाकायेन्द्रदेव्यः सा० शे० । ३४ । "वीणाकराः श्यामरुचः कौसुम्भवसनावृताः । सन्तु गीतरतेर्देव्यः ससंगीता जिनार्चने ॥ १ ॥" ॐ नमः श्रीगीतरतीन्द्रदेवीभ्यः श्रीगीतरतीन्द्रदेव्यः सा० शे० । ३५ । "श्रीमद्गीतयशोदेव्यः श्यामाः संगीतसंगताः । कुरुविन्दारुणसिचः सन्तु संतापशान्तये ॥ १ ॥" ॐ नमः श्रीगीतयशइन्द्रदेवीभ्यः श्रीगीतयशइन्द्रदेव्यः सा० शे० । ३६ । "मौक्तिकप्रख्यवपुषो नीलाम्बरमनोहराः । देव्यः संनिहितेन्द्रस्य सन्तु संनिहिता इह ॥ १ ॥" ॐ नमः श्रीसंनिहितेन्द्रदेवीभ्यः श्रीसंनिहितेन्द्रदेव्यः सा० शे० । ३७ । "नवोद्यत्पारदरुचो रा-

जावर्ताभवाससः । सन्मानकान्ताः कीर्तिं[1] नः कुर्वन्तु कुशलप्रदाः ॥ १ ॥ॐ नमः श्रीसन्मानेन्द्रदेवीभ्यः श्रीसन्मानेन्द्रदेव्यः सा० शे० । ३८ । "कृतमालपुष्पमालावर्णा हरितवाससः । धातुर्विदधतां कान्ताः कमनीयार्चनामतिम् ॥ १ ॥" ॐ नमः श्रीधात्रिन्द्रदेवीभ्यः श्रीधात्रिन्द्रदेव्यः सा० शे० । ३९ । "संतसकाश्चनरुचः प्रियङ्गुप्रभनक्तकाः । जिनार्चनेषु दद्यासुर्विधातुर्वल्लभा बलम् ॥ १ ॥" ॐ नमः श्रीविधात्रिन्द्रदेवीभ्यः श्रीविधात्रिन्द्रदेव्यः सा० शे० । ४० । "चन्द्रकान्ताभकायाढ्या मञ्जिष्ठासिचयाद्भुताः । ऋषिपत्न्य ऋषीन्द्राणां सन्तु व्रतमतिप्रदाः ॥ १ ॥" ॐ नमः श्रीऋषीन्द्रदेवीभ्यः श्रीऋषीन्द्रदेव्यः सा० शे० । ४१ । "ऋषिपालाम्बुजदृशः शशाङ्ककिरणोज्ज्वलाः । रक्ताम्बरा वरं सर्वसङ्घस्य ददतां सदा ॥ १ ॥" ॐ नमः श्रीऋषिपालेन्द्रदेवीभ्यः श्रीऋषिपालेन्द्रदेव्यः सा० शे० । ४२ । "शङ्खोज्ज्वलमनोज्ञाङ्ग्यः स्नातशेषाभवाससः[2] । ईश्वरस्य प्रियतमाः सङ्घे कुर्वन्तु मङ्गलम् ॥ १ ॥" ॐ नमः ईश्वरेन्द्रदेवीभ्यः श्रीईश्वरेन्द्रदेव्यः सा० शे० । ४३ । "क्षीराब्धिगौराः काशाभवाससो वारिजाननाः । महेश्वरस्य दयिता दयां कुर्वन्तु देहिषु ॥ १ ॥" ॐ नमः श्रीमहेश्वरेन्द्रदेवीभ्यः श्रीमहेन्द्रदेव्यः सा० शे० । ४४ । "सुवर्णवर्णनीयाङ्ग्यो मेचकाम्बरडम्बराः । सुवक्षसः सुवक्षोजाः कान्ता यच्छन्तु वाञ्छितम् ॥ १ ॥" ॐ नमः श्रीसुवक्षइन्द्रदेवीभ्यः श्रीसुवक्षइन्द्रदेव्यः सा० शे० । ४५ । "विशालहारिद्ररुचः सुनीलसिचया अपि । विशालदेव्यः कुर्वन्तु सर्वापत्क्षणनं क्षणात् ॥ १ ॥" ॐ नमः

१ कान्ति न इति पाठः । २ शङ्खाभवाससः इति पाठः ।

श्रीविशालेन्द्रदेवीभ्यः श्रीविशालेन्द्रदेव्यः सा० शे० । ४६ । “अतसीपुष्पसंकाशैरङ्गैः शून्यः शुभेङ्गिताः ।
पीताम्बरधरा हासविलासिन्यः समाहिताः ॥ १ ॥” ॐ नमः श्रीहासेन्द्रदेवीभ्यः श्रीहासेन्द्रदेव्यः सा० शे०
। ४७ । “नीलाङ्गकान्तिकलिताः शातकुम्भाभवाससः । श्रीहास्यरतिकामिन्यः कामितं पूरयन्तु नः ॥ १ ॥” ॐ
नमः श्रीहास्यरतीन्द्रदेवीभ्यः श्रीहास्यरतीन्द्रदेव्यः सा० शे० । ४८ । “क्षीराम्भोनिधिनिर्गच्छच्छेषाभतनुवा-
ससः । श्वेताम्बुजेक्षणाः शत्रून् क्षपयन्तु मनीषिणाम् ॥ १ ॥” ॐ नमः श्रीश्वेतेन्द्रदेवीभ्यः श्रीश्वेतेन्द्रदेव्यः
सा० शे० । ४९ । “शेषाहिदशनज्योतिर्व्यूतवासोविभूषिताः । शरत्तारकदेहाश्च महाश्वेतस्त्रियो मुदे ॥ १ ॥”
ॐ नमः श्रीमहाश्वेतेन्द्रदेवीभ्यः श्रीमहाश्वेतेन्द्रदेव्यः सा० शे० । ५० । “अशोकनवपुष्पालीरक्तदेहरुचोऽधिकम् ।
कुन्देन्दुधवलाच्छाया जयन्ति पतगस्त्रियः ॥ १ ॥” ॐ नमः श्रीपतगेन्द्रदेवीभ्यः श्रीपतगेन्द्रदेव्यः सा० शे०
। ५१ । “कामिन्यः पतगरतेः स्फुटविद्रुमतेजसः । विशुद्धवसनाः सन्तु सर्वसंघमनोमुदे ॥ १ ॥” ॐ नमः
श्रीपतगरतीन्द्रदेवीभ्यः श्रीपतगरतीन्द्रदेव्यः सा० शे० । ५२ । “प्रदीप्तदेहरुग्ध्वस्तध्वान्तसंहतयः सिताः ।
रक्ताभवसनाः सूर्यचकोराक्ष्यो महामुदे ॥ १ ॥” ॐ नमः श्रीसूर्येन्द्रदेवीभ्यः श्रीसूर्येन्द्रदेव्यः सा० शे० । ५३ ।
“सुधागिरः सुधाधाराः सुधादेहाः सुधाहृदः । सुधाकरस्त्रियः सन्तु स्नात्रेऽस्मिन् प्रकिरत्सुधाः ॥ १ ॥” ॐ नमः
श्रीचन्द्रेन्द्रदेवीभ्यः श्रीचन्द्रेन्द्रदेव्यः सा० शे० । ५४ । “पौलोमीप्रमुखाः शक्रमहिष्यः काञ्चनत्विषः । पीता-

1 प्रक्षरत्सुधाः इति पाठः ।

स्वरा जिनार्चायां सन्तु संद्दसकल्पनाः ॥ १ ॥" ॐ नमः श्रीसौधर्मशक्रेन्द्रदेवीभ्यः श्रीसौधर्मशक्रेन्द्रदेव्यः सा० शे० । ५५ । "गौरीप्रभृतयो गौरकान्तयः कान्तसंगताः । देव्य ईशाननाथस्य सन्तु सन्तापहानये ॥१॥" ॐ नमः श्रीईशानेन्द्रदेवीभ्यः श्रीईशानेन्द्रदेव्यः सा० शे० । ५६ । सनत्कुमारादीन्द्राणां देव्यो न सन्ति । यत उक्तमागमे—"उववाओ देवीणं कप्पदुगं जाव पुरओ सहस्सारो । गमणागमणं नत्थि अच्चुअपरओ सुराणं पि ॥ १ ॥" अतः सनत्कुमारादीन्द्राणां परिजनपूजैव, सा चेन्द्रपूजासहचारिणी, तथा व्यन्तरज्योतिष्केन्द्राः त्रायस्त्रिंशल्लोकपालवर्जिताः पठनीयाः, शुक्रादिकल्पेन्द्राः कैल्बिषिकावर्जिताः पठनीयाः, अत्र च देवेषु कैल्बिषिकाः परमाधार्मिकाश्च न पूजनीयाः, किंत्विन्द्रपरीवारसाहचर्येण अखण्डितसूत्रपाठे न दोषः । अन्ये तु ग्रैवेयकानुत्तरसुराः पार्श्वपूजायां जृम्भकादयश्च पूजयिष्यन्ते । ॐ ह्रीँ नमश्चतुःषष्टिसुरासुरेन्द्रदेवीभ्यः सम्यग्दर्शनवासिताभ्योऽनन्तशक्तिभ्यः श्रीचतुःषष्टिसुरासुरेन्द्रदेव्यः सायुधाः सवाहनाः सपरिच्छदाः साभियोगिकदेव्यः इह प्रतिष्ठामहोत्सवे आगच्छन्तु २ इदमर्घ्यं पाद्यं बलिं चरुं गृह्णन्तु २ संनिहिता भवन्तु २ स्वाहा जलं गृह्णन्तु २ गन्धं० पुष्पं अक्षतान्० फलानि० मुद्रां० धूपं० दीपं० नैवेद्यं० गृह्णन्तु सर्वोपचारान्० शान्तिं कुर्वन्तु २ तुष्टिं० पुष्टिं० ऋद्धिं० वृद्धिं० सर्वसमीहितानि यच्छन्तु २ स्वाहा । अनेन चतुःषष्टिसुरासुरेन्द्रदेवीनां परिपिण्डितपूजा । ततः सप्तमवलये । "ये केवले सुरगणे मिलिते जिनाग्रे श्रीसङ्घरक्षणविचक्षणतां विदध्युः । यक्षास्त एव परमर्द्धिविवृद्धिभाज आयान्तु शान्तहृदया जिनपूजनेऽत्र ॥ १ ॥"

अनेन वृत्तेन ससमवलये शासनयक्षाणां पुष्पाञ्जलिक्षेपः । "स्वर्णाभो वृषवाहनो द्विरदगोयुक्तश्चतुर्बाहुभिः बिभ्रद्दक्षिणहस्तयोश्च वरदं मुक्ताक्षमालामपि । पाशं चापि हि मातुलिङ्गसहितं पाण्योर्वहन् वामयोः संघं रक्षतु दाक्ष्यलक्षितमतिर्यक्षोत्तमो गोमुखः ॥ १ ॥" ॐ नमो गोमुखयक्षाय श्रीयुगादिजिनशासनरक्षाकारकाय श्रीगोमुखयक्ष सायुध सवाहन सपरिच्छदः इह प्रतिष्ठामहोत्सवे आगच्छ २ इदमर्घ्यं पाद्यं बलिं चरुं गृहाण २ संनिहितो भव २ स्वाहा जलं गृहाण २ गन्धं० पुष्पं० अक्षतान्० फलानि० मुद्रां० धूपं० दीपं० नैवेद्यं सर्वोपचारान् गृहाण २ शान्तिं कुरु २ तुष्टिं० पुष्टिं० ऋद्धिं० वृद्धिं० सर्वसमीहितानि देहि २ स्वाहा । १ । "द्विरदगमनकृच्छितिश्चाष्टबाहुश्चतुर्वक्त्रभाग्मुद्गरं वरदमपि च पाशमक्षावलिं दक्षिणे हस्तवृन्दे वहन् । अभयमविकलं तथा मातुलिङ्गं सृणिशक्तिमाभासयत् सततमतुलं वामहस्तेषु यक्षोत्तमोऽसौ महायक्षकः ॥१॥" ॐ नमो महायक्षाय श्रीअजितस्वामिजिनशासनरक्षाकारकाय श्रीमहायक्ष सायु० सवा० शेषं पूर्ववत् । २ । "त्र्यास्यः श्यामो नवाक्षः शिखिगमनरतः षड्भुजो वामहस्तैः प्रस्तारे मातुलिङ्गाक्षवलयभुजगान् दक्षिणे पाणिवृन्दे । बिभ्राणो दीर्घजिह्वद्विषदभयगदासादिताशेषदुष्टः कष्टं संघस्य हन्यात्त्रिमुखसुरवरः शुद्धसम्यक्त्वधारी ॥ १ ॥" ॐ नमः श्रीत्रिमुखयक्षाय श्रीसंभवस्वामिजिनशासनरक्षाकारकाय श्रीमुखयक्ष सा० शेषं० । ३ । "श्यामः सिन्धुरवाहनो युगभुजो हस्तद्वये दक्षिणे मुक्ताक्षावलिमुत्तमां परिणतं सन्मातुलिङ्गं वहन् । वामेऽप्यङ्कुशमुत्तमं च नकुलं कल्याणमालाकरः श्रीयक्षेश्वर उज्ज्वलां जिनपतेर्दद्यान्मतिं शासने

॥ १ ॥" ॐ नमः श्रीयक्षेश्वरयक्षाय श्रीअभिनन्दनस्वामिजि० श्रीयक्षेश्वरयक्ष शे० । ४ । "वर्णश्वेतो गरुडगमनो वेदबाहुश्च वामे हस्तद्वन्द्वे सुललितगदां नागपाशं च बिभ्रत् । शक्तिं चञ्चद्दूरदमतुलं दक्षिणे तुम्बरुं स प्रस्फीतां नो दिशतु कमलां संघकार्येऽव्ययां च ॥ १ ॥" ॐ नमः श्रीतुम्बरवे सुमतिस्वामिजि० श्रीतुम्बरो शे० । ५ । "नीलस्तुरङ्गगमनश्च चतुर्भुजाढ्यः स्फूर्जत्फलाभयसुदक्षिणपाणियुग्मः । बभ्रक्षसूत्रयुतवामकरद्वयश्च सङ्घं जिनार्चनरतं कुसुमः पुनातु ॥ १ ॥" ॐ नमः श्रीकुसुमाय श्रीपद्मप्रभस्वामिजि० श्रीकुसुम शे० ।६। "नीलो गजेन्द्रगमनश्च चतुर्भुजोपि बिल्वाहिपाशयुतदक्षिणपाणियुग्मः । वज्राङ्कुशप्रगुणितीकृतवामपाणिर्मातङ्गराड् जिनमतेर्द्विषतो निहन्तु ॥ १ ॥" ॐ नमः श्रीमातङ्गयक्षाय श्रीसुपार्श्वजि० श्रीमातङ्गयक्ष शे० । ७ । "श्यामानिभो हंसगतिस्त्रिनेत्रो द्विबाहुधारी कर एव वामे । सन्मुद्गरं दक्षिण एव चक्रं वहन् जयं श्रीविजयः करोतु ॥ १ ॥ ॐ नमः श्रीविजययक्षाय श्रीचन्द्रप्रभस्वामिजि० श्रीविजययक्ष शे० । ८ । "कूर्मारूढो धवलकरणो वेदबाहुश्च वामे हस्तद्वन्द्वे नकुलमतुलं रत्नमुत्तंसयंश्च । मुक्तामालां परिमलयुतं दक्षिणे बीजपूरं सम्यग्दृष्टिप्रसृमरधियां सोऽजितः सिद्धिदाता ॥ १ ॥" ॐ नमः श्रीअजितयक्षाय श्रीसुविधिस्वामिजि० श्रीअजितयक्ष शे० । ९ । "वसुमितभुजयुक् चतुर्वक्त्रभाग् द्वादशाक्षो रुचा सरसिजविहितासनो मातुलिङ्गाभये पाशयुग्मुद्गरं दधदति गुणमेव हस्तोत्करे दक्षिणे चापि वामे गदां सृणिनकुलसरोद्भवाक्षावलीर्ब्रह्मनामा सुपर्वोत्तमः ॥ १ ॥" इच्छादण्डकः । ॐ नमः श्रीब्रह्मणे श्रीशीतलस्वामिजि० श्रीब्रह्मन् शे० ।१०।

"त्र्यक्षो महोक्षगमनो धवलश्चतुर्दोर्वामेऽथ हस्तयुगले नकुलाक्षसूत्रे । संस्थापयंस्तदनु दक्षिणपाणियुग्मे स-
न्मातुलिङ्गकगदेऽवतु यक्षराजः ॥ १ ॥" ॐ नमः श्रीयक्षराजाय श्रीश्रेयांसस्वामिजि० श्रीयक्षराज० शे० ।११।
"श्वेतश्चतुर्भुजधरो गतिकृच हंसे कोदण्डपिङ्गलसुलक्षितवामहस्तः । सद्बीजपूरशरपूरितदक्षिणान्यहस्तद्वयः
शिवमलंकुरुतात्कुमारः ॥ १ ॥" ॐ नमः श्रीकुमारयक्षाय श्रीवासुपूज्यस्वामिजि० श्रीकुमारयक्ष शे० । १२ ।
"शशधरकरदेहरुग् द्वादशाक्षस्तथा द्वादशोयद्भुजो बर्हिगामी परं षण्मुखः फलशरकरवालपाशाक्षमालां म-
हाचक्रवस्तूनि पाण्युत्करे दक्षिणे धारयन् तदनु च ननु वामके चापचक्रस्फरान् पिङ्गलां चाभयं साङ्कुशं
सज्जनानन्दनो विरचयतु सुखं सदा षण्मुखः सर्वसंघस्य सर्वासु दिक्षु प्रतिस्फुरितोद्यद्यशाः ॥ १ ॥" इच्छा-
दण्डकः । ॐ नमः श्रीषण्मुखयक्षाय श्रीविमलस्वामिजि० श्रीषण्मुखयक्ष शे० । १३ । "खट्वाङ्गस्त्रिमुखः षड-
न्यकधरो वादोर्गतिर्लोहितः पद्मं पाशमसिं च दक्षिणकरव्यूहे वहन्नञ्जसा । मुक्ताक्षावलिखेटकोरगरिपू वामेषु
हस्तेष्वपि श्रीविस्तारमलंकरोतु भविनां पातालनामा सुरः ॥ १ ॥" ॐ नमः श्रीपातालाय श्रीअनन्तस्वामि-
जि० श्रीपातालयक्ष शेषं० । १४ । "त्र्यास्यः पणनयनोरुणः कमठगः षड्बाहुयुक्तोभयं विस्पष्टं फलपूरकं गुरु-
गदां चावामहस्तावली । बिभ्रद्वामकरोचये च कमलं मुक्ताक्षमालां तथा बिभ्रत्किंनरनिर्जरो जनजरारोगा-
दिकं कृन्ततु ॥ १ ॥" ॐ नमः श्रीकिंनरयक्षाय श्रीधर्मस्वामिजि० श्रीकिंनरयक्ष शे० । १५ । "श्यामो वराह-
गमनश्च वराहवक्त्रश्चश्चतुर्भुजधरो गरुडश्च पाण्योः । सव्याक्षसूत्रनकुलोप्यथ दक्षिणे च पाणिद्वये धृत-

सरोरुहमातुलिङ्गः । १ ।" ॐ नमः श्रीगरुडयक्षाय श्रीशान्तिनाथजि० श्रीगरुडयक्ष शे० । १६ । "श्यामश्चतुर्भुजधरः सितपत्रगामी बिभ्रच्च दक्षिणकरद्वितयेपि पाशम् । विस्फूर्जितं च वरदं किल वामपाण्योर्गन्धर्वराट् परिधृताङ्कुशबीजपूरः ॥ १ ॥" ॐ नमः श्रीगन्धर्वयक्षाय श्रीकुन्थनाथजि० श्रीगन्धर्वयक्ष शे० । १७ । "वसुशशिनयनः षडास्यः सदा कम्बुगामी धृतद्वादशोद्यद्भुजः श्यामलः तदनु च शरपाशसद्बीजपूराभयासिस्फुरन्मुद्गरान् दक्षिणे स्फारयन् करपरिचरणे पुनर्वामके बभ्रुशूलाङ्कुशानक्षसूत्रं स्फरं कार्मुकं दधदवितथवाक् स यक्षेश्वराभिख्यया लक्षितः पातु सर्वत्र भक्तं जनम् ॥ १ ॥" इच्छादण्डकः । ॐ नमः श्रीयक्षेश्वराय श्रीअरनाथजि० श्रीयक्षेश्वर शेषं० । १८ । "अष्टाक्षाष्टभुजश्चतुर्मुखधरो नीलो गजोद्यद्गतिः शूलं पर्शुमथाभयं च वरदं पाण्युच्चये दक्षिणे । वामे मुद्गरमक्षसूत्रममलं सद्बीजपूरं दधत् शक्तिं चापि कुबेरकूबरधृताभिख्यः सुरः पातु वः ॥ १ ॥" ॐ नमः श्रीकुबेराय वा श्रीमल्लिनाथजि० श्रीकुबेरयक्ष शेषं० । १९ । "श्वेतो द्वादशलोचनो वृषगतिर्वेदाननः शुभ्ररुक् सज्जात्यष्टभुजोऽथ दक्षिणकरव्राते गदां सायकान् । शक्तिं सत्फलपूरकं दधदथो वामे धनुः पङ्कजं पर्शुं बभ्रुमपाकरोतु वरुणः प्रत्यूहविस्फूर्जितम् ॥ १ ॥" ॐ नमः श्रीवरुणयक्षाय श्रीमुनिसुव्रतस्वामिजि० श्रीवरुणयक्ष शे० । २० । "स्वर्णाभो वृषवाहनोष्टभुजभाग् वेदाननो द्वादशाक्षो वामे करमण्डलेऽभयमथो शक्तिं ततो मुद्गरम् । बिभ्रद्वै फलपूरकं तदपरे वामे च बभ्रुं पविं पर्शुं मौक्तिकमालिकां भृकुटिराड्विस्फोटयेत्संकटम् ॥ १ ॥" ॐ नमः श्रीभृकुटियक्षाय श्रीनेमिस्वामिजि० श्रीभृकुटियक्ष शेषं० । २१ ।

"षड्बाहुर्यक्षभाक् शितिस्त्रिवदनो याम्यं नरं धारयन् पर्शूद्यत्फलपूरचक्रकलितो हस्तोत्करे दक्षिणे । वामे पिङ्गलशूलशक्तिललितो गोमेधनामा सुरः सङ्घस्यापि हि ससभीतिहरणो भूयात्प्रकृष्टो हितः ॥ १ ॥" ॐ नमः श्रीगोमेधयक्षाय श्रीनेमिनाथजि० श्रीगोमेधयक्ष शेषं० । २२ । "खर्वः शीर्षफणः शितिः कमठगो दन्त्याननः पार्श्वकः श्यामोद्भासिचतुर्भुजः सुगदया सन्मातुलिङ्गेन च । स्फूर्जद्दक्षिणहस्तकोऽहिनकुलभ्राजिष्णुवामस्फुरत्पाणिर्यच्छतु विघ्नकारि भविनां विच्छित्तिमुच्छेकयुक् ॥ १ ॥ ॐ नमः श्रीपार्श्वयक्षाय श्रीपार्श्वनाथजि० श्रीपार्श्वयक्ष शेषं० । २३ । "श्यामो महाहस्तिगतिर्द्विबाहुः सद्बीजपूराङ्कितवामपाणिः । द्विजिह्वशात्रवद्वामहस्तो मातङ्गयक्षो वितनोतु रक्षाम् ॥ १ ॥" ॐ नमः श्रीमातङ्गयक्षाय श्रीवर्द्धमानस्वामिजि० श्रीमातङ्गयक्ष सायु० शे० । २४ । ॐ नमश्चतुर्विंशतिशासनयक्षेभ्यश्चतुर्विंशतिजिनशासनरक्षकेभ्यः सर्वे शासनयक्षा इह प्रतिष्ठामहोत्सवे आगच्छन्तु २ इदमर्घ्यं पाद्यं बलिं चरुं गृह्णन्तु २ संनिहिता भवन्तु २ स्वाहा जलं गृह्णन्तु २ गन्धं० पुष्पं० अक्षतान् फलानि० मुद्रां० धूपं० दीपं० नैवेद्यं सर्वोपचारं गृह्णन्तु २ शान्तिं कुर्वन्तु २ तुष्टिं० पुष्टिं० ऋद्धिं० वृद्धिं० सर्वसमीहितानि यच्छन्तु २ स्वाहा । इति सर्वशासनयक्षाणां परिपिण्डितपूजा ॥ अथ अष्टमवलये—"यासां संस्मरणाद्भवन्ति सकलाः संपद्गणा देहिनां दिक्पूजाकरणैकशुद्धमनसां स्युर्वाञ्छिता लब्धयः । याः सर्वाश्रमवन्दितास्त्रिजगतामाधारभूताश्च या वन्दे शासनदेवताः परिकरै-

युक्ताः [1]सशस्त्रात्मनः || १ ||" अनेन अष्टमवलये शासनदेवीपुष्पाञ्जलिक्षेपः || "स्वर्णाभा गरुडासनाष्टसुजयुग् वामे च हस्तोच्चये वज्रं चापमथाङ्कुशं गुरुधनुः सौम्याशया बिभ्रती । तस्मिंश्चापि हि दक्षिणेऽथ वरदं चक्रं च पाशं शरान् सचक्रापरचक्रभञ्जनरता चक्रेश्वरी पातु नः || १ ||" ॐ नमः श्रीचक्रेश्वर्यै ऋषभनाथशासनदेव्यै श्रीचक्रेश्वरि सायुधा सवाहना सपरिकरा इह प्रतिष्ठामहोत्सवे आगच्छ २ इदमर्घ्यं पाद्यं बलिं चरुं गृहाण २ संनिहिता भव २ स्वाहा जलं गृहाण गन्धं॰ पुष्पं॰ अक्षतान्॰ फलानि॰ मुद्रां॰ धूपं॰ दीपं॰ नैवेद्यं॰ सर्वोपचारान् शान्तिं कुरु २ तुष्टिं कुरु २ पुष्टिं॰ ऋद्धिं॰ वृद्धिं॰ सर्वसमीहितानि देहि २ स्वाहा । १ । "गोगामिनी धवलरुक्च चतुर्भुजाढ्या वामेतरं वरदपाशविभासमाना । वामं च पाणियुगलं सृणिमातुलिङ्गयुक्तं सदाजितबला दधती पुनातु || १ ||" ॐ नमः श्रीअजितबलायै श्रीअजितनाथशासनदेव्यै श्रीअजितबले सा॰ शे॰ । २ । "मेषारूढा विशदकरणा दोश्चतुष्केण युक्ता मुक्तामालावरदकलितं दक्षिणं पाणियुग्मम् । वामं तच्चाभयफलशुभं बिभ्रती पुण्यभाजां दद्याद्भद्रं सपदि दुरितारातिदेवी जनानाम् || १ ||" ॐ नमः श्रीदुरितारये श्रीसंभवनाथशा॰ श्रीदुरितारे सा॰ शे॰ । ३ । "श्यामाभा पद्मसंस्था वलयवलिचतुर्बाहुविभ्राजमाना पाशं विस्फूर्जमूर्जस्वलमपि वरदं दक्षिणे हस्तयुग्मे । बिभ्राणा चापि वामेऽङ्कुशमपि कविषं भोगिनं च प्रकृष्टा देवीनामस्तु काली कलिकलितकलिस्फूर्तितद्भूतये नः || १ ||" ॐ नमः श्रीकाल्यै अभि-

[1] सशस्त्रासनाः इति पाठान्तरम् ।

नन्दननाथशा० श्रीकालि सा० शे० । ४ । "स्वर्णाभाम्भोरुहकृतपदा स्फारबाहाचतुष्का सारं पाशं वरदममलं
दक्षिणे हस्तयुग्मे । वामे रम्याङ्कुशमतिगुणं मातुलिङ्गं वहन्ती सद्भक्तानां दुरितहरणी श्रीमहाकालिकास्तु
ॐ नमः श्रीमहाकालिकायै श्रीसुमतिनाथशा० श्रीमहाकालिके सा० शे० । ५ । "श्यामा चतुर्भुजधरा नर-
वाहनस्था पाशं तथा च वरदं करयोर्दधाना । वामान्ययोस्तदनु सुन्दरबीजपूरं तीक्ष्णाङ्कुशं च परयोः प्रमुदे-
ऽच्युतास्तु ॥ १ ॥" ॐ नमः श्रीअच्युतायै श्रीपद्मप्रभस्वामिजि० श्रीअच्युते शे० । ६ । "गजारूढा पीता
द्विगुणभुजयुग्मेन सहिता लसन्मुक्तामालां वरदमपि सव्यान्यकरयोः । वहन्ती शूलं चाभयमपि च सा
वामकरयोर्निशान्तं भद्राणां प्रतिदिशतु शान्ता सदुदयम् ॥ १ ॥" ॐ नमः श्रीशान्तायै श्रीसुपार्श्वनाथजि०
श्रीशान्ते शेषं० । ७ । "पीता बिडालगमना भृकुटिश्चतुर्दोर्वामे च हस्तयुगले फलकं सुपर्शुम् । तत्रैव दक्षि-
णकरेऽप्यसिमुद्गरौ च बिभ्रत्यनन्यहृदयान् परिपातु देवी ॥ १ ॥" ॐ नमः श्रीभृकुटये श्रीचन्द्रप्रभस्वामिशा०
श्रीभृकुटे शे० । ८ । "वृषभगतिरथोद्यचारुबाहाचतुष्का शशधरकिरणाभा दक्षिणे हस्तयुग्मे । वरदरसज-
माले बिभ्रती चैव वामे सृणिकलशमनोज्ञा स्तात् सुतारा महर्द्ध्यै ॥ १ ॥" ॐ नमः श्रीसुतारायै श्रीसुविधि-
जिनशा० श्रीसुतारे शे० । ९ । "नीला पद्मकृतासना वरभुजैर्वेदप्रमाणैर्युता पाशं सद्वरदं च दक्षिणकरे हस्त-
द्वये बिभ्रती । वामे चाङ्कुशवर्मणी बहुगुणाऽशोका विशोका जनं कुर्यादप्सरसां गणैः परिवृता नृत्यद्भिरान-
न्दितैः ॥ १ ॥" ॐ नमः श्रीअशोकायै श्रीशीतलनाथशा० श्रीअशोके शे० । १० । "श्रीवत्साप्यथ मानवी

शशिनिभा मातङ्गजिद्वाहना वामं हस्तयुगं तदाङ्कुशयुतं तस्मात्परं दक्षिणम् । गाढं स्फूर्जितमुद्गरेण वरदेनालंकृतं बिभ्रती पूजायां सकलं निहन्तु कलुषं विश्वत्रयस्वामिनः ॥ १ ॥" ॐ नमः श्रीमानव्यै श्रीश्रेयांसजि० श्रीमानवि शे० । ११ । "श्यामा तुरगासना चतुर्दोः करयोर्दक्षिणयोर्वरं च शक्तिम् । दधती किल वामयोः प्रसूनं सुगदा सा प्रवरावताच्च चण्डा ॥ १ ॥" ॐ नमः श्रीचण्डायै श्रीवासुपूज्यजि० श्रीचण्डे शेषं० । १२ । "विजयाम्बुजगा च वेदबाहुः कनकाभा किल दक्षिणद्विपाण्योः । शरपाशधरा च वामपाण्योर्विदिता नागधनुर्धराऽवताद्वः ॥ १ ॥" ॐ नमः श्रीविदितायै श्रीविमलजि० श्रीविदिते शे० । १३ । "पद्मासनोज्वलतनुश्चतुराढ्यबाहुः पाशासिलक्षितसुदक्षिणहस्तयुग्मा । वामे च हस्तयुगलेऽङ्कुशखेटकाभ्यां रम्याङ्कुशा दलयतु प्रतिपक्षवृन्दम् ॥ १ ॥" ॐ नमः श्रीअङ्कुशायै श्रीअनन्तजि० श्रीअङ्कुशे शेषं० । १४ । "कन्दर्पा धृतपरपन्नगाभिधाना गौराभा झषगमना चतुर्भुजा च । सत्पद्माभययुतवामपाणियुग्मा कल्हाराङ्कुशभृतदक्षिणद्विपाणिः ॥ १ ॥" ॐ नमः श्रीकन्दर्पायै श्रीधर्मजिनशा० श्रीकन्दर्पे शे० । १५ । "पद्मस्था कनकरुचिश्चतुर्भुजाभूत्कल्हारोत्पलकलिताऽपसव्यपाण्योः । करकाम्बुजसव्यपाणियुग्मा निर्वाणा प्रदिशतु निर्वृतिं जनानाम् ॥ १ ॥" ॐ नमः श्रीनिर्वाणायै श्रीशान्तिजि० श्रीनिर्वाणे शे० । १६ । "शिखिगा सुचतुर्भुजाऽतिपीता फलपूरं दधती त्रिशूलयुक्तम् । करयोरपसव्ययोश्च सव्ये करयुग्मे तु भुशुंडिभृद्बलाऽव्यात् ॥१॥" ॐ नमः श्रीबलायै अच्युतायै श्रीकुन्थजि० श्रीबले शे० । १७ । "नीलाभाब्जपरिष्ठिता भुजचतुष्काढ्याप-

पद्माक्षावलिधारिणी भगवती देवार्चिता धारिणी
सव्ये करद्वन्द्वे कैरवमातुलिङ्गकलिता वामे च पाणिद्वये । सङ्घस्याप्यखिलस्य दस्युनिवहं दूरीकरोतु क्षणात् ॥ १ ॥" ॐ नमः श्रीधारिण्यै श्रीअरजि० श्रीधारिणि शे०
। १८ । "कृष्णा पद्मकृतासना शुभमयप्रोद्यच्चतुर्बाहुभृत् मुक्ताक्षावलिमद्भुतं च वरदं संपूर्णमुद्बिभ्रती । चञ्च-
दक्षिणपाणियुग्ममितरस्मिन्वामपाणिद्वये सच्छक्तिं फलपूरकं प्रियतमा नागाधिपास्यावतु ॥ १ ॥" ॐ नमः
श्रीवैरोट्यायै श्रीमल्लिजि० श्रीवैरोट्ये शे० । १९ । "भद्रासना कनकरुक्तनुरुच्चबाहुरक्षावलीवरददक्षिणपा-
णियुग्मा । सन्मातुलिङ्गयुतशूलितदन्यपाणिरच्छुप्तिका भगवती जयतान्नृदत्ता ॥ १ ॥" ॐ नमः श्रीनरदत्तायै
श्रीमुनिसुव्रतस्वामिजि० श्रीनरदत्ते शे० । २० । "हंसासना शशिसितोरुचतुर्भुजाढ्या खड्गं वरं सदपसव्य-
करद्वये च । सव्ये च पाणियुगले दधती शकुन्तं गान्धारिका बहुगुणा फलपूरमव्यात् ॥ १ ॥" ॐ नमः श्री-
गान्धार्यै श्रीनेमिजि० श्रीगान्धारि शे० । २१ । "सिंहारूढा कनकतनुरुग् वेदबाहुश्च वामे हस्तद्वन्द्वे कुशत-
नुभुवौ बिभ्रती दक्षिणेऽत्र । पाशाम्राली सकलजगतां रक्षणैकार्द्रचित्ता देव्यम्बा नः प्रदिशतु समस्ताघवि-
ध्वंसमाशु ॥ १ ॥" ॐ नमः श्रीअम्बायै श्रीअम्बे शे० । २२ । "स्वर्णाभोत्तमकुर्कुटाहिगमना सौम्या चतुर्बा-
हुभृद् वामे हस्तयुगेऽङ्कुशं दधिफलं तत्रापि वै दक्षिणे । पद्मं पाशमुदश्चयन्त्यविरतं पद्मावती देवता किंनर्ये-
चिंतनित्यपादयुगला संघस्य विघ्नं ह्रियात् ॥ १ ॥" ॐ नमः श्रीपद्मावत्यै श्रीपार्श्वजि० श्रीपद्मावति शे० । २३ ।

१ मैवार्णेने इति पाठः ।

"सिंहस्था हरिताङ्गरुग् भुजचतुष्केण प्रभावोर्जिता नित्यं धारितपुस्तकाभयलसद्वामान्यपाणिद्वया । पाशाम्भोरुहराजिवामकरभाग् सिद्धायिका सिद्धिदा श्रीसङ्घस्य करोतु विघ्नहरणं देवार्चने संस्मृता ॥ १ ॥" ॐ नमः श्रीसिद्धायिकायै श्रीवर्धमानजि० श्रीसिद्धायिके सा० शे० । २४ । ॐ नमः श्रीजिनशासनचतुर्विंशतिजिनशासनदेवीभ्यो विघ्नहारिणीभ्यः सर्ववाञ्छितदायिनीभ्यः समस्तशासनदेव्यः इह प्रतिष्ठामहोत्सवे आगच्छन्तु २ इदमर्घ्यं पाद्यं बलिं चरुं गृह्णन्तु २ संनिहिता भवन्तु २ स्वाहा जलं गृह्णन्तु २ गन्धं० पुष्पं० अक्षतान्० फलानि० मुद्रां० धूपं० दीपं० नैवेद्यं० सर्वोपचारान् गृह्णन्तु २ शान्तिं कुर्वन्तु २ तुष्टिं० पुष्टिं० ऋद्धिं० वृद्धिं० सर्वसमीहितानि यच्छन्तु स्वाहा । इति समस्तशासनदेवीनां परिपिण्डितपूजा ॥ ततो नवमवलये—

"दिक्पालाः सकला अपि प्रतिदिशं स्वं स्वं बलं वाहनं शस्त्रं हस्तगतं विधाय भगवत्स्नात्रे जगद्दुर्लभे । आनन्दोल्बणमानसा बहुगुणं पूजोपचारोच्चयं संध्याय प्रगुणं भवन्तु पुरतो देवस्य लब्धासनाः ॥ १ ॥" अनेन वृत्तेन दिक्पालवलये पुष्पाञ्जलिप्रक्षेपः । "सम्यक्त्वस्थिरचित्तचित्रितककुप्कोटीरकोटीपटत् सङ्घस्योत्कटराजपट्टपटुतासौभाग्यभाग्याधिकः । दुर्लक्षप्रतिपक्षकक्षदहनज्वालावलीसंनिभो भास्वद्भाल निभालयेन्द्र भगवत्स्नात्राभिषेकोत्सवम् ॥ १ ॥" ॐ वषट् नमः श्रीइन्द्राय तप्तकाञ्चनवर्णाय पीताम्बराय ऐरावणवाहनाय वज्रहस्ताय द्वात्रिंशल्लक्षविमानाधिपतये अनन्तकोटिसुरसुराङ्गनासेवितचरणाय सप्तानीकेश्वराय पूर्वदिगधीशाय श्रीइन्द्र सायुध सवाहन सपरिच्छद इह प्रतिष्ठामहोत्सवे आगच्छ २ इदमर्घ्यं पाद्यं बलिं चरुं गृहाण २ संनि-

द्रितो भय २ स्वाहा जलं गृहाण २ गन्धं० पुष्पं० अक्षतान्० फलानि० मुद्रां० धूपं० दीपं० नैवेद्यं० सर्वोपचारान् गृहाण २ शान्तिं कुरु २ तुष्टिं० पुष्टिं० ऋद्धिं० वृद्धिं० सर्वसमीहितं देहि २ स्वाहा । १ । "नीलाभाच्छादलीलाललितविलुलितालङ्कृतालंभविष्णुस्फूर्जद्रोचिष्णुरोचिर्निचयचतुरतावञ्चितोदञ्चिदेहः । नव्याम्भोदप्रमोदप्रमुदितसमदाकर्णविद्वेषिधूमध्वान्तध्वंसिध्वजश्रीरधिकतरधियं हव्यवाहो धिनोतु ॥ १ ॥" ॐ नमः श्रीअग्नये सर्वदेवमुखाय भूततेजोमयाय आग्नेयाय दिगधीश्वराय कपिलवर्णाय छागवाहनाय नीलाम्बराय धनुर्बाणहस्ताय श्रीअग्ने सा० शे० । २ । "मणिकिरणकदम्बाडम्बरालम्बितुंगोत्तमकरणशरण्यागण्यनित्यार्हदाज्ञाः । त्रलिभुवनविभावैः खैरगन्धा सुधान्ता गुरुवरभुवि लात्वा यान्तु ते दन्दशूकाः ॥ १ ॥" ॐ ह्रीँ फुँ नमः श्रीनागेभ्यः पातालस्वामिभ्यः श्रीनागमण्डल सा० शेषं पूर्ववत् । ३ । "दैत्यालीमुण्डखण्डीकरणसुडमरोद्दण्डगुण्डप्रचण्डदोर्दण्डाडम्बरेण प्रतिहरिदनुगं भापयन् विघ्नजातम् । कालिन्दीनीलमीलत्सलिलविलुलितालङ्कनोच्छुलायन्यस्ताङ्घ्रिर्धर्मराजो जिनवरभुवने धर्मबुद्धिं ददातु ॥ १ ॥" ॐ घं घं नमो यमाय धर्मराजाय दक्षिणदिगधीशाय समवर्तिने धर्माधर्मविचारकरणाय कृष्णवर्णाय चर्मावरणाय महिषवाहनाय दण्डहस्ताय श्रीयम सा० शे० । ४ । "प्रेतान्तप्रोतगण्डप्रतिकडितलुडन्मुण्डितामुण्डधारी दुर्वारीभूतवीर्याध्यवसितलसितापायनिर्घातनार्थी । कार्श्यामर्शप्रदीप्यत्कुणथकृतचदो नैऋतैर्व्यासपार्श्वस्तीर्थेशस्नात्रकाले रचयतु निर्ऋतिर्दुष्टसंघातघातम् ॥ १ ॥" ॐ हसकलह्रीँ नमः ह्रीँ श्रीँ निर्ऋतये नैर्ऋतदिगधीशाय धूम्रवर्णाय

व्याघ्रचर्मवृताय मुद्गरहस्ताय प्रेतवाहनाय श्रीनिर्ऋते सा० शे० ।५। "कल्लोलोल्बणलोललालितचलत्प्रालम्बमुक्तावलीलीलालम्भिततारकाढ्यगगनः सानन्दसन्मानसः । स्फूर्जन्मागधसुस्थितादिविबुधैः संसेव्यपादद्वयो बुद्धिं श्रीवरुणो ददातु विशदां नीतिप्रतानाद्भुतः ॥ १ ॥" ॐ वं नमः श्रीवरुणाय पश्चिमदिगधीशाय समुद्रवासाय मेघवर्णाय पीताम्बराय पाशहस्ताय मत्स्यवाहनाय श्रीवरुण सा० शे० ।६। "ध्वस्तध्वान्तध्वजपटलटलंपटाटंकशंकः पङ्कव्रातश्लथनमथनः पार्श्वसंस्थायिदेवः । अर्हत्सेवाविदलितसमस्ताघसंघो विदध्यात् बाह्यान्तस्थप्रचुररजसां नाशनं श्रीनभस्वान् ॥ १ ॥" ॐ यं नमः श्रीवायवे वायव्यदिगधीशाय धूसराङ्गाय रक्ताम्बराय हरिणवाहनाय ध्वजप्रहरणाय श्रीवायो सा० शे० ।७। "दिननाथलक्षसमदीप्तिदीपिताखिलदिग्विभागमणिरम्यपाणियुक् । सदगण्यपुण्यजनसेवितक्रमो धनदो दधातु जिनपूजने धियम् ॥ १ ॥" ॐ यं ३ नमः श्रीधनदाय उत्तरदिगधीशाय सर्वयक्षेश्वराय कैलासस्थाय अलकापुरीप्रतिष्ठाय शङ्ककोशाध्यक्षाय कनकाङ्गाय श्वेतवस्त्राय नरवाहनाय रत्नहस्ताय श्रीधनद सा० शे० ।८। "उद्यत्पुस्तकसस्तहस्तनिवहः संन्यस्तपापोद्भवः शुद्धध्यानविधूतकर्मविमलो लालित्यलीलानिधिः । वेदोच्चारविशारिचारुवदनोन्मादः सदा सौम्यदृग् ब्रह्मा ब्रह्मणि निष्ठितं वितनुताद्भव्यं समस्तं जनम् ॥ १ ॥" ॐ नमो ब्रह्मणे ऊर्ध्वलोकाधीश्वराय सर्वसुरप्रतिपन्नपितामहाय स्थविराय नाभिसंभवाय काञ्चनवर्णाय चतुर्मुखाय श्वेतवस्त्राय हंसवाहनाय कमलसंस्थाय पुस्तककमलहस्ताय श्रीब्रह्मन् सा० ।९। "क्षुभ्यत्क्षीराब्धिगर्भाम्बुनिवहसततक्षालिताम्भोजवर्णः

स्वं सिद्धर्द्धिप्रगल्भीकरणविरचितात्यन्तसम्पातिनृत्यः । तार्तीयाक्षिप्रतिष्ठस्फुटदहनवनज्वालया लालिताङ्गः
शम्भुः शं भासमानं रचयतु भविनां क्षीणमिथ्यात्वमोहः ॥ १ ॥" ॐ नमः श्रीईशानाय ईशानदिगधीशाय
सुरासुरनरवन्दिताय सर्वभुवनप्रतिष्ठिताय श्वेतवर्णाय गजाजिनवृताय वृषभवाहनाय पिनाकशूलधराय
श्रीईशान सा० शे० । १० । ॐ नमः सर्वेभ्यो दिक्पालेभ्यः शुद्धसम्यग्दृष्टिभ्यः सर्वजिनपूजितेभ्यः सर्वेपि
दिक्पालाः सायुधाः सवाहनाः सपरिच्छदाः इह नन्द्यावर्तपूजने आगच्छन्तु २ इदमर्घ्यं पाद्यं बलिं चरुं गृ-
ह्णन्तु २ संनिहिता भवन्तु स्वाहा जलं गृह्णन्तु २ गन्धं० पुष्पं० फलानि० मुद्रां० धूपं दीपं० नैवेद्यं० सर्वोप-
चारान् गृह्णन्तु २ शान्तिं कुर्वन्तु २ तुष्टिं० पुष्टिं ऋद्धिं० वृद्धिं० सर्वसमीहितानि यच्छन्तु स्वाहा । इति सर्व-
दिक्पालानां परिपिण्डितपूजा ॥ ततो दशमवलये—"सर्वे ग्रहा दिनकरप्रमुखाः स्वकर्मपूर्वोपनीतफलदानकरा
जनानाम् । पूजोपचारनिकरं स्वकरेषु लात्वा सन्त्वागताः सपदि तीर्थकरार्चनेऽत्र ॥ १ ॥" अनेन वृत्तेन ग्रह-
वलयेषु पुष्पाञ्जलिक्षेपः । "विकसितकमलावलीविनिर्यत्परिमललालितपूतपादवृन्दः । दशशतकिरणः करोतु
नित्यं भुवनगुरोः परमार्चने शुभौघम् ॥ १ ॥" ॐ घृणि २ नमः श्रीसूर्याय सहस्रकिरणाय रत्नादेवीकान्ताय
वेदगर्भाय यमयमुनाजनकाय जगत्कर्मसाक्षिणे पुण्यकर्मप्रभावकाय पूर्वदिगधीशाय स्फटिकोज्वलाय रक्तव-
स्त्राय कमलहस्ताय ससाश्वरथवाहनाय श्रीसूर्य सायुधः सवाहनः सपरिच्छदः इह नन्द्यावर्तपूजने आगच्छ
२ इदमर्घ्यं पाद्यं बलिं चरुं गृहाण २ संनिहितो भव २ स्वाहा जलं गृहाण २ गन्धं० पुष्पं० फलानि० मुद्रां०

धूपं०दीपं० नैवेद्यं० सर्वोपचारान्० शान्तिं कुरु २ तुष्टिं० पुष्टिं० ऋद्धिं० वृद्धिं० सर्वसमीहितानि देहि २ स्वाहा ।१। "प्रोद्यत्पीयूषपूरप्रसृमरजगतीपोषनिर्दोषकृत्यव्यावृत्तो ध्वान्तकान्ताकुलकलितमहामानदत्तापमानः। उन्माद्यत्कण्टकालीदलकलितसरोजालिनिद्राविनिद्रश्चन्द्रश्चन्द्रावदातं गुणनिवहमभिव्यातनोत्वात्मभाजाम् ॥ १ ॥" ॐ चं चं चं नमश्चन्द्राय शम्भुशेखराय षोडशकलापरिपूर्णाय तारागणाधीशाय वायव्यदिगधीशाय अमृताय अमृतमयाय सर्वजगत्पोषणाय श्वेतवस्त्राय श्वेतदशवाजिवाहनाय सुधाकुम्भहस्ताय श्रीचन्द्र सायु० शे० । २ । "ऋणाभिहन्ता सुकृताधिगन्ता सदैववक्रः क्रतुभोजिमान्यः। प्रमाथकृद्विघ्नसमुचयानां श्रीमङ्गलो मंगलमातनोतु ॥ १ ॥" ॐ हं हुं हं सः नमः श्रीमङ्गलाय दक्षिणदिगधीशाय विद्रुमवर्णाय रक्ताम्बराय भूमिस्थिताय कुदालहस्ताय श्रीमङ्गल सा० शे० । ३ । "प्रियङ्गुप्रख्याङ्गो गलदमलपीयूषनिकषस्फुरद्वाणीत्राणीकृतसकलशास्त्रोपचयधीः। समस्तप्रासीनामनुपमविधानं शशिसुतः प्रभूताराती नामुपनयतु भङ्गं स भगवान् ॥ १ ॥" ॐ ऐं नमः श्रीबुधाय उत्तरदिगधीशाय हरितवस्त्राय कलहंसवाहनाय पुस्तकहस्ताय श्रीबुध सा० शेषं० । ४ । "शास्त्रप्रस्तारसारप्रततमतिवितानाभिमानातिमानप्रागल्भ्यः शम्भुजम्भक्षयकरदिनकृद्विष्णुभिः पूज्यमानः। निःशेषास्वप्रजातिव्यतिकरपरमाधीतिहेतुर्बृहत्याः कान्तः कान्तादिवृद्धिं भवभयहरणः सर्वसङ्घस्य कुर्यात् ॥ १ ॥" ॐ जीव २ नमः श्रीगुरवे बृहतीपतये ईशानदिगधीशाय सर्वदेवाचार्याय सर्वग्रहबलवत्तराय काञ्चनवर्णाय पीतवस्त्राय पुस्तकहस्ताय श्रीहंसवाहनाय श्रीगुरो सा० शे० ।५।

"दयितसंवृतदानपराजितः प्रवरदेहि शरण्य हिरण्यदः । दनुजपूज्यजयोशन सर्वदा दयितसंवृतदानपराजितः ॥ १ ॥" ॐ सुं नमः श्रीशुक्राय दैत्याचार्याय आग्नेयदिगधीशाय स्फटिकोज्वलाय श्वेतवस्त्राय कुम्भहस्ताय तुरगवाहनाय श्रीशुक्र सा० शे० । ६ । माभूद्विपत्समुदयः खलु देहभाजां द्रागित्युदीरितलघिष्ठगतिर्निर्नितान्तम् । कादम्बिनीकलितकान्तिरनन्तलक्ष्मीं सूर्यात्मजो वितनुताद्विनयोपगूढः ॥ १ ॥" ॐ शः नमः शनैश्चराय पश्चिमदिगधीशाय नीलदेहाय नीलांबराय परशुहस्ताय कमठवाहनाय श्रीशनैश्चर सा० शे० ।७।
"सिंहिकासुतसुधाकरसूर्योन्मादसादनविषादविघातिन् । उद्यतं झटिति शत्रुसमूहं आञ्छदेव भुवनानि नयस्व ॥ १ ॥" ॐ क्षः नमः श्रीराहवे नैर्ऋतदिगधीशाय कज्जलश्यामलाय श्यामवस्त्राय परशुहस्ताय सिंहवाहनाय श्रीराहो सा० शे० । ८ । "सुखोत्पातहेतो विपद्वार्धिसेतो निपद्यासमेतोत्तरीयार्धकेतो । अभद्रानुपेतोपमाछायुकेतो जयाशंसनाहर्निशं तार्क्ष्यकेतो ॥ १ ॥" ॐ नमः श्रीकेतवे राहुप्रतिच्छन्दाय श्यामाङ्गाय श्यामवस्त्राय पन्नगवाहनाय पन्नगहस्ताय श्रीकेतो सा० शे० । ९ । "समरडमरसंगमोद्दामराडम्यराडम्यलंबोल सद्विंशनिर्मोढ्याद्रूपमाप्रासससर्पाधिपालंकृतिः । निशितकठिनखड्गखड्गाङ्गजाकुन्तविस्फोटकोदण्डकाण्डाछलीयष्टिशूलोरुचक्रक्रमभ्राजिहस्तावलिः । अतिघनजनजीवनपूर्ण विस्तीर्णसद्वर्णदेहद्युताविद्युदुद्भूतिभाग् भोगिहारोरुरत्नच्छटासंगतिः । मनुजदनुजकीकसोत्पन्नकेयूरताडङ्करम्योर्मिकास्फारशीर्पण्यसिंहासनोल्लासभास्वत्तमः क्षेत्रपः ॥ १ ॥" ॐ क्षां क्षीं क्षूं क्षौं क्षः नमः श्रीक्षेत्रपालाय कृष्णगौरकाञ्चनधूसरकपिलवर्णाय कालमेघमे-

घनादगिरिविदारणआल्हादनप्रह्लादनखञ्जकभीमगोमुखभूषणदुरितविदारणदुरितारिप्रियंकरप्रेतनाथप्रभृतिप्रसिद्धाभिधानाय विंशतिभुजादण्डाय बर्बरकेशाय जटाजूटमण्डिताय वासुकीकृतजिनोपवीताय तक्षककृतमेखलाय शेषकृतहाराय नानायुधहस्ताय सिंहचर्मावरणाय प्रेतासनाय कुक्कुरवाहनाय त्रिलोचनाय आनन्दभैरवाद्यष्टभैरवपरिवृताय चतुःषष्टियोगिनीमध्यगताय श्रीक्षेत्रपालाय सा० शे० । १० । ॐ नमः श्रीआदित्यादिग्रहेभ्यः कालप्रकाशकेभ्यः शुभाशुभकर्मफलदेभ्यः नमः कालमेघादिक्षेत्रपालेभ्यः ग्रहाः क्षेत्रपालाः सायुधाः सवाहनाः सपरिच्छदाः इह नन्द्यावर्तपूजने आगच्छन्तु इदमर्घ्यं पाद्यं बलिं चरुं गृह्णन्तु २ संनिहिता भवन्तु २ स्वाहा जलं गृह्णन्तु २ गन्धं० पुष्पं० अक्षतान्० फलानि० मुद्रां० धूपं० दीपं० नैवेद्यं० सर्वोपचारान् गृह्णन्तु २ शान्तिं कुर्वन्तु २ तुष्टिं० पुष्टिं० ऋद्धिं० वृद्धिं० सर्वसमीहितानि यच्छन्तु २ स्वाहा। इति ग्रहक्षेत्रपालानां परिपिण्डितपूजा । इति नन्द्यावर्तवलयदशकपूजाक्रमः ॥ ततः तद्भूमिपुरमध्ये प्रकीर्णकपूजा । यथा आग्नेये असुरनागसुपर्णविद्युदग्निद्वीपोदधिदिक्पवनस्तनितरूपा दशविधा भुवनपतयो निज २ वर्णवस्त्रवाहनध्वजधराः सकलत्राः सायुधाः सवाहनाः सपरिच्छदाः प्रभूतभक्तय इह नन्द्यावर्तपूजने आगच्छन्तु २ इदमर्घ्यं पाद्यं बलिं चरुं गृह्णन्तु संनिहिता भवन्तु २ स्वाहा जलं गृह्णन्तु २ गन्धं० पुष्पं० अक्षतान्० फलानि० मुद्रां० धूपं० दीपं० नैवेद्यं सर्वोपचारान्० शान्तिं कुर्वन्तु २ तुष्टिं० पुष्टिं० ऋद्धिं० वृद्धिं० सर्वसमीहितानि यच्छन्तु स्वाहा । १ । नैर्ऋते पिशाचभूतयक्षराक्षसकिंनरकिंपुरुषमहोरगगन्धर्वअणपन्नि

व्यन्तरा निज २ वर्णवस्त्रवाहनध्वजधराः स-
पणपन्निकऋषिपातिभूतपातिक्रन्दिमहाक्रन्दिकूष्मांडपतगरूपा व्यन्तरा निज २ वर्णवस्त्रवाहनध्वजधराः स-
कलत्राः सायुधाः सवाहनाः सपरिच्छदाः प्रभूतभक्त्या इह नन्द्यावर्तपूजने आगच्छन्तु २ इदमर्घ्यं पाद्यं बलिं
चरुं गृह्णन्तु २ संनिहिता भवन्तु २ स्वाहा जलं गृह्णन्तु २ गन्धं० पुष्पं० अक्षतान्० फलानि० मुद्रां० धूपं०
दीपं० नैवेद्यं सर्वोपचारान्० शान्तिं कुर्वन्तु २ तुष्टिं० पुष्टिं० ऋद्धिं० वृद्धिं० सर्वसमीहितानि यच्छन्तु २
स्वाहा । २ । वायव्ये चन्द्रसूर्यग्रहनक्षत्रतारकरूपा ज्योतिष्कादयो निज २ वर्णवस्त्रवाहन० शेषं पूर्ववत् । ३ ।
ईशाने सौधर्मेशानसनत्कुमारमाहेन्द्रब्रह्मलान्तकशुक्रसहस्रारानतप्राणतआरणाच्युतकल्पभवाः सुदर्शनसु-
प्रभमनोरमसर्वभद्रसुविशालसुमनसः सौमनसप्रियंकरादित्यग्रैवेयकभवा विजयवैजयन्तजयन्तापराजितस-
र्वार्थसिद्धिपञ्चानुत्तरभवा वैमानिकाः निज २ वर्ण० शे० । ४ । पूर्वस्यां सर्वे दशविधा जृम्भका निज २ वर्ण०
शे० । ५ । दक्षिणस्यां रुचकवासिन्यः षट्पञ्चाशद्दिकुमार्यः निज २ वर्ण० शेषं० । ६ । पश्चिमायां चतुःषष्टि-
योगिन्यः निज २ वर्ण० शे० । ७ । उत्तरस्यां सर्वे वीरभूतपिशाचयक्षराक्षसवनदेवतजलदेवतस्थलदेवताका-
शदेवतप्रभृतयो निज २ वर्ण० शेषं० । ८ । ततश्च पातालभूलोकस्वर्गलोकवासिनोष्टनवत्युत्तरशतभेदा देवा
निज २ वर्ण० शे० । १० । अत्र च सौधर्मेन्द्रस्य नन्द्यावर्तपार्श्वे इन्द्रमध्ये दिक्पालमध्ये त्रिः पूजा, ईशाने-
न्द्रस्याप्येवं त्रिः पूजा, चन्द्रसूर्ययोर्ग्रहमध्ये इन्द्रमध्ये च द्विः पूजा, तत्र स्थानान्तरे एकस्यापि पुनः पुनः पूजा
क्रमकृता स्यान्न दोषाय, यथा शान्तिकुन्थ्वराणां जिनमध्ये चक्रिमध्ये च संस्थापनपूजने, तथा च पूजास्त-

वादौ न पुनरुक्तदोषः। यत उक्तमागमे "सज्झायज्झाणतवोसहेसु उवएसथुइपयाणेसु । संतगुणकित्तणेसु अ न हुंति पुणरुत्तदोसा उ ॥ १ ॥" अत्र च पूजने प्रतिष्ठाकर्मकारिभिर्माहनब्रह्मचारिभिः स्वहस्तेन नन्द्यावर्तवलयदेवतानां पूजा विधेया, अष्टकोणाग्निकुण्डे च तत्समीपे घृतपायसखण्डैरिक्षुखण्डैर्नानाफलैः प्रत्येकं परमेष्ठिरत्नत्रयजिनमात्रविद्यादेवीलौकान्तिकेन्द्रेन्द्राणीशासनयक्षशासनयक्षिणीदिक्पालग्रहशेषदेवतानां प्रत्येकं नामग्रहणेन तत्पूजामन्त्रैः स्वाहान्तेन होमो विधेयः । क्षुल्लकयतिभ्यां तु प्रतिष्ठाकारिभ्यां सर्वसावद्यसंगविरताभ्यां केवलं पूजैव स्वयं मन्त्रं पठित्वा पार्श्वस्थगृहस्थकरैः कारणीया न तु स्वयं कार्या, यतउक्तमागमे —"सुव्वइयवइररिसिणा कारवणंपि अणुट्ठिअ मिमत्सु । वायगगच्छेसु तहा एअगणादेसणा चेव ॥ १ ॥" ततः साधुक्षुल्लकौ स्वाहास्थाने मन्त्रे होमवर्जिते नम एव कथयतः, नन्द्यावर्तपूजायां स्थापनासंख्यया परिपिण्डितपूजासंख्यया तत्संख्यजलचुलुक १ चन्दनादितिलक २ पुष्प ३ अक्षतमुष्टि ४ नालिकेरजाति ५ मुद्रा ६ धूपपुटिका ७ दीप ८ नैवेद्य शरावादि ९ नववस्तुस्वरूपं प्रगुणीकार्यं । जलाचमन २९१ चन्दनतिलक २९१ पुष्प २९१ अक्षतमुष्टि २९१ नालिकेरजाति प्रत्येक २९१ रूप्यस्वर्णमुद्रा २९१ धूपपुटिका २९१ दीप २९१ नैवेद्यशरावाः २९१ तथा च ब्राह्मणब्रह्मचारिक्रियमाणप्रतिष्ठाया एतदधिका होमार्थं घृतपायसखण्डमिश्रशराविकाः २९१ सर्वफलजातिप्रत्येकं २९१ प्रादेशमात्राः पिप्पलसहकारकपित्थोदुम्बराशोकबकुलद्रुमसमिद्गणा बहवः पञ्चाङ्गुलीमीलितहस्तेन दक्षिणेन होमः। इति नन्द्यावर्तपूजाविधिः ॥ तत्र नन्द्यावर्तमध्ये यदि चल-

विम्बं भवति तदा नन्द्यावर्तमध्ये स्थिरबिम्बं तु मनसा तत्र स्थापयेत्, तत एकनवत्युत्तरद्विशतहस्तमात्रेण सदशवस्त्रेण नन्द्यावर्तपट्टमाच्छादयेत्, नन्द्यावर्ताच्छादनोपरि नानाविधनालिकेरबीजपूरनारिंगपनसद्राक्षादिसुमधुरसुगन्धशुष्कार्द्रफलाढौकनं खाद्यकन्दजातिढौकनं च, ततो वेदिकायां चतुष्कोणेषु चतुर्गुणकुमारीकर्तितसूत्रवेष्टनं बाह्ये ततश्चतुर्दिक्षु धवलितस्थपनकोपरि यववारकस्थापनं, एकस्या एकस्या घटपरम्परायाश्चतुर्दिक्षु इत्यर्थः, अनया युक्त्या षोडश भवन्ति, यववारास्तु यवव्रीह्यङ्कुरमयाः, ततश्चतुर्षु वेदिकोणेषु बाट १ क्षीरेयी २ करम्ब ३ कूसरा ४ कुर ५ चूरिमापिंडि ६ पूपक ७ भृताः सप्त २ शरावाः स्थाप्यन्ते । ततश्चत्वारः स्वर्णकलशा मृत्कलशा वा चन्दनचर्चिताः सकंकणाः सस्वर्णमुद्राः सजलाः सपिधानाः नन्द्यावर्तचतुष्कोणेषु धवलस्थपनकेषु स्थाप्याः, घृतगुडसहितमङ्गलप्रदीपचतुष्टयं नन्द्यावर्तपट्टचतुर्दिक्षु स्थापयेत् । पुनश्चतुर्दिक्षु सहिरण्यसकपर्दिकरक्षासहितजलधान्यसहितचतुर्वारकस्थापनं, तेषु सुकुमारिकापूजाकङ्कणबन्धः, तेषामुपरि चतुर्यववारकस्थापनं, तेषां च चतुर्गुणेन कौसुम्भसूत्रेण प्रत्येकं वेष्टनम्, ततः शक्रस्तवेन चैत्यवन्दनं, ततोऽधिवासनालग्नसमये समासन्ने पुष्पसमेतऋद्धिवृद्धिमदनफलारिष्टकङ्कणारोपणं बिम्बस्य नवेन सदशेन चतुर्विंशतिहस्तप्रमाणेन चन्दनचर्चितेन पुष्पान्वितेन श्वेतवस्त्रेण बिम्बाच्छादनं, पार्श्ववेष्टने मातृशाटिका एका च देया, तदुपरि चन्दनच्छटाः पुष्पपूजनं च, ततो गुरुर्बिम्बस्याधिवासनं करोति । अधिवासनामन्त्रो यथा "ॐ नमो खीरासवलद्धीणं ॐ नमो महुआसवलद्धीणं ॐ नमो संभिन्नसोईणं ॐ नमो पयाणुसारीणं ॐ

नमो कुट्ठबुद्धीणं जमियं विज्जं पउंजामि सा मे विज्जा पसिज्झउ ॐ अवतर २ सोमे २ ॐ वज्जु २ ॐ निवज्जु २ सुमणसे सोमणसे महुमहुरे कविल ॐ कक्षः स्वाहा । अथवा ॐ नमः शान्तये हूं क्षुं ह्रं सः अनेन सर्वांगेषु हस्तन्यासेन बिम्बस्याधिवासनं । ततः शालि १ यव २ गोधूम ३ मुद्ग ४ वल्ल ५ चणक ६ चवलक ७ रूपैः सप्तधान्यैः पुष्पयुक्तैरञ्जलिभिराच्छादितबिम्बस्य स्नपनं । सप्तधान्यस्नपनवृत्तं यथा—"सर्वप्राणसमं सर्वधारणं सर्वजीवनम् । अजीवजीवदानाय भवत्वन्नं महार्चने ॥ १ ॥" पुष्पारोपणं धूपोत्क्षेपणं सर्वत्र । धूपोत्क्षेपवृत्तं यथा—"ऊर्ध्वगतिदर्शनालोकदर्शितानन्तरोर्ध्वगतिदानः । धूपो वनस्पतिरसः प्रीणयतु समस्तसुरवृन्दम् ॥ १ ॥" सपुत्राः सधवाश्चतस्रो बह्वयो वा स्त्रियो निरुंछनविधिं कुर्वन्ति, ताभ्यो हिरण्यदानं पुनर्बिम्बाग्रे प्रचुरमोदकपक्वान्नढौकनं, ततः षष्ट्यधिकशतत्रयक्रयाणकपृथक्पुटिकाढौकनं, श्राद्धा आरात्रिकावतारणं कुर्वन्ति, केचिन्मङ्गलं प्रदीपं च कुर्वन्ति, ततश्चैत्यवन्दनं ततोऽधिवासना देव्याराधनार्थं "करेमि काउस्सग्गं" गुरुश्राद्ध इति कायोत्सर्गं करोति "अन्नत्थ यावदप्पाणं वोसिरामि" चतुर्विंशतिस्तवचिन्तनं पारयित्वा स्तुतिकथनं यथा—"विश्वाशेषसुवस्तुषु मन्त्रैर्याजस्रमधिवसति वसतौ । सेमामवतरतु श्रीजिनतनुमधिवासनादेवी ॥ १ ॥" अथवा "पातालमन्तरिक्षं भवनं वा या समाश्रिता नित्यम् । सात्रावतरतु जैनीं प्रतिमामधिवासनादेवी ॥ १ ॥" ततः श्रुतदेवीशान्तिदेव्यम्बाक्षेत्रदेवीशासनदेवीसमस्तवैयावृत्तकरकायोत्सर्गाः स्तुतयश्च पूर्ववत् । पुनः शक्रस्तवकथनं ततो गुरुणोपविश्य बिम्बाग्रे स्वागताः जिनाः सिद्धाः प्रसाददाः

सन्तु, प्रसादं धिया कुर्वन्तु, अनुग्रहपरा भवन्तु, भव्यानां स्वागतमनुस्वागतमिति विज्ञप्तिकावचने धारणा
कार्या । इत्यधिवासनाविधिः ।
अधिवासनारात्रौ दिवा प्रतिष्ठा प्रायः करणीया । इतरथा समासन्नयोरधिवासनाप्रतिष्ठालग्नयोः किंचि-
त्कालं विलम्बं विधाय अधिवासनातो विभिन्ने लग्ने प्रतिष्ठा कार्या । तस्य चायं विधिः—प्रथमं "उन्मृष्टरि-
ष्टदुष्टग्रहगतिदुःस्वप्नदुर्निमित्तादि । संपादितहितसंपन्नामग्रहणं जयति शान्तेः ॥ १ ॥" इति वृत्तेन सर्वदिक्षु
सजलं शान्तिबलिदानम् । ततश्चैत्यवन्दनम् । प्रतिष्ठादेवतायाः कायोत्सर्गः । चतुर्विंशतिस्तवचिन्तनं पार-
यित्वा स्तुतिश्च यथा—"यदधिष्ठिताः प्रतिष्ठाः सर्वाः सर्वास्पदेषु नन्दन्ति । श्रीजिनबिम्बं प्रविशतु[1] सदेवता
सुप्रतिष्ठमिदम् ॥ १ ॥" ततः शासनदेवीक्षेत्रदेवीसमस्तवैयावृत्यकरकायोत्सर्गाः स्तुतयश्च पूर्ववत् । ततो धू-
पोत्क्षेपः । ततः प्रतिष्ठालग्ने गुरुः सर्वजनं दूरीकृत्य परिच्छदां बध्वा बिम्बस्य वस्त्रमपनयेत् । घृतपूर्णपात्रं पुरो
ढौकयेच । ततो रूप्यपात्रस्थापितसौवीरघृतमधुशर्करापिष्टमिलितं स्वर्णशलाकया गृहीत्वा प्रतिमानेत्रोन्मी-
लनं करोति वर्णन्यासपूर्वकम् । ह्रां ललाटे । श्रीं नयनयोः । ह्रीं हृदये । रैं सर्वसंधिषु । लौं प्राकारः । कुम्भ-
केन न्यासः । शिरसि अभिमन्त्रितवासदानं सूरिमन्त्रेण वासाभिमन्त्रणमाचार्यपदयुक्तिवत् । ततः चन्दना-
क्षतपूजिते बिम्बदक्षिणकर्णे सप्तवेलमाचार्यमन्त्रकथनं ततस्त्रिपञ्चसप्तवारान् प्रतिष्ठामन्त्रेण दक्षिणहस्तेन बिम्बं

1 मा विशतु इति पाठः ।

स्पृशेत् चक्रमुद्रया १ प्रतिष्ठामन्त्रो यथा—ॐ वीरे २ जय वीरे सेणवीरे महावीरे जये विजये जयन्ते अपराजिते ॐ ह्रीं स्वाहा । अयं प्रतिष्ठामन्त्रः । ततो दधिभाण्डढौकनं दर्पणदर्शनं दृष्टेश्च रक्षणाय सौभाग्याय स्थैर्याय च सौभाग्यपरमेष्ठिसुरभिप्रवचनगरुडरूपपञ्चमुद्राकरणपूर्वकं ॐ अवतर २ सोमे सोमं कुरु २ ॐ वग्गु २ निवग्गु २ सुमणसे सोमणसे महुमहुरे ॐ कविलकक्षः स्वाहा इति मन्त्रः सर्वाङ्गेषु न्यसनीयः । ततः स्त्रीभिर्निरुञ्छनं । ततः स्थिरप्रतिमाया मन्त्रेण स्थिरीकरणं । मन्त्रो यथा—ॐ स्थावरे तिष्ठ २ स्वाहा । चलप्रतिमायाः पुनरयं मन्त्रो न्यसनीयः । ॐ जये श्रीं ह्रीं सुभद्रे नमः । ततः पद्ममुद्रया मन्त्रेण रत्नासनस्थापनम् । इदं रत्नमयमासनमलंकुर्वन्तु इहोपविष्टा भव्यानवलोकयन्तु हृष्टदृष्ट्यादिजिनाः स्वाहा । ततः ॐ ह्वीं गन्धान् प्रतीच्छन्तु स्वाहा । ॐ ह्वीं पुष्पाणि प्रतीच्छन्तु स्वाहा । ॐ ह्वीं धूपं भजन्तु स्वाहा । इति मन्त्रैः क्रमेण गन्धपुष्पधूपदानं । ततो मन्त्रपाठपूर्वकं पुष्पाञ्जलित्रयप्रक्षेपः । मन्त्रो यथा—ॐ ह्वीं सकलसत्वालोककर अवलोकय भगवन् अवलोकय स्वाहा । ततः परिच्छदामपनीय सर्वसंघं संघट्य गन्धपुष्पधूपदीपनैवद्यवस्त्रालंकारैर्महापूजा । ततो मोरण्डसुकुमारिकाप्रभृतिनैवेद्यदानं लवणारात्रिकावतारणं । ततः ॐ ह्वीं भूतबलिं जुषन्तु स्वाहा इति मन्त्रेण भूतबलिदानं बिम्बाग्रे । ततः संघसहितेन गुरुणा चैत्यवन्दनं विधेयं । ततः पुनः श्रुतदेवीशान्तिदेवीक्षेत्रदेवता अम्बासमस्तवैयावृत्यकरकायोत्सर्गजाः स्तुतयश्च पूर्ववत् । ततः प्रतिष्ठादेवीकायोत्सर्गस्तुतिश्च यथा—"यदधिष्ठिताः प्रतिष्ठाः सर्वाः सर्वास्पदेषु नन्दन्ति । श्रीजिनबिम्बं सा विशतु देवता सुप्रति-

क्षितमिदं ॥ १ ॥” ततो नमस्कारपूर्वकं शक्रस्तवं पठित्वा शान्तिस्तवभणनं । ततः सङ्घसमन्वितेन गुरुणा
मङ्गलगाथापाठपूर्वकं असंमिताक्षताञ्जलिक्षेपो विधेयः । मङ्गलगाथा यथा—“जह सिद्धाणपइट्ठा तिलोयचू-
डामणिम्मि सिद्धपये । आचन्दसूरिअं तह होउ इमा सुप्पइट्ठित्ति ॥ १ ॥ जह सग्गस्स पइट्ठा समग्गलो-
यस्स मज्झयारम्मि । आचन्दसू० ॥ २ ॥ जह मेरुस्स पइट्ठा समग्गलोयस्स मज्झयारम्मि । आचन्दसू० ॥३॥
जह जम्बुस्स पइट्ठा समग्गदीवाण मज्झयारम्मि । आचन्दसू० ॥ ४ ॥ जह लवणस्स पइट्ठा समग्गऊदीण
मज्झयारम्मि । आचन्दसूरिअं तह होउ इमा सुप्पइट्ठित्ति ॥ ५ ॥” तत आभिरेव गाथाभिः पुष्पाञ्जलि-
क्षेपः । ततो मुखोद्घाटनं । महापूजामहोत्सवः । ततः प्रवचनमुद्रया गुरुर्धर्मदेशनां करोति । देशना यथा—
“घुइदाण मंतनासो आहवणं तह जिणाण दिसिबन्धो । नेत्तुम्मीलण देसण गुरुअहिगारा इहं कप्पे ॥ १ ॥
रायायलेण वड्ढइ जसेण धवलेण सयलदिसिभाए । पुन्नं वन्धइ विउलं सुपइट्ठा जस्स देसम्मि ॥ २ ॥ अवह-
णइ रोगमारिं दुब्भिक्खं हणइ कुणइ सुहभावे । भावेण कीरमाणा सुपइट्ठा सयललोयस्स ॥ ३ ॥ जिणबि-
म्बपइट्ठं जे करन्ति तह कारवन्ति भत्तीए । अणुमन्नन्ति पइदिणं सव्वे सुहभाइणो हुन्ति ॥ ४ ॥ दव्वं तमे-
वमन्नह जिणबिम्बपइट्ठणाइ कज्जेसु । जं लग्गइ तं सहलं दोग्गइ जणणं हवइ सेसं ॥ ५ ॥ एवं नाऊण सया
जिणवरबिम्बस्स कुणह सुपइट्ठं । पावेइ जेण जरामरणवज्जिअं सासयं ठाणं ॥ ६ ॥” इत्येते प्रतिष्ठागुणाः ॥
ततोऽष्टाह्निकामहिमा । गुरोर्वस्त्रपात्रपुस्तकवसतिकङ्कणमुद्रादिदानं । सर्वसाधुभ्यो वस्त्रान्नदानं सङ्घपूजा

पञ्चरत्नादिवर्तनकारिणीभ्यो वस्त्रभूषणदानं स्नपनकारेभ्यः स्वर्णकटकमुद्रादानं अञ्जनपेषिण्यै कन्यायै वस्त्रभूषणमातृशाटिकादानं । ततस्त्रिपञ्चसप्तनवदिनानि देशकालाद्यपेक्षया प्रतिष्ठादेवतास्थापनं नन्द्यावर्तरक्षणं च । तत्र प्रत्यहं उत्तरोत्तरस्नात्रपूजनविधिर्विधेयः । सचायमुच्यते । प्रथमं पूर्वोक्तश्राद्धदिनचर्यामध्यगतार्हत्कल्पोक्तविधिना जिनपूजनं आरात्रिककरणं च । ततः श्राद्धः स्नपनपीठं प्रक्षाल्य स्वयं स्नातानुलिप्तः शुचिवस्त्रधारी कङ्कणस्वर्णमुद्राङ्कितहस्तो जिनोपवीतोत्तरासङ्गधर उत्तरासङ्गवसनेन मुखमाच्छाद्य चलस्थिरप्रतिमाया अग्रतः स्थित एकाकी द्वित्रिचतुःपञ्चयुतो वा कुसुमाञ्जलिं सर्वैः समं करसंपुटे निधाय इति पठेत् ॥

—"लक्ष्मीरघ्यानवद्यप्रतिभपरिनिगद्याद्य पुण्यप्रकर्षोत्कर्षै[1]राकृष्यमाणा करतलमुकुलारोहमारोहति स्म । शश्वद्विश्वातिविश्वोपशमविशदतोल्लासविस्मापनीयं स्नात्रं सुत्रामयात्राप्रणिधि जिनविभोर्यत्समारब्धमेतत् ॥ १ ॥ कल्याणोल्लासलास्यप्रसृमरपरमानन्दकन्दायमानं मन्दामन्दप्रबोधप्रतिनिधिकरुणाकारकन्दायमानम् । स्नात्रं श्रीतीर्थभर्तुर्घनसमयमिवात्मार्थकन्दायमानं दद्याद्भक्तेषु पापप्रशमनमहिमोत्पादकं दायमानम् ॥ २ ॥ देवादेवाधिनाथप्रणमननवनानन्तसानन्तचारिप्राणप्राणावयानप्रकटितविकटव्यक्तिभक्तिप्रधानम् । शुक्लं शुक्लं च किंचिचिदधिगमसुखं सत्सुखं स्नात्रमेतन्नन्यानन्याप्रकृष्टं दिशतु शमवतां संनिधानं निधानं ॥ ३ ॥ विश्वात्संभाव्य लक्ष्मीः क्षपयति दुरितं दर्शनादेव पुंसामासन्नो नास्ति यस्य त्रिदशगुरुरपि प्राज्यराज्यप्रभावे ।

[1] राकृष्टमाना इति पाठः ।

भावान्निर्मुच्य शोच्यानजनि जिनपतिर्यः समायोगयोगी तस्येयं स्नात्रवेला कलयतु कुशलं कालधर्मप्रणाशे
॥ ४ ॥ नालीकं यन्मुखस्याप्युपमितिमलभत्क्वापि वार्तान्तराले नालीकं यत्र किंचित्प्रवचन उदितं शिष्यप-
र्षत्समक्षम् । नालीकं चापशक्त्या व्यरचयत न वै यस्य सद्रोहमोहं नालीकं तस्य पादप्रणतिविरहितं नोऽस्तु
तत्स्नात्रकाले ॥ ५ ॥” स्रग्धरावृत्तानि । अनेन वृत्तपञ्चकेन कुसुमाञ्जलिक्षेपः ॥ १ ॥ “फणिनिकरविवेष्टनेऽपि
येनोज्झितमतिशैत्यमनारतं न किंचित् । मलयशिखरिशेखरायमाणं तदिदं चन्दनमर्हतोऽर्चनेऽस्तु ॥ १ ॥”
अनेन वृत्तेन चन्दनचर्चनं । शक्रस्तव पाठः—“ऊर्ध्वाधोभूमिवासित्रिदशदनुसुतक्ष्मास्पृशां घ्राणहर्षप्रौढि-
प्रासप्रकर्षः क्षितिरुहरजसः क्षीणपापावगाहः । धूपोऽकूपारकल्पप्रभवमृतिजराकष्टविस्पष्टदुष्टस्फूर्जत्संसारपा-
राधिगममतिधियां विश्वभर्तुः करोतु ॥ १ ॥” अनेन वृत्तेन सर्वकुसुमाञ्जल्यन्तराले धूपदानं बिम्बस्य ॥ १ ॥
पुनः कुसुमाञ्जलिं करे गृहीत्वा—“कल्पायुःस्थितिकुम्भकोटिविटपैः सर्वैस्तुराषाड्गणैः कल्याणप्रतिभासनाय
चिततप्रव्यक्तभक्त्या नतैः । कल्याणप्रसरैः पयोनिधिजलैः शक्त्याभिषिक्ताश्च ये कल्याणप्रभवाय सन्तु सु-
धियां ते तीर्थनाथाः सदा ॥ १ ॥” रागद्वेषजविग्रहप्रमथनः संक्लिष्टकर्मावलीविच्छेदादपविग्रहः प्रतिदिनं
देवासुरश्रेणिभिः । सम्यक्चार्चितविग्रहः सुतरसा निर्धूतमिथ्यात्वचक्रेजःक्षिप्तपविग्रहः स भगवान्भूयाद्भ-
वोच्छित्तये ॥ २ ॥ संक्षिप्ताश्रवविक्रियाक्रमणिकापर्युल्लसत्संवरं षण्मध्यप्रतिवासिवैरिजलधिप्रष्टम्भने संव-
रम् । उद्यत्कामनिकामदाहहुतभुग्विध्यापने संवरं वन्दे श्रीजिननायकं मुनिगणप्राप्तप्रशंसं वरम् ॥ ३ ॥ श्री-

तीर्थेश्वरमुत्तमैर्निजगुणैः संसारपाथोनिधेः कल्लोलप्लवमानवप्रवरतासंधानविध्यापनम् । वन्देऽनिन्द्यसदागमार्थकथनप्रौढप्रपञ्चैः सदा कल्लोलप्लवमानवप्रवरतासंधानविध्यापनम् ॥ ४ ॥ स्नात्रं तीर्थपतेरिदं सुजनताखानिः कलालालसं जीवातुर्जगतां कृपाप्रथनकृत्क्षमं सुराधीश्वरैः । अङ्गीकुर्म इदं भवाच्च बहुलस्फूर्तैः प्रभावैर्निजैः स्नात्रं तीर्थपतेरिदं सुजनताखानिः कलालालसम् ॥ ५ ॥" शार्दूलविक्रीडितवृत्तानि । अनेन वृत्तपञ्चकेन कुसुमाञ्जलिप्रक्षेपः । "दूरीकृतो भगवतान्तरसंश्रयो यो ध्यानेन निर्मलतरेण स एव रागः । मुक्त्यै सिषेविषुरमुं जगदेकनाथमङ्गे विभाति निवसन् घुसृणच्छलेन ॥ १ ॥" अनेन वृत्तेन कुङ्कुमचर्चनं । शक्रस्तवपाठः ऊर्ध्वाधो० । अनेन वृत्तेन धूपदानम् ॥ पुनः कुसुमाञ्जलिं करे गृहीत्वा—"प्रभोः पादद्वन्द्वे वितरणसुधाभुक्शिखरिणीव संभूतश्रेयो हरिमुकुटमालाशिखरिणी । विभाति प्रश्लिष्टा समुदयकथा वैशिखरिणी न तेजःपुञ्जाढ्या सुखरसनकाङ्क्षाशिखरिणी ॥ १ ॥ जगद्वन्द्या मूर्तिः प्रहरणविकारैश्च रहितो विशालां तां मुक्तिं सपदि सुददाना विजयते । विशालां तां मुक्तिं सपदि सुददाना विजयते दधाना संसारच्छिदुरपरमानन्दकलिता ॥ २ ॥ भवाभासंसारं हृदिहरणकम्पं प्रति नयत् कलालम्बः कान्तप्रगुणगणनासादकरणः । तृतीयचतुर्थौ पादौ प्रथमद्वितीयतुल्यावेव ज्ञेयौ ॥ ३ ॥ जयं जीवं भानुं बलिनमनिशं संगत इलाविलासः सत्कालक्षितिरलसमानो विसरणे । चतुर्थपद्येऽपि प्रथमद्वितीयपादौ तुल्यावेव तृतीयचतुर्थावेव ज्ञेयौ ॥ ४ ॥ अमाद्यद्वेषोऽर्हन्नवनमनतिक्रान्तकरणैरमाद्यद्वेषोऽर्हन्नवनमनतिक्रान्तकरणैः । सदा रागत्यागी विलसदनवद्यो वि-

मथनः सद्रागत्यागी विलसदनवद्यो विमथनः ॥ ५ ॥" शिखरिणीवृत्तानि । अनेन वृत्तपञ्चकेन कुसुमाञ्ज-
लिक्षेपः । "घ्राणतर्पणसमर्पणापटुः कुसदेवघटनागवेषणः । यक्षकर्दम इनस्य लेपनात्कर्दमं हरतु पापसंभवम्
॥ १ ॥" अनेन वृत्तेन यक्षकर्दमविलेपनं बिम्बस्य । पुनः शक्रस्तवपाठः । ऊर्ध्वाधो० । अनेन वृत्तेन धूपोत्क्षेपः
॥ ३ ॥ पुनः कुसुमाञ्जलिं करे गृहीत्वा—"आनन्दाय प्रभव भगवन्नङ्गसङ्गावसान आनन्दाय प्रभव भगवन्न-
ङ्गसङ्गावसान । आनन्दाय प्रभवभगवन्नङ्गसङ्गावसान आनन्दाय प्रभवभगवन्नङ्गसङ्गावसान ॥ १ ॥ [1]भालप्राप्त-
प्रस्मरमहाभागनिर्मुक्तलोभं देवव्रातप्रणतचरणाम्भोज हे देवदेव । जातं ज्ञानं प्रकटभुवनव्रातसज्जन्तुजातं
हंसश्रेणीधवलगुणभाक् सर्वदा ज्ञातहंसः ॥ २ ॥ जीवन्नन्तर्विषमविषयच्छेदक्षसासिवार जीवस्तुल्यप्रथितजन-
नाम्भोनिधौ कर्णधारः । जीवप्रौढिप्रणयनमहासूत्रणासूत्रधार जीवस्पर्धारहितशिशिरेन्दोपमेयाब्दधार ॥ ३ ॥
पापाकाङ्क्षामथन मथनप्रौढिविध्वंसिहेतो क्षान्त्याधास्थानिलय निलयश्रान्तिसंप्राप्ततत्क । साम्यकाम्यक्षयन-
नयनव्यासिजातावकाश स्वामिन्नन्दाशरणशरणप्राप्तकल्याणमाला ॥ ४ ॥ जीवाः सर्वे रचितकमल त्वां श-
रण्यं समेताः क्रोधाभिख्याज्वलनकमलकान्तविश्वारिचक्रम् । भव्यश्रेणीनयनकमलप्राग्विबोधैकभानो मोहा-
सौख्यप्रजनकमलच्छेदमस्मासु देहि ॥ ५ ॥" मन्दाक्रान्तावृत्तानि । अनेन० । "निरामयत्वेन मलोज्झितेन
गन्धेन सर्वप्रियताकरेण । गुणैस्त्वदीयाऽतिशयानुकारी तवागमां गच्छतु देवचंद्रः ॥ १ ॥" अनेन वृत्तेन बिम्बे

१ लाभप्राप्त इति पाठः । २ माल इति पाठः ।

कर्पूरारोपणम् । पुनः शक्रस्तवपाठः । ॐ० धूपोत्क्षेपः ॥४॥ पुनः कु०—"संसारवारिनिधितारण देवदेव संसारनिर्जितसमस्तसुरेन्द्रशैल । संसारबन्धुरतया जितराजहंस संसारमुक्त कुरु मे प्रकटं प्रमाणम् ॥ १ ॥ रोगादिमुक्तकरणप्रतिभाविभास कामप्रमोदकरणव्यतिरेकघातिन् । पापाष्टमादिकरणप्रतपःप्रवीण मां रक्ष पातकरणश्रमकीर्णचित्तम् ॥ २ ॥ त्वां पूजयामि कृतसिद्धिरमाविलासं नम्रक्षितीश्वरसुरेश्वरसद्विलासम् । उत्पन्नकेवलकलापरिभाविलासं ध्यानाभिधानमयचंचदनाविलासम् ॥ ३ ॥ गम्यातिरेकगुणपापभरावगम्या न व्याप्नुते विषयराजिरपारनव्या । सेवाभरेण भवतः प्रकटेरसे वा तृष्णा कुतो भवति तुष्टिव(म)तां च तृष्णा ॥४॥ वन्दे त्वदीयवृषदेशनसद्मदेवजीवातुलक्षितिमनन्तरमानिवासम् । आत्मीयमानकृतयोजनविस्तराढ्यं जीवातुलक्षितिमनन्तरमानिवासम् ॥ ५ ॥" वसन्ततिलकावृत्तानि । अनेन० । "नैर्मल्यशालिन इमेप्यजडा अपिण्डाः संप्राप्तसद्गुणगणा विपदां निरासाः । त्वद्ज्ञानवज्जिनपते कृतमुक्तिवासा वासाः पतन्तु भविनां भवदीयदेहे ॥ १ ॥" अनेन वृत्तेन बिम्बे वासक्षेपः । पुनः शक्रस्तवपाठः ॐ० धूपोत्क्षेपः ॥ ५ ॥ पुनः कु०—"सुरपतिपरिक्लृप्तं त्वत्पुरो विश्वभर्तुः कलयति परमानन्दक्षणं प्रेक्षणीयम् । न पुनरधिकरागं शान्तचित्ते विधत्ते कलयति परमानन्दक्षणं प्रेक्षणीयम् ॥ १ ॥ सदयसदयवार्तानर्तितामर्त्यहर्षा विजयविजयपूजाविस्तरे सन्निकर्षा । विहितविहितबोधादेशना ते विशाला कलयकुलंयमुच्चैर्मय्यनल्पार्द्रचित्ते ॥ २ ॥ विरचितमहिमानं

१ पदे किल इति पाठः । २ मयचन्हनताविलासं इति । ३ मुक्तिः इति पाठः ।

माहिमानन्दरूपं प्रतिहतकलिमानं कालिमानं क्षिपन्तम् । जिनपतिमभिवन्दे माभिवन्देतिघातं सुविशद-
गुणभारं गौणभारङ्गसारम् ॥ ३ ॥ सुभवभृदनुकम्पानिर्विशेषं विशेषं क्षपितकलुषसंघातिप्रतानं प्रतानम् ।
पदयुगमभिवन्दे ते कुलीनं कुलीनं उपगतसुरपर्षत्सद्धिमानं विमानम् ॥ ४ ॥ किरणकिरणदीप्तिर्विस्तरागो-
तिरागो विधुतविधुतनूजाक्षान्तिसाम्योऽतिसाम्यः । विनयविनययोग्यः संपरायो परायो जयति जयतिरो-
धानैकदेहः कदेहः ॥ ५ ॥" मालिनीवृत्तानि। अनेन० "श्रितफणपतिभोगः क्लृप्तसर्वाङ्गयोगः श्लथितसदृढरोगः
श्रेष्ठनापोपभोगः। सुरवपुपितरोगः सर्वसंपन्नभोगः स्फुटमृगमदभोगः सोऽस्तु सिद्धोपयोगः ॥ १ ॥" अनेन
वृत्तेनयिम्बे मृगमदलेपः। पुनः शक्रस्तवपाठः। ऊ० धूपोत्क्षेपः ॥ ६ ॥ पुनः कु०—"यशाश्वारशुभ्रीकृतानेकलोकः
सुसिद्धान्तसन्तर्पितच्छेकलोकः । महातत्त्वविज्ञायिसंवित्कलोकः प्रतिक्षिप्तकर्मारिवैपाकलोकः ॥ १ ॥ विमा-
नाधिनाथस्तुताङ्घ्रिद्वयश्रीविमानातिरेकाशयः काशकीर्तिः । विमानाप्रकाशैर्महोभिः परीतो विमानायिकैर्ल-
क्षितो नैव किंचित् ॥ २ ॥ क्षमासाधनानन्तकल्याणमालः क्षमासज्जनानन्तवन्द्याङ्घ्रियुग्मः । जगद्भावनान-
न्तविस्तारितेजा जगद्व्यापनानन्तपूःसार्थवाहः ॥ ३ ॥ वपुःसंकरं संकरं खण्डयन्ति सहासंयमं संयमं संत-
नोति। कलालालसं लालसं तेजसे तं सदाभावनं भावनं स्थापयामि ॥ ४ ॥ विशालं परं संयमस्थं विशालं
विशेषं सुविस्तीर्णलक्ष्मीविशेषम्। नयानन्दरूपं स्वभक्तान्नयानं जिनेशं स्तुतं स्तौमि देवं जिनेशम् ॥ ५ ॥"
भुजङ्गप्रयातवृत्तानि। अनेन०। "देवादेवाद्यभीष्टः परमपरमहानन्ददाताददाता कालः कालप्रमाथी विशार-

विशरणः संगतश्रीगतश्रीः । जीवाजीवाभिमर्शः कलिलकलिलताखण्डनार्होडनार्हो द्रोणाद्रोणास्यलेपः कलयति लयतिग्मापवर्गंपवर्गम् ॥ १ ॥" अनेन वृत्तेन बिम्बे कालागुरुलेपः। पुनः शक्रस्तवपाठः। ऊ० धूपोत्क्षेपः ॥ ७ ॥ पुनः कु०—"विधूतकर्मारिबलःसनातनो विधूतहारावलितुल्यकीर्तिभाक् । प्रयोगमुक्तातिशयोर्जितस्थितिः प्रयोगशाली जिननायकः श्रिये ॥ १ ॥ सुपुण्यसंदानितकेशवप्रियः सदैवसंदानितपोविधानकः । सुविस्तृताशोभनवृत्तिरेन्द्रकस्तिरस्कृताशोभनपापतापनः ॥ २ ॥ स्थितातातिः पुण्यभृतां क्षमालया पुरोपि यस्य प्रथिताक्षमालया । तमेव देवं प्रणमामि सादरं पुरोपचीर्णेन महेन सादरं ॥ ३ ॥ कलापमुक्तव्रतसंग्रहक्षमः कलापदेवासुरवन्दितक्रमः । कलापवादेन विवर्जितो जिनः कलापमानं वितनोतु देहिषु ॥ ४ ॥ निदेशसंभावितसर्वविष्टपः सदाप्पदंभावित दस्युसंहतिः । पुराजनुर्भावितपोमहोदयः सनामसंभावितसर्वचेष्टितः ॥ ५ ॥" वंशस्थ वृत्तानि । अनेन० । "विभूषणोऽप्यद्भुतकान्तविभ्रमः सुरूपशाली धुतभीरविभ्रमः । जिनेश्वरो भात्यनघो रविभ्रमः प्रसादकारी[3] महसातिविभ्रमः ॥ १ ॥" अनेन वृत्तेन बिम्बात्पुष्पालंकारावतरणम् । पुनः श० ऊ० धूपोत्क्षेपणं ॥ ८ ॥ पुनः कु०—"प्रासंगतासं जिननाथचेष्टितं प्रासंगमत्यद्भुतमोक्षवर्त्मनि । प्रासंगतां त्यक्तभवाश्रयाशये प्रासंगवीराय्यभिदे नमांसि ते ॥ १ ॥ कल्याणकल्याणकपञ्चकस्तुतः संभारसंभारमणीयविग्रहः । संतानसंतानवसंश्रितस्थितिः कन्दर्पकन्दर्पभराज्जयेज्जिनः ॥ २ ॥ विश्वान्धकारैककराप-

१ विस्मृता इति पाठः । २ स्तुतमीरु इति पाठः । ३ प्रमाथकारी इति पाठः ।

वारणः क्रोधेभविस्फोटकरापवारणः । सिद्धान्तविस्तारकरापवारणः श्रीवीतरागोऽस्तु करापवारणः ॥ ३ ॥
संभिन्नसंभिन्ननयप्रमापणः सिद्धान्तसिद्धान्तनयप्रमापणः । देवाधिदेवाधिनयप्रमापणः संजातसंजातनयप्रमा-
णः ॥ ४ ॥ कालापयानं कलयत्कलानिधिः कालापरश्लोकचिताखिलक्षितिः । कालापवादोज्झितसिद्धिसं-
गतः कालापकारी भगवान् श्रियेऽस्तु नः ॥ ५ ॥" इन्द्रवंशावृत्तानि । अनेन० । "प्रकृतिभासुरभासुरसेवितो
नृनसुराचलराचलसंस्थितिः । स्नपनपेपणपेपणयोग्यतां वहतु संप्रति संप्रतिविष्टरः ॥ १ ॥" अनेन वृत्तेन
स्नपनपीठक्षालनं । पुनः शा० उ० धूपोत्क्षेपः । ९ । कु०—"निहितसत्तमसत्तमसंश्रयं ननु निरावरणं वरणं श्रि-
याम् । धृतमदः करणं करणं धृतेर्नमत लोकगुरुं कगुरुं सदा ॥ १ ॥ सदभिनन्दननन्दनशोष्यको जयति जीव-
नजीवनशैलभाक् । उदितकंदलकंदलखण्डनः प्रथितभारतभारतदेशनः ॥ २ ॥ वृषविधापनकार्यपरम्परासु-
सदनं सदनं चपलं भुवि । अतिवसौख्यकुले परमे पदे दकमलंकमलंकमलंभुवि ॥ ३ ॥ तव जिनेन्द्र विभाति
सरस्वती प्रवरपारमिता प्रतिभासिनी । न यदुपांतगताऽवति बुद्धगीः प्रवरपारमिताप्रतिभासिनी ॥ ४ ॥ सद-
नुकम्पन कंपनवर्जित क्षतविकारणकारणसौहृद । जय कृपावनपावनतीर्थकृत् विमलमानस मानससद्यशः
॥ ५ ॥" द्रुतविलम्बितवृत्तानि । अनेन० । "न हि मलभरो विश्वस्वामिंस्त्वदीयतनौ क्वचिद्विदितमिति च
प्राज्ञैः पूर्वैरथाप्यधुनाभवैः । स्नपनसलिलं स्पृष्टं सद्भिर्महामलमान्तरं नयति निधनं मार्ज्यं बिम्बं वृथा तव
देव हि ॥ १ ॥" अनेन वृत्तेन बिम्बमार्जनं । पुनः शा० ऊ० धूपोत्क्षेपः । १० । पुनः कु०—"संवरः प्रतिनियु-

क्तसंवरो विग्रहः प्रकमनीयविग्रहः । संयतः सकलुषैरसंयतः पङ्कहृद्दिशतु शान्तिपङ्कहृत् ॥ १ ॥ जम्भजित्प्रणतसूरजम्भजित्संगतः शिवपदं सुसंगतः । जीवनः सपदि सर्वजीवनो निर्वृतिर्भविकदत्तनिर्वृतिः ॥ २ ॥ निर्जरप्रतिनुतश्च निर्जरः पावनः श्रितमहात्रपावनः । नायको जितदयाविनायको हंसगः सविनयोरुहंसगः ॥३॥ धारितप्रवरसत्कृपाशयः पाशयष्टिधरदेवसंस्तुतः । संस्तुतो दमवतां सनातनो नातनः कुगतिमङ्गभृन्मृधा ॥ ४ ॥ लोभकारिपरिमुक्तभूषणो भूषणो विगतसर्वपातकः । पातकः कुमनसां महाबलो हावलोपकरणो जिनः श्रिये ॥ ५ ॥" रथोद्धतावृत्तानि । अनेन० । "कार्यं कारणमीश सर्वभुवने युक्तं दरीदृश्यते त्वत्पूजाविषयेद्वयं तदपि न प्राप्नोति योगं क्वचित् । यस्मात्पुष्पममीभिरर्चकजनैस्त्वन्मस्तके स्थाप्यते तेषामेव पुनर्भवी शिवपदे स्फीतं फलं प्राप्नुयात् ॥ १ ॥" अनेन वृत्तेन बिम्बशिरसि पुष्पारोपणं । पुनः श० ऊ० धूपोत्क्षेपः । ११ । पुनः कु०—"महामनोजन्मिनिषेव्यमाणो नन्यायययुक्तोत्थित एव मर्त्यैः । महामनोजन्मनिकृन्तनश्च नन्याययुग्रक्षिततीर्थनाथः ॥ १ ॥ कामानुयाता निधनं विमुञ्चन्प्रियानुलापावरणं विहाय । गतो विशेषान्निधनं पदं यः स दुष्टकर्मावरणं भिनत्तु ॥ २ ॥ मृदुत्वसंत्यक्तमहाभिमानो भक्तिप्रणम्रोरुसहस्रनेत्रः । अम्भोजसंलक्ष्यतमाभिमानः कृतार्थतात्मस्मृतिघस्रनेत्रः ॥ ३ ॥ समस्तसंभावनया वियुक्तप्रतापसंभावनयाभिनन्दन् । अलालसंभावनयानकाङ्क्षी वरिष्ठसंभावनया न काङ्क्षी ॥ ४ ॥ समस्तविज्ञानगुणावगन्ता गुणावगन्ता परमाभि-

१ नयामिलाषी इति पाठः ।

राम: । रामाभिराम: कुशलाविसर्पः शिलाऽवसर्पो जयताज्जिनेन्द्रः ॥ ५ ॥" उपजातिवृत्तानि । अनेन० ।
"रम्यैरनन्तगुणपङ्कसशोभमानैः सद्वर्णवर्णिततमैरमृतोपमेयैः । स्वाङ्गैरवाप्यफलविस्तरणैर्जिनार्चामर्चामि वर्चसि
परैः कृतनित्यचर्चः ॥ १ ॥" अनेन वृत्तेन बिम्बाग्रतः फलढौकनम् । पुनः श० ऊ० धूपोत्क्षेपः । १२ । पुनः
कु०—"करवालपातरहितां जयश्रियं करवालपातरहितां जयश्रियम् । विनयन्नयापदसुचारिसंयमो विनय-
यन्नयापदसुचारिसंयमः ॥ १ ॥ इनमन्धतामसहरं सदासुखं प्रणमामि कामितफलप्रदायकम् । इनमन्धताम-
सहरं सदा सुखं विजये च तेजसि परिष्ठितं चिरम् ॥ २ ॥ निजभावचौरदमनं दयानिधिं दमनं च सर्वमु-
निमण्डलीवृतम् । मुनिमञ्जसा भवलसत्पयोनिधौ निलसक्तवीर्यसहितं नमामि तम् ॥ ३ ॥ बहुलक्षणौघक-
मनीयविग्रहः क्षणमात्रभिन्नकमनीयविग्रहः । कमनीयविग्रहपदावतारणो भवभुक्तमुक्तकुपदावतारणः ॥ ४ ॥
सुरनाथमानहरसंपदश्रितः क्षतराजमानहरहासकीर्तिभाक् । विगतोपमानहरणोद्धृताशयो विगताभिमान-
हरयक्षशातनः ॥ ५ ॥" संधिवर्षिणीवृत्तानि । अनेन० । "धाराधाराभिमुक्तोद्रसबलसबलेक्षोदकाम्याद्-
काम्या भिक्षाभिक्षाविचारस्वजनितजनितप्रातिमानोऽतिमानः । प्राणप्राणप्रमोदप्रणयननयनंधातहंधातहन्ता
श्रीदः श्रीदप्रणोदी स्वभवनभवनः काकतुण्डाकतुण्डा ॥ १ ॥" अनेन वृत्तेन अगुरुक्षेपः । पुनः श० ऊ० धूपो-
त्क्षेपः । १३ । पुनः कु०—"ज्ञानकेलिकलितं गुणनिलयं विश्वसारचरितं गुणनिलयम् । कामदाहदहनं परम-
मृतं स्वर्गमोक्षसुखदं परममृतम् ॥ १ ॥ स्वावयोधरचनापरमहितं विश्वजन्तुनिकरे परमहितम् । रागसङ्गिम-

नसां परमहितं दुष्टचित्तसुमुचां परमहितम् ॥ २ ॥ भव्यभावजनतापविहननं भव्यभावजनतापविहननम् । जीवजीवभवसारविनयनं जीवजीवभवसारविनयनम् ॥ ३ ॥ कालपाशपरिघातबहुबलं कालपाशकृतहारविहरणम् । नीलकण्ठसखिसन्निभनिनदं नीलकण्ठहसितोत्तमयशसम् ॥ ४ ॥ न्यायबन्धुरविचारविलसनं लोकबन्धुरविचारिसुमहसम् । शीलसारसनवीरतनुधरं सर्वसारसनवीरमुपनये ॥ ५ ॥" जगतीजातिवृत्तानि । अनेन० । "विनयविनयवाक्यस्फारयुक्तोरयुक्तः पुरुषपुरुषकाराद्भावनीयोवनीयः । जयतु जयतुषारो दीप्रमादे प्रमादे सपदि सपदिभङ्क्ता वासधूपः सधूपः ॥ १ ॥" अनेन वृत्तेन संयुक्तधूपोत्क्षेपणं । पुनः श० ऊ० । धूपोत्क्षेपः । १४ । पुनः कु०—"आततायिनिकरं परिनिघ्नन्नाततायिचरितः परमेष्ठी । एकपादरचनासुकृताशीरेकपाददयिताकमनीयः ॥ १ ॥ वर्षदानकरभाजितलक्ष्मीश्चारुभीरुकरिभाजितवित्तः । मुक्तशुभ्रतरलालसहारो ध्वस्तभूरितरलालसकृत्यः ॥ २ ॥ युक्तसत्यबहुमानवदान्यः कल्पितद्रविणमानवदान्यः । देशनारचितसाधुविचारो मुक्तताविजितसाधुविचारः ॥ ३ ॥ उक्तसंशयहरोरुकृतान्तस्तान्तसेवकपलायकृतान्तः । पावनीकृतवरिष्ठकृतान्तस्तां तथा गिरमवेत्य कृतान्तः ॥ ४ ॥ यच्छतु श्रियमनर्गलदानो दानवस्त्रिदशपुण्यनिदानः । दानवार्थकरिविभ्रमयानो यानवर्जितपदोतिदयानः ॥ ५ ॥" स्वागतावृत्तानि । अनेन० । "अमृतविहितपोषं शैशवं यस्य पूर्वादमृतपथनिदेशाद्दुर्धरा कीर्तिरासीत् । अमृतरचितभिक्षा यस्य वृत्तिर्व्रतादौरमृतममृतसंस्थस्यार्चनायास्तु तस्य ॥ १ ॥" अनेन वृत्तेन बिम्बे जलपूजा । पुनः श० ऊ । धूपोत्क्षेपः । १५ । पुनः कु०—

"विश्वेशः क्षितिलसमानमानमानः प्रोद्याती मरुदुपहारहारहारः । संत्यक्तप्रवरवितानतानतानः सामस्त्याद्धि-गतविगानगानगानः ॥ १ ॥ विस्फूर्जन्मथितविलासलासलासः संक्षेपक्षपितविकारकारकारः । सेवार्थव्रजि-तविकालकालकालश्चारिग्रक्षरितनिदानदानदानः ॥ २ ॥ पूजायां प्रभवदपुण्यपुण्यपुण्यस्तीर्थार्थं विलसदग-ण्यगण्यगण्यः । सद्ध्यानैः स्फुरदवलोकलोकलोको दीक्षायां हतभवजालजालजालः ॥ ३ ॥ स्मृत्यैव क्षतकर-वीरवीरवीरः पादान्तप्रतिनतराजराजराजः । सद्भिद्याजितशतपत्रपत्रपत्रः पार्श्वस्थप्रवरविमानमानमानः ॥४॥ नेत्रश्रीजितजलवाहवाहवाहो योगित्वामृतघनशीतशीतशीतः । वैराग्यादधृतसुवालवालवालो नामार्थोत्थितमु-क्षीरधीरधीरः ॥ ५ ॥" प्रहर्षिणीवृत्तानि । अनेन० । "क्षणनताडनमर्दनलक्षणं किमपि कष्टमवाप्य तिति-क्षितम् । त्रिभुवनस्तुतियोग्ययदक्षतैस्तव तनुष्व जने फलितं हि तत् ॥ १ ॥" अनेन वृत्तेन विम्बे अक्षता-रोपणम् । पुनः श० ऊ० धूपोत्क्षेपः । १६ । पुनः कु०—"तारंतारङ्गमलनैः स्यादवतारंसारं सारङ्गेक्षणनार्यक्षतसा-रम् । कामं कामं घातितवन्तं कृतकामं वामं वामं द्रुतमुज्झितगतवामम् ॥ १ ॥ देहं देहं त्यक्त्वा नम्रोरुवि-वेहं भावं भावं मुक्त्वा वेगं द्रुतभावम् । नारं नारं शुद्धभवन्तं भुवनारं मारं मारं विश्वजयं तं सुकुमारम् ॥ २ ॥ देवं देवं पादतलालन्नरदेवं नाथंनाथं चान्तिकदीप्यच्छुरनाथम् । पाकं पाकं संयमयन्तं कृतपाकं गृद्धं गृद्धं कुड्मलयन्तं सुरगृद्धम् ॥ ३ ॥ कारं कारंभाविरसानामुपकारं काम्यं काम्यंभाविरसानामतिकाम्यम् ।

१ मंगसयतं इति पाठः ।

जीवं जीवंभाविरसानामुपजीवं वन्देवन्दे भाविरसानामभिवन्दे ॥ ४ ॥ सर्वैः कायैः संकुलरत्नं कुलरत्नं शुद्ध-स्फूर्त्या भाविवितानं विवितानम् । वन्दे जातत्रासससमाधिं ससमाधिं तीर्थाधीशं संगतसङ्गं गतसङ्गम् ॥ ५ ॥" मत्तमयूरवृत्तानि । अनेन० । "स्वामिन् जायेताखिललोकोऽभयरक्षो नामोच्चारात्तीर्थकराणामनघानाम् । यत्तद्बिम्बे रक्षणकर्म व्यवसेयं तत्र प्रायः श्लाघ्यतमः स्याद्व्यवहारः ॥ १ ॥" अनेन वृत्तेन बिम्बशरीरे ह्रां ह्रीं ह्रूं ह्रौं ह्रः रूपैः पञ्चशून्यैः पञ्चाङ्गरक्षा । पुनः श० ऊ० धूपोत्क्षेपः । १७ । पुनः कु०—"बद्धनीतासुगं बद्धनीता सुगं सानुकम्पाकरं सानुकम्पाकरम् । मुक्तसंघाश्रयं मुक्तसंघाश्रयं प्रीतिनिर्यातनं प्रीतिनिर्यातनम् ॥ १ ॥ सर्वदा दक्षणं पारमार्थे रतं सर्वदा दक्षणं पारमार्थेरतम् । निर्जराराधनं संवराभासनं संवराभासनं निर्जराराधनम् ॥ २ ॥ तैजसं संगतं संगतं तैजसं दैवतं बन्धुरं बन्धुरं दैवतम् । सत्तमं चागमाचागमात्सत्तमं साहसे कारणं कारणं साहसे ॥ ३ ॥ विश्वसाधारणं विश्वसाधारणं वीतसंवाहनं वीतसंवाहनम् । मुक्तिचंद्रार्जनं मुक्तिचंद्रार्जनं [1]सारसंवाहनं सारसंवाहनं ॥ ४ ॥ कामलाभासहं पापरक्षाकरं पापरक्षाकरं कामलाभासहम् । बाणवीवर्धनं पूरकार्याधरं पूरकार्याधारं बाणवीवर्धनम् ॥ ५ ॥" चन्द्राननच्छन्दांसि । अनेन० । "संसारसंसारसुतारणाय संतानसंतानकतारणाय । देवाय देवायतितारणाय नामोस्तु नामोस्तुतितारणाय ॥ १ ॥" अनेन वृत्तेन बिम्बस्य निरुञ्छनकरणम् । पुनः श० ऊ० धूपोत्क्षेपः । १८ । पुनः कु०—"सदातनुं दयाकरं

१ सारसंवासनं सारसंवासनं इति पाठः ।

॥ १ ॥ निरञ्जनं निरञ्जनं कुपोषणं कुपोषणं । सुरा-
ह्याकरं सदातनुं । विभावरं विसंगरं विसंगरं विभावरम् ॥ १ ॥ निरञ्जनं निरञ्जनं कुपोषणं कुपोषणं । सुरा-
जितं सुराजितं धराधरं धराधरम् ॥ २ ॥ जनं विधाय रञ्जनं कुलं वितन्य संकुलं । भवं विजित्य सद्भवं जयं
प्रतोद्य वै जयम् ॥ ३ ॥ घनं शिवं शिवं घनं चिरन्तनं तनं चिरं । कलाभृतं भृतं कला भुवः समं समं भुवः
॥ ४ ॥ नमामि तं जिनेश्वरं सदाविहारिशासनं । सुराधिनाथमानसे सदाविहारिशासनम् ॥ ५ ॥" प्रमाणि
कावृत्तानि । अनेन० । "प्रकटमानवमानवमण्डलं प्रगुणमानवमानवसंकुलम् । नमणिमानवमानवरं चिरं ज-
यति मानवमानवकौसुमम् ॥ १ ॥" अनेन वृत्तेन बिम्बे मालारोपणम् । पुनः श० ऊ० पुनर्धूपदानं । १९ ।
पुनः कु०—"बहुशोकहरं बहुशोकहरं कलिकालमुदं कलिकालमुदम् । हरिविक्रमणं हरिविक्रमणं स कला-
भिमतं सकलाभिमतम् ॥ १ ॥ कमलाक्षमलं विनयायतनं विनयायतनं कमलाक्षमलम् । परमातिशयं वसु-
संबलभं वसुसंबलभं परमातिशयम् ॥ २ ॥ अतिपाटवपाटवलं जयिनं हतदानवदानवसुं सगुणम् । उपचा-
रजवारजनाश्रयणं प्रतिमानवमानवरिष्टरुचम् ॥ ३ ॥ सरमं कृतमुक्तिविलासरमं भयदंभयमुक्तमिला-
भगदम् । परमंव्रजनेत्रमिदं परमं भगवन्तमये प्रभुताभगवम् ॥ ४ ॥ भवभीतनरप्रमदाशरणं शरणं कुशलस्य-
मुनीशरणम् । शरणं प्रणमामि जिनं सदये सदये हृदि दीप्तमहागमकम् ॥ ५ ॥" जगतीवृत्तानि । अनेन० ।
"आशातना या किल देवदेव मया त्वदर्चारचनेऽनुषक्ता । क्षमस्व तां नाथ कुरु प्रसादं प्रायो नराः स्युः प्रचु-
रप्रमादाः ॥ १ ॥" अनेन वृत्तेन बिम्बस्य अञ्जलिना बद्धेन अपराधक्षामणम् । पुनः श० ऊ० पुनर्धूपदानं । २०

पुनः कु०—"करकलितपालनीयः कमनीयगुणैकनिधिमहाकरणः । करकलितपालनीयः स जयति जिनपतिरकर्मकृतकरणः ॥ १ ॥ विनयनयगुणनिधानं सदारतावर्जनं विसमवायम् । वन्दे जिनेश्वरसहं सदारतावर्जनं विसमवायम् ॥ २ ॥ जलतापवारणमहं नमामि सुखदं विशालवासचयम् । जलतापवारणमहं नमामि सुखदं विशालवासचयम् ॥ ३ ॥ शृङ्गारसमर्यादं यादःपतिवत्सदाप्यगाधं च । शृङ्गारसमर्यादं यादःपतिवन्दितं प्रणिपतामि ॥ ४ ॥ भीमभवार्णवपोतं वन्दे परमेश्वरं सितश्लोकम् । उज्झितकलत्रपोतं वन्दे परमेश्वरं सितश्लोकम् ॥ ५ ॥" गीतयः । अनेन० । "नीरस्य तर्षहरणं ज्वलनस्य तापं तार्क्ष्यस्य गारुडमनङ्गतनोर्विभूषाम् । कुर्मो जिनेश्वर जगत्रयदीपरूप दीपोपदां तव पुरो व्यवहारहेतोः ॥ १ ॥" अनेन वृत्तेन बिम्बस्य दीपदानम् । पुनः शा० कु० पुनर्धूपदानं । २१ । पुनः कु०—"वनवासं वनवासं गुणहारिणहारिवपुषं वपुषम् । विजयानं विजयानं प्रभुं प्रभुं नमत नमत बलिनं बलिनम् ॥ १ ॥ सोमकलं सोमकलं पङ्के हितं पङ्के हितम् । पुण्ये पुण्य बहिर्मुख बहिर्मुख महितं महितं परं परं धीरं धीरम् ॥ २ ॥ स्मृतिदायी स्मृतिदायी जिनो जिनोपास्तिकायः कायः । नखरायुध न खरायुध वन्द्योवन्द्यो यहृद्यहृत्कान्तः कान्तः ॥ ३ ॥ कुलाकुलाहरहरहारः करणः करणः विश्वगुरुर्विश्वगुरुः । कविराट् कविराट् महामहा कामः कामः ॥ ४ ॥ कल्याणं कल्याणं प्रथयन् प्रथयन् हितेहिते प्रख्यः प्रख्यः । परमेष्ठी परमेष्ठी लालो लालो वितर वितर सत्त्वं सत्त्वम् ॥५॥" खंधाजातिः । अनेन० । "धीराधीरावगाहः कलिलकलिलताछेदकारीछेदकारी प्राणि प्राणिप्रयोगः सरुचिसरुचिताभास-

मानः समानः । कल्पाकल्पात्मदर्शः परमपरमताछेददक्षोददक्षो देवादेवात्महृद्यः स जयति जयतिर्यत्प्रकृ-
ष्टः प्रकृष्टः ॥ १ ॥" अनेन वृत्तेन बिम्बे दर्पणाढौकनं । पुनः श० ऊ० धूपदानं । २२ । पुनः कु०—"अना-
रतमनारतं सगुणसंकुलं संकुलं विशालकविशालकं स्मरगजेसमंजे समम् । सुधाकरसुधाकरं निजगिरा जितं
राजितं जिनेश्वरजिनेश्वरं प्रणिपतामि तं तामितम् ॥ १ ॥ जरामरणवाधनं विलयसाधुतासाधनं नमामि पर-
मेश्वरं स्तुतिनिपक्तवागीश्वरम् । जरामरणवाधनं विलयसाधुतासाधनं कुरङ्गनयनालटत्कटुकटाक्षतीव्रव्रतम्
॥ २ ॥ अनन्यशुभदेशनावशगतोरुदेवासुरं पुराणपुरुपार्दनप्रचलदक्षभङ्गिश्रियम् । अशेषमुनिमण्डलीप्रणति-
रञ्जिताखण्डलं पुराणपुरुपार्दनप्रचलदक्षभङ्गिश्रियम् ॥ ३ ॥ स्मरामि तव शासनं सुकृतसत्त्वसंरक्षणं महा-
कुमतवारणं सुकृतसत्त्वसंरक्षणम् । परिस्फुरदुपासकं मृदुतया महाचेतनं वितीर्णजननिर्वृतिं मृदुतया महा-
चेतनम् ॥ ४ ॥ पयोधरविहारणं जिनवरं श्रियां कारणं पयोधरविहारणं सरलदेहिनां तारणम् । अनङ्गकप-
रासनं नमत मङ्क्षु तीर्थेश्वरं अनङ्गकपरासनं विधृतयोगनित्यस्मृतम् ॥ ५ ॥" पृथ्वीवृत्तानि । अनेन० । "त्व-
य्यज्ञाते स्तुतिपदमहो किं त्वयि ज्ञातरूपे स्तुत्युत्कण्ठा न तदुभयथा त्वत्स्तुतिर्नाथ योग्या । तस्मात्सिद्धयुद्ग्र-
जनविधिना किंचिदाख्यातिभाजो लोका भक्तिप्रगुणहृदया नापराधास्पदं स्युः ॥ १ ॥" इति वृत्तं पठित्वा
अधिकृतजिनस्तोत्रं पठेत् । पुनः श० ऊ० धूपदानं । २३ । पुनः कु०—"कुलालतां च पर्यासं निर्माणे शुभ-
कर्मणाम् । कुलालतां च पर्यासं वन्दे तीर्थपतिं सदा ॥ १ ॥ जयताज्जगतामीशः कल्पवत्तापमानदः । निरस्त-

एवं दिक्पालग्रहदेवगणपूजनं विधाय जिनबिम्बस्य पञ्चामृतस्नात्रं कुर्वीत। तद्यथा। पुनः कुसुमाञ्जलिं करे गृहीत्वा। "पूर्वं जन्मनि मेरुभूध्रशिखरे सर्वैः सुराधीश्वरै राज्योद्भूतिमहे महर्द्धिसहितैः पूर्वेऽभिषिक्ता जिनाः। तामेवानुकृतिं विधाय हृदये भक्तिप्रकर्षान्विताः कुर्मः स्वस्वगुणानुसारवशतो बिम्बाभिषेकोत्सवम् ॥ १ ॥" अनेन वृत्तेन पुष्पाञ्जलिक्षेपः। पुनः पुष्पाञ्जलिं करे गृहीत्वा। "भृत्कुम्भाः कलयन्तु रत्नघटितां पीठं पुनर्मेरुतामानीतानि जलानि सप्तजलधिक्षीराज्यदध्यात्मताम्। बिम्बं पारगतत्वमत्र सकलः संघः सुराधीशतां येन स्यादयमुत्तमः सुविहितः स्नात्राभिषेकोत्सवः ॥ १ ॥" अनेन वृत्तेन पुष्पाञ्जलिक्षेपः। पुनः पुष्पाञ्जलिं करे गृहीत्वा। "आत्मशक्तिसमानीतैः सत्यं चामृतवस्तुभिः। तद्बार्द्धिकल्पनां कृत्वा स्नपयामि जिनेश्वरम् ॥ १ ॥" अनेन वृत्तेन पुष्पाञ्जलिक्षेपः। ततः क्षीरभृतं कलशं करे गृहीत्वा। "भगवन्मनोगुणयशोनुकारिदुग्धाब्धितः समानीतम्। दुग्धं विदग्धहृदयं पुनातु दत्तं जिनस्नात्रे ॥ १ ॥" अनेन वृत्तेन क्षीरस्नात्रम्। पुनः दधिभृतं कलशं करे गृहीत्वा। "दधिमुखमहीध्रवर्णं दधिसागरतः समाहृतं भक्त्या। दधि विदधातु शुभविधिं दधिसारपुरस्कृतं जिनस्नात्रे ॥ १ ॥" अनेन वृत्तेन दधिस्नात्रम्। पुनः घृतभृतं कुम्भं गृहीत्वा। "स्निग्धं मृदु पुष्टिकरं जीवनमतिशीतलं सदाभिख्यम्। जितमतवद्धृतमेतत्पुनातु लग्नं जिनस्नात्रे ॥ १ ॥" अनेन वृत्तेन घृतस्नात्रम्। पुनरिक्षुरसभृतं कलशं गृहीत्वा। "मधुरिमधुरीणविधुरितसुधाधराधार आत्मगुणवृत्त्या। शिक्षयतादिक्षुरसो विचक्षणौघं जिनस्नात्रे ॥ १ ॥" अनेन वृत्तेन इक्षुरसस्नात्रम्। पुनः शुद्धजलभृ-

जीवनममृतं प्राणदमकलुषितमदोषमस्तसर्वरुजम् । जलममलमस्तु तीर्थाधिनाथबिम्बा-
तकलशं गृहीत्वा । "जीवनममृतं प्राणदमकलुषितमदोषमस्तसर्वरुजम् । जलममलमस्तु तीर्थाधिनाथबिम्बा-
नुगे स्नात्रे ॥ १ ॥" अनेन वृत्तेन जलस्नात्रम् । इति पञ्चामृतस्नात्रम् । पुनः सहस्रमूलमिश्रजलकलशं
गृहीत्वा । "विघ्नसहस्रोपशमं सहस्रनेत्रप्रभावसद्भावम् । दलयतु सहस्रमूलं शत्रुसहस्रं जिनस्नात्रे ॥ १ ॥"
अनेन वृत्तेन सहस्रमूलस्नात्रम् । पुनः शतमूलमिश्रितजलकलशं गृहीत्वा । "शतमर्त्यसमानीतं शतमूलं
शतगुणं शताख्यं च । शतसंख्यं वाञ्छितमिह जिनाभिषेके सपदि कुरुतात् ॥ १ ॥" अनेन वृत्तेन शतमूल-
स्नात्रम् । पुनः सर्वौषधिगर्भितं जलकलशं गृहीत्वा । "सर्वप्रत्यूहहरं सर्वसमीहितकरं विजितसर्वम् । सर्वौ-
षधिमण्डलमिह जिनाभिषेके शुभं ददताम् ॥ १ ॥" अनेन वृत्तेन सर्वौषधिस्नात्रम् । ऊर्ध्वाधो० । अनेन
वृत्तेन धूपोत्क्षेपणं । शक्रस्तवपाठः । ततो यथाशक्त्या स्वर्णरूप्यताम्रद्विकयोगत्रिकयोगरीतिमृण्मयकलशस-
मानयनम् । ते च कलशाः स्नपनकोपरि स्थाप्यन्ते । यथाशक्ति स्नात्रसंख्यया अष्टोत्तरशतचतुःषष्टिपञ्चविंश-
तिषोडशाष्टपञ्चचतुस्त्रिद्व्येकसंख्याः । ते च चन्दनागरुकर्पूरकस्तूरीकुङ्कुमैः स्वस्तिककरणैश्चतुर्दिक्षु पूज्यन्ते ।
तत्कण्ठेषु पुष्पमालाभिर्विभूषणम् । ततः सर्वतीर्थाहृतेन पूर्वोक्तजलमन्त्रपूतेन चन्दनागरुकस्तूरीकर्पूरकुङ्कुममि-
श्रितेन पाटलादिपुष्पाधिवासितेन निर्मलजलेन तान्कलशान्पूरयेत् । ततः स्नात्रकाराः पूर्वोक्तवेषभृतो
जिनोपवीतोत्तरासङ्गयुजो बद्धधम्मिल्लाः कृतस्नाना द्वादशतिलकाङ्किताः परमेष्ठिमन्त्रं पठित्वा तान्कलशान्स्व-
स्वकरयोर्गृह्णन्ति । ततस्तेऽपरे च श्राद्धाः स्वस्वाभ्यासानुसारेण जिनस्तुतिगर्भषट्पदद्रहास्तोत्रादि परिवर्तयन्ति

ममतामायः कल्पवत्तापमानदः ॥ २ ॥ महामोहमहाशैल पविज्ञानपरायण । परायणपविज्ञान जय पारगतेश्वर ॥ ३ ॥ समाहितपरीवार परीवारसमाहित । नमोस्तु ते भवच्छ्रेयो भवच्छ्रेयो नमोस्तु ते ॥ ४ ॥ वराभिख्यवराभिख्य कृपाकर कृपाकर । निराधार निराधार जयानतजयानत ॥ ५ ॥" श्लोकाः । अनेन० । "न स्वर्गाप्सरसां स्पृहा समुदयो नानारकच्छेदने नो संसारपरिक्षितौ न च पुनर्निर्वाणनित्यस्थितौ । त्वत्पाद्द्वितयं नमामि भगवन्किंत्वेककं प्रार्थये त्वद्भक्तिर्मम मानसे भवभवे भूयाद्विभो निश्चला ॥ १ ॥" अनेन वृत्तेन अञ्जलिं कृत्वा बिम्बाग्रे विज्ञप्तिकां कुर्यात् । पुनः श० ऊ० धूपदानं । २४ । पुनः कु०—"अधिकविरसः शृङ्गाराङ्गः समासपरिग्रहो जयति जगतां श्रेयस्कारी तवागमविग्रहः । अधिकाविरसः शृङ्गाराङ्गः समासपरिग्रहो न खलु कुमतव्यूहे यत्र प्रवर्तितविग्रहः ॥ १ ॥ विषयविषमं हन्तुं मङ्क्षु प्रगाढभवभ्रमं बहुलबलिनो देवाधीशा नितान्तमुपासते । तव वृषवनं यस्मिन्कुज्ञान्महत्तमयोगिनो बहुलबलिनो देवाधीशा नितान्तमुपासते ॥ २ ॥ समवसरणं साधुव्याघ्रैर्वृषैरहिभिर्वरं जयति मधुभित्कृसानेकाविनश्वरनाटकम् । तव जिनपते काङ्क्षापूर्तिं प्रयच्छतु संकुलं समवसरणं साधुव्याघ्रैर्वृषैरहिभिर्वरम् ॥ ३ ॥ तव चिदुदयो विश्वस्वामिन्नियर्ति विशङ्कितो जलधरपदं स्वर्गव्यूहं भुजङ्गगृहं परम् । जलधरपदस्वर्गव्यूहं भुजङ्गगृहं परं त्यजति भवता कारुण्याढ्याक्षिपक्ष्मकटाक्षितः ॥ ४ ॥ विशदविशदप्राज्यप्राज्यप्रवारणवारणा हरिणहरिण श्रीद श्रीदप्रबोधनबोधना । कमलकमलव्यापव्यापद्दरीतिदरीतिदा गहनगहन श्रेणीश्रेणी विभाति विभाति च ॥ ५ ॥"

रिणीवृत्तानि । अनेन० । “जयजयजयदेवदेवाधिनाथो लसत्सेवया प्रीणितस्वान्त कान्तप्रभप्रतिघबहुलदा-
वनिर्यापणे पावनाम्भोदवृष्टे विनष्टाखिलाघव्रज । मरणभयहराधिकध्यानविस्फूर्जितज्ञानदृष्टिप्रकृष्टेक्षणाशं-
सन त्रिभुवनपरिवेषनिःशेषविद्वज्जनश्लाघ्यकीर्तिस्थितिख्यातिताश प्रभो ॥ १ ॥” अनेन वृत्तेन बिम्बाग्रतोऽ-
ञ्जलिं बध्वा क्षणं ध्यानं । पुनः शक्रस्तवपाठः । ऊर्ध्वाधो० अनेन धूपोत्क्षेपः । २५ । एवं पञ्चविंशतिकुसुमा-
ञ्जलयः प्रक्षिप्यन्ते । एतान्येव कुसुमाञ्जलिकाव्यान्यन्तर्गतविधिकाव्यपञ्चविंशतिरहितानि पञ्चविंशत्युत्तर-
शतसंख्यानि स्तुतिकुसुमाञ्जलिमहाकाव्यं ज्ञेयं विद्वद्भिर्भणनीयं पठनीयं पाठनीयं च ॥

ततोऽनन्तरं प्रतिष्ठायां नन्द्यावर्तेऽविसृष्टे तथैव रीत्या नन्द्यावर्ते शक्रेशानपरमेष्ठिजिनमातृलौकान्तिकवि-
जयादेवीइन्द्रइन्द्राणीशासनयक्षशासनयक्षिणीदिक्पालग्रहचतुर्णिकायदेवादिपूजनं तथैव विधेयं नवरं पृथक्
मुद्राफलशरावादिढौकनं प्रतिष्ठादिनादन्यत्रदिने नास्ति किंतु गन्धपुष्पादिभिः सामान्यपूजैव विधेया । न-
न्द्यावर्ते तु विसृष्टे सर्वदा पर्वणि वा प्रतिमाप्रवेशे वा शान्तिके वा पौष्टिके वा बृहत्स्नात्रविधौ विधेये नन्द्या-
वर्तवलयक्रमो न स्थाप्यः किंतु पृथगेव भिन्नपीठेषु क्रमेण दिक्पालसक्षेत्रपालग्रहचतुर्णिकायदेवस्थापनं तेषां
तत्र स्थापनं च पूर्वनिर्मितमूर्तिधातुकाष्ठपाषाणनिर्मितप्रतिमास्थापनम् । अथवा नानाधातुभिः कुङ्कुमचन्द-
नाद्यैर्वा तन्मूर्तिलिखनं उत तिलकमात्रदानेन स्थापनं पीठे यथादिग्भागं दिक्पालानां ग्रहणं च प्रदक्षिणा-
यन्त्रेण च आवाहनं संस्थापनं पूजनं कुसुमाञ्जलिक्षेपादि नन्द्यावर्तविधिकथितविधिनैव तैरेव काव्यैर्विधेयं ।

एवं दिक्पालग्रहदेवगणपूजनं विधाय जिनबिम्बस्य पञ्चामृतस्नात्रं कुर्वीत । तद्यथा । पुनः कुसुमाञ्जलिं करे गृहीत्वा । "पूर्वं जन्मनि मेरुभूध्रशिखरे सर्वैः सुराधीश्वरै राज्योद्भूतिमहे महर्द्धिसहितैः पूर्वेऽभिषिक्ता जिनाः । तामेवानुकृतिं विधाय हृदये भक्तिप्रकर्षान्विताः कुर्मः स्वस्वगुणानुसारवशतो बिम्बाभिषेकोत्सवम् ॥ १ ॥" अनेन वृत्तेन पुष्पाञ्जलिक्षेपः । पुनः पुष्पाञ्जलिं करे गृहीत्वा । "भृत्कुम्भाः कलयन्तु रत्नघटितां पीठं पुनर्मेरुतामानीतानि जलानि सप्तजलधिक्षीराज्यदध्यात्मताम् । बिम्बं पारगतत्वमत्र सकलः संघः सुराधीशतां येन स्यादयमुत्तमः सुविहितः स्नात्राभिषेकोत्सवः ॥ १ ॥" अनेन वृत्तेन पुष्पाञ्जलिक्षेपः । पुनः पुष्पाञ्जलिं करे गृहीत्वा । "आत्मशक्तिसमानीतैः सत्यं चामृतवस्तुभिः । तद्वार्द्धिकल्पनां कृत्वा स्नपयामि जिनेश्वरम् ॥ १ ॥" अनेन वृत्तेन पुष्पाञ्जलिक्षेपः । ततः क्षीरभृतं कलशं करे गृहीत्वा । "भगवन्मनोगुणयशोनुकारिदुग्धाब्धितः समानीतम् । दुग्धं विदग्धहृदयं पुनातु दत्तं जिनस्नात्रे ॥ १ ॥" अनेन वृत्तेन क्षीरस्नात्रम् । पुनः दधिभृतं कलशं करे गृहीत्वा । "दधिमुखमहीध्रवर्णं दधिसागरतः समाहृतं भक्त्या । दधि विदधातु शुभविधिं दधिसारपुरस्कृतं जिनस्नात्रे ॥ १ ॥" अनेन वृत्तेन दधिस्नात्रम् । पुनः घृतभृतं कुम्भं गृहीत्वा । "स्निग्धं मृदु पुष्टिकरं जीवनमतिशीतलं सदाभिख्यम् । जितमतवद्घृतमेतत्पुनातु लग्नं जिनस्नात्रे ॥ १ ॥" अनेन वृत्तेन घृतस्नात्रम् । पुनरिक्षुरसभृतं कलशं गृहीत्वा । "मधुरिमधुरीणविधुरितसुधाधराधार आत्मगुणवृत्त्या । शिक्षयतादिक्षुरसो विचक्षणौघं जिनस्नात्रे ॥ १ ॥" अनेन वृत्तेन इक्षुरसस्नात्रम् । पुनः शुद्धजलभृ-

तकलशं गृहीत्वा। “जीवनममृतं प्राणदमकलुषितमदोषमस्तसर्वरुजम् । जलममलमस्तु तीर्थाधिनाथबिम्बा-
नुगे स्नात्रे ॥ १ ॥” अनेन वृत्तेन जलस्नात्रम् । इति पञ्चामृतस्नात्रम् । पुनः सहस्रमूलमिश्रजलकलशं
गृहीत्वा । “विघ्नसहस्रोपशमं सहस्रनेत्रप्रभावसद्भावम् । दलयतु सहस्रमूलं शत्रुसहस्रं जिनस्नात्रे ॥ १ ॥”
अनेन वृत्तेन सहस्रमूलस्नात्रम् । पुनः शतमूलमिश्रितजलकलशं गृहीत्वा । “शतमर्त्यसमानीतं शतमूलं
शतगुणं शताख्यं च । शतसंख्यं वाञ्छितमिह जिनाभिषेके सपदि कुरुतात् ॥ १ ॥” अनेन वृत्तेन शतमूल-
स्नात्रम् । पुनः सर्वौषधिगर्भितं जलकलशं गृहीत्वा । “सर्वप्रत्यूहहरं सर्वसमीहितकरं विजितसर्वम् । सर्वौ-
षधिमण्डलमिह जिनाभिषेके शुभं ददताम् ॥ १ ॥” अनेन वृत्तेन सर्वौषधिस्नात्रम् । ऊर्ध्वाधो० । अनेन
वृत्तेन धूपोत्क्षेपणं । शक्रस्तवपाठः । ततो यथाशक्त्या स्वर्णरूप्यताम्रद्विकयोगत्रिकयोगरीतिमृण्मयकलशस-
मारचनम् । ते च कलशाः स्थपनकोपरि स्थाप्यन्ते । यथाशक्ति स्नात्रसंख्यया अष्टोत्तरशतचतुःषष्टिपञ्चविंश-
तिषोडशाष्टपञ्चचतुस्त्रिद्व्येकसंख्याः । ते च चन्दनागरुकर्पूरकस्तूरीकुङ्कुमैः स्वस्तिककरणैश्चतुर्दिक्षु पूज्यन्ते ।
तत्कण्ठेषु पुष्पमालाभिर्विभूषणम् । ततः सर्वतीर्थाहृतेन पूर्वोक्तजलमन्त्रपूतेन चन्दनागरुकस्तूरीकर्पूरकुङ्कुममि-
श्रितेन पाटलादिपुष्पाधिवासितेन निर्मलजलेन तान्कलशान्पूरयेत् । ततः स्नात्रकाराः पूर्वोक्तवेषभृतो
जिनोपवीतोत्तरासङ्गयुजो बद्धधम्मिल्लाः कृतस्नाना द्वादशतिलकाङ्किताः परमेष्ठिमन्त्रं पठित्वा तान्कलशान्स्व-
स्वकरयोर्गृह्णन्ति । ततस्तेऽपरे च श्राद्धाः स्वस्वाभ्यासानुसारेण जिनस्तुतिगर्भपट्पदद्रहास्तोत्रादि परिवर्तयन्ति

पूर्वकविकृतानि जिनाभिषेककाव्यानि पठन्ति च। ततः नमो अरिहन्ताणं नमोर्हत्सिद्धाचार्यो०। "पूर्वे जन्मनि विश्वभर्तुरधिकं सम्यक्त्वभक्तिस्पृशः सूतेः कर्म समीरवारिदमुखं काष्ठाकुमार्यो व्यधुः। तत्कालं तविषेश्वरस्य निबिडं सिंहासनं प्रोन्नतं वातोद्धूतसमुद्धुरध्वजपटप्रख्यां स्थितिं व्यानशे ॥ १ ॥ क्षोभात्तत्र सुरेश्वरः प्रसृमरक्रोधक्रमाक्रान्तधीः कृत्वालक्तकसिक्तकूर्मसदृशं चक्षुःसहस्रं दधौ। वज्रं च स्मरणागतं करगतं कुर्वन्प्रयुक्तावधिज्ञानात्तीर्थकरस्य जन्मभुवने भद्रंकरं ज्ञातवान् ॥ २ ॥ नम नम इति शब्दं ख्यापयंस्तीर्थनाथं स झटिति नमति स्म प्रौढसम्यक्त्वभक्तिः। तदनु दिवि विमाने सा सुघोषाख्यघण्टा सुररिपुमदमोदाघातिशब्दं चकार ॥ ३ ॥ द्वात्रिंशल्लक्षविमानमण्डले तत्समा महाघण्टाः। ननदुः सुदुःप्रधर्षा हर्षोत्कर्षं वितन्वन्त्यः ॥ ४ ॥ तस्मान्निश्चित्य विश्वाधिपतिजनुरथो निर्जरेन्द्रः स्वकल्पान् कल्पेन्द्रान्व्यन्तरेन्द्रानपि भुवनपतींस्तारकेन्द्रान्समस्तान्। आह्वायाह्वाय तेषां स्वमुखभवगिराख्याय सर्वं स्वरूपं श्रीमत्कार्तस्वराद्रेः शिरसि परिकरालंकृतान्प्राहिणोच्च ॥ ५ ॥ ततः स्वयं शक्रसुराधिनाथः प्रविश्य तीर्थंकरजन्मगेहम्। परिच्छदैः सार्धमथो जिनाम्बां प्रस्वापयामास वरिष्ठविद्यः ॥ ६ ॥ कृत्वा पञ्च वपूंषि विष्टपपतिः संधारणं हस्तयोश्छत्रस्योद्वहनं च चामरयुगप्रोद्भासनाचालनम्। वज्रेणापि धृतेन नर्तनविधिं निर्वाणदातुः पुरो रूपैः पञ्चभिरेवमुत्सुकमनाः प्राचीनबर्हिर्व्यधात् ॥ ७ ॥ सामानिकाङ्गरक्षैरेवं परिवारितः सुराधीशः। बिभ्रत्त्रिभुवननाथं प्राप सुराद्रिं सुरगणाढ्यम् ॥ ८ ॥ तत्रेन्द्रास्त्रिदशाप्सरःपरिवृता विश्वेशितुः संमुखं मङ्क्ष्वागत्य नमस्कृतिं व्यधुरलं

मालङ्कृतिभ्राजिताः । आनन्दाश्रुततुस्तथा सुरगिरिस्तुत्यद्भिराभास्वरैः शृङ्गैः काञ्चनदानकर्मनिरतो भातिस्म
भक्त्या यथा ॥ ९ ॥ अतिपाण्डुकम्बलाया महाशिलायाः शशाङ्कधवलायाः । पृष्ठे शशिमणिरचितं पीठमधु-
र्देवगणवृषभाः ॥ १० ॥ तत्राधायोत्सङ्गे ईशानसुरेश्वरो जिनाधीशम् । पद्मासनोपविष्टो निबिडां भक्तिं दधौ
मनसि ॥ ११ ॥ इन्द्रादिष्टास्तत आभियोगिकाः कलशगणमथानिन्युः । वेदरसखवसु ८०६४ संख्यं मणि-
रजतसुवर्णमृद्रचितम् ॥ १२ ॥ कुम्भाश्च ते योजनमात्रवक्त्रा आयाम औन्नत्यमथैषु चैवम् । दशाष्टबार्हत्कर-
योजनानि द्विक्रमेकवातुप्रतिपन्नगर्भाः ॥ १३ ॥ नीरैः सर्वसरित्तडागजलधिप्रख्यान्यनीराशयाऽनीतैः सुन्दर-
गन्धगर्भिततरैः स्वच्छैरलं शीतलैः । भृत्यैर्देवपतेर्मणीमयमहापीठस्थिताः पूरिताः कुम्भास्ते कुसुमस्रजां समु-
द्गमैः कण्ठेषु संभाविताः ॥ १४ ॥ पूर्वमच्युतपतिर्जिनेशितुः स्नात्रकर्म विधिवद्व्यधान्महत् । तैर्महाकलशवा-
रिभिर्नवैः प्रोल्लसन्मलयगन्धधारिभिः ॥ १५ ॥ चतुर्वृषभशृङ्गोत्थधाराष्टकमुदञ्चयन् । सौधर्माधिपतिः स्नात्रं
विश्वभर्तुरपूरयत् ॥ १६ ॥ शेषं क्रमेण तदनन्तरमिन्द्रवृन्दं कल्पासुरर्क्षवननाथमुखं व्यधत्त । स्नात्रं जिनस्य
कलशैः कलितप्रमोदं प्रावारवेषविनिवारितसर्वपापम् ॥ १७ ॥ तस्मिन्क्षणे बहुलवादितगीतनृत्यगर्भं महं च
सुमनोप्सरसो व्यधुस्तम् । येनादधे स्फुटसदाविनिविष्टयोगस्तीर्थंकरोपि हृदये परमाणु चित्तम् ॥ १८ ॥
मेरुशृङ्गे च यत्स्नात्रं जगद्भर्तुः सुरैः कृतम् । बभूव तदिहास्त्वेतदस्मत्करनिषेकतः ॥ १९ ॥" इति पठित्वा सर्वैः
स्नात्रकारैः समकालं जिनबिम्बे कलशाभिषेकः करणीयः। पुनः पुनरन्तिमं श्लोकं पठित्वा जिनस्नात्रं करणीयम् ॥

एवं स्नात्रविधौ निर्वर्तिते कोमलैर्धूपचूर्णवासितैर्वस्त्रैर्जिनबिम्बं मार्जयेत् । "कस्तूरिकाकुङ्कुमरोहणद्रुः कर्पूरकक्कोलविशिष्टगन्धम् । विलेपनं तीर्थपतेः शरीरे करोतु संघस्य सदा विवृद्धिम् ॥ १ ॥ तुराषाट्स्नात्रपर्यन्ते विदधे यद्विलेपनम् । जिनेश्वरस्य तद्भूयादत्र बिम्बेऽस्मदाहृतम् ॥ २ ॥" अनेन वृत्तद्वयेन बिम्बे कस्तूरिकाकुङ्कुमकर्पूरश्रीखण्डादिविलेपनम् ॥ "मालतीविचकिलोज्ज्वलमल्लीकुन्दपाटलसुवर्णसुमैश्च । केतकैर्विरचिता जिनपूजा मङ्गलानिस कलानि विदध्यात् ॥ १ ॥ स्नात्रं कृत्वा सुराधीशैर्जिनाधीशस्य वर्ष्मणि । यत्पुष्पारोपणं चक्रे तदस्त्वस्मत्करैरिह ॥ २ ॥" अनेन वृत्तद्वयेन पुष्पमालादिपूजा । "केयूरहारकटकैः पट्टभिः किरीटैः सत्कुण्डलैर्मणिमयीभिरथोर्मिकाभिः । बिम्बं जगत्रयपतेरिह भूषयित्वा पापोच्चयं सकलमेव निकृन्तयामः ॥ १ ॥ या भूषा त्रिदशाधीशैः स्नात्रान्ते मेरुमस्तके । कृता जिनस्य सात्रास्तु भविकैर्भूषणार्जिता ॥ २ ॥" अनेन वृत्तद्वयेन बिम्बस्य मुकुटहारकुण्डलादिभूषणपरिधापनम् । "सन्नालिकेरफलपूररसालजम्बुद्राक्षापरूषकसुदाडिमनागरिङ्गैः । वातामपूगकदलीफलजम्भमुख्यैः श्रेष्ठैः फलैर्जिनपतिं परिपूजयामः ॥ १ ॥ यत्कृतं स्नात्रपर्यन्ते सुरेन्द्रैः फलढौकनम् । तदिहास्मत्करादस्तु यथासंपत्ति निर्मितम् ॥ २ ॥" अनेन वृत्तद्वयेन बिम्बाग्रतोऽक्षतढौकनम् । "निर्झरनदीपयोनिधिवापीकूपादितः समानीतम् । सलिलं जिनपूजायामह्लाय निहन्तु भवदाहम् ॥ १ ॥ मेरुशृङ्गे जगद्भर्तुः सुरेन्द्रैर्यज्जलार्चनम् । विहितं तदिह प्रौढिमातनोत्वरमाहृतम् ॥ २ ॥" अनेन वृत्तद्वयेन बिम्बाग्रे जलकलशढौकनम् । "कर्पूरागरुचन्दनादिभिरलं कस्तूरिकामिश्रितैः सिह्लाद्यैः सुसुगन्धिभिर्व-

घृतैरे रूपैः कृशानुद्रुतैः । पातालक्षितिगोनिवासिमरुतां संप्रीणकैरुत्तमैर्धूमाक्रान्तनभस्तलैर्जिनपतिं संपूजयामोऽधुना ॥ १ ॥ या धूपपूजा देवेन्द्रैः स्नात्रानन्तरमादधे । जिनेन्द्रस्यास्तदुत्कर्षादस्तुसात्र महोत्सवे ॥ २ ॥" अनेन वृत्तद्वयेन बिम्बस्य धूपदानम् । "अन्तर्ज्योतिर्योतितो यस्य कायो यत्संस्मृत्या ज्योतिरुत्कर्षमेति । तस्याभ्याशे निर्मितं दीपदानं लोकाचारख्यापनाय प्रभाति ॥ १ ॥ या दीपमाला देवेन्द्रैः सुमेरौ स्वामिनः कृता । सात्रान्तर्गतमस्माकं विनिहन्तु तमोभरम् ॥ २ ॥" अनेन वृत्तद्वयेन बिम्बाग्रे दीपदानम् । "ओदनैर्विविधैः शाकैः पक्वान्नैः षड्रसान्वितैः । नैवेद्यैः सर्वसिद्ध्यर्थं जायतां जिनपूजनम् ॥ १ ॥" अनेन वृत्तेन बिम्बाग्रे नैवेद्यढौकनम् । "गोधूमतन्डुलतिलैर्हरिमन्थकैश्च मुद्गाढकीयवकलायमकुष्टकैश्च । कुलमापवल्लवरचीनकङ्गुयधान्यैर्मलैः कृता जिनपुरः फलदोपदास्तु ॥ १ ॥" अनेन वृत्तेन जिनाग्रतः सर्वधान्यढौकनम् । "शुण्ठीकणामरिचरामठजीरधान्यश्यामासुराप्रभृतिभिः पटुवेसवारैः । संढौकनं जिनपुरो मनुजैर्विधीयमानं मनांसि यशसा विमलीकरोतु ॥ १ ॥" अनेन वृत्तेन जिनाग्रतः सर्ववेसवारढौकनम् । "उशीरवटिकाशिरोज्वलनचव्यधात्रीफलैर्यलासलिलवत्सकैर्घनविभावरीवासकैः । वचावरविदारिकामिशिशताह्वयाचन्दनैः प्रियङ्गुतगरैर्जिनेश्वरपुरोस्तु नो ढौकनम् ॥ १ ॥" अनेन वृत्तेन जिनप्रतिमाग्रतः सर्वौषधीढौकनम् । "भुजङ्गवल्लीछदनैः सिताभ्रकस्तूरिकैलासुरपुष्पमिश्रैः । सजातिकोशैः सममेव चूर्णैस्ताम्बूलमेवं तु कृतं जिनाग्रे ॥ १ ॥" अनेन वृत्तेन जिनबिम्बाग्रे ताम्बूलढौकनम् । "सुमेरुशृङ्गे सुरलोकनाथः स्नात्रावसाने प्रविलिप्य गन्धैः । जिनेश्वरं

वस्त्रचयैरनेकैराच्छादयामास निषक्तभक्तिः ॥ १ ॥ ततस्तदनुकारेण सांप्रतं श्राद्धपुङ्गवाः । कुर्वन्ति वसनैः पूजां त्रैलोक्यस्वामिनोऽग्रतः ॥ २ ॥" अनेन वृत्तद्वयेन जिनबिम्बस्य वस्त्रपूजा । "सुवर्णमुद्रामणिभिः कृतास्तु पूजा जिनस्य स्नपनावसाने । अनुष्ठिता पूर्वसुराधिनाथैः सुमेरुशृङ्गे धृतशुद्धभावैः ॥ १ ॥" अनेन वृत्तेन सुवर्णरूप्यटङ्कमुद्रामणिभिर्विस्वस्याङ्गपूजा जिनबिम्बाग्रतो विस्तीर्णश्रीपर्णीपीठं अन्योत्तमकाष्ठपीठं वा न्यस्य भूमिं वा शुद्धगोमयेन समारचय्य पुष्पाञ्जलिं गृहीत्वा । "मङ्गलं श्रीमदर्हन्तो मङ्गलं जिनशासनम् । मङ्गलं सकलः संघो मङ्गलं पूजका अमी ॥ १ ॥" अनेन वृत्तेन पीठोपरि वा समारचितभूमौ वा पुष्पाञ्जलिक्षेपः । "आत्मालोकविधौ जनोपि सकलस्तीव्रं तपो दुश्चरं दानं ब्रह्मपरोपकारकरणं कुर्वन्परिस्फूर्जति । सोऽयं यत्र सुखेन राजति स वै तीर्थाधिपस्याग्रतो निर्मेयः परमार्थवृत्तिविदुरैः संज्ञानिभिर्दर्पणम् ॥ १ ॥" अनेन वृत्तेन चन्दनमयं वा स्वर्णरूप्ययवमयं वा तन्दुलमयं वा जिनबिम्बाग्रे दर्पणं लिखेत् । "जिनेन्द्रपादैः परिपूज्य पृष्टैरतिप्रभावैरपि संनिकृष्टम् । भद्रासनं भद्रकरं जिनेन्द्रं पुरो लिखेन्मङ्गलसत्प्रयोगम् ॥ १ ॥" अनेन वृत्तेन चन्दनमयं वा स्वर्णरूप्यमयं वा जिनबिम्बाग्रतो भद्रासनं लिखेत् ॥ २ ॥ "पुण्यं यशः समुदयः प्रभुता महत्त्वं सौभाग्यधीविनयशर्ममनोरथांश्च । वर्धन्त एव जिननायक ते प्रसादात् तद्वर्धमानयुगसंपुटमादधानः ॥ १ ॥" अनेन वृत्तेनचं० जिनाग्रतो वर्धमानसंपुटं लिखेत् । ३ । "विश्वत्रये च स्वकुले जिनेशो व्याख्यायते श्रीकलशायमानः । अतोऽत्र पूर्णं कलशं लिखित्वा जिनार्चनाकर्म कृतार्थयामः ॥ १ ॥" अनेन वृत्तेन चन्दन०

तच्छ्रीवत्सरूया-
जिनप्रतिमाग्रतः पूर्णकलशं लिखेत् । ४ । "अन्तः परमज्ञानं यद्भाति जिनाधिनाथहृदयस्य । "त्वद्बन्ध्यपञ्चशरकेतनभा-
जातप्रकटीभूतं यदिह वन्दे ॥ १ ॥" अनेन वृत्तेनचं० जिनाग्रे श्रीवत्सं लिखेत् । ५ । सेवां तनोति पुरतस्तव मीनयुग्मं श्राद्धैः पुरो विलिखितोरुनि-
वक्तुं कर्तुं मुधा भुवननाथ निजापराधम् । "स्वस्तिभूगगननागविष्टपेषूदितं
जाङ्ग्युत्तया ॥ १ ॥" अनेन वृत्तेन चं० जिनाग्रे मत्स्ययुग्मं लिखेत् । ६ । अनेन वृत्तेनचं० जिन-
जिनवरोदयेक्षणात् । स्वस्तिकं तदनुमानतो जिनस्याग्रतो बुधजनैर्विलिख्यते ॥ १ ॥" अतश्चतुर्धा
बिम्बाग्रे स्वस्तिकं लिखेत् । ७ । "त्वत्सेवकानां जिननाथ दिक्षु सर्वासु सर्वे निधयः स्फुरन्ति । नन्द्यावर्तं लिखेत् । ८ ।
नवकोणनन्द्यावर्तः सतां वर्तयतां सुखानि ॥ १ ॥" अनेन वृत्तेनचं० जिनबिम्बाग्रे "दर्पणभद्रासनवर्द्धमानपूर्ण-
ततोऽष्टमङ्गलानि गन्धैः पुष्पैः फलैः पक्वान्नैः पूजयेत् । ततः पुष्पमालां गृहीत्वा । अनेन वृत्तेन पुष्पमालां जिनबिम्बो-
घटमत्स्ययुग्मैश्च । नन्द्यावर्तश्रीवत्सविस्फुटस्वस्तिकैर्जिनार्चास्तु ॥ १ ॥" "देवेन्द्रैः कनकाद्रिमूर्द्धनि जिनस्नात्रेण
परि न्यसेत् । अष्टमाङ्गलिक्यस्थापना यथा । तदनन्तरं पुष्पं गृहीत्वा भविका बिम्बं जगत्स्वामिनस्त-
गन्धार्पणैः पुष्पैर्भूषणवस्त्रमङ्गलगणैः संपूज्य मातुः पुनः । आनीयान्यतएवमत्र बिम्बं स्नपनपीठादुत्थाप्य यथा-
त्कृत्यानि समाप्य कल्पितमतः संप्रापयन्त्यास्पदम् ॥ १ ॥" अनेन वृत्तेन पुष्पारोपणम् । तदनन्तरं पूर्वरीत्या
स्थानं स्थापयेत् । स्थिरबिम्बे तु । आज्ञाहीनं क्रियाहीनं मन्त्र० । १ । अनेन दिक्पालक्षेत्रपालग्रहस्था-
आरात्रिकमाङ्गलिकादिकर्मकरणं पूजाकर्मवत् । तदनन्तरं चैत्यवन्दनं साधुवन्दनं च

पनां प्रति । "यान्तु देवगणाः सर्वे पूजामादाय मामकीम् । सिद्धिं दत्त्वा च महतीं पुनरागमनाय च ॥ १ ॥" इत्युक्त्वा पुष्पारोपणेन ग्रहदिक्पालक्षेत्रपालविसर्जनम् । इति बृहत्स्नात्रविधिः ॥ ॥ नवप्रतिष्ठिते बिम्बे प्रतिष्ठाखखिलाखपि । शान्तिके पौष्टिके चैव पर्वसु प्रौढकर्मसु ॥ १ ॥ तीर्थे नव्यासु यात्रासु प्राप्ते बिम्बे नवेपि च । बृहत्स्नात्रविधिर्योज्यः स्याद्वादोऽन्यत्र कर्मणि ॥ २ ॥" इति बृहत्स्नात्रविध्युपयोगः ॥ ॥ एवं दिनत्रिपञ्चसप्तकं द्रव्यक्षेत्रकालभावापेक्षया बृहत्स्नात्रविधिना नन्द्यावर्तसहितेन पूजा विधेया । ततो नन्द्यावर्तविसर्जनम् । तस्य चायं विधिः । पूर्वक्रमेण सर्ववलयदेवताः संपूज्य ततो बहिर्वलये यान्तु देवगणाः सर्वे० इत्युक्त्वा ॐ ग्रहाः सक्षेत्रपालाः पुनरागमनाय स्वाहा । तन्मध्यवलये । यान्तु देव० इत्युक्त्वा ॐ दिक्पालाः पुनरागमनाय स्वाहा । तन्मध्यवलये यान्तु देव० इत्युक्त्वा ॐ शासनयक्षिण्यः पुनरागमनाय स्वाहा । तन्मध्यवलये यान्तु देव० इत्युक्त्वा ॐ सर्वेन्द्रदेव्यः पुनरागमनाय स्वाहा । तन्मध्यवलये यान्तु देव० इत्युक्त्वा ॐ सर्वेन्द्राः पुनराग० । तन्मध्यवलये यान्तु देव० इत्युक्त्वा ॐ सर्वलोकान्तिकाः पुनराग० । तन्मध्यवलये यान्तु देव० इत्युक्त्वा ॐ विद्यादेव्यः पुनरा० । तन्मध्यवलये यान्तु देव० इत्युक्त्वा ॐ जिनमातरः पुनरा० । पुनस्तन्मध्यवलये यान्तु देव० इत्युक्त्वा ॐ पञ्चपरमेष्ठिनस्सरत्नत्रयाः पुनरा० । तन्मध्ये यान्तु देव० इत्युक्त्वा ॐ वाग्देवते पुनरा० । ॐ ईशानेन्द्र पुनरा० । ॐ सौधर्मेन्द्र पुनरा० । ततः ॐ ह्रीं श्रीपरमदेवतासनपरमेष्ठ्यधिष्ठानश्रीनन्द्यावर्त पुनरागमनाय स्वाहा । आज्ञाहीनं० ॥ १ ॥ अञ्जलिं बध्वा विसर्जनं ।

इति नन्द्यावर्तविसर्जनविधिः ॥ ॥ अथ कङ्कणमोचनविधिः । तत उत्कृष्टतया वर्षेण कङ्कणमोचनं मध्यस्थ-
तया षण्मासैः जघन्यतया मासेन पक्षेण दशाहेन सप्ताहेन त्र्यहेण वा । तत्र जिनपुरः पीठद्वये दिक्पाल-
सक्षेत्रपालग्रहस्थापनं बृहत्स्नात्रविधिना पञ्चामृतस्नात्रं सर्वौषधिस्नात्रपूर्वं जिनस्नात्रं तथैव च । ततो बृह-
त्स्नात्रविधेरन्तिमश्लोकेन मेरुशृङ्गेत्यादि अष्टोत्तरशतशुद्धजलकलशस्नात्रं नानागन्धैर्विलेपनं पुष्पधूपदीप-
नैवेद्यपूजनं पूर्ववत् । ततो दिक्पालसक्षेत्रपालग्रहपूजा पूर्ववत् । लघुस्नात्रविधियुक्त्या ततश्चैत्यवन्दनं चतुर्भिः
स्तुतिभिः शान्तिस्तवपाठः । ततः कङ्कणमोचनार्थं प्रतिष्ठादेवताविसर्जनार्थं करेमि काउस्सग्गं अन्नत्थ० या-
वत्० अप्पाणं० चतुर्विंशतिस्तवचिन्तनं भणनं च । ततः श्रुतशान्तिक्षेत्रभुवनशासनवैयावृत्यकरदेवताका-
योत्सर्गाः स्तुतयश्च पूर्ववत् । ततः सौभाग्यमुद्रया बिम्बे मन्त्रन्यासः । सचायं ॐ अवतरअवतरसोमे २ कुरु
२ वग्गु २ निवग्गु २ सोमेसोमणसे महुमहुरे कविल ॐ कः क्षः स्वाहा इत्युक्त्वा पञ्चपरमेष्ठिमन्त्रं पठित्वा
मङ्गलगीतनृत्यवाद्यैपूल्लसत्सु मदनफलारिष्टादिकङ्कणं बिम्बादुत्तार्य अविधवायाः करे देयं । ततो बिम्बे वा-
सान् निक्षिप्य ॐ विसर २ प्रतिष्ठादेवते स्वाहा इति मन्त्रं पठित्वा अञ्जलिमुद्रां कृत्वा विसर्जनं दिक्पाल-
ग्रहविसर्जनं पूर्ववत् । यान्तु देव० १ आज्ञाहीनं० इत्यादि यावत्कङ्कणमोचनं न भवति तावद्बृहत्स्नात्रवि-
धिना नित्यं स्नात्रं । कङ्कणमोचने कृते लघुस्नात्रविधिना वर्षं यावत् नित्यं स्नात्रं । ततो वर्षग्रन्थौ पूर्णे बृह-
त्स्नात्रविधिना स्नात्रं विधायोत्तरोत्तरपूजा विधेया । इति कङ्कणमोचनविधिः ॥ ॥ अथाचार्यान्तरेण मोच-

शङ्खहारमृणालाभः काशपुष्पनिभोपमः । शशाङ्को रोहिणीभर्ता सदा शान्तिं प्रयच्छतु ॥ २ ॥ धरणीगर्भसंभूतो बन्धुजीवनिभप्रभः । शान्तिं ददातु वो नित्यं कुमारो वक्रगः सदा ॥ ३ ॥ शिरीषपुष्पसंकाशः कृशाङ्गो भूषणार्जनः । सोमपुत्रो बुधः सौम्यः सदा शान्तिं प्रयच्छतु ॥ ४ ॥ सुवर्णवर्णसंकाशो भोगदायुःप्रदो विदुः । देवमन्त्री महातेजा गुरुः शान्तिं प्रयच्छतु ॥ ५ ॥ काशकुन्देन्दुसंकाशः शुक्रो वै ग्रहपुंगवः । शान्तिं करोतु वो नित्यं भृगुपुत्रो महायशाः ॥ ६ ॥ नीलोत्पलदलश्यामो वैडूर्याञ्जनसप्रभः । शनैश्चरो विशालाख्यः सदा शान्तिं प्रयच्छतु ॥ ७ ॥ अतसीपुष्पसंकाशो मेचकाकारसन्निभः । शान्तिं दिशतु वो नित्यं राहुश्चन्द्रार्कमर्दनः ॥ ८ ॥ सिन्दूररुधिराकारो रक्तोत्पलसमप्रभः । प्रयच्छतु सदा शान्तिं केतुरारक्तलोचनः ॥ ९ ॥ वर्णसंकीर्तनैरित्थं स्तुताः सर्वे नवग्रहाः । शान्तिं दिशन्तु मे सम्यक् अन्येषामपि देहिनाम् ॥ १० ॥ एवं शान्तिं समायोज्य पूजयित्वा यथाविधि । तद्भक्तलिङ्गिनां पश्चाद्भोजनं दानमाचरेत् ॥ ११ ॥ स्वल्पमन्नं ग्रहस्योक्तमादौ दत्वा विचक्षणः । पश्चात्कामिकमाहारं दत्वा तं भोजयेन्नरः ॥ १२ ॥ नानाभक्ष्यविशेषैश्च तथा मिष्टान्नपानकैः । यावद्भवन्ति संतुष्टास्तावत्संभोज्य पूजयेत् ॥ १३ ॥ तेषां संतोषमात्रेण ग्रहास्तोषमुपागताः । आतुरस्यार्तिहरणं कुर्वन्ति मुदिताः सदा ॥ १४ ॥" कुङ्कुमकर्पूरकस्तूरिकागोरोचनाभिर्ग्रहा मण्डनीयाः । कणयरपुष्प १ कुमुद २ जासून ३ चम्पक ४ सेवन्ती ५ जाइ ६ वेउल ७ कुन्द ८ नीली ९ पुष्पैः पूजनीयाः । द्राक्षा १ इक्षु २ पूग ३ नारङ्ग ४ करुणा ५ बीजपूर ६ खजूर ७ नालिकेर ८ दाडिम ९ फलानि ढौकनीयानि ।

नैवेद्यं यथाशक्ति । धूपवासकर्पूरादिपूजा कर्तव्या । मूलमन्त्रेण बलिमभिमन्त्र्य भूतबलिक्षेपः । ततो दिक्पा-
लपूजा । ततो लूणपाणी आरती मङ्गलप्रदीपः देववन्दनप्रतिष्ठा देवताविसर्जनार्थं कङ्कणमोचनार्थं करेमि काउ-
स्सग्गं लोगस्स उज्जो० १ । चिन्तनं पाठश्च । ततः श्रुतदेव्याराधनार्थं करेमि काउस्सग्गं नवकार १ चि-
न्तनं नमोऽर्हं० सुयदेवयाभण० ॥ १ ॥ ततो वाग्देव्यारा० "वाग्देवी वरदीभूतपुस्तिकापद्मलक्षितौ । आ-
पोया बिभ्रती हस्तौ पुस्तिकापद्मलक्षितौ ॥ २ ॥" शान्तिदेव्यारा० । "उन्मृष्टरिष्टदुष्टग्रहगतिदुःस्वप्नदुर्निमि-
त्तादिः । संपादितहितसंपन्नामग्रहणं जयति शान्तेः ॥ ३ ॥" अथ क्षेत्रदेवी० । यस्याः क्षे० ॥ ४ ॥ ततः स-
मस्तवैयावृत्त्यकराराधना० । सम्मद्दंसणजुत्ता जिणमयभत्ताणहियसमजुत्ता । जिणवेयावच्चगरा सवे मे
हुंतु संतिकरा ॥ ५ ॥ ततः सौभाग्यमुद्रया ॐ अवतर २ सोमे २ कुरु २ वग्गु २ निवग्गु २ सोमे सोमणसे
महुमहुरे कविल ॐ कः क्षः स्वाहा । अनेन मन्त्रेण मङ्गलाचारपूर्वकं कङ्कणछोटनं सुमुहूर्ते कर्तव्यम् । ततः ॐ
विसर २ प्रतिष्ठादेवता स्वाहा । अञ्जलिमुद्रया विसर्जनम् । "देवा देवार्चनार्थं ये पुरुहूताश्चतुर्विधाः । ते वि-
धायार्हतः पूजां यान्तु सर्वे यथागतम् ॥ १ ॥" ततः शान्तिपठनं संघवात्सल्यं यथाशक्ति द्वादशमासिकं
स्नात्रं वर्षग्रन्थिः करणीयः । इति प्रतिष्ठाधिकारे कङ्कणछोटनविधिः आचार्यान्तरोक्तः ॥ ॥ तथा चैत्यस्थाप-
नीयेषु गृहस्थापनीयेषु धातुकाष्ठपाषाणदन्तनिर्मितेषु बिम्बेषु प्रतिष्ठाकर्म सदृशमेव किंतु लेप्यमयेऽयं विशेषः ।
लेप्यबिम्बे स्नात्रकर्म दर्पणप्रतिच्छन्दप्रविष्टे दर्पण एव कुर्यात् । शेषं पूर्ववत् । तथाच गृहपूज्यबिम्बानां कु-

नविधिः। प्रतिष्ठानन्तरं दिन ३।५।७।९ कङ्कणत्रोटनं करणीयं। तत्र नान्दीफलानि करणीयानि । खीच पायली २ पूयडी २७ पञ्चामृतस्नात्रं करणीयं। घृत १ दुग्ध २ दधि ३ खंड ४ सर्वौषधि ५ चन्दनकर्पूरोद्वर्तनैः बिम्बे प्रथमं पूजां विधाय । नमोऽर्हत्सिद्धाचा० पूर्वकं । "उवणेउ मङ्गलं वो जिणाण मुहलालिजालसंवलिआ। तित्थपवत्तणसमए तियसविमुक्का कुसुमवुट्ठी ॥ १ ॥" अग्रतः कुसुमाञ्जलिर्मोक्तव्यः । "जाहिजूहियकुन्दमन्दारनीलुप्पलवरकमलसिन्दुवारचम्पय । समुज्जलपसरन्तपरिमलबहुलगन्धलुद्धनचन्तमहुयर । इय कुसुमंजलिजिणचलणि चिंतय पावपणासं मुक्कियतारायणसरिसभवेवह पूरउ आस ॥ २ ॥" पादयोर्मोक्तव्या। "सयवत्तकुंदमालय बहुवियकुसुमाइं पंचवन्नाइं । जिणनाहन्हवणकाले दिंतु सुरा कुसुमंजली हत्था ॥ ३ ॥" हस्तयोः। "मुक्कजिणवमुक्कजिणवन्हवगकालम्मि कुसुमंजलिसुरवरिहि महमहंततिहुअणमहग्घिय निवडंतजिणपयकमलि हरउ दुरिउ सिरिसमणसंघहा वीरजिणंदहपयकमलि देवहिमुक्कसतोस। सा कुसुमंजलि अवहरउ भवियह दुरिय असेस ॥ ४ ॥" शिरसि । ततो धूपोद्ग्राहः । अहिणवेहिं कणयकलसेहिं खीरोयहिजलभरिएहिं सुरवरेहिं करयलि धरेविणु अहिसित्तउ पासजिणु मेरुसिहरि जयजय भणेविणु हियआइं पडंतं निव्ववेउ वे। पावगिम्हतवियाइ घणसमयस्सव पढमं मज्जणसलिलं मुणिवयस्स ॥ १ ॥ बालत्तणम्मि सामिय सुमेरुसिहरम्मि कणयकलसेहिं । तियसासुरेहि न्हविओ ते धण्णा जेहिं दिट्ठोसि ॥ २ ॥" प्रथमं सामान्यस्नात्रं पानीयधाराचन्दनतिलकं पुष्पारोपणं सर्वस्नात्रेषु करणीयं । धूपो देयः । तद-

नन्तरं घृतस्नात्रं नमोऽर्हत्सि० "घृतमायुर्वृद्धिकरं भवति परं जैनगात्रसंपर्कात् । तद्भगवतोऽभिषेके पातु घृतं
घृतसमुद्रस्य ॥ १ ॥" पानीयधाराद्यं० । अथ दुग्धस्नात्रं । "दुग्धं दुग्धाम्भोधेरुपाहृतं यत्सुरासुरवरेन्द्रैः । तद्ब-
लपुष्टिनिमित्तं भवतु सतां भगवदभिषेके ॥ २ ॥" पानीयधाराद्यं० । अथ दधि० । "दधि मङ्गलाय सततं
जिनाभिषेकोपयोगतोऽप्यधिकम् । भवतु भविनां शिवाध्वनि दधि जलधेराहृतं त्रिदशैः ॥ ३ ॥" पानीय-
धाराद्यं० । अथ इक्षुरस० । इक्षुरसोदादुपहृत इक्षुरसः सुरवरैस्तदभिषेके । भवदवसदवथु भविनां जनयतु
शैत्यं सदानन्दम् ॥ ४ ॥" पानीयधाराद्यं० । ततः कस्तूरेण कर्पूरेण वा पीठिकया उद्वर्त्य कलस १०८ स्नात्रं ।
ततः पुनः कुसुमाञ्जलिक्षेपः । ततः सर्वौषधिस्नात्रं । "सर्वौषधीषु निवसति अमृतमिदं सत्यमर्हदभिषेकात् ।
तत्सर्वौषधिसहितं पञ्चामृतमस्तु वः सिद्ध्यै ॥ ५ ॥" ततः अङ्गप्रक्षालनं लूहनं विलेपनं च । सुरभिपुष्पैः
पूजनं । ततः फलपत्रप्रगाक्षतधूपदीपजलनान्दीफलढौकनं । अगरूत्क्षेपः । शुचिस्थाले ग्रहपूजास्थापना । ॐ
नमः सूर्याय इत्यादि ॥ ॥ अथ ग्रहशान्तिः । "प्रणम्य सर्वभावेन देवं विगतकल्मषम् । ग्रहशान्तिं प्रव-
क्ष्यामि सर्वविघ्नप्रणाशिनीम् ॥ १ ॥ सम्यक्स्तुता ग्रहाः सर्वे शान्तिं कुर्वन्ति नित्यशः । तेनाहं श्रद्धया किं-
ञ्चितपूजां वक्ष्ये विधानतः ॥ २ ॥ ग्रहवर्णानि गन्धानि पुष्पाणि च फलानि च । अक्षतानि हिरण्यानि धूपाश्च
सुरभीणि च ॥ ३ ॥ एवमादिविधानेन ग्रहाः सम्यक्प्रपूजिताः । व्रजन्ति तोषमत्यर्थं तुष्टाः शान्तिं ददाति
च ॥ ४ ॥ बन्धूकपुष्पसंकाशो रक्तोत्पलसमप्रभः । लोकनाथो जगद्दीपः शान्तिं दिशतु भास्करः ॥ १ ॥

शङ्खहारमृणालाभः काशपुष्पनिभोपमः । शशाङ्को रोहिणीभर्ता सदा शान्तिं प्रयच्छतु ॥ २ ॥ धरणीगर्भसंभूतो बन्धुजीवनिभप्रभः । शान्तिं ददातु वो नित्यं कुमारो वक्रगः सदा ॥ ३ ॥ शिरीषपुष्पसंकाशः कृशाङ्गो भूषणार्जनः । सोमपुत्रो बुधः सौम्यः सदा शान्तिं प्रयच्छतु ॥ ४ ॥ सुवर्णवर्णसंकाशो भोगदायुःप्रदो विदुः । देवमन्त्री महातेजा गुरुः शान्तिं प्रयच्छतु ॥ ५ ॥ काशकुन्देन्दुसंकाशः शुक्रो वै ग्रहपुंगवः । शान्तिं करोतु वो नित्यं भृगुपुत्रो महायशाः ॥ ६ ॥ नीलोत्पलदलश्यामो वैडूर्याञ्जनसप्रभः । शनैश्चरो विशालाख्यः सदा शान्तिं प्रयच्छतु ॥ ७ ॥ अतसीपुष्पसंकाशो मेचकाकारसन्निभः । शान्तिं दिशतु वो नित्यं राहुश्चन्द्रार्कमर्दनः ॥ ८ ॥ सिन्दूररुधिराकारो रक्तोत्पलसमप्रभः । प्रयच्छतु सदा शान्तिं केतुरारक्तलोचनः ॥ ९ ॥ वर्णसंकीर्तनैरित्थं स्तुताः सर्वे नवग्रहाः । शान्तिं दिशन्तु मे सम्यक् अन्येषामपि देहिनाम् ॥ १० ॥ एवं शान्तिं समायोज्य पूजयित्वा यथाविधि । तद्भक्तलिङ्गिनां पश्चाद्भोजनं दानमाचरेत् ॥ ११ ॥ स्वल्पमन्नं ग्रहस्योक्तमादौ दत्वा विचक्षणः । पश्चात्कामिकमाहारं दत्वा तं भोजयेन्नरः ॥ १२ ॥ नानाभक्ष्यविशेषैश्च तथा मिष्टान्नपानकैः । यावद्भवन्ति संतुष्टास्तावत्संभोज्य पूजयेत् ॥ १३ ॥ तेषां संतोषमात्रेण ग्रहास्तोषमुपागताः । आतुरस्यार्तिहरणं कुर्वन्ति मुदिताः सदा ॥ १४ ॥" कुङ्कुमकर्पूरकस्तूरिकागोरोचनाभिर्ग्रहा मण्डनीयाः । कणयरपुष्प १ कुमुद २ जासून ३ चम्पक ४ सेवन्ती ५ जाइ ६ वेउल ७ कुन्द ८ नीली ९ पुष्पैः पूजनीयाः । द्राक्षा १ इक्षु २ पूग ३ नारङ्ग ४ करुणा ५ बीजपूर ६ खजूर ७ नालिकेर ८ दाडिम ९ फलानि ढौकनीयानि ।

नैवेद्यं यथाशक्ति । धूपवासकर्पूरादिपूजा कर्तव्या । मूलमन्त्रेण बलिमभिमन्त्र्य भूतबलिक्षेपः । ततो दिक्पालपूजा । ततो लूणपाणी आरती मङ्गलप्रदीपः देववन्दनप्रतिष्ठा देवताविसर्जनार्थं कङ्कणमोचनार्थं करेमि काउस्सग्गं लोगस्स उज्जो० १ । चिन्तनं पाठश्च । ततः श्रुतदेव्याराधनार्थं करेमि काउस्सग्गं नवकार १ चिन्तनं नमोऽर्हं० सुयदेवया भग० ॥ १ ॥ ततो वाग्देव्यारा० "वाग्देवी वरदीभूतपुस्तिकापद्मलक्षितौ । आप्तोद्या बिभ्रती हस्तौ पुस्तिकापद्मलक्षितौ ॥ २ ॥" शान्तिदेव्यारा० । "उन्मृष्टरिष्टदुष्टग्रहगतिदुःस्वप्नदुर्निमित्तादिः । संपादितहितसंपन्नामग्रहणं जयति शान्तेः ॥ ३ ॥" अथ क्षेत्रदेवी० । यस्याः क्षे० ॥ ४ ॥ ततः समस्तवैयावृत्त्यकराराधना० । सम्मद्दंसणजुत्ता जिणमयभत्ताणहियसमजुत्ता । जिणवेयावच्चगरा सव्वे मे हुंतु संतिकरा ॥ ५ ॥ ततः सौभाग्यमुद्रया ॐ अवतर २ सोमे २ कुरु २ वग्गु २ निवग्गु २ सोमे सोमणसे महुमहुरे कविल ॐ कः क्षः स्वाहा । अनेन मन्त्रेण मङ्गलाचारपूर्वकं कङ्कणछोटनं सुमुहूर्ते कर्तव्यम् । ततः ॐ विसर २ प्रतिष्ठादेवता स्वाहा । अञ्जलिमुद्रया विसर्जनम् । "देवा देवार्चनार्थं ये पुरुहूताश्चतुर्विधाः । ते विधायार्हतः पूजां यान्तु सर्वे यथागतम् ॥ १ ॥" ततः शान्तिपठनं संघवात्सल्यं यथाशक्ति द्वादशमासिकं स्नात्रं वर्षग्रन्थिः करणीयः । इति प्रतिष्ठाधिकारे कङ्कणछोटनविधिः आचार्यान्तरोक्तः ॥ ॥ तथा चैत्यस्थापनीयेषु गृहस्थापनीयेषु धातुकाष्ठपाषाणदन्तनिर्मितेषु बिम्बेषु प्रतिष्ठाकर्म सदृशमेव किंतु लेप्यमयेऽयं विशेषः। लेप्यबिम्बे स्नात्रकर्म दर्पणप्रतिच्छन्दप्रविष्टे दर्पण एव कुर्यात् । शेषं पूर्ववत् । तथाच गृहपूज्यबिम्बानां कु-

तायां प्रतिष्ठायां यदि तत्रैव लब्धे गृहे स्थाप्यमाने पूर्वप्रतिष्ठितकङ्कणमोचनविधिं कुर्यात् । अन्यत्र वा गृहपूज्यबिम्बे कुतोपि गृहे स्थापनं भवति तत्रैव कङ्कणमोचनं कुर्यात्। यदि वा तद्बिम्बमन्यत्र गृहान्तरे ग्रामान्तरे वा देशान्तरे वा स्थाप्यं भवति तदा तस्य कङ्कणमोचनं तत्र नीत्वा प्रवेशकमहोत्सवैः कुर्यात्। कङ्कणमोचनस्य स एव विधिः। इति प्रतिष्ठाधिकारे जिनबिम्बप्रतिष्ठा संपूर्णा ॥ १ ॥

अथ चैत्यप्रतिष्ठाविधिः ॥ २ ॥ सचायं बिम्बप्रतिष्ठासदृशे लग्ने बिम्बप्रतिष्ठानन्तरं तत्कालमेव दिनमासपक्षवर्षान्तरेषु वा संघमीलनम्। चैत्यचतुर्दिक्षु वेदिकाकरणं कुर्वीत । ततश्चतुर्विंशतितन्तुसूत्रेण अन्तर्बहिर्वेष्टितेन चैत्यरक्षाकरणं शान्तिमन्त्रेण। ततः स्नात्रकारपञ्चकम् ओषधिवर्तकनारीपञ्चकं पूर्ववत्। तथैव रसाञ्जनसौवीरमाक्षिकवर्तनं नास्ति। ततो बृहत्स्नात्रविधिना जिनस्नात्रं विधाय सप्तधान्यवर्धापनं बिम्बवत् रक्षाबन्धनं च बिम्बवत्। ततो रौद्रदृष्ट्या मध्याङ्गुलिद्वयोर्ध्वीकरणेन वामकरजलेन चैत्याछोटनम् । ततश्चैत्यस्य वस्त्राच्छादनम् उपरि च पूर्ववत्। नानागन्धफलपुष्पैः पूजनम्। ततो नन्द्यावर्तस्थापनं पूजनं सर्वं बिम्बप्रतिष्ठावत्। ततः संप्राप्तायां लग्नवेलायां वासक्षेपपूर्वं जिनप्रतिष्ठामन्त्रं पठित्वा वास्तुदेवतामन्त्रं पठेत् । सचायं ॐ ह्रींश्रींक्षांक्षींक्षूंह्रांह्रीं भगवति वास्तुदेवते ल ५ क्षि ५ इह चैत्ये अवतर २ तिष्ठ २ स्वाहा इति वासक्षेपपूर्वकं देहल्यां द्वारश्रियां शिखरे सप्तसप्तवेलं वासान् क्षिपेत्। ततो वेद्यन्तेषु नैवेद्यशरावादि पूर्ववत्। ततः प्रतिष्ठाता पुनः बृहत्स्नात्रविधिना जिनस्नात्रं कुर्यात्। ततश्चैत्यात् वस्त्रापनयनं महोत्सवश्च सर्वोपि पूर्ववत्।

तत: प्रतिष्ठादेवताविसर्जनं शक्रस्तवकायोत्सर्गस्तुतिप्रभृति सर्वं पूर्ववत् । ततः प्रतिष्ठितध्वजारोपश्चैत्ये । ध्वजप्रतिष्ठा तदधिकाराज्ज्ञेया । ततो नन्द्यावर्तविसर्जनं पूर्ववत् । महाचैत्यप्रतिष्ठावत् मण्डपप्रतिष्ठा । किंतु जिनस्नात्रमेकवेलमेव । देवकुलिकाप्रतिष्ठायां वेदिकरणं वेदिबलिविधानं । बृहन्नन्द्यावर्तपूजनं नास्ति किंतु लघुनन्द्यावर्तपूजनं । तस्य चायं विधिः । पूर्ववन्नन्द्यावर्तलिखनं । तद्दक्षिणपार्श्वे धरणेन्द्रस्थापनं वामपार्श्वे अम्बादेवीस्थापनं अधः श्रुतदेवीस्थापनं । उपरि गौतमगणधरस्थापनं । प्रथमवलये पञ्चपरमेष्ठिरत्नत्रयस्थापनं । द्वितीयवलये विद्यादेवीस्थापनं । तृतीयवलये शासनयक्षिणीस्थापनं । चतुर्थवलये दिक्पालस्थापनं । पञ्चमवलये ग्रहक्षेत्रपालस्थापनं । ततो बहिश्चतुर्दिक्षु चतुर्णिकायदेवस्थापनं । एषाम् आवाहनं पूजनं सर्वं पूर्ववत् । इति पञ्चवलयो नन्द्यावर्तविधिः । अन्यत्सर्वं चैत्यवत् । मण्डपिकाप्रतिष्ठा देवकुलिकाप्रतिष्ठावत् । कोष्ठिकाद्विप्रतिष्ठायां सूत्रेण रक्षाकरणं दिक्पालग्रहपूजनं वास्तुदेवतामन्त्रेण वासक्षेपः ॥ इति प्रतिष्ठाधिकारे चैत्यप्रतिष्ठाविधिः ॥ २ ॥

अथ कलशप्रतिष्ठाविधिः ॥ ३ ॥ सचायम् । तत्र भूमिशुद्धिः पूर्ववत् । लग्नशुद्धिः प्रतिष्ठावत् । गन्धोदकैः पुष्पैर्भूम्यधिवासनं च । तत्र पूर्वमेव आदितस्तद्भूमौ पञ्चरत्नकं कुम्भकारचक्रमृत्तिकासहितं भूम्यन्तर्निक्षिपेत् । तत्रोपरिकलशं स्थापयेत् । ततः सर्वजलाशयेभ्यः पवित्रस्थानाज्जलानयनं पूर्ववत् । ततो बृहत्स्नात्रविधिना चैत्यबिम्बे स्नात्रकरणम् । लघुपञ्चवलयनन्द्यावर्तस्थापनं पूजनं पूर्ववत् । तथाच जिनबिम्बचैत्यमण्डप-

देवकुलिकामण्डपिकाकलशध्वजगृहबिम्बप्रतिष्ठाकारयितॄणां नृणां याज्यानां गृहे पूर्वमेव शान्तिकं पौष्टिकं च कुर्यात्। तथा नन्द्यावर्तपूजनानन्तरं सर्वदिक्षु दिक्पालनामग्रहणपूर्वकं शान्तिबलिं दद्यात्। यथा ॐ इन्द्राय नमः ॐ इन्द्र इह कलशप्रतिष्ठायां इमं बलिं गृहाण २ स्थपकस्थापककर्तृणां संघस्य जनपदस्य शान्तिं तुष्टिं पुष्टिं कुरु २ स्वाहा। एवं सर्वदिक्पालानां सर्वदिगभिमुखं बलिदानं। तत्र बलिदाने पूर्वं जलचुलुकक्षेपः पश्चाद्गन्धछटा ततः पुष्पक्षेपः ततो राद्धसप्तधान्यक्षेपः अनेनैव मन्त्रेण सर्वेषाम् ॐ अग्नये नमः ॐ अग्नये इत्यादि सर्वेषाम्। पूर्वोक्ताभिः स्त्रीभिः पूर्वोक्तसर्वौषधिवर्तनम्। स्नात्रकारप्रगुणीकरणं पूर्ववत्। सकलीकरणं पूर्ववत्। स्वस्य स्नात्रकाराणां च शुचिविद्यारोपणं पूर्ववत्। ततो देवाग्रे चैत्यवन्दनं चतसृभिः स्तुतिभिः शान्तिदेवताश्रुतदेवताशासनदेवताक्षेत्रदेवतासमस्तवैयावृत्यकरकायोत्सर्गाः स्तुतयश्च पूर्ववत्। पुष्पाञ्जलिं गृहीत्वा। "पूर्णं येन सुमेरुशृङ्गसदृशं चैत्यं सुदेदीप्यते यः कीर्तिं यजज्ञानधर्मकथनप्रस्फूर्जितां भाषते। यः स्पर्धां कुरुते जगत्रयमहीदीपेन दोषारिणा सोऽयं मङ्गलरूपमुख्यगणनः कुम्भश्चिरं नन्दतु ॥ १ ॥" अनेन वृत्तेन कलशे पुष्पाञ्जलिप्रक्षेपः। तदनन्तरम् आचार्येण मध्याङ्गुलिद्वयोर्ध्वीकरणेन तर्जनीमुद्रा रौद्रदृष्ट्या देया। तदनु वामकरे जलं गृहीत्वा कलश आच्छोटनीयः। ततः कलशस्य चन्दनेन तिलकं पुष्पादिभिः पूजनं ततो मुद्गरमुद्रादर्शनं। ततः ॐ ह्रींक्ष्वांसर्वोपद्रवं रक्ष रक्ष स्वाहा। अनेन मन्त्रेण कण्ठे हस्तस्पर्शेन कलशस्य चक्षूरक्षा कलशोपरि सप्तधान्यकप्रक्षेपः पूर्ववत्। ततो हिरण्यगर्भितकलशचतुष्टयेन कलशस्य स्नात्रम्। वृत्तम्।

"यत्पूतं भुवनत्रयसुरासुराधीशदुर्लभं वर्ण्यम् । हेम्ना तेन विमिश्रं कलशे स्नात्रं भवत्वधुना ॥ १ ॥" ततः सर्वौषधि १ मूलिका २ गन्धोदक ३ वासोदक ४ चन्दनोदक ५ कुङ्कुमोदक ६ कर्पूरोदक ७ कुसुमोदक ८ भरितैः कलशैः स्नात्रवृत्तैरेव किन्तु वृत्तमध्ये जिनविम्बस्थाने कलशकुम्भइत्याद्युच्चारणं विधेयम् । ततः पञ्चरत्नसिद्धार्थसमेतरक्षापोट्टलिकाबन्धः पूर्ववत् । ततः ॐ अर्हत्परमेश्वराय इहागच्छतु २ अनेन मन्त्रेण वामहस्ताधृतदक्षिणकरेण कलशं चन्दनेन सर्वाङ्गमालिप्य पुष्पसमेतमदनफलऋद्धिवृद्धियुतबन्धनम् । कलशे धूपदानं पूर्ववत् । कङ्कणबन्धनं । ततः स्त्रीभिर्निरुञ्छनकरणम् । सुरभिमुद्रा १ परमेष्ठिमुद्रा २ गरुडमुद्रा ३ अञ्जलिमुद्रा ४ गणधरमुद्रा ५ दर्शनम् । सूरिमन्त्रेण वारत्रयमधिवासनं । ॐ स्थावरे तिष्ठ तिष्ठ स्वाहा अनेन वस्त्राच्छादनम् । तदुपरि पूर्ववत् जम्बीरादिफलसप्तधान्यकपुष्पपत्रपरिक्षेपः । ततः कलशस्यारात्रिकावतरणं । वृत्तं यथा "दुष्टसुरासुररचितं नरैः कृतं दृष्टिदोषजं विघ्नम् । तद्गच्छत्वतिदूरं भविककृतारात्रिकविधानैः ॥ १ ॥" चैत्यवन्दनं । ततोऽधिवासनादेव्या आराधनानिमित्तं करेमि काउस्सग्गं अन्नत्थ० यावत् अप्पा० चतुर्विंशतिस्तवचिन्तनं पारयित्वा अधिवासनदेवीस्तुतिकथनं पूर्ववत् । किंतु जैनविम्बस्थाने जैनकलशे इति कथनीयम् । ततः शान्तिदेव्यम्बिकादेवीसमस्तवैयावृत्यकरकायोत्सर्गाः स्तुतयश्च पूर्ववत् । ततः पुनः पूर्ववत् शान्तिबलिदानं शक्रस्तवेन चैत्यवन्दनं बृहच्छान्तिस्तवभणनं प्रतिष्ठादेवताराधनार्थं करेमि काउस्सग्गं कायोत्सर्गश्चतुर्विंशतिस्तवचिन्तनं चतुर्विंशतिस्तवभणनं । यदधिष्ठिताः प्रतिष्ठा० इति स्तुतिपाठः । सूरिः

स्वयं अक्षतैरञ्जलिं कृत्वा लोकाश्च तथाक्षतभृताञ्जलीन् समीपे विधाय मङ्गलगाथाः पठेत् । नमोऽर्हत्सिद्धा० १ जह सग्गस्स० २ जह मेरुस्स० ३ जह लवणस्स० ४ जह जम्बुस्स० ५ । ततः पूर्ववृत्तेन पुष्पाञ्जलिक्षेपः वस्त्रापनयनं महोत्सवो धर्मदेशना पूर्ववत् । ततः प्रासादमूर्ध्नि मण्डपमूर्ध्नि वा कलशारोपणं तदारोपकस्य स्थपतेः वस्त्रकङ्कणादिदानं अष्टाह्निकामहोत्सवः साधुभ्यो वस्त्रपात्रान्नदानं संघार्चा मार्गणदीनतोषणं । पाषाणमये कलशे चैत्यसमाप्तिसमकालरोपिते चैत्यप्रतिष्ठैव सैव पूर्णा प्रतिष्ठा । तस्मिंश्च कालान्तरारोपिते अयमेव प्रतिष्ठाविधिः । मृत्कलशे च विवाहमण्डपाद्यारोपिते परमेष्ठिमन्त्रेणैव वासक्षेपप्रतिष्ठा ॥ इति प्रतिष्ठाधिकारे कलशप्रतिष्ठा संपूर्णा ॥ ३ ॥

अथ ध्वजप्रतिष्ठाविधिः ॥ ४ ॥ स चायम् । भूमिशुद्धिः पूर्ववत् । तत्र भूमौ गन्धोदकपुष्पादिसत्कारः पूर्ववत् । अमारिघोषणं पूर्ववत् । संघाह्वानं वेदिकारचनं बृहद्दशवलयनन्द्यावर्तलिखनं दिक्पालस्थापनं च पूर्ववत् । ततः सूरिः कङ्कणमुद्रिकाहस्तः सदशवस्त्रपरिधानः सकलीकरणं कृत्वा शुचिविद्यां चारोपयति पूर्ववत् । स्नपनकारान् पूर्वोक्तरूपान् अभिमन्त्रयते कलशारोपणवत् । सर्वदिक्षु बलिदानं धूपसहितं सोदकं क्रियते । बल्यभिमन्त्रणमन्त्रो यथा—ॐ ह्रीं क्ष्वीं सर्वोपद्रवं रक्ष २ स्वाहा । दिक्पालाह्वानं बिम्बप्रतिष्ठावत् । ततः शान्तिबलिं दत्वा मूलबिम्बस्य बृहत्स्नात्रविधिना स्नात्रम् । तदत्र चैत्यवन्दनं चतसृभिः स्तुतिभिः संघसहितेन गुरुणा कार्यम् । ततः शान्ति १ श्रुत २ क्षेत्र ३ भुवन ४ शासन ५ वैयावृत्यकर ६ कायोत्सर्गस्तुतयः

पूर्ववत् । ततो वंशे कुसुमाञ्जलिक्षेपः । वृत्तम् । “रत्नोत्पत्तिर्बहुसरलता सर्वपर्वप्रयोगः स्पष्टोच्चत्वं गुणसमुदयो
मध्यगम्भीरता च । यस्मिन्सर्वा स्थितिरतितरां देवभक्तप्रकारा तस्मिन्वंशे कुसुमविततिर्भव्यहस्तोद्गतास्तु
॥ १ ॥” चन्दनचर्चनं पुष्पादिभिः पूजनं हिरण्यगर्भितजलकलशस्नानानि कलशवत् । ततः क्रमेण कर्पूर १
पञ्चरत्नचूर्ण २ कस्तूरी ३ गोशृङ्गचतुष्पथराजद्वारवल्मीकमृत्तिका ४ मूल्य ५ गरु ६ सहस्रमूली ७ गन्ध ८
वास ९ चन्दन १० कुङ्कुम ११ तीर्थोदक १२ कनकमिश्रजल १३ कलशैः पूर्वैरेव वृत्तैर्ध्वजनामाङ्कितैः ध्वज-
दण्डस्य स्नात्रम् । ततः पञ्चामृतस्नात्रम् । ततो बृहत्स्नात्रविधिकाव्यैरेव । ततो वंशस्य चन्दनेन चर्चनं पुष्पा-
रोपणं धूपदानं बृहत्स्नात्रविधिकाव्यैरेव । ऋद्धिवृद्धिसर्षपमदनफलरूपकङ्कणबन्धो बिम्बप्रतिष्ठावत् । नन्द्या-
वर्तपूजनं । प्राप्तायां लग्नवेलायां सदशवस्त्रेण वंशस्याच्छादनं । पञ्चमुद्रान्यासः कलशवत् । चतुर्भिः स्त्रीभि-
र्निञ्छनकरणम् । ततो ध्वजपटाधिवासनं वासधूपादिप्रदानतः । ॐ श्रींठः अनेन ध्वजवंशस्याभिमन्त्रणम् ।
ततो जयवारफलजातियलिनैवेद्यढौकनम् । आरात्रिकावतरणं । ध्वजसामाङ्कितकलशारात्रिकवृत्तेन । पुनर-
धिकृतजिनस्तुत्या चैत्यवन्दनम् । ततः शान्तिनाथस्याराधनार्थं करेमि काउस्सग्गं । वन्दण अन्नत्थ० यावत्
अप्पाणं वो० चतुर्विंशतिस्तवचिन्तनं पारयित्वा स्तुतिपाठः । यथा—श्रीमते शान्तिना० ॥ १ ॥ ततः श्रुत०
१ शान्तिदेवी २ शासनदेव्य ३ म्बिका ४ क्षेत्रदेव्य ५ धिवासनदेवी ६ समस्तवैयावृत्यकर ७ कार्योत्स-
र्गस्तुतयः पूर्ववत् । ततः उपविश्य शक्रस्तवपाठः बृहच्छान्तिस्तवभणनं बलिदाने ससधान्यं फलजातिदानं

वासपुष्पधूपाधिवासनं वस्त्रस्यापनयनं ततो वंशे ध्वजपट्टारोपणं ध्वजस्यारोपितपदस्य चैत्यपार्श्वे त्रिःप्रदक्षिणाकरणं ततः प्रासादशिखरे पुष्पाञ्जलिक्षेपः कलशस्नपनम् । वृत्तम्—“कुलधर्मजातिलक्ष्मीजिनगुरुभक्तिप्रभोदितोन्नतिदे । प्रासादे पुष्पाञ्जलिरयमस्मत्करकृतो भूयात् ॥ १ ॥” अनेन पुष्पाञ्जलिक्षेपः । “चैत्याग्रतां प्रपन्नस्य कलशस्य विशेषतः । ध्वजारोपविधौ स्नानं भूयाद्भक्तजनैः कृतम् ॥ १ ॥” अनेन वृत्तेन शिखरे कलशस्नपनम् । ध्वजगृहे पञ्चरत्ननिक्षेपः । सर्वग्रहदृष्टे शुभे लग्ने शुभांशके ध्वजनिक्षेपः । सूरिमन्त्रेण वासनिक्षेपः । फलं जातिसप्तधान्यबलिमोरिण्डकमोदकादिवस्तूनां प्रभूतानां प्रक्षेपणम् । महाध्वजस्य ऋजुगत्या दक्षिणकरे प्रतिमाया बन्धनम् । प्रवचनमुद्रया सूरिणा धर्मदेशना कार्या । संघार्चनम् अष्टाहिका पूजा । ततो विषमदिने त्रिपञ्चसप्तसंख्ये जिनपूजनं कृत्वा बृहत्स्नात्रविधिना भूतबलिं दत्त्वा चैत्यवन्दनं विधाय शान्ति १ श्रुत २ क्षेत्र ३ भुवन ४ शासन ५ समस्तवैयावृत्तकरकायोत्सर्गस्तुतिदानं विधाय महाध्वजस्य छोटनम् । ततः पूर्ववत् नन्द्यावर्तविसर्जनं साधुभ्यो वस्त्रान्नपानदानं यथाशक्त्या मार्गणदीनपोषणं । ध्वजरूपं यथा—“विग्रैवेयकशिखरः प्रमाणमानो ध्वजस्य वै दण्डः । दण्डतृतीयांशोनो भवति तथा ध्वजपटोर्धपृथुः ॥ १ ॥ शुभ्रो वा रक्तो वा विचित्रवर्णोथवासघंटाभृत् । ध्वजदण्डः स्वर्णमयो वंशमयो वाऽन्यमयः ॥ २ ॥” पताकाप्रतिष्ठायां तु सूरिमन्त्रेण वासक्षेपश्च विधेयः चन्दनचर्चनं पुष्पारोपणं चेति । महाध्वजप्रतिष्ठायां तु बिम्बपरिकरशिखरमारभ्य समण्डपं प्रासादमन्तरवगाह्य पुनर्बहिः परिवृत्य ध्वजदण्डाश्लेषी महाध्वजः । स च जिना-

ग्रतो नीयते। तत्र कुङ्कुमरसेन मायाबीजं लिख्यते तदन्तश्च कुङ्कुमेनानुरज्यते तत्प्रान्ते पञ्चरत्नं बध्यते सूरिमन्त्रेण वासक्षेपश्च विधेयः। ततो महाध्वजाधिरोपणम् ॥ ॥ अथ राजध्वजाः मत्स्यसिंहवानरकलशगजवरत्नातालचामरदर्पणचक्रमण्डलाङ्किताः बहुभेदाः तेषां च प्रतिष्ठा नृपगृहे विधेया। तत्र पौष्टिककरणं बृहत्स्नात्रविधिना गृहबिम्बे स्नात्रं बृहद्दशवलयनन्द्यावर्तस्थापनं पूजनं च जिनबिम्बप्रतिष्ठावत्। ततः संपूर्णनिष्पन्नं ध्वजं पूर्ववत् शोधितायां पञ्चरत्नगर्भितायां पृथिव्यामूर्ध्वीकुर्यात्। ततस्तन्मूले अनेकनैवेद्यफलमुद्राढौकनं। ततो वासान् गृहीत्वा सूरिपदोचिताभिर्द्वादशमुद्राभिर्वर्धमानविद्यया अभिमन्त्रयेत्। ततो ध्वजप्रतिष्ठामन्त्रेण अष्टोत्तरशतवारं वासक्षेपं कुर्यात्। मन्त्रो यथा—ॐ जये २ जयन्ते अपराजिते ह्रीं विजये अनिहते अमुम् अमुकचिह्नाङ्कितं ध्वजम् अवतर २ शत्रुविनाशं जयं यशो देहि २ स्वाहा। ततो गन्धाक्षतपुष्पधूपदीपनैवेद्यैः ध्वजपूजनं ॐ जये गन्धं गृहाण २ एवम् अक्षतान् पुष्पं धूपं दीपं नैवद्यं गृहाण शान्तिं तुष्टिं जयं कुरु २ स्वाहा इति सर्वपूजा दानम्। ततो दिनत्रयं ध्वजरक्षणं महोत्सवराजप्रतिष्ठाकारकाय गृहस्थगुरवे स्वर्णाभरणवस्त्रादि दद्यात्। दीनोद्धरणं माहनपोषणं। ततस्तृतीयेह्नि ध्वजापनयनं जयादेवीविसर्जनं नन्द्यावर्तविसर्जनं च पूर्ववत्॥ इति नृपध्वजप्रतिष्ठा॥ इति प्रतिष्ठाधिकारे ध्वजप्रतिष्ठाविधिः संपूर्णः ॥ ४ ॥

अथ जिनबिम्बपरिकरप्रतिष्ठाविधिः ॥ ५ ॥ स चायं यदि जिनबिम्बेन सह परिकरो भवति तदा जिनबिम्बप्रतिष्ठायामेव वासक्षेपमात्रेण परिकरप्रतिष्ठा पूर्यते। पृथग्भूते परिकरे पृथक्प्रतिष्ठा विधीयते। परिक-

राकारो यथा। बिम्बाधो गजसिंहकीचरूपाङ्कितं सिंहासनं पार्श्वयोश्चमरधरौ तयोर्बहिश्चाञ्जलिकरौ मस्तकोपरिक्रमोपरि तु छत्रत्रयं तत्पार्श्वयोरुभयोः काञ्चनकलशाङ्कितशुण्डाग्रं श्वेतगजद्वयं गजोपरि झर्झरवाद्यकराः पुरुषाः तदूर्ध्वयोः मालाकारौ शिखरे शङ्खध्माः तदुपरि कलशः । मतान्तरे सिंहासनमध्यभागे हरिणद्वयतोरणाङ्कितधर्मचक्रं तत्पार्श्वयोः ग्रहमूर्तयः। एवं निष्पन्ने परिकरे बिम्बप्रतिष्ठोचिते लग्ने भूमिशुद्धिकरणं अमारिघोषणं संघाह्वानं बृहत्स्नात्रविधिना जिनस्नात्रं तत्पूजनं कलशपूजावत् । ततः परिकरे सप्तधान्यवर्धापनम् अङ्गुलिद्वयोर्ध्वीकरणेन रौद्रदृष्ट्या वामहस्तचुलुकेन जलाच्छोटनं अक्षतभृतपात्रदानम् । ततः ॐ ह्रीं श्रीं जयन्तु जिनोपासकाः सकला भवन्तु स्वाहा। इति मन्त्रेण परिकरस्य गन्धाक्षतपुष्पधूपदीपनैवेद्यैः पूजनं सद्शवस्त्रेणाच्छादनं ततश्चतसृभिः स्तुतिभिश्चैत्यवन्दनं ततः शान्तिश्रुतक्षेत्रभुवनशासनवैयावृत्तकरप्रतिष्ठादेवताकायोत्सर्गाः स्तुतयः पूर्ववत् । ततः संप्राप्तायां लग्नवेलायां द्वादशभिर्मुद्राभिः सूरिमन्त्रेण वासमभिमन्त्र्य सर्वजनं दूरतः कृत्वा एभिर्मन्त्रैर्वासक्षेपं विदध्यात् । मन्त्रो यथा—ॐ ह्रीं श्रीं अप्रतिचक्रे धर्मचक्रायनमः इति धर्मचक्रे वासक्षेपस्त्रिः । ॐ घृणिचद्रां ऐं क्षौं ठुः ठः क्षां क्षीं सर्वग्रहेभ्यो नमः इति ग्रहेषु वासक्षेपस्त्रिः । ॐ ह्रीं श्रीं आधाशक्तिकमलासनाय नमः इति सिंहासने वासक्षेपस्त्रिः । ॐ ह्रीं श्रीं अर्हद्भक्तेभ्यो नमः इति अञ्जलिकरद्वये वासक्षेपस्त्रिस्त्रिः । ॐ ह्रीं चं चामरकरेभ्यो नमः इति चामरकरद्वये वासक्षेपस्त्रिस्त्रिः । ॐ ह्रीं विमलवाहनाय इति गजद्वये वासक्षेपस्त्रिस्त्रिः । पुर २ पुष्पकरेभ्यो नमः इति मालाधरद्वये वासक्षेपस्त्रिस्त्रिः ।

ॐ श्रीं शङ्खधराय नमः इति शङ्खधरे वासक्षेपस्त्रिस्त्रिः। ॐ पूर्णकलशाय नमः इति कलशे वासक्षेपस्त्रिस्त्रिः। ततः अनेकफलनैवेद्यढौकनं। पुनर्जिनस्नात्रं बृहत्स्नात्रविधिना ततश्चैत्यवन्दनं प्रतिष्ठादेवताविसर्जनं कायोत्सर्गं चतुर्विंशतिस्तवचिंतनं भणनं च नन्द्यावर्तविसर्जनं पूर्ववत्। अष्टाहिकामहोत्सवः संघपूजनं दीनमार्गणपोषणं। जलपट्टप्रतिष्ठायां तु जलपट्टोपरि बृहन्नन्द्यावर्तस्थापनं च पूर्ववत्। जलपट्टे क्षीरस्नानं पञ्चरत्ननिक्षेपः वरुणमन्त्रेण वासक्षेपः नन्द्यावर्तविसर्जनं ॥ इति कलशप्रतिष्ठा ॥ ॥ तोरणप्रतिष्ठायां तु बृहत्स्नात्रविधिना जिनस्नात्रं मुकुटमन्त्रेण तोरणे द्वादशमुद्राभिर्मन्त्रितवासक्षेपः। मुकुटमन्त्रो यथा—ॐ अआइईउऊऋॠ इत्यादिहकारपर्यन्तं नमो जिनाय सुरपतिमुकुटकोटिसंघट्टितपदाय इति तोरणे समालोकय २ स्वाहा ॥ इति तोरणप्रतिष्ठा ॥ इति प्रतिष्ठाधिकारे परिकरप्रतिष्ठाविधिः संपूर्णः ॥ ९ ॥

अथ देवीप्रतिष्ठाविधिः ॥ १ ॥ स चायम्। तत्र देव्यस्त्रिधा प्रासाददेव्यः १ संप्रदायदेव्यः २ कुलदेव्यश्च ३। प्रासाददेव्यः पीठोपपीठेषु क्षेत्रोपक्षेत्रेषु गुहास्थिता भूमिस्थिताः प्रासादस्थिता लिङ्गरूपा वा स्वयंभूतरूपा वा मनुष्यनिर्मितरूपा वा। संप्रदायदेव्यः अम्बासरस्वतीत्रिपुराताराप्रभृतयो गुरूपदिष्टमन्त्रोपासनायाः। कुलदेव्यः चण्डीचामुण्डाकण्टेश्वरीसत्यकासुशयनाव्याघ्रराजीप्रभृतयः एतासां प्रतिष्ठा तुल्यैव। तत्र प्रतिष्ठाकारयितुर्ग्रहशान्तिकं पौष्टिकं च कुर्यात्। ततः प्रासादे गृहे वा बृहत्स्नात्रविधिना स्नात्रं। देवीप्रासादे ग्रहप्रतिमा नीत्वा स्नात्रं कुर्यात्। ततः पूर्वोक्तरीत्या भूमिशुद्धिं विधाय पञ्चरत्नं तत्र न्यस्य तदुपरि कदम्बकाष्ठ-

पीठं संस्थाप्य तदुपरि देवीप्रतिमां न्यसेत्। स्थिरप्रासाददेवीप्रतिमां तु कुलपीठोपरि पञ्चरत्नन्यासपूर्वकं न्यसेत्। ततः कुडव २ मात्रमिलितैः सर्वान्नैर्देवीप्रतिमां संवर्धयेत्। मन्त्रो यथा—ॐ श्रीं सर्वान्नपूर्णे सर्वान्ने स्वाहा। ततः स्नात्रकारचतुष्टयं पूर्वोक्तलक्षणं प्रगुणीकुर्यात्। सूरिणा आत्मा स्नात्रकाराश्च मुद्राकङ्कणसहितसदशवस्त्रसहिता विधेयाः। ततः स्वस्य तेषां च न्यङ्गरक्षान्यासो यथा—ॐ ह्रीं नमो ब्रह्माणि हृदये। ॐ ह्रीं नमो वैष्णवि भुजयोः। ॐ ह्रीं नमः सरस्वति कण्ठे। ॐ ह्रीं नमः परमभूषणे मुखे। ॐ ह्रीं नमः सुगन्धे नासिकयोः। ॐ ह्रीं नमः श्रवणे कर्णयोः। ॐ ह्रीं नमः सुदर्शने नेत्रयोः। ॐ ह्रीं नमो भ्रामरि भ्रुवोः। ॐ ह्रीं नमो महालक्ष्मि भाले। ॐ ह्रीं नमः प्रियकारिणि शिरसि। ॐ ह्रीं नमो भुवनस्वामिनि शिखायां। ॐ ह्रीं नमो विश्वरूपे उदरे। ॐ ह्रीं नमः पद्मवासे नाभौ। ॐ ह्रीं नमः कामेश्वरि गुह्ये। ॐ ह्रीं नमो विश्वोत्तमे ऊर्वोः। ॐ ह्रीं नमः स्तम्भिनि जान्वोः। ॐ ह्रीं नमः सुगमने जङ्घयोः। ॐ ह्रीं नमः परमपूज्ये पादयोः। ॐ ह्रीं नमः सर्वगामिनि कवचम्। ॐ ह्रीं नमः परमरौद्रि आयुधं। इति गुरुः स्वस्य स्नात्रकाराणां च अङ्गरक्षां कुर्यात्। ततः पञ्चगव्येन देवीस्नात्रम्। वृत्तम्—"विश्वस्यापि पवित्रतां भगवती प्रौढानुभावैर्निजैः संधत्ते कुशलानुबन्धकलिता मर्त्यामरोपासिता। तस्याः स्नात्रमिहाधिवासनविधौ सत्पञ्चगव्यैः कृतं नो दोषाय महाजनागमकृतः पन्थाः प्रमाणं परम् ॥ १ ॥" ततः पुष्पाञ्जलिं गृहीत्वा—"सर्वाशापरिपूरिणि निजप्रभावैर्यशोभिरपि देवि। आराधनकर्तॄणां कर्तय सर्वाणि दुःखानि ॥ १ ॥" अनेन वृत्तेन पुष्पाञ्जलिक्षेपः ॥ १ ॥

पुनः पुष्पाञ्जलिं गृहीत्वा—"यस्याः प्रौढदृढप्रभावविभवैर्वाचंयमाः संयमं निर्दोषं परिपालयन्ति कलयन्त्यन्य-
त्कलाकौशलम् । तस्यै नम्रसुरासुरेश्वरशिरःकोटीरतेजश्छटाकोटिस्पृष्टशुभाङ्घ्रये त्रिजगतां मात्रे नमः सर्वदा
॥ १ ॥" अनेन वृत्तेन पुष्पाञ्जलिक्षेपः ॥ २ ॥ पुनः पुष्पाञ्जलिं गृहीत्वा—"न व्याधयो न विपदो न महान्त-
रागा नैवागशांसि न वियोगविचेष्टितानि । यस्याः प्रसादवशतो बहुभक्तिभाजामाविर्भवन्ति हि कदाचन
मास्तु लक्ष्म्यै ॥ १ ॥" अनेन वृ० ॥ ३ ॥ पुनः—"दैत्यच्छेदोद्यतायां परमपरमतक्रोधबोधप्रबोधक्रीडानिर्व्री-
डपीडाकरणमशरणं वेगतो धारयन्त्या । लीलाकीलाकपूरजनिनिजनिजक्षुत्पिपासाविनाशः क्रव्यादामास
यस्यां विजयमविरतं सेश्वरा वस्तनोतु ॥ १ ॥" अनेन वृ० ॥ ४ ॥ पुनः—"लुलायदनुजक्षयं क्षितितले वि-
धातुं सुखं चकार रभसेन या सुरगणैरतिप्रार्थिता । चकार रभसेन या सुरगणैरतिप्रार्थिता तनोतु शुभमुत्तमं
भगवती प्रसादेन सा ॥ १ ॥" अनेन वृत्तेन० ॥ ५ ॥ पुनः—"सा करोतु सुखं माता बलिजित्तापवारिणी ।
प्राप्यते यत्प्रसादेन बलिजित्तापवारिणी ॥ १ ॥" अनेन वृ० ॥ ६ ॥ पुनः पु०—"जयन्ति देव्याः प्रभुताम-
तानि निरस्तनिःसंचरतामतानि । निराकृताः शत्रुगणाः सदैव संप्राप्य यां मंक्षु जयै सदैव ॥ १ ॥" अनेन
वृ० ॥ ७ ॥ पुनः—"सा जयति यमनिरोधनकर्त्री संपत्करी सुभक्तानाम् । सिद्धिर्यत्सेवायामत्यागेऽपि हि
सुभक्तानाम् ॥ १ ॥" अनेन वृ० ॥ ८ ॥ एवमष्ट पुष्पाञ्जलयः प्रक्षिप्यन्ते । ततो देवीपुरतो भगवत्या मण्डलं

१ प्रमोध इति पाठः ।

संस्थापयेत् । तस्य चायं विधिः । तत्र प्रथमं षट्कोणचक्रं लिखेत् । तन्मध्ये भगवतीं सहस्रबाहुं नानाप्रहरणधारिणीं शुक्लाम्बरां सिंहवाहनां लिखेत् संस्थापयेत् कल्पयेद्वा । ततः षट्कोणेषु आदितः प्रदक्षिणक्रमेण । ॐ ह्रीं जम्भे नमः १ ॥ ॐ ह्रीं जम्भिन्यै नमः २ ॥ ॐ ह्रीं स्तम्भे नमः ३ ॥ ॐ ह्रीं स्तम्भिन्यै नमः ४ ॥ ॐ ह्रीं मोहे नमः ५ ॥ ॐ ह्रीं मोहिन्यै नमः ६ ॥ ततो बहिर्वलयं विधाय अष्टदलं कुर्यात् । तत्र प्रदक्षिणक्रमेण । ह्रीं श्रीं ब्रह्माण्यै नमः १ ॥ ह्रीं श्रीं माहेश्वर्यै नमः २ ॥ ह्रीं श्रीं कौमार्यै नमः ३ ॥ ह्रीं श्रीं वैष्णव्यै नमः ४ ॥ ह्रीं श्रीं वाराह्यै नमः ५ ॥ ह्रीं श्रीं इन्द्राण्यै नमः ६ ॥ ह्रीं श्रीं चामुण्डायै नमः ७ ॥ ह्रीं श्रीं कालिकायै नमः ८ ॥ ततो वलयं विधाय षोडशदलं कृत्वा प्रदक्षिणक्रमेण । ह्रीं श्रीं रोहिण्यै नमः १ ॥ ह्रीं श्रीं प्रज्ञप्त्यै नमः २ ॥ ह्रीं श्रीं वज्रशृङ्खलायै नमः ३ ॥ ह्रीं श्रीं वज्राङ्कुश्यै नमः ४ ॥ ह्रीं श्रीं अप्रतिचक्रायै नमः ५ ॥ ह्रीं श्रीं पुरुषदत्तायै नमः ६ ॥ ह्रीं श्रीं काल्यै नमः ७ ॥ ह्रीं श्रीं महाकाल्यै नमः ८ ॥ ह्रीं श्रीं गौर्यै नमः ९ ॥ ह्रीं श्रीं गान्धार्यै नमः १० ॥ ह्रीं श्रीं महाज्वालायै नमः ११ ॥ ह्रीं श्रीं मानव्यै नमः १२ ॥ ह्रीं श्रीं वैरोट्यायै नमः १३॥ ह्रीं श्रीं आच्छुप्तायै नमः १४ ॥ ह्रीं श्रीं मानस्यै नमः १५ ॥ ह्रीं श्रीं महामहामानस्यै नमः १६ ॥ पुनर्वलयं कृत्वा बहिश्चतुःषष्टिदलं विधाय प्रदक्षिणक्रमेण । ॐ ब्रह्माण्यै नमः १ ॥ ॐ कौमार्यै नमः २ ॥ ॐ वाराह्यै नमः ३ ॥ ॐ शाङ्कर्यै नमः ४ ॥ ॐ इन्द्राण्यै नमः ५ ॥ ॐ कङ्काल्यै नमः ६ ॥ ॐ कराल्यै नमः ७ ॥ ॐ काल्यै नमः ८ ॥ ॐ महाकाल्यै नमः ९ ॥ ॐ चामुण्डायै नमः १० ॥ ॐ ज्वालामुख्यै नमः ११ ॥ ॐ कामाख्यायै

नमः १२ ॥ ॐ कापालिन्यै नमः १३ ॥ ॐ भद्रकाल्यै नमः १४ ॥ ॐ दुर्गायै नमः १५ ॥ ॐ अम्बिकायै नमः
१६ ॥ ॐ ललितायै नमः १७ ॥ ॐ गौर्यै नमः १८ ॥ ॐ सुमङ्गलायै नमः १९ ॥ ॐ रोहिण्यै नमः २० ॥ ॐ
कपिलायै नमः २१ ॥ ॐ शूलकटायै नमः २२ ॥ ॐ कुण्डलिन्यै नमः २३ ॥ ॐ त्रिपुरायै नमः २४ ॥ ॐ कुरु-
कुल्लायै नमः २५ ॥ ॐ भैरव्यै नमः २६ ॥ ॐ भद्रायै नमः २७ ॥ ॐ चन्द्रावल्यै नमः २८ ॥ ॐ नारसिंह्यै नमः
२९ ॥ ॐ निरञ्जनायै नमः ३० ॥ ॐ हेमकान्त्यै नमः ३१ ॥ ॐ प्रेतासन्यै नमः ३२ ॥ ॐ ईश्वर्यै नमः ३३ ॥ ॐ
माहेश्वर्यै नमः ३४ ॥ ॐ वैष्णव्यै नमः ३५ ॥ ॐ वैनायक्यै नमः ३६ ॥ ॐ यमघण्टायै नमः ३७ ॥ ॐ हर-
सिद्ध्यै नमः ३८ ॥ ॐ सरस्वत्यै नमः ३९ ॥ ॐ तोतलायै नमः ४० ॥ ॐ चण्ड्यै नमः ४१ ॥ ॐ शङ्खिन्यै नमः
४२ ॥ ॐ पद्मिन्यै नमः ४३ ॥ ॐ चित्रिण्यै नमः ४४ ॥ ॐ शाकिन्यै नमः ४५ ॥ ॐ नारायण्यै नमः ४६ ॥ ॐ
पलादिन्यै नमः ४७ ॥ ॐ यमभगिन्यै नमः ४८ ॥ ॐ सूर्यपुत्र्यै नमः ४९ ॥ ॐ शीतलायै नमः ५० ॥ ॐ कृ-
ष्णपासायै नमः ५१ ॥ ॐ रक्ताक्ष्यै नमः ५२ ॥ ॐ कालरात्र्यै नमः ५३ ॥ ॐ आकाश्यै नमः ५४ ॥ ॐ सृ-
ष्टिन्यै नमः ५५ ॥ ॐ जयायै नमः ५६ ॥ ॐ विजयायै नमः ५७ ॥ ॐ धूम्रवर्ण्यै नमः ५८ ॥ ॐ वेगेश्वर्यै नमः
५९ ॥ ॐ कात्यायन्यै नमः ६० ॥ ॐ अग्निहोत्र्यै नमः ६१ ॥ ॐ चक्रेश्वर्यै नमः ६२ ॥ ॐ महाम्बिकायै नमः
६३ ॥ ॐ ईश्वरायै नमः ६४ ॥ पुनः वलयं कृत्वा द्विपञ्चाशद्दलं विधाय दक्षिणक्रमेण । ॐ क्षोंक्षेत्रपालाय नमः
१ ॥ ॐ क्षों कपिलाय नमः २ ॥ ॐ क्षों बटुकाय नमः ३ ॥ ॐ क्षों नारसिंहाय नमः ४ ॥ ॐ क्षों गोपालाय नमः ५ ॥

ॐ क्रोंभैरवाय नमः ६ ॥ ॐ क्रोंगरुडाय नमः ७ ॥ ॐ क्रोंरक्तसुवर्णाय नमः ८ ॥ ॐ क्रोंदेवसेनाय नमः ९ ॥ ॐ क्रोंरुद्राय नमः १०॥ ॐ क्रोंवरुणाय नमः ११ ॥ ॐ क्रोंभद्राय नमः १२ ॥ ॐ क्रोंवज्राय नमः १३ ॥ ॐ क्रोंवज्रजङ्घाय नमः १४ ॥ ॐ क्रोंस्कन्दाय नमः १५ ॥ ॐ क्रोंकुरवे नमः १६॥ ॐ क्रों प्रियंकराय नमः १७ ॥ ॐ क्रोंप्रियमित्राय नमः १८ ॥ ॐ क्रोंवह्नये नमः १९ ॥ ॐ क्रोंकन्दर्पाय नमः २० ॥ ॐ क्रोंहंसाय नमः २१ ॥ ॐ क्रोंएकजङ्घाय नमः २२ ॥ ॐ क्रोंघण्टापथाय नमः २३ ॥ ॐ क्रोंदजकाय नमः २४ ॥ ॐ क्रोंकालाय नमः २५ ॥ ॐ क्रोंमहाकालाय नमः २६ ॥ ॐ क्रोंमेघनादाय नमः २७ ॥ ॐ क्रोंभीमाय नमः २९ ॥ ॐ क्रोंमहाभीमाय नमः २९ ॥ ॐ क्रोंतुङ्गभद्राय नमः ३० ॥ ॐ क्रोंविद्याधराय नमः ३१ ॥ ॐ क्रोंवसुमित्रानमः ३२ ॥ ॐ क्रोंविश्वसेनाय नमः ३३ ॥ ॐ क्रोंनागाय नमः ३४ ॥ ॐ क्रोंनागहस्ताय नमः ३५ ॥ ॐ क्रोंप्रद्युम्नाय नमः ३६ ॥ ॐ क्रोंकम्पिल्लाय नमः ३७ ॥ ॐ क्रोंनकुलाय नमः ३८ ॥ ॐ क्रोंआह्लादाय नमः ३९ ॥ ॐ क्रोंत्रिमुखाय नमः ४० ॥ ॐ क्रोंपिशाचाय नमः ४१ ॥ ॐ क्रोंभूतभैरवाय नमः ४२ ॥ ॐ क्रोंमहापिशाचाय नमः ४३ ॥ ॐ क्रोंकालमुखाय नमः ४४ ॥ ॐ क्रोंशुनकाय नमः ४५ ॥ ॐ क्रोंअस्थिमुखाय नमः ४६ ॥ ॐ क्रोंरेतोवेधाय नमः ४७ ॥ ॐ क्रोंस्मशानचाराय नमः ४८ ॥ ॐ क्रोंकलिकलाय[1] नमः ४९ ॥ ॐ क्रोंभृङ्गाय नमः ५० ॥ ॐ क्रोंकण्टकाय नमः ५१ ॥ ॐ क्रोंबिभीषणाय नमः ५२ ॥ पुनर्वलयं कृत्वा अष्टदलं कुर्यात् । तत्र प्रदक्षिणक्रमेण । ह्रीं श्रींभैरवाय नमः

१ केलिकलायेति पाठः ।

हीं श्रीचण्डभैरवाय नमः ३ ॥ हीं श्रीरुद्रभैरवाय नमः ४ ॥ हीं श्रीकपा-
१ ॥ हीं श्रीमहाभैरवाय नमः २ ॥ हीं श्रीआनन्दभैरवाय नमः ६ ॥ हीं श्रीकंकालभैरवाय नमः ७ ॥ हीं श्रीभैरवभैरवाय
लभैरवाय नमः ५ ॥ हीं श्रीआनन्दभैरवाय नमः ६ ॥ हीं श्रीसर्वाभ्यो देवीभ्यः सर्वस्थाननिवासिनीभ्यः सर्वविघ्नावनाशि-
नमः ८ ॥ पुनस्तदुपरि वलयं कृत्वा । ॐ हीं श्रीसर्वाभ्यो देवीभ्यः सर्ववर्णाभ्यः सर्वमन्त्रमयीभ्यः सर्वतेजोमयीभ्यः सर्वविद्याम-
नीभ्यः सर्वदिव्यधारिणीभ्यः सर्वशास्त्रकरीभ्यः सर्ववर्णाभ्यः सर्वमन्त्रमयीभ्यः सर्वतेजोमयीभ्यः सर्वविद्याम-
यीभ्यः सर्वमन्त्राक्षरमयीभ्यः सर्वर्द्धिदाभ्यः सर्वसिद्धिदाभ्यो भगवत्यः पूजां प्रयच्छन्तु स्वाहा इति वलयरू-
पेण न्यसेत् । तत उपरि वलयं कृत्वा दश दलानि विधाय प्रदक्षिणक्रमेण । ॐ इन्द्राय नमः १ ॥ ॐ अग्नये
नमः २ ॥ ॐ यमाय नमः ३ ॥ ॐ निर्ऋतये नमः ४ ॥ ॐ वरुणाय नमः ५ ॥ ॐ वायवे नमः ६ ॥ ॐ कुबेराय
नमः ७ ॥ ॐ ईशानाय नमः ८ ॥ ॐ नागेभ्यो नमः ९ ॥ ॐ ब्रह्मणे नमः १० ॥ पुनर्वलयं कृत्वा दशदलं वि-
धाय प्रदक्षिणक्रमेण ॐ आदित्याय नमः १ ॥ ॐ चन्द्राय नमः २ ॥ ॐ मङ्गलाय नमः ३ ॥ ॐ बुधाय नमः
४ ॥ ॐ गुरवे नमः ५ ॥ ॐ शुक्राय नमः ६ ॥ ॐ शनैश्चराय नमः ७ ॥ ॐ राहवे नमः ८ ॥ ॐ केतवे नमः ९ ॥
ॐ क्षेत्रपालाय नमः १० ॥ ततो बहिश्चतुरस्रं भूमिपुरं कुर्यात् । तन्मध्ये ईशाने गणपतिं पूर्वस्यां अम्बां आ-
ग्नेय्यां कार्तिकेयं दक्षिणस्यां यमुनां नैऋत्ये क्षेत्रपालं पश्चिमायां महाभैरवम् वायव्ये गुरून् उत्तरस्यां गङ्गाम् ।
एवं भगवतीमण्डलं न्यस्य पूजनं कुर्यात् । ॐ हीं नमः अमुकदेव्यै अमुकभैरवाय अमुकवीराय अमुकयो-
गिन्यै अमुकदिक्पालाय अमुकग्रहाय एवं भगवन् अमुक अमुके आगच्छ २ इदमर्घ्यं पाद्यं बलिं चरुं आच-

मनीयं गृहाण २ संनिहितो भव २ स्वाहा जलं गृहाण २ गन्धं पुष्पं अक्षतान् फलं मुद्रां धूपं दीपं नैवेद्यं० सर्वोपचारान्० शान्तिं कुरु २ तुष्टिं पुष्टिं ऋद्धिं वृद्धिं सर्वसमीहितं० स्वाहा। अनेन मन्त्रेण प्रत्येकं यथाक्रमं सर्वदेवदेवीनां सर्ववस्तुभिः सर्वोपचारैः पूजनं होमश्च त्रिकोणे कुण्डे घृतमधुगुग्गुलुभिः तत्संख्यया नन्द्यावर्तवत् विधेया। होममन्त्रश्च—ॐ रां अमुको देवः अमुका देवी वा संतर्पितास्तु स्वाहा इति विधिं विधाय देवीप्रतिमां सदशवस्त्रेणाच्छादयेत्। उपरि चन्दनाक्षतफलपूजनं। जिनमते देवप्रतिष्ठायां वेदीकरणं नास्ति। ततः संप्राप्तायां लग्नवेलायां गुरुरेकान्तं विधाय प्रतिष्ठां कुर्यात्। तत्र वासाः—चन्दनकुङ्कुमकक्कोलकर्पूरविष्णुक्रान्ताशतावरीवालकदूर्वाप्रियङ्गुउशीरतगरसहदेवीकुष्ठकर्चूरमांसीशैलेयकुसुम्भकरोध्रबलात्वक्कदम्ब२५पञ्चविंशतिवस्तुमयाः प्रगुणीक्रियन्ते। वासाभिमन्त्रणं सौभाग्यमुद्रया अधिकृतदेवीमन्त्रेण। ततो वासक्षेपः पूर्वं सर्वेष्वङ्गेषु देव्याः प्रस्तुतदेवीमन्त्रपाठपूर्वकं मायाबीजं न्यसेत्। ततो वस्त्रमपनीय सर्वजनसमक्षं गन्धाक्षताद्यैः पूजयेत्। ततो भगवत्याः स्नात्रं। प्रथमं क्षीरकलशं गृहीत्वा—"क्षीराम्बुधेः सुराधीशैरानीतं क्षीरमुत्तमम्। अस्मिन्भगवतीस्नात्रे दुरितानि निकृन्ततु ॥ १ ॥" पुनः दधिकलशं गृहीत्वा—"घनं घनबलाधारं स्नेहपीवरमुज्ज्वलम्। संदधातु दधि श्रेष्ठं देवीस्नात्रे सतां सुखम् ॥ २ ॥" पुनः घृतकलशं गृहीत्वा—"स्नेहेषु मुख्यमायुष्यं पवित्रं पापतापहृत्। घृतं भगवतीस्नात्रे भूयादमृतमञ्जसा ॥ ३ ॥" पुनः मधुकलशं गृहीत्वा—"सर्वौषधिरसं सर्वरोगहृत्सर्वरञ्जनम्। क्षौद्रं क्षुद्रोपद्रवाणां हन्तु देव्यभिषेचनात् ॥ ४ ॥" ततः सर्वौषधिमि-

श्रितं जलकलशं गृहीत्वा—"सर्वौषधिमयं नीरं नीरं सद्गुणसंयुतम् । भगवत्यभिषेकेऽस्मिन्नुपयुक्तं श्रियेऽ-
स्तु नः ॥ ५॥" मांसीचूर्णं गृहीत्वा—"सुगन्धं रोगशमनं सौभाग्यगुणकारणम् । इह प्रशस्तं मांस्यास्तु मार्जनं
हन्तु दुष्कृतम् ॥ ६ ॥" पुनश्चन्दनचूर्णं गृहीत्वा—"शीतलं शुभ्रममलं धुततापरजोहरम् । निहन्तु सर्वप्रत्यूहं
चन्दनेनाङ्गमार्जनम् ॥ ७ ॥" पुनः कुङ्कुमचूर्णं गृहीत्वा—"कश्मीरजन्मजैश्चूर्णैः स्वभावेन सुगन्धिभिः । प्रमा-
र्जयाम्यहं देव्याः प्रतिमां विघ्नहानये ॥ ८ ॥" एवं स्नात्रपञ्चकं प्रमार्जनत्रयं कृत्वा देव्याः पुरः स्त्रीजनोचितं
सर्वं वस्त्रभूषणगन्धमाल्यमण्डनादि ढौकयेत् । नैवेद्यं बहुप्रकारं च । ततः प्रतिष्ठायां परिपूर्णायां मण्डलवि-
सर्जनं नन्द्यावर्तविसर्जनवत् । ततः कन्यापूजनं गुरुभ्यो दानं महोत्सवः संघपूजा महाप्रतिष्ठावत् । इयं च
प्रतिष्ठा देवीनां प्रासादसंप्रदायकुलदेवीनां त्रिविधानामपि पूजनं गुर्वागमात् कुलाचाराज्ज्ञेयम् । ग्रंथविस्त-
रभयात् आगमस्य अप्रकाश्यत्वात् नोपदर्शितम् । यदुक्तम्—"इदमागमसर्वस्वं गोपनीयं प्रयत्नतः । गोपना-
ज्जायते सिद्धिः संशयश्च प्रकाशनात् ॥ १ ॥" तथा सर्वदेवानां प्रतिष्ठा तत्तद्देवीमन्त्रेण तत्तत्कल्पोक्तेन गुरू-
पदिष्टेन वा विधेया । शेषं कर्म सर्वदेवीप्रतिष्ठासु सदृशम् । यासां च देवीनां अप्रसिद्धत्वात् कल्पादर्शनात्
गुरूपदेशाभावात् नामोद्दिष्टो मन्त्रो न ज्ञायते तासां अम्बामन्त्रेण वा चण्डीमन्त्रेण वा त्रिपुरामन्त्रेण वा प्रतिष्ठा
विधेया । अत्र देवीप्रतिष्ठायां शासनदेवीगच्छदेवीकुलदेवीपुरदेवीभुवनदेवीक्षेत्रदेवीदुर्गादेवीनां सर्वासामेक
एव प्रतिष्ठाविधिः ॥ इति प्रतिष्ठाधिकारे देवीप्रतिष्ठा संपूर्णा ॥ ६ ॥

अथ क्षेत्रपालादिप्रतिष्ठाविधिः ॥ ७ ॥ स चायम् । पूर्वं तत्प्रतिष्ठाकारयितुर्ग्रहशान्तिकं पौष्टिकं च कुर्यात्। ततो बृहत्स्नात्रविधिना जिनस्नात्रं विधाय क्षेत्रपालादिमूर्तिं जिनचरणाग्रे स्थापयेत् । प्रासादे वा गृहे वा क्षेत्रपालस्य द्विधा मूर्तिः कायरूपा वा लिङ्गरूपा वा प्रतिष्ठाविधिरेकस्तयोः । ततः पूर्वोक्तवेदीमण्डलं स्थापयेत् । तत्पूजनं च पूर्ववत् । ततो मिलितेन पञ्चामृतेन क्षेत्रपालमूलमन्त्रेण तन्मूर्तौ स्नात्रम् । मूलमन्त्रो यथा —ॐ क्षां क्षीं क्षूं क्षैं क्षौं क्षः क्षेत्रपालाय नमः अयमेव मूलमन्त्रः। ततः एकान्तिकं विधाय गुरुर्वासक्षेपणं मूलमन्त्रेण सर्वाङ्गेषु त्रिस्त्रिः प्रतिष्ठां कुर्यात् । ततो याज्याः तिलचूर्णं करम्बयूषकृशराबकुललपनश्रीभिः तत्पुरो नैवेद्यं ढौकयेत् । कुङ्कुमतैलसिन्दूररक्तपुष्पैस्तन्मूर्तिं पूजयेत् । क्षेत्रपालबटुकनाथकपिलनाथहनुमन्नारसिंहादिवीरपुरपूजितदेशपूजितानां एकएव प्रतिष्ठाविधिः किंतु गृहक्षेत्रपालस्य गृहे कपिलगौरकृष्णादीनां प्रासादे बटुकनाथस्य श्मशाने हनुमतः पुरपरिसरे नारसिंहादीनां पुरपूजितानां देशपूजितानां नागादीनां गूगाप्रभृतीनां तत्तत्स्थानेषु प्रतिष्ठार्थं मन्त्राश्च तत्तदाम्नायतो ज्ञेयाः । मूलमन्त्रैरेव प्रतिष्ठा ॥ इति प्रतिष्ठाधिकारे क्षेत्रपालादिप्रतिष्ठाविधिः ॥ ७ ॥

अथ गणपतिप्रतिष्ठाविधिः ॥ ८ ॥ स चायम् । तत्र गणपतेर्मूर्तयः प्रासादस्थाः पूजनीयाः धारणीयाश्च विद्यागणेशाः द्विभुजचतुर्भुजषड्भुजनवभुजाष्टादशभुजाष्टोत्तरशतभुजरूपाः गुरूपदेशविशेषेण बहुविधा भवन्ति । तासां तिसृणामेकैव प्रतिष्ठा । तत्र गणपतिकल्पे तन्मूर्तयः स्वर्णरूप्यताम्ररीरीकाचस्फटिकप्रवालपद्म-

अत्र समवसरणं पूजनं गोप्यतया नोक्तं सूरिमन्त्रकल्पादवसेयम् ॥ इति प्रतिष्ठाधिकारे देवतावसरसमवसरणप्रतिष्ठा संपूर्णा ॥ १० ॥

अथ मन्त्रपट्टप्रतिष्ठाविधिः ॥ ११ ॥ स चायम् । तत्र मन्त्रपट्टा धातुमयाः स्वर्णरूप्यताम्रघटिताः काष्ठमया वा मिलितेन पञ्चामृतेन संस्नाप्य गन्धोदकेन शुद्धोदकेन प्रक्षाल्य यक्षकर्दमेनानुलिप्य पञ्चविंशतिवस्तुरूपवासक्षेपेण प्रतिष्ठा करणीया । वासक्षेपमन्त्रन्यासो यथालिखितमन्त्रपाठेनैव । उत्कीर्णमूर्तौ च ॐ ह्रीं अमुकदेवाय अमुकदेव्यै वा नमः इति मन्त्रन्यासः । वस्त्रमये पट्टमये लिखितचित्रमूर्तौ लिखितयन्त्रे वा समवसरणे वा भरिते वा तल्लिखितमन्त्रपाठेन तद्देवगर्भनमस्कारेण वा वासक्षेपमात्रेण प्रतिष्ठा पूर्यते । अत्र परमार्थेन स्नपनवर्जितेषु पट्टादिषु दर्पणबिम्बेषु स्नपनादि विधेयम् । स्नपनादिरहिता प्रतिष्ठा अप्रमाणा ॥ इति प्रतिष्ठाधिकारे मन्त्रपट्टप्रतिष्ठा संपूर्णा ॥ ११ ॥

अथ पितृमूर्तिप्रतिष्ठाविधिः ॥ १२ ॥ सचायम् । गृहिणां पितृमूर्तयः प्रासादस्थापिताः शैलमय्यो भवन्ति । नागराजितास्तु धातुमय्यः पट्टिकास्थापिता वा पट्टलिखिता वा भवन्ति । कण्ठपरिधेयाश्छिच्छरिकारूपा नाणकाङ्किता वा भवन्ति तासां सर्वासां एक एव प्रतिष्ठाविधिः । बृहत्स्नात्रविधिना जिनस्नात्रं विधाय तत्स्नात्रोदकेन त्रिविधामपि पितृमूर्तिं स्नपयेत् । ततो गुरुर्वासक्षेपेण तन्मूर्तिषु तन्मन्त्रन्यासं कुर्यात् । प्रतिष्ठामन्त्रो यथा—ॐ नमो भगवते अरिहंते जिणस्स महाबलस्स महाणुभावस्स सिवगइगयस्स सिद्धस्स बुद्धस्स अक्ख-

रागचन्दनरक्तचन्दनश्वेतार्कमूलप्रभृतिवस्तुमय्यो विविधा विविधफलदायिन्यः सुखसंतुष्टा भवन्ति तासां प्रभावो गूढो गुर्वागमादवसेयः । प्रतिष्ठा चोक्तपूर्वमूलमन्त्रेण माक्षिकस्नानम् । मूलमन्त्रो यथा—ॐ गां गीं गूं गौं गः गणपतये नमः । ततो वासस्थाने सिन्दूरेणैव प्रतिष्ठा सर्वाङ्गेषु त्रिस्त्रिः मूलमन्त्रेणैव । ततोऽष्टोत्तरशतमोदकढौकनम् । एवं प्रतिष्ठां विधाय अञ्जलिं कृत्वा स्तुतिं पठेत् । यथा—"जयजय लम्बोदर परशुवरदयुक्तापसव्यहस्तयुग । सव्यकरमोदकाभयधरयावकवर्णपीतलसिक ॥ १ ॥ मूषकवाहनपीवरजङ्घाभुजवस्तिलम्बिगुरुजठरे । वारणमुखैकरद वरद सौम्य जयदेव गणनाथ ॥ २ ॥ सर्वाराधनसमये कार्यारम्भेषु मङ्गलाचारे । मुख्ये लभ्ये लाभे देवैरपि पूज्यसे देव ॥ ३ ॥" माणुधणादीनां आद्यकुलदेवतानां एवमेव प्रतिष्ठा ब्रह्मशान्तिमन्त्रेण ॥ इति प्रतिष्ठाधिकारे गणपत्यादिप्रतिष्ठा संपूर्णा ॥ ८ ॥

अथ सिद्धमूर्तिप्रतिष्ठाविधिः ॥ ९ ॥ सचायम् । तत्र सिद्धाः पञ्चदशभेदाः जिनशासने । तत्र स्वलिङ्गसिद्धानां स्त्रीनरनपुंसकरूपाणां पुण्डरीकब्राह्मीप्रभृतीनां परलिङ्गसिद्धानां वल्कलचीरीप्रभृतीनां स्त्रीनरनपुंसकरूपाणां मत्स्येन्द्रगोरक्षादीनां प्रतिष्ठाविधिरेक एव । तत्र यदि तेषां प्रतिष्ठां गृही कारयति तदा तद्गृहे शान्तिकं पौष्टिकं कुर्यात् । ततो बृहत्स्नात्रविधिना स्नात्रं विधाय प्रतिष्ठां कुर्वीत । ततो मूलमन्त्रेण सिद्धमूर्तेः पञ्चामृतस्नात्रं विधाय ततो मूलमन्त्रेणैव वासक्षेपं कुर्यात् त्रिस्त्रिः सर्वाङ्गेषु । मूलमन्त्रो यथा—ॐ अंआंह्रीं नमो सिद्धाणं बुद्धाणं सर्वसिद्धाणं श्रीआदिनाथाय नमः तथा तत्तल्लिङ्गसिद्धानां प्रतिष्ठायां तत्तल्लिङ्गधराणां

लिअपभावस्स तद्भक्तो अमुकवर्णः अमुकज्ञातीयः अमुकगोत्र अमुकपौत्र अमुकपुत्रः अमुकजनक इह मूर्तौ अवतरतु २ सन्निहितः तिष्ठतु २ निजकुलयानां पुत्रभ्रातृव्यपौत्रादीनां जिनभक्तिपूर्वकं दत्तं आहारं च वस्त्रं पुण्यकर्म प्रतीच्छतु शान्तिं तुष्टिं पुष्टिं ऋद्धिं वृद्धिं समीहितं करोतु स्वाहा। अनेन त्रिस्त्रिः वासक्षेपेण प्रतिष्ठा। ततः साधर्मिकवात्सल्यं संघपूजा च ॥ इति प्रतिष्ठाधिकारे पितृमूर्तिप्रतिष्ठाविधिः ॥ १२ ॥

अथ यतिमूर्तिप्रतिष्ठाविधिः ॥ १३ ॥ स चायम्। प्रासादप्रतिष्ठितायां पोषधागारप्रतिष्ठितायां वा साधुमूर्तौ यतिस्तूपे वा इयं युक्तिः। आचार्यमूर्तिस्तूपयोः—ॐ नमो आयरियाणं भगवंताणं णाणीणं पंचविहायारसुट्ठिआणं इह भगवन्तो आयरिया अवयरन्तु साहुसाहुणी सावयसावियाकयं पूअं पडिच्छन्तु सव्वसिद्धिं दिसन्तु स्वाहा। अनेन मन्त्रेण त्रिर्वासक्षेपः। उपाध्यायमूर्तिस्तूपयोः—ॐ नमो उवज्झायाणं भगवन्ताणं बारसंगपढगपाढगाणं सुअहराणं सज्झायज्झाणसत्ताणं इह उवज्झाया भगवन्तो अवयरन्तु साहु० शेषं पूर्ववत्। अनेन मन्त्रेण त्रिर्वासक्षेपः। साधुसाध्वीमूर्तिस्तूपयोः—ॐ नमो सव्वसाहूणं भगवन्ताणं पञ्चमहव्वयधराणं पञ्चसमियाणं तिगुत्ताणं तवनियमनाणदंसणजुत्ताणं मक्खसाहगाणं साहुणो भगवन्तो इह अवयरन्तु भगवईओ साहुणीओ इह अवयरन्तु साहुसा० शेषं पूर्ववत् ॥ इति प्रतिष्ठाधिकारे यतिमूर्तिप्रतिष्ठा संपूर्णा ॥ १३ ॥

अथ ग्रहप्रतिष्ठाविधिः ॥ १४ ॥ स चायं पूर्वप्रासादे वा गृहे वा बृहत्स्नात्रविधिना जिनमूर्तिं स्नपयेत्।

ततः समकालप्रतिष्ठार्थं नवापि ग्रहमूर्तीः स्थापयेत् । उपयुक्तत्वात् एकस्य द्वयोः त्रयाणां चतुःपञ्चानां वा कार्यापेक्षया मूर्तिस्थापनं कुर्यात् । ग्रहाणां काष्ठमयमूर्तित्वे क्रमेणादित्यादीनां रक्तचन्दनश्रीखण्डखदिरनिम्बकदम्बधातकीशेफालीबब्बूलबदरीकाष्ठमय्यो मूर्तयो भवन्ति । तेषां च धात्वपेक्षया क्रमेण सूर्यादीनां ताम्ररूप्यत्रपुसीसस्वर्णरूप्यलोहकांस्यरीरीमय्यो मूर्तयो भवन्ति । तेषां च कुण्डलमुद्रिकादौ स्थापने पद्मरागमुक्ताफलप्रवालमरकतपुष्परागवज्रइन्द्रनीलगोमेदवैडूर्यैः स्थापनाः । तासां मूर्तीनां स्थापनानां च एक एव प्रतिष्ठाक्रमः। तेषामायुधवाहनानि वास्तुशास्त्रेभ्योऽवसेयानि। प्रतिष्ठाविधिरयम् । जिनस्नात्रानन्तरं पञ्चविंशतिवस्तुवासैः मन्त्रन्यासः पूर्वं च सर्वेषां क्षीरस्नात्रम् । सूर्यमन्त्रो यथा—ॐ ह्रीं श्रीं घृणि २ नमः सूर्याय भुवनप्रदीपाय जगच्चक्षुषे जगत्साक्षिणे भगवन् श्रीसूर्य इह मूर्तौ स्थापनायां अवतर २ तिष्ठ २ प्रत्यहं पूजकदत्तां पूजां गृहाण २ स्वाहा ॥ १ ॥ चन्द्रमन्त्रो यथा—ॐ चंचंचुरुचुरु नमश्चन्द्राय ओषधीशाय सुधाकराय जगज्जीवनाय सर्वजीवितविश्वंभराय भगवन् श्रीचन्द्र इह० शेषं पूर्ववत् ॥ २ ॥ भौममन्त्रो यथा—ॐ ह्रीं श्रीं नमो मङ्गलाय भूमिपुत्राय वक्राय लोहितवर्णाय भगवन् मङ्गल इह० शेषं० ॥ ३ ॥ बुधमन्त्रो यथा—ॐ क्रांप्रां नमः श्रीसौम्याय सोमपुत्राय प्रहर्षुलाय हरितवर्णाय भगवन् बुध इहा० शेषं० ॥ ४ ॥ जीवमन्त्रो यथा—ॐ जीवजीव नमः श्रीगुरवे सुरेन्द्रमन्त्रिणे सोमाकाराय सर्ववस्तुदाय सर्वशिवंकराय भगवन् श्रीबृहस्पते इह २ शेषं० ॥ ५ ॥ शुक्रमन्त्रो यथा—ॐ श्रीं श्रीं नमः श्रीशुक्राय काव्याय दैत्यगुरवे संजीवनीविद्यागर्भाय भगवन्

श्रीशुक्र इह० शेषं० ॥ ६ ॥ शनिमन्त्रो यथा—ॐ शमशम नमः शनैश्चराय पङ्गवे महाग्रहाय श्यामवर्णाय
नीलवासाय भगवन् श्रीशनैश्चर इह० शेषं० ॥ ७ ॥ राहुमन्त्रो यथा—ॐ रं रं नमः श्रीराहवे सिंहिकापुत्राय
अतुलबलपराक्रमाय कृष्णवर्णाय भगवन् श्रीराहो इह० शेषं० ॥ ८ ॥ केतुमन्त्रो यथा—ॐ धूमधूम नमः श्री-
केतवे शिखाधराय उत्पातदाय राहुप्रतिच्छन्दाय भगवन् श्रीकेतो इह० शेषं० ॥ ९ ॥ एभिर्मन्त्रैः क्रमेण
त्रिमन्त्रैः वासक्षेपेण प्रतिष्ठा संपद्यते । ततोऽनन्तरं चैत्यवन्दनं शान्तिपाठः । नक्षत्राणां प्रतिष्ठा तु तत्तद्दैवत-
मन्त्रैर्वा संक्षेपेण संपद्यते । शेषो विधिर्ग्रहवत् । तद्दैवतमन्त्राः शान्त्यधिकारे कथयिष्यन्ते । तारकाणां तु प्र-
तिष्ठा ॐ ह्रीं श्रीं अमुकर्क्षे अमुकतारके इहावतर २ तिष्ठ २ आराधककृतां पूजां गृहाण २ स्थिरीभव स्वाहा ।
अनेन मन्त्रेण वासक्षेपः । सर्वतारकाणां शेषो विधिर्ग्रहवत् ॥ इति प्रतिष्ठाधिकारे सूर्यादिनवग्रहप्रतिष्ठा
संपूर्णा ॥ १४ ॥

अथ चतुर्णिकायदैवतमूर्तिप्रतिष्ठाविधिः ॥ १५ ॥ सचायं भुवनपतीनां दशविधानां विंशतीन्द्राणां व्यन्त-
राणां षोडशविधानां वा त्रिंशदिन्द्राणां वैमानिकानां द्वादशकल्प नवग्रैवेयक पञ्चानुत्तरभवानां दशेन्द्राणां
तत्सद्वर्णकाष्ठधातुरत्नघटितमूर्तीनामयं प्रतिष्ठाविधिः । चैत्ये वा गृहे वा पूर्वं बृहत्स्नात्रविधिना जिनस्नात्रम् ।
ततो मिलितेन पञ्चामृतेन दैवतप्रतिमास्नात्रम् । ततः पञ्चविंशतिवस्तुवासैः वासक्षेपः धूपदानं यक्षकर्दमलेपनं
पुष्पादिपूजा । प्रतिष्ठामन्त्रो यथा—ॐ ह्रीं श्रीं क्लीं क्लूं कुरु २ तुरु २ कुलु २ चुरु २ चुलु २ चिरि २ चिलि २

किरि २ किलि २ हर २ सर २ हूं सर्वदेवेभ्यो नमः अमुकनिकायमध्यगत अमुकजातीय अमुकपद अमुकव्यापार अमुकदेव इह मूर्तिस्थापनायां अवतर २ तिष्ठ २ चिरं पूजकदत्तां पूजां गृहाण २ स्वाहा । इति प्रतिष्ठामन्त्रः । निकायस्थाने भुवनपतिव्यन्तरवैमानिककथनं जातिस्थाने भुवनपतिष्वसुरादिकथनं व्यन्तरेषु पिशाचादिकथनं वैमानिकेषु सौधर्मभवादिकथनं पदस्थाने इन्द्रसामानिकपार्षद्यत्रायस्त्रिंशअङ्गरक्षलोकपालानिकप्रकीर्णकाभियोगिककैल्बिषिकलौकान्तिकजृम्भकादिकथनं कर्मकथने तद्गुणकृतकीर्तनवर्णआयुधपरिवारकथनं । इति मन्त्रमध्ये अमुकस्थाने विवक्षा । एवं देवीनामपि । अत्र गणिपिटकयक्षशासनयक्षिणीब्रह्मशान्तिप्रतिष्ठा व्यन्तरेष्वन्तर्भवति कन्दर्पादिप्रतिष्ठा वैमानिकेषु लोकपालानां प्रतिष्ठा भवनपतिषु निर्ऋतेः प्रतिष्ठा व्यन्तरेषु ज्योतिषाणां प्रतिष्ठा ग्रहप्रतिष्ठायामन्तर्भूता ॥ इति प्रतिष्ठाधिकारे चूर्णिकायदेवप्रतिष्ठा संपूर्णा ॥ १५ ॥

अथ गृहप्रतिष्ठाविधिः ॥ १६ ॥ सचायं वास्तुशास्त्रानुसारेण सूत्रधारैर्यथासंस्थानविधिरचिते गृहे राजमन्दिरे सामान्यमन्दिरे वा सम एव प्रतिष्ठाक्रमः । यथा पूर्वं तत्र गृहे जिनबिम्बमानीय बृहत्स्नात्रविधिना स्नात्रं विधाय तत्स्नात्रजलेन सर्वत्र गृहे अभिषेचनं कुर्यात् । ततः पूर्वबहिर्द्वारे देहलीं निर्मलजलक्षालितां गन्धपुष्पधूपदीपनैवेद्यपूजितां लिखितोंकारां द्वारश्रियं च तथाविधां धौतचर्चितपूजितां लिखितह्रींकारां त्रिर्वासक्षेपेण द्वयोरपि प्रतिष्ठां विदध्यात् । मन्त्रो यथा—ॐ ह्रीं देहल्यै नमः । ॐ ह्रीं द्वारश्रियै नमः । बहिस्तो

इति मन्त्रैर्जलगन्धाक्षतपुष्पधूपदीपनैवेद्यदानपूर्वं त्रिस्त्रिर्वासक्षेपेण
वामे गङ्गायै नमः । दक्षिणे यमुनायै नमः । इति मन्त्रैर्जलगन्धाक्षतपुष्पधूपदीपनैवेद्यदानपूर्वं त्रिस्त्रिर्वासक्षेपेण
प्रतिष्ठा । सर्वेष्वपि द्वारेष्वियमेव प्रतिष्ठा । ततोऽन्तः प्रविश्य सर्वभित्तिभागेषु ॐ अं अपवारिण्यै नमः ।
इति मन्त्रेण द्वारवत्प्रतिष्ठा । ततः शालासु द्वारेषु पूर्ववत् । स्तम्भेषु च ॐ श्रीं शेषाय नमः । सर्वस्तम्भेषु
द्वारविधिना इयमेव प्रतिष्ठा । ततो मध्यशालासु द्वारेषु बहिःस्तम्भेषु भित्तिषु पूर्ववत् । तद्भूमौ च ॐ ह्रौं
मध्यदेवतायै नमः इति तद्विधिना वासक्षेपेण प्रतिष्ठा । ततोऽपवरकेषु ॐ आं श्रीं गर्भश्रियै नमः । द्वारभि-
त्तिच्छदिस्तम्भेषु पूर्ववत् । ततः पाकशालायां ॐ श्रीं अन्नपूर्णायै नमः । कोष्ठागारेऽप्ययमेव मन्त्रः । भाण्डा-
गारे ॐ श्रीं महालक्ष्म्यै नमः । जलागारे ॐ वं वरुणाय नमः । शयनागारे ॐ शौं संवेशिन्यै नमः । देवतागारे
ॐ ह्रीं नमः । उपरितनभूमिकासु सर्वासु ॐ आं क्रौं किरीटिन्यै नमः । हस्तिशालायां ॐ श्रीं श्रियै नमः ।
अश्वशालायां ॐ रं रेवंताय नमः । गोमहिषीछागीवृषभशालासु ॐ ह्रीं अडनडिकिलि २ स्वाहा । आस्थान-
शालासु ॐ सुखमण्डिन्यै नमः । इति सर्वागारेषु पूर्वोक्तवासैः पूर्वोक्तद्वारे स्तम्भच्छदिभित्तिविधिना प्रतिष्ठां
विधायाङ्गणमागच्छेत् । तत्र कलशप्रतिष्ठावत् दिक्पालानाहूय शांतिबलिं दद्यात् । ततोऽनंतरं शांतिकं पौ-
ष्टिकं च कुर्यात् । स्वगुरुस्वज्ञातिभ्यो भोजनतांबूलवस्त्रदानं । हट्टे ॐ श्रीवाञ्छितदायिन्यै नमः । मठे ॐ ऐंवा-
ग्वादिन्यै नमः । उटजेषु ॐ ह्रीं ब्लूं सर्वायै नमः । धातुघटनशालायां ॐ भूतधात्र्यै नमः । तणागारे ॐ शौं
शांतायै नमः । सत्रागारे पाकशालावत् । प्रपायां पानीयशालावत् । होमशालायां ॐ रं अग्नये नमः । एतासु

सर्वासु द्वारच्छदिभित्तिप्रतिष्ठा पूर्ववत्। अन्येषां गृहाणां नीचकर्मणां विप्रादीनामकृत्यत्वान्न कथितः प्रतिष्ठाविधिः ॥ इति प्रतिष्ठाधिकारे गृहप्रतिष्ठा संपूर्णा ॥ १६ ॥

अथ जलाशयप्रतिष्ठाविधिः ॥ १७ ॥ सचार्यं—"पूर्वाषाढा शतभिषक् रोहिणी वासवं तथा। जलाशयप्रतिष्ठायां नक्षत्राणि नियोजयेत् ॥ १ ॥" पूर्वं जलाशयकारयितुर्गृहे शांतिकं पौष्टिकं च कुर्यात् । ततः सर्वोपकरणानि गृहीत्वा जलाशये गच्छेत्। तत्र पूर्वं जलाशयेषु चतुर्विंशतितन्त्रसूत्रेण रक्षा पूर्ववत् । तत्र जिनबिम्बं संस्थाप्य बृहत्स्नात्रविधिना स्नात्रं कुर्वन्ति। ततो जलाशये पञ्चगव्यं निक्षिप्य जिनस्नात्रोदकं निक्षिपेत्। ततो जलाशयाग्रे लघुनन्द्यावर्तस्थापनं पूर्ववत्। किन्तु मध्ये नन्द्यावर्तस्थाने वरुणस्थापनं । ततस्तेषां सर्वेषां पूजा पूर्ववत्। विशेषेण त्रिवेलं पूजा वरुणस्य । ततस्त्रिकोणाग्निकुण्डेऽमृतमधुपायसनानाफलैः प्रत्येकं नन्द्यावर्तस्थापना। देवताभिधानैः प्रणवपूर्वकैः स्वाहान्तैः होमः। किंतु वरुणस्याष्टोत्तरशताहुतयः पृथक्। तत आहुतिशेषं सर्वं जलं जलाशये निक्षिपेत्। ततो गुरुः पञ्चामृतभृतकलशं करे गृहीत्वा तज्जलाशयमध्ये धारां क्षिपन् इति मन्त्रं पठेत्। ॐ वं वं वं वं वं वलप् वलिप् नमोवरुणाय समुद्रनिलयाय मत्स्यवाहनाय नीलांबराय अत्र जले जलाशये वा अवतर २ सर्वदोषान् हर २ स्थिरीभव २ ॐ अमृतनाथाय नमः इति सप्तवेलं पठेत्। ततोऽनेनैव मन्त्रेण पञ्चरत्नं न्यसेत्। वासक्षेपः। ततो देहलीस्तम्भभित्तिद्वारच्छदि अङ्गण प्रतिष्ठा गृहवत्। तत्समीपे प्रतिष्ठासूचकयूपस्तम्भं प्रतिष्ठादौ ॐ स्थिरायै नमः इति मन्त्रेण न्यसेत् । तथाच वापीकूपत-

॥ इति जलाशय-

डागप्रवाहकुल्यानिर्झरतडागिकाविवरिकाधर्मजलाशयनिमित्तजलाशयेष्वियमेव प्रतिष्ठा

प्रतिष्ठा संपूर्णा ॥ १७ ॥ तन्मूले

अथ वृक्षप्रतिष्ठाविधिः ॥ १८ ॥ सचायं स्ववर्धिते पुरातने वा आश्रयणीयवृक्षे प्रतिष्ठा विधीयते । ततो जिनस्नात्रोदकेन तीर्थ-

जिनविम्बं न्यस्य वृहत्स्नात्रं कुर्यात् । लघुनन्द्यावर्तस्थापनं पूजनं होमश्च पूर्ववत् । गन्धपुष्पधूप-

जलमिश्रेण अष्टोत्तरशतकलशैः वृक्षमभिषिञ्चेत् । वासक्षेपश्च कौसुम्भसूत्रेण रक्षावन्धनं च । २ तिष्ठ

दीपनैवेद्यदानं । अभिषेकवासक्षेपरक्षामन्त्रो यथा—ॐ क्षं यां रां चं चुरु २ चिरि २ वनदैवत अत्रावतर वाटि-

२ श्रियं देहि वाञ्छितदाता भव २ स्वाहा । ततः साधुपूजनं संघपूजनं नन्द्यावर्तविसर्जनं च पूर्ववत् ।

कारामवनदेवताप्रतिष्ठास्वयमेव विधिः ॥ इति प्रतिष्ठाधिकारे वृक्षवनदेवताप्रतिष्ठा संपूर्णा ॥ १८ ॥

अथाट्टालकादिप्रतिष्ठाविधिः ॥ १९ ॥ स चायं अट्टालके स्थण्डिले नवबद्धपद्यायां जिनविम्बं संस्थाप्य वृह-

त्स्नात्रविधिना स्नात्रं कुर्यात् । लघुनन्द्यावर्तस्थापनं पूजनं होमश्च पूर्ववत् । ततो जिनस्नात्रोदकेन सर्वत्र अट्टा-

लकस्थण्डिलपद्यादिप्रोक्षणं वासक्षेपश्च । प्रोक्षणवासक्षेपमन्त्रो यथा—ॐ ह्रीं स्थां २ स्थीं २ भगवति भूमिमातः

अत्रावतर २ पूजां गृहाण २ सर्वसमीहितं देहि २ स्वाहा । अनेनैव मन्त्रेण चतुर्विंशतितन्तुसूत्रेण रक्षाकर-

णम् । गन्धपुष्पधूपदीपनैवेद्यदानं पूर्ववत् । नन्द्यावर्तविसर्जनं पू० । ततोऽनन्तरं साधुपूजनं संघपूजनं च ॥

इति प्रतिष्ठाधिकारे अट्टालकादिप्रतिष्ठा संपूर्णा ॥ १९ ॥

अथ दुर्गयन्त्रप्रतिष्ठाविधिः ॥ २० ॥ सचायम् । नवकृते दुर्गे पूर्वं चतुर्विंशतितन्तुसूत्रेण बहिरन्तः शान्तिमन्त्रेण रक्षां कुर्यात् । ततस्तन्मध्ये ईशानदिग्भागे जिनबिम्बं न्यस्य बृहत्स्नात्रविधिना स्नात्रं विधाय बृहद्दशवलय-नन्द्यावर्तस्थापनं होमं च बिम्बप्रतिष्ठावत्कुर्यात् । ततः शान्तिकं पौष्टिकं च यथाविधि कुर्यात् । ततः शान्तिकपौष्टिककलशजलं गृहीत्वा अन्तर्बहिश्च धारां दद्यात् । प्रतिकपिशीर्षं प्रतिकोष्टकं वासक्षेपं च कुर्यात् । धारादानवासक्षेपमन्त्रो यथा—ॐ ह्रीं श्रीं क्लीं व्लूं दुर्गे दुर्गमे दुःप्रधर्षे दुःसहे दुर्गे अवतर २ तिष्ठ २ दुर्गस्योपद्रवं हर २ डमरं हर २ दुर्भिक्षं हर २ परचक्रं हर २ मरकं हर २ सर्वदा रक्षां शान्तिं तुष्टिं पुष्टिं ऋद्धिं वृद्धिं कुरु २ स्वाहा । एवं दुर्गप्रतिष्ठां विधाय प्रतोलीप्रतिष्ठां द्वारप्रतिष्ठां च कुर्यात् । अयं च विशेषः अधोभागे दक्षिणे ॐ अनन्ताय नमः । वामे ॐ वासुकये नमः । उपरि दक्षिणे ॐ श्रीमहालक्ष्म्यै नमः । वामे ॐ गं गणेशाय नमः । ततोऽनन्तरं दुर्गस्य मध्यभागं समागत्य गोमयानुलिप्तभूमौ ऊर्ध्वीभूय कलशविधिवत् दिक्पालानाहूय शान्तिबलिं कलशविधिवद्दद्यात् । ततो नन्द्यावर्तविसर्जनं पूर्ववत् । ततः साधुपूजनं संघपूजनं च । यन्त्रप्रतिष्ठायां तु भैरवादियन्त्राणां चैवैव प्रतिष्ठा । तत्र यन्त्रेषु पूर्णीभूतेषु तन्मूले जिनबिम्बं न्यस्य बृहत्स्नात्रविधिना स्नात्रं विधाय तत्स्नात्रोदकेन मन्त्रमभिषिच्य वासक्षेपं कुर्यात् । वासक्षेपमन्त्रो यथा—ॐ ह्रीं षट्ट् २ लिहि २ ग्रन्थे ग्रन्थिनि भगवति यन्त्रदेवते इह अवतर २ शत्रून् हन २ समीहितं देहि २ स्वाहा । ततोऽनन्तरं अनेनैव मन्त्रेण रक्षाबन्धः ततो वैज्ञानिकसन्माननम् ॥ इति प्रतिष्ठाधिकारे दुर्गयन्त्रप्रतिष्ठाविधिः संपूर्णः ॥ २० ॥

अथाधिवासनाविधिः ॥ २१ ॥ सचायम् । अधिवासनां तु वासक्षेपेण कुलाभिषेकनहस्तन्यासेन वा भवति । पूजाभूम्यधिवासने—"ॐ लल । पवित्रिताया मन्त्रैकभूमौ सर्वसुरासुराः । आयान्तु पूजां गृह्णन्तु यच्छन्तु च समीहितम् ॥ १ ॥" शयनभूम्यधिवासने—"ॐ लल। समाधिसंहतिकरी सर्वविघ्नापहारिणी। संवेशदेवतात्रैव भूमौ तिष्ठतु निश्चला ॥ २ ॥" आसनभूमौ—"ॐ लल । शेषमस्तकसंदिष्टा स्थिरा सुस्थिरमङ्गला । निवेशभूमावत्रास्तु देवता स्थिरसंस्थितिः ॥ ३ ॥" विहारभूमौ—"ॐ लल । पदे पदे निधानानां खानीनामपि दर्शनम् । करोतु प्रीतहृदया देवी विश्वंभरा मम ॥ ४ ॥" क्षेत्रभूमौ—"ॐ लल । समस्तरम्यवृक्षाणां धान्यानां सर्वसंपदाम् । निदानमस्तु मे क्षेत्रभूमिः संप्रीतमानसा ॥ ५ ॥" सर्वोपयोग्यभूमिषु च सर्वासु—"ॐ लल । यत्कार्यमहमत्रैकभूमौ संपादयामि च। तच्छीघ्रं सिद्धिमायातु सुप्रसन्नास्तु मे क्षितिः॥६॥" जलाधिवासने—"ॐ वव । जलं निजोपकाराय परोपकृतयेऽथवा । पूजार्थायाथ गृह्णामि भद्रमस्तु न पातकम् ॥ ७ ॥" वन्ह्यधिवासने—"ॐ रं। धर्मार्थकार्यहोमाय स्वदेहार्थाय वाऽनलम् । संधुक्षयामि नः पापं फलमस्तु ममेहितम् ॥ ८ ॥" चुल्ह्यधिवासने—"ॐ रं। अग्न्यगारमिदं शान्तं भूयाद्विघ्नविनाशनम् । तद्युक्तिपाकेवान्येन पूजिताः सन्तु साधवः ॥ ९ ॥" शकट्यधिवासने—"ॐ रं । सर्वदेवेष्टदानस्य महातेजोमयस्य च। आधारभूता शकटी वह्नेरस्तु समाहिता ॥ १० ॥" वस्त्राधिवासने—"ॐ श्रीं । चतुर्विधमिदं वस्त्रं श्रीनिवाससुखाकरम् । वस्त्रं देहधृतं भूयात्सर्वसंपत्तिदायकम् ॥ ११ ॥" भूषणाधिवासने—"ॐ श्रीं । मुकुटाङ्गदहारा-

धेहाराः कटकनूपुरे । सर्वभूषणसंघातः श्रियेऽस्तु वपुषा धृतः ॥ १२ ॥" माल्याधिवासने—"ॐ श्रीं । सर्वदेवस्य संतृप्तिहेतु माल्यं सुगन्धि च । पूजाशेषं धारयामि स्वदेहेन त्वदर्चना ॥ १३ ॥" गन्धाधिवासने—"ॐ ह्यें । कर्पूरागरुकस्तूरीश्रीखण्डशशिसंयुतः । गन्धपूजादिशेषो मे मण्डनाय सुखाय च ॥ १४ ॥" ताम्बूलाधिवासने—"ॐ श्रीं । नागवल्लीदलैः पूगकस्तूरीवर्णमिश्रितैः । ताम्बूलं मे समस्तानि दुरितानि निकृन्ततु ॥ १५ ॥" चन्द्रोदयच्छत्रयोरधिवासने—"ॐ श्रीं ह्रीं । मुक्ताजालसमाकीर्णं छत्रं राज्यश्रियः समम् । श्वेतं विविधवर्णं वा दद्याद्राज्यश्रियं स्थिराम् ॥ १६ ॥" शय्यासनसिंहासनाद्यधिवासने—"ॐ ह्रीं लल । इदं शय्यासनं सर्वं रचितं कनकादिभिः । वस्त्रादिभिर्वा काष्ठाद्यैः सर्वसौख्यं करोतु मे ॥ १७ ॥" गजतुरङ्गादिपर्याणाधिवासने—"ॐ स्थांस्थीं । सर्वावष्टम्भजननं सर्वासनसुखप्रदम् । पर्याणं वर्यमत्रास्तु शरीरस्य सुखावहम् ॥ १८ ॥" पादत्राणाधिवासने—"ॐ सः । काष्ठचर्ममयं पादत्राणं सर्वाङ्घ्रिरक्षणम् । नयतान्मां पूर्णकामकारिणीं भूमिमुत्तमाम् ॥ १९ ॥" सर्वपात्राधिवासने—"ॐ क्रां । स्वर्णरूप्यताम्रकांस्यकाष्ठमृच्चर्मभाजनम् । पानान्नहेतु सर्वाणि वाञ्छितानि प्रयच्छतु ॥ २० ॥" सर्वौषधाधिवासने—"ॐ सुधासुधा । धन्वन्तरिश्च नासत्यौ मुनयोऽत्रिपुरस्सराः । अत्रौषधस्य ग्रहणे निघ्नन्तु सकला रुजः ॥ २१ ॥" मण्यधिवासने—"ॐ वं हं सः । मणयो वारिधिभवा भूमिभागसमुद्भवाः । देहिदेहभवाः सन्तु प्रभावाद्वाञ्छितप्रदाः ॥ २२ ॥" दीपाधिवासने—"ॐ जप २ । सूर्यचन्द्रश्रेणिगतसर्वपापतमोपहः । दीपो मे विघ्नसंघातं निहन्यान्नित्यपार्वणः ॥ २३ ॥"

भोजनाधिवासने—"ॐ हन्तु २। पूजादेवबलेः शेषं शेषं च गुरुदानतः। भोजनं मम तृप्त्यर्थं तुष्टिं पुष्टिं क-
रोतु च ॥ २४ ॥" भाण्डागारकोष्ठागाराधिवासनं गृहप्रतिष्ठायां ज्ञेयम् ॥ २५ ॥ पुस्तकाधिवासने—"ॐ ऐं।
सारस्वतमहाकोशनिलयं चक्षुरुत्तमम्। श्रुताधारं पुस्तकं मे मोहध्वान्तं निकृन्ततु ॥ २६ ॥" जपमालाधिवा-
सने—"ॐ ह्रीं। रत्नैः सुवर्णबीजैर्या रचिता जपमालिका। सर्वजापेषु सर्वाणि वाञ्छितानि प्रयच्छतु ॥२७॥"
वाहनाधिवासने—"ॐ यां यां। तुरङ्गहस्तिशकटरथमर्त्योढवाहनम्। गमने सर्वदुःखानि हत्वा सौख्यं प्रय-
च्छतु ॥ २८ ॥" सर्वशस्त्राधिवासने—"ॐ द्रां द्रीं ह्रीं। अमुक्तं चैव मुक्तं च सर्वं शस्त्रं सुतेजितम्। हस्तस्थं
शत्रुघाताय भूयान्मे रक्षणाय च ॥ २९ ॥" कवचाधिवासने—"ॐ रक्ष २। लोहचर्ममयो दंशो वज्रमन्त्रेण
निर्मितः। पततोऽपि हि वज्रान्मे सदा रक्षां प्रयच्छतु ॥ १ ॥" प्रक्षराधिवासने—"ॐ रक्ष २। तुरंगस्यास्य
रक्षार्थं प्रक्षरं धारितं सदा। कुर्यात्पोषं स्वपक्षीये परपक्षे च खण्डनम् ॥ २ ॥" स्फराधिवासने—"ॐ रक्ष २।
सर्वोपनाहसहितः सर्वशस्त्रापवारणः। स्फरः स्फुरतु मे युद्धे शत्रुवर्णक्षयंकरः ॥ ३ ॥" गोमहिषीवृषभाधि-
वासने—"ॐ घन २। गावो नानाविधैर्वर्णैः श्यामला महिषीगणाः। वृषभाः सर्वसंपत्तिं कुर्वन्तु मम सर्वदा
॥ ३१ ॥" गृहोपकरणाधिवासने—"ॐ श्रीं। गृहोपकरणं सर्वं स्थाली घट उलूखलम्। स्थिरं चलं वा सर्वत्र
सौख्यानि कुरुतागृहे ॥ ३२ ॥" क्रेयाधिवासने—"ॐ श्रीं। गृह्यमाणं मया सर्वं क्रयवस्तु निरन्तरम्। सदैव
लाभदं भूयात्स्थिरं सुखदमेव च ॥ ३३ ॥" विक्रयाधिवासने—"ॐ श्रीं। एतद्वस्तु च विक्रेयं विक्रीणामि

यदञ्जसा। तत्सर्वं सर्वसंपत्तिं भाविकाले प्रयच्छतु ॥ ३४ ॥" सर्वभोग्योपकरणाधिवासने—"ॐ खं खं। सर्वभोग्योपकरणं सजीवं जीववर्जितम्। तत्सर्वं सुखदं भूयान्माभूत्पापं तदाश्रयम् ॥ ३५ ॥" चामराधिवासने—"ॐ चं चं। गोपुच्छसंभवं हृद्यं पवित्रं चामरद्वयम्। राज्यश्रियं स्थिरीकृत्य वाञ्छितानि प्रयच्छतु ॥ ३६ ॥" सर्ववाद्याधिवासने—"ॐ वद। सुषिरं च तथाऽऽनद्धं ततं घनसमन्वितम्। वाद्यं प्रौढेन शब्देन रिपुचक्रं निकृन्ततु ॥ ३७ ॥" उक्तव्यतिरिक्तसर्ववस्त्वधिवासने—"ॐ श्रीं आत्मा। सर्वाणि यानि वस्तूनि मम यान्त्युपयोगिताम्। तानि सर्वाणि सौभाग्यं यच्छन्तु विपुलां श्रियम् ॥ ३८ ॥" यस्य वस्तुनो न कस्य जीवाजीवरूपस्य गृह्यमाणस्याधिवासनं तत्तन्मन्त्रेण विधेयम्। उक्तव्यतिरिक्तस्यान्तिममन्त्रेण विधेयम्। चन्द्रबलमात्रेण शुभदिने अधिवासना विधीयते—"भद्रं कुरुष्व परिपालय सर्ववंशं विघ्नं हरस्व विपुलां कमलां प्रयच्छ। जैवातृकार्कसुरसिद्धजलानि यावत्स्थैर्यं भजस्व वितनुष्व समीहितानि ॥ १ ॥" अनेन वृत्तेन सर्वदेवदेवीकलशध्वजादिस्थापनं विधेयम्। "अर्हन्मते कदाचिन्न प्रतिष्ठा निशि जायते। विशेषेण निषिद्धा तु जिनवल्लभसूरिभिः ॥ २ ॥" ॥ ॥ अथ सर्वेषां प्रतिष्ठादिनशुद्धिर्यथा। "अथामरस्थापनमुत्तरायणे स्वदेववारर्क्षतिथिक्षणादिषु। सिते च पक्षे शशितारयोर्बले विधौ विलग्ने च शुभावलोकिते ॥ १ ॥ रोहिण्युत्तरपौष्णवैष्णवकरादित्याश्विनीवासवानूराधेन्दवजीवभेषु गदितं विष्णोः प्रतिष्ठापनम्। पुष्यश्रुत्यभिजित्सु चेश्वरकयोर्वित्ताधिपस्कन्दयोर्मैत्रे तिग्मरुचेः करे निर्ऋतिभे दुर्गादिकानां स्मृतम् ॥ २ ॥ गणपरिवृढरक्षोयक्षभूता-

सुराणां प्रमथफणिसरस्वत्यादिकानां सपौष्णम् । श्रवसि सुगतनाम्नो वासवे लोकपानां निगदितमखिलानां स्थापनं च स्थिरेषु ॥ ३ ॥ सप्तर्षयो यत्र चरन्ति धिष्ण्ये कार्या प्रतिष्ठा खलु तत्र तेषाम् । श्रीव्यासवाल्मीकिघटोद्भवानां यथा स्मृता वाक्पतिभग्रहाणाम् ॥ ४ ॥ सिंहोदये दिनकरो मिथुने महेशो नारायणश्च युवतौ घटभे विधाता । देव्यो द्विमूर्तिभवने च निवेशनीयाः क्षुद्राश्चरे स्थिरगृहे निखिलाश्च देवाः ॥ ५ ॥ तेजस्विनी क्षेमकृदग्निदाहविधायिनी स्याद्वरदा दृढा च । आनन्दकृत्कल्पनिवासिनी च सूर्यादिवारेषु भवेत्प्रतिष्ठा ॥ ६ ॥ केन्द्रत्रिकोणभववर्तिषु सद्ग्रहेषु चन्द्रार्कभौमशनिषु त्रिषडायगेषु । सांनिध्यमेति नियतं प्रतिमासु देवः कर्तुः सुतार्थसुखसंपदरोगिता च ॥ ७ ॥ सौम्या लग्नाद्याश्रिता मूर्तिपूर्वान् भावान्वीर्यैरुत्कटा वर्धयन्ति । षष्ठं हित्वा भावमेते हि तत्र शत्रुध्वंसिं कर्तुरुत्पादयन्ति ॥ ८ ॥ संवत्सरादितिथिवारगुणास्ततश्च योगाभिधं प्रकरणं करणप्रशंसा । भानां फलानि तदनु क्षणजा गुणाश्च पश्चादुपग्रहफलं रविसंक्रमेऽथ ॥९॥ स्याद्गोचरः शशिफलं च विलग्नचिन्ता संस्कारजाश्च विधयोऽग्निपरिग्रहान्ताः । यात्राविवाहविधिरालयसन्निवेशो वेश्मप्रवेशनववस्त्रसुरप्रतिष्ठाः ॥ १० ॥" इति सर्वेषां अधिवासनवर्जितानां दिनशुद्धिः लग्नशुद्धिश्च ॥ ॥ अथ प्रतिष्ठालक्षणम् । "पूर्वशिरस्कां स्नातां सुवर्णरत्नाम्बुभिश्च सुसुगन्धैः । नानातूर्यनिनादैः पुण्याहैर्वेदनिर्घोषैः ॥ १ ॥ ऐन्द्र्यां दिशीन्द्रलिङ्गा मन्त्राः प्राग्दक्षिणेऽग्निलिङ्गाश्च । जप्तव्या द्विजमुख्यैः पूज्यास्ते दक्षिणाभिश्च ॥ २ ॥ यो देयः संस्थाप्यस्तन्मन्त्रैश्चानलं द्विजो जुहुयात् । अग्निनिमित्ताऽनिमिषाः प्रोक्तानीन्द्रध्वजोत्थेन ॥ ३ ॥ विष्णो-

भौगवतान्भगांश्च सवितुः शम्भोः सभस्मद्विजान् मातॄणामपि मातृमण्डलविदो विप्रान्विदुर्ब्रह्मणः । शाक्यान्सर्वहितस्य शुद्धमनसो नग्ना जिनानां विदुर्ये यं देवमुपाश्रिताः स्वविधिना तैस्तस्य कार्या क्रिया ॥ ४ ॥ इति प्रतिष्ठालक्षणम् । प्रासादे पूर्णनिष्पन्ने स्थापना क्रियतेऽर्हतः । विष्णोर्विनायकस्यापि देव्याः सूर्यस्य सर्वथा ॥१॥ शिवस्य मूर्तियुक्तस्य द्वारेण स्यात्प्रवेशनम् । लिङ्गस्याच्छन्नप्रासादे प्रवेशो गगनाध्वना ॥ २ ॥ अर्हद्विष्णुगणाधीशसूर्यदेवीपिनाकिनाम् । क्रमात्प्रदक्षिणास्तिस्रः पञ्चत्र्यश्चैकखण्डकाः ॥ ३ ॥ वर्जयेदर्हतः पृष्ठिं दृष्टिं पशुपतेरपि । वैकुण्ठसूर्ययोः पार्श्वौ चण्डीं सर्वत्र वर्जयेत् ॥ ४ ॥ अतः पुराद्बहिः कार्यं देव्या नूतनमालयम् । अन्यप्रासादकरणे विभाषैव प्रदर्शिता ॥ ५ ॥ कुण्डाग्रस्य च कूपस्य कोणस्य विटपस्य च । अट्टालकस्य स्तम्भस्य द्वारे वेधो विगर्हितः ॥ ६ ॥ उच्छ्रायभूमिं द्विगुणां त्यक्त्वा चैत्ये चतुर्गुणाम् । वेधादिदोषो नैव स्यादेवं त्वष्टृमतं यथा ॥ ७ ॥ अत्युच्चत्वादेककत्वात्तथाच पृथुलाङ्गणात् । अत्युच्चपीठाद्भूपानां तद्गृहे वेध इष्यते ॥ ८ ॥ ॥

इत्याचार्यश्रीवर्धमानसूरिकृते आचारदिनकरे उभयधर्मस्तम्भे प्रतिष्ठाकीर्तनो नाम त्रयस्त्रिंशत्तम उदयः ॥३३॥

ग्रन्थाग्रं ७२०५

---

१ पार्श्वौ इति पाठः ।

# चतुस्त्रिंश उदयः ।

कङ्कणमुद्राङ्कितकरः सदशाऽयङ्ग-
अथ शान्तिकाधिकारविधिः ॥ स यथा । तत्रादौ गुरुर्गृहस्थगुरुर्वा सुस्नातः कङ्कणमुद्राङ्कितकरः सदशाऽयङ्ग-
श्वेतवस्त्रधरो भवेत् । शान्तिककारोऽपि तादृग्वेषभूषणधारी सभ्रातृपुत्रो भवेत् । गीतनृत्यवाद्यादिनारीमङ्ग-
लगायनाचारं च प्रगुणीकुर्यात् । ततो बृहत्स्नात्रविधिनारभेत् । प्रथमं स्नात्रपीठे शान्तिनाथप्रतिमास्थाप-
नम् । निश्चयेन तत्प्रतिमाया अलाभे अन्यजिनप्रतिमाया अपि शान्तिनाथप्रतिमाकल्पनम् । मन्त्रो यथा—ॐ
नमोऽर्हन्त्यस्तीर्थकरेभ्यः सममस्त्वत्र तीर्थकरनाम पञ्चदशकर्मभूमिभवस्तीर्थकरो योऽत्राराध्यते सोऽत्र प्रति-
मायां सन्निहितोऽस्तु । अनेन मन्त्रेण जिनप्रतिमायां यस्य तीर्थकरस्य कल्पना विधीयते स तीर्थकरः प्रति-
मायां पूजितो भवति । अत एव वासक्षेपेणान्यप्रतिमायां शान्तिजिनकल्पना । तदनन्तरं पूर्वमर्हत्कल्पवि-
धिना पूर्णां पूजां विधाय । ततो बृहत्स्नात्रविधियुक्त्या कुसुमाञ्जलिक्षेपं विदध्यात् । ततो बिम्बाग्रे पवि-
त्राणि स्वर्णरूप्यताम्रकांस्यमयानि वा सप्त पीठानि न्यसेत् । तत्र प्रथमपीठे पञ्चपरमेष्ठिस्थापनं । अक्षतैस्ति-
लकैर्वा मालाक्रमेण द्वितीयपीठे दिक्पालस्थापनं । तथैव दिक्क्रमेण तृतीयपीठे राशिस्थापनत्रयंत्रयं कृत्वा च-
तुर्दिक्षु चतुर्थपीठे नक्षत्रस्थापनं ससकं २ कृत्वा चतुर्दिक्षु । पञ्चमपीठे ग्रहस्थापनं दिक्क्रमेण क्षेत्रपालवर्जितम् ।

---

१ अक्षतैः इति पाठः ।

षष्ठपीठे विद्यादेवीस्थापनं चतुष्कं कृत्वा चतुर्दिक्षु। सप्तमपीठे गणपतिकार्तिकेयक्षेत्रपालपुरदेवताचतुर्णिकायदेवस्थापनं। ततः परमेष्ठीपूजनं पूर्ववत्। पञ्चहस्तवस्त्राच्छादनम्। तत्र शेषं नन्द्यावर्तवत्। दिक्पालपूजनं नन्द्यावर्तवत्। तत्र दशहस्तवस्त्राच्छादनम्। राशिपूजनं यथा। पुष्पाञ्जलिं गृहीत्वा। "मेषवृषमिथुनकर्कटसिंहकनीवाणिजादिचापधराः। मकरधनमीनसंज्ञा संनिहिता राशयः सन्तु ॥ १ ॥" अनेन वृत्तेन राशिपीठोपरि पुष्पाञ्जलिप्रक्षेपः। मेषंप्रति। मङ्गलस्य निवासाय सूर्योच्चत्वकराय मेषाय पूर्वसंस्थाय नमः। प्रथमराशये ॐ नमो मेषाय मेष इह शान्तिकमहोत्सवे आगच्छ २ इदमर्घ्यं पाद्यं बलिं चरुं आचमनीयं गृहाण २ सन्निहितो भव २ स्वाहा जलं गृहाण २ गन्धं अक्षतान् फलानि पुष्पं धूपं दीपं नैवेद्यं सर्वोपचारान् शान्तिं कुरु २ तुष्टिं पुष्टिं ऋद्धिं वृद्धिं सर्वसमीहितानि यच्छ २ स्वाहा। अनेन मन्त्रेण सर्वोपचारैर्मेषपूजनं। वृषंप्रति। "चन्द्रोच्चकरणो याम्यदिशिस्थायी कवेर्गृहं। वृषः सर्वाणि पापानि शांतिकेऽत्र निकृन्ततु ॥ १ ॥" ॐ नमो वृषाय वृष इह शेषं पूर्ववत् ॥ २ ॥ मिथुनंप्रति। "शशिनंदनगेहाय राहूच्चकरणाय च। पश्चिमाशास्थितायास्तु मिथुनाय नमः सदा ॥ १ ॥" ॐ नमो मिथुनाय मिथुन इह शेषं० ॥ ३ ॥ कर्कंप्रति। "वाक्पतेरुच्चकरणं शरणं तारकेशितुः। कर्कटं धनदाशास्थं पूजयामो निरन्तरम् ॥ १ ॥" ॐ नमः कर्काय कर्क इह शेषं० ॥ ४ ॥ सिंहंप्रति। "पद्मिनीपतिसंवासः पूर्वाशाकृतसंश्रयः। सिंहः समस्तदुःखानि विनाशयतु धीमताम् ॥ १ ॥" ॐ नमः सिंहाय सिंह इह शेषं० ॥ ५ ॥ कन्यांप्रति। "बुधस्य सदनं रम्यं तस्यैवोच्चत्वकारिणी। कन्या कृतान्त-

द्रिग्वासा ममानन्दं प्रयच्छतु ॥ १ ॥" ॐ नमः कन्यायै कन्ये इह शेषं० ॥ ६ ॥ तुलांप्रति । "यो दैत्यानां महा-
शार्यस्तस्यावासत्वमागतः । शनेरुच्चत्वदातास्तु पश्चिमास्यस्तुलाधरः ॥ १ ॥" ॐ नमस्तुलाधराय तुलाधर इह
शेषं० ॥ ७ ॥ वृश्चिकं प्रति । "भौमस्य तु सुखं क्षेत्रं धनदाशाविभासकः । वृश्चिको दुःखसंघातं शान्तिकेऽत्र
निहन्तु नः ॥ १ ॥" ॐ नमो वृश्चिकाय वृश्चिक इह शेषं० ॥ ८ ॥ धन्विनंप्रति । "सर्वदेवगणाच्यस्य सदनं पद-
दायिनः । सुरेन्द्राशास्थितो धन्वी धनवृद्धिं करोतु नः ॥ १ ॥" ॐ नमो धन्विने धन्विन् इह शेषं० ॥ ९ ॥ मक-
रंप्रति । "निवासः सूर्यपुत्रस्य भूमिपुत्रोच्चताकरः । मकरो दक्षिणासंस्थः संस्थाभीतिं विहन्तु नः ॥ १ ॥" ॐ
नमो मकराय मकर इह शेषं० ॥ १ ॥ कुम्भंप्रति । "ग्रहेशतनयस्थानं पश्चिमानन्ददायकः । कुम्भः करोतु
निर्दंभं पुण्यारंभं मनीषिणाम् ॥ १ ॥" ॐ नमः कुम्भाय कुम्भ इह शेषं० ॥ ११ ॥ मीनंप्रति । "कवेरुच्चत्वदा-
तारं क्षेत्रं सुरगुरोरपि । वन्दामहे नृधर्माशापावनं मीनमुत्तमम् ॥ १ ॥" ॐ नमो मीनाय मीन इह शेषं०
॥ १२ ॥ एभिर्मन्त्रैः प्रत्येकपूजा । ततोऽनंतरं ॐ मेषवृषमिथुनकर्कसिंहकन्यातुलवृश्चिकधनमकरकुम्भमीनाः
सर्वराशयः स्वस्वस्वाम्यधिष्ठिताः इहशान्तिके आगच्छन्तु २ इदमर्घ्यं पाद्यं बलिं चरुं आचमनीयं गृह्णन्तु २
सन्निहिता भवन्तु २ स्वाहा जलं गृह्णन्तु २ गन्धं० अक्षतान्० फलानि० मुद्रां० पुष्पं० धूपं दीपं नैवेद्यं० सर्वो-
पचारान्० शान्तिं कुर्वन्तु० तुष्टिं० पुष्टिं० ऋद्धिं वृद्धिं० सर्वसमीहितानि यच्छन्तु २ स्वाहा । अनेन सर्वरा-
शीनां संकुलपूजा । ततो द्वादशहस्तवस्त्रेणाच्छादनं । ततो नक्षत्रपीठे पुष्पाञ्जलिं गृहीत्वा—"नासत्यप्रमुखा

देवा अधिष्ठितनिजोडवः । अत्रैत्य शान्तिके सन्तु सदा सन्निहिताः सताम् ॥ १ ॥" अनेन वृत्तेन नक्षत्रपीठे पुष्पाञ्जलिक्षेपः । ततः अश्विनीं प्रति—ॐ ज्वीं नमो नासत्याभ्यां स्वाहा इति मूलमन्त्रः । ॐ नमो नासत्याभ्यां अश्विनीस्वामिभ्यां नासत्यौ इह० शान्तिके आगच्छतं इदमर्घ्यं पाद्यं बलिं चरुं आचमनीयं गृह्णीतं संनिहितौ भवतं स्वाहा जलं गृह्णीतं २ गन्धं अक्षतान् फलानि मुद्रां पुष्पं धूपं दीपं नैवेद्यं० सर्वोपचारान् गृह्णीतं २ शान्तिं कुरुतं २ तुष्टिं पुष्टिं ऋद्धिं वृद्धिं सर्वसमीहितानि ददतं २ स्वाहा । द्विवचनम् ॥ १ ॥ भरणीं प्रति—ॐ यं यं नमो यमाय स्वाहा इति मूलमन्त्रः । ॐ नमो यमाय भरणीस्वामिने यम इह शान्तिके आगच्छ २ इदमर्घ्यं बलिं चरुं २ आचमनीयं गृहाण २ संनिहितो भव २ स्वाहा । जलं गृहाण २ गन्धं गृहाण २ अक्षतान् फलानि मुद्रां पुष्पं धूपं दीपं नैवेद्यं सर्वोपचारान् । शान्तिं कुरु २ तुष्टिं पुष्टिं ऋद्धिं वृद्धिं सर्वसमीहितानि देहि २ स्वाहा । एकवचनं ॥ २ ॥ कृत्तिकां प्रति—ॐ रं रं नमो अग्नयेस्वाहा इति मूलमन्त्रः । ॐ नमो अग्नये कृत्तिकास्वामिने अग्ने इह० शेषं० एकवचनं ॥ ३ ॥ रोहिणीं प्रति—ॐ ब्रह्म ब्रह्मणे नमः इति मूलमन्त्रः। ॐ नमो ब्रह्मणे रोहिणीश्वराय ब्रह्मन् इह० शेषं । एकव० ॥ ४ ॥ मृगशिरः प्रति—ॐ चं चं नमश्चन्द्राय नमः स्वाहा इति मूलमन्त्रः । ॐ नमश्चन्द्राय मृगशिरोधीशाय चन्द्र इह० शेषं० एकवच० ॥ ५ ॥ आर्द्रां प्रति—ॐ द्रु द्रु नमो रुद्राय स्वाहा इति मूलमन्त्रः । ॐ नमो रुद्राय आर्द्रेश्वराय रुद्र इह० शेषं० एकव० ॥ ६ ॥ पुनर्वसुं प्रति—ॐ जनि २ नमो अदितये स्वाहा इति मूल० । ॐ नमो अदितये पुनर्वसुस्वामिन्यै अदिते इह० शेषं०

ॐ जीव २ नमो बृहस्पतये स्वाहा इति मूल० ।
एक० स्त्रीलिङ्गे सन्निहिता भव २ इति ॥ ७ ॥ पुष्यं प्रति—ॐ फुं फुं नमः फणिभ्यः स्वाहा
ॐ नमो बृहस्पतये पुष्याधीशाय बृहस्पते इह० एक० ॥ ८ ॥ आश्लेषां प्रति—ॐ फुं फुं नमः फणिभ्यः स्वाहा
ॐ नमो बृहस्पतये पुष्याधीशाय बृहस्पते इह० एक० ॥ ८ ॥ आश्लेषां प्रति—
इति मूल० । ॐ नमः फणिभ्य आश्लेषास्वामिभ्यः इह शान्तिके आगच्छत २ इदमर्घ्यं गृह्णीत २ सन्निहिता
भवत २ स्वाहा जलं गृह्णीत गन्धं अक्षतान् फलानि मुद्रां पुष्पं धूपं दीपं नैवेद्यं सर्वोपचारान्० शान्तिं कुरुत
२ तुष्टिं पुष्टिं ऋद्धिं वृद्धिं सर्वसमीहितानि दद्ध्वं २ स्वाहा । बहुवचनं ॥ ९ ॥ मघांप्रति—ॐ स्वधा नमः पि-
तृभ्यः स्वाहा इति मूल० । ॐ नमः पितृभ्यो मघेशेभ्यः पितर इह० शेषं० बहुवचनेन ॥ १० ॥ पूर्वाफाल्गुनीं
प्रति—ॐ गें नमो योनये स्वाहा इति मूल० । ॐ नमो योनये पूर्वाफाल्गुनीस्वामिन्यै योने इह० एकवच०
स्त्रीलिङ्गेन सन्निहिता भव २ इति ॥ ११ ॥ उत्तराफाल्गुनीं प्रति—ॐ घृणि २ नमोऽर्यम्णे उत्तराफाल्गुनी-
स्वामिने अर्यमन् इह० शेषं० एक० ॥ १२ ॥ हस्तं प्रति—ॐ घृणि २ नमो दिनकराय स्वाहा इति मूल० ।
ॐ नमो दिनकराय हस्तस्वामिने दिनकर इह० शेषं० एक० ॥ १३ ॥ चित्रांप्रति—ॐ तक्ष २ नमो विश्वक-
र्मणे स्वाहा इति मूल० । ॐ नमश्चित्रेशाय विश्वकर्मन् इह० शेषं० एक० ॥ १४ ॥ स्वातिं प्रति—ॐ यः यः
नमो वायवे स्वाहा इति मूल० । ॐ नमो वायवे स्वातीशाय वायो इह० शेषं० एक० ॥१५॥ विशाखांप्रति—ॐ
वषट् नम इन्द्राय स्वाहा ॐ रं रं नमो अग्नये स्वाहा इति मूलमन्त्रौ । ॐ नम इन्द्राग्निभ्यां विशाखास्वामिभ्यां
इन्द्राग्नी इह० शेषं० द्विव० ॥ १६ ॥ अनुराधांप्रति—ॐ नमःघृणि २ नमो मित्राय स्वाहा इति मूल० । ॐ

नमो मित्राय अनुराधेश्वराय मित्र इह० शेषं० एक० ॥ १७ ॥ ज्येष्ठां प्रति—ॐ वषट् नम इन्द्राय स्वाहा इति मूल० । ॐ नम इन्द्राय ज्येष्ठेश्वराय इन्द्र इह० शेषं० एक० ॥ १८ ॥ मूलं प्रति—ॐ षषा नमो निर्ऋतये स्वाहा इति मूल० । ॐ नमो नैऋताय मूलाधीशाय नैऋते इह० शेषं० एक० ॥ १९ ॥ पूर्वाषाढां प्रति—ॐ वं वं नमो जलाय स्वाहा इति मूल० । ॐ नमो जलाय पूर्वाषाढास्वामिने जल इह० शेषं० एक० ॥ २० ॥ उत्तराषाढां प्रति—ॐ विश्व २ नमो विश्वेदेवेभ्यः स्वाहा इति मूल० । ॐ नमो विश्वेदेवेभ्यः उत्तराषाढास्वामिभ्यः विश्वेदेवा इह० शेषं० बहु० ॥ २१ ॥ अभिजितं प्रति—ॐ ब्रह्म २ नमो ब्रह्मणे स्वाहा इति मूल० । ॐ नमो ब्रह्मणे अभिजिदीशाय ब्रह्मन् इह० शेषं० एक० ॥ २२ ॥ श्रवणं प्रति—ॐ अं नमो विष्णवे स्वाहा इति मूल० । ॐ नमो विष्णवे श्रवणाधीशाय विष्णो इह० शेषं० एक ॥ २३ ॥ धनिष्ठां प्रति—ॐ नमो वसुभ्यः स्वाहा इति मूल० । ॐ नमो वसुभ्यो धनिष्ठेशेभ्यः वसवः इह० शेषं० बहु० ॥ २४ ॥ शतभिषजं प्रति—ॐ वं वं नमो वरुणाय स्वाहा इति मूल० । ॐ नमो वरुणाय शतभिषगीशाय इह० शेषं० एक० ॥ २५ ॥ पूर्वाभद्रपदां प्रति—ॐ नमो अजपादाय स्वाहा इति मूल० । ॐ नमो अजपादाय पूर्वाभद्रपदेश्वराय अजपाद इह० शेषं० एक० ॥ २६ ॥ उत्तराभद्रपदां प्रति—ॐ नमो अहिर्बुध्न्याय उत्तराभद्रपदेश्वराय अहिर्बुध्न्य इह० शेषं० एक० ॥ २७ ॥ रेवतीं प्रति—ॐ घृणि २ नमः पूषणे स्वाहा इति मन्त्रः । ॐ नमः पूष्णे रेवतीशाय पूषन् इह० शेषं० एक० ॥ २८ ॥ एतेषां मन्त्रेण प्रत्येकं पूजा । ॐ नमः सर्वनक्षत्रेभ्यः सर्वनक्षत्राणि सर्वनक्ष-

ग्रेशा० इह शान्तिके आगच्छन्तु २ इदम० आचमनीयं गृह्णन्तु २ सन्निहिता भवन्तु २ स्वाहा जलं गृह्णन्तु गन्धं अक्षतान् फलानि मुद्रां पुष्पं धूपं दीपं नैवेद्यं० सर्वोपचारान्० शान्तिं कुर्वन्तु २ तुष्टिं पुष्टिं ऋद्धिं वृद्धिं० सर्वसमीहितं ददतु २ स्वाहा। अनेन मन्त्रेण सर्वसंकुलपूजा । उपरि अष्टाविंशतिहस्तवस्त्राच्छादनं ॥ ४ ॥ ततः पञ्चमपीठे ग्रहपूजनं नन्द्यावर्तवत् नवहस्तवस्त्राच्छादनं ॥ ५ ॥ षष्ठपीठे षोडशविद्यादेवीपूजनं नन्द्यावर्तवत् । षोडशहस्तवस्त्राच्छादनं ॥ ६ ॥ सप्तमपीठे गणपतिं प्रति—ॐ गं नमो गणपतये स्वाहा इति मूल० । ॐ नमो गणपतये सायुधाय सवाहनाय सपरिकराय गणपते इह० शेषं पुल्लिंगेन एकवचनेन । विशेषेण मोदकनैवेद्यम् ॥ १ ॥ कार्तिकेयं प्रति—ॐ क्लीं नमः कार्तिकेयाय स्वाहा इति मूल० । ॐ नमः कार्तिकेयाय सायुधाय सवाहनाय सपरिकराय कार्तिकेय इह० शेषं पुंल्लिं० एक० ॥ २ ॥ क्षेत्रपालपूजा पूर्ववत् ॥ ३ ॥ पुरदेवतां प्रति—ॐ मं मं नमः पुरदेवाय स्वाहा इति मूल० । ॐ नमः पुरदेवाय सायुधाय सवाहनाय सपरिकराय पुरदेव इह० शेषं० पुं० ॥ ४ ॥ चतुर्णिकायदेवपूजनं पूर्ववत् ॥ ५ ॥ अष्टहस्तवस्त्राच्छादनं । इति सर्वेषां पूजां विधाय त्रिकोणकुण्डे होमः । परमेष्ठिसंतर्पणे खण्डघृतपायसैः श्रीखण्डश्रीपर्णीसमिद्भिर्होमः । दिक्पालसंतर्पणे घृतमधुफलैः प्लक्षाश्वत्थसमिद्भिर्होमः । ग्रहसंतर्पणे क्षीरमधुघृतैः फलसहितैः कपित्थाश्वत्थसमिद्भिर्होमः । विद्यादेवीसंतर्पणे घृतपायसखण्डफलैरश्वत्थसमिद्भिर्होमः । गणपतिसंतर्पणे मोदकैः उदुम्बरसमिद्भिर्होमः । कार्तिकेयसंतर्पणे मधुकपुष्पैः सघृतैः प्लक्षसमिद्भिर्होमः । क्षेत्रपालसंतर्पणे तिलपिण्डैर्धत्तूरस-

मिद्भिर्होमः । पुरदेवतासंतर्पणे घृतगुडक्षौद्रैर्वटसमिद्भिर्होमः । चतुर्णिकायदेवसंतर्पणे नानाफलैः पायसैः प्लक्षसमिद्भिर्होमः । सर्वत्र होमे मूलमन्त्राः । समिधः सर्वत्र प्रादेशप्रमाणाः । एवं सर्वेषां पूजनं होमं च विधाय पुष्पाञ्जलिक्षेपादनन्तरं यः सर्वोऽपि बृहत्स्नात्रविधिः कथितः स्नपनविधिः स सर्वोऽपि विधेयः । ततः स्नात्रानन्तरं स्नात्रोदकं सर्वं ग्राह्यम् । सर्वतीर्थजलं च संमील्य बिम्बाग्रे सुविलिप्तभूमौ चतुष्किकोपरि न्यस्तस्य यथासंपत्तिकृतस्य बद्धकण्ठस्य मदनफलादिरक्षस्य शान्तिकलशस्य मध्ये निक्षिपेत् । रक्षादिबन्धनं सर्वत्र शान्तिमन्त्रेण । ततः कलशमध्ये स्वर्णरूप्यमुद्राः पूगफलानि नालिकेरं च शान्तिमन्त्रेण न्यसेत् । ततः शुद्धोदकैरखण्डधारया द्वौ स्नात्रकारौ स्नात्रकलशं पूरयतः । उपरिच्छदाधारेण आकलशमूलावलम्बि सदशवस्त्रं बध्नीयात् । गुरुश्च कुशेन तां जलधारां शान्तिकलशे निपतन्तीं शान्तिकदण्डकं पठन्नभिमन्त्रयति । शान्तिदण्डको यथा—"नमः श्रीशान्तिनाथाय सर्वविघ्नापहारिणे । सर्वलोकप्रकृष्टाय सर्ववाञ्छितदायिने ॥ १ ॥"
इह हि भरतैरावतविदेहजन्मनां तीर्थकराणां जन्मसु चतुःषष्टिसुरासुरेन्द्राश्चलितासना विमानघण्टाटङ्कारक्षुभिताः प्रयुक्तावधिज्ञानेन जिनजन्मविज्ञानपरमतममहाप्रमोदपूरिताः मनसा नमस्कृत्य जिनेश्वरं सकलसामानिकाङ्गरक्षपार्षद्यत्रयस्त्रिंशल्लोकपालानीकप्रकीर्णकातियोगिकसहिताः साप्सरोगणाः सुमेरुशृङ्गमागच्छन्ति । तत्र च सौधर्मेन्द्रेण विधिना करसंपुटानीतांस्तीर्थकरान् पाण्डुकम्बलातिपाण्डुकम्बलातिरक्तकम्बला शिलासु न्यस्तसिंहासनेषु सुरेन्द्रक्रोडस्थितान् कल्पितमणिसुवर्णादिमययोजनमुखकलशाद्भृतैस्तीर्थवारिभिः

स्नपयन्ति । ततो गीतनृत्यवाद्यमहोत्सवपूर्वकं शान्तिमुद्धोषयन्ति । ततस्तत्कृतानुसारेण वयमपि तीर्थकरस्नात्रकरणानंतरं शान्तिकमुद्धोषयामः । सर्वे कृतावधानाः सुरासुरनरोरगाः शृण्वन्तु स्वाहा । ॐ अर्हन्नमो २ जय २ पुण्याहं २ प्रीयतां २ भगवन्तोऽर्हन्तो विमलकेवला लोकपूज्यास्त्रिलोकेश्वरास्त्रिलोकोद्यतकरा महातिशया महानुभावा महातेजसो महापराक्रमा महानंदा ॐ ऋषभ अजितसंभव अभिनंदनसुमतिपद्मप्रभसुपार्श्वचन्द्रप्रभसुविधिशीतलश्रेयांसवासुपूज्यविमलअनन्तधर्मशान्तिकुन्थुअरमल्लिमुनिसुव्रतनमिनेमिपार्श्ववर्धमानान्ता जिना अतीतानागतवर्तमानाः पञ्चदशकर्मभूमिसंभवाः विहरमाणाश्च शाश्वतप्रतिमागताः भुवनपतिव्यन्तरज्योतिष्कवैमानिकभुवनसंस्थिताः तिर्यक्लोकनन्दीश्वररुचकेषु कारककुण्डलवैताढ्यगजदंतवक्षस्कारमेरुकृतनिलया जिनाः सुपूजिताः सुस्थिताः शांतिकरा भवन्तु स्वाहा । देवाश्चतुर्णिकाया भवनपतिव्यन्तरज्योतिष्कवैमानिकास्तादिन्द्राश्च साप्सरः सायुधाः सवाहनाः सपरिकराः प्रीताः शान्तिकरा भवन्तुस्वाहा ॐ रोहिणीप्रज्ञप्तीवज्रशृङ्खलावज्राङ्कुशीअप्रतिचक्रापुरुषदत्ताकालीमहाकालीगौरीगान्धारीसर्वास्त्रमहाज्वालामानवीवैरोट्याअच्छुप्तामानसीमहामानसीरूपाः षोडशविद्यादेव्यः प्रीताः शान्तिकारिण्यो भवन्तु स्वाहा । ॐ अर्हत्सिद्धाचार्योपाध्यायसर्वसाधुपरमेष्ठिनः सुपूजिताः प्रीताः शान्तिकरा भवन्तु स्वाहा अश्विनी भरणी कृत्तिका रोहिणी मृगशिर आर्द्रा पुनर्वसु पुष्य आश्लेषा मघा पूर्वाफाल्गुनी उत्तराफाल्गुनी हस्त चित्रा स्वाती विशाखा अनुराधा ज्येष्ठा मूळ पूर्वाषाढा उत्तराषाढा अभिजित् श्रवण धनिष्ठा शतभि-

षक् पूर्वाभद्रपदा उत्तराभद्रपदा रेवतीरूपाणि नक्षत्राणि प्रीतानि शान्तिकराणि भवन्तु स्वाहा । ॐ मेषवृषमिथुनकर्कसिंहकन्यातुलवृश्चिकधनुर्मकरकुम्भमीनरूपा राशयः सुपूजिताः सुप्रीताः शान्तिकरा भवन्तु स्वाहा ॐ सूर्यचन्द्राङ्गारकबुधगुरुशुक्रशनैश्चरराहुकेतुरूपा ग्रहाः सुपूजिताः प्रीताः शान्तिकरा भवन्तु स्वाहा । ॐ इन्द्राग्नियमनिर्ऋतिवरुणवायुकुबेरेशाननागब्रह्मरूपा दिक्पालाः सुपूजिताः सुप्रीताः शान्तिकरा भवन्तु स्वाहा । ॐ गणेशस्कन्दक्षेत्रपालदेशनगरग्रामदेवताः सुपूजिताः शान्तिकरा भवन्तु स्वाहा । ॐ अन्येऽपि क्षेत्रदेवा जलदेवा भूमिदेवाः सुपूजिताः सुप्रीता भवन्तु शान्तिं कुर्वन्तु स्वाहा । अन्याश्च पीठोपपीठक्षेत्रोपक्षेत्रवासिन्यो देव्यः सपरिकराः सबटुकाः सुपूजिता भवन्तु शान्तिं कुर्वन्तु स्वाहा । ॐ सर्वेऽपि तपोधनतपोधनी श्रावक श्राविकाभवाश्चतुर्णिकायदेवाः सुपूजिताः सुप्रीताः शान्तिं कुर्वन्तु स्वाहा । ॐ अत्रैव देशनगरग्रामगृहेषु दोषरोगवैरिदौर्मनस्यदारिद्र्यमरकवियोगदुःखकलहोपशमेन शान्तिर्भवतु । दुर्मनोभूतप्रेतपिशाचयक्षराक्षसवैतालझोटिंकशाकिनीडाकिनीतस्करातताथिनां प्रणाशेन शान्तिर्भवतु । भूकम्पपरिवेषविद्युत्पातोल्कापातक्षेत्रदेशनिर्घातसर्वोत्पातदोषशमनेन शान्तिर्भवतु । अकालफलप्रसूतिवैकृत्यपशुपक्षिवैकृत्याकालदुश्चेष्टाप्रमुखोपप्लवोपशमनेन शान्तिर्भवतु । ग्रहगणपीडितराशिनक्षत्रपीडोपशमेन शान्तिर्भवतु । जाङ्घिकनैमिकाकस्मिकदुःशकुनदुःस्वप्नोपशमेन शान्तिर्भवतु । "उन्मृष्टरिष्टदुष्टग्रहगतिदुःस्वप्नदुर्निमित्तादि । संपादितहितसंपन्नामग्रहणं जयति शान्तेः ॥ १ ॥ या शान्तिः शान्तिजिने गर्भगते वाजनिष्ट वा जाते । सा शा-

न्तिरस्तु ...

स्तु। सर्वसुखोत्पादनाद्धेतुः ॥ २ ॥" अत्र च गृहे सर्वसंपदागमेन सर्वसन्तानवृद्ध्या सर्वसमीहित-
न्तिरस्त्र-भूया-त्सर्वसुखोत्पादनाद्धेतुः ॥ २ ॥"

सिद्ध्या सर्वोपद्रवनाशेन माङ्गल्योत्सवप्रमोदकौतुकविनोददानोद्भवेन शान्तिर्भवतु । भ्रातृपत्नीपितृपुत्रमित्र-
सम्बन्धिजननित्यप्रमोदेन शान्तिर्भवतु । आचार्योपाध्यायतपोधनतपोधनाश्रावकश्राविकारूपसंघस्य शा-
न्तिर्भवतु । सेवकभृत्यदासद्विपदचतुष्पदपरिकरस्य शान्तिर्भवतु । अक्षीणकोष्ठागारबलवाहनानां नृपाणां
शान्तिर्भवतु । श्रीजनपदस्य शान्तिर्भवतु श्रीजनपदमुख्यानां शान्तिर्भवतु श्रीसर्वाश्रमाणां शान्तिर्भवतु
चातुर्वर्ण्यस्य शान्ति० पौरलोकस्य शान्ति० पुरमुख्यानां शान्ति० राज्यसन्निवेशानां शान्ति० गोष्ठिकानां
शान्ति० धनधान्यवस्त्रहिरण्यानां शान्ति० ग्राम्याणां शान्ति० क्षेत्रिकाणां शान्ति० क्षेत्राणां शान्ति० । ॐ
"सुवृष्टाः सन्तु जलदाः सुवाताः सन्तु वायवः । सुनिष्पन्नास्तु पृथिवी सुस्थितोऽस्तु जनोऽखिलः ॥ १ ॥"
तुष्टिपुष्टिऋद्धिवृद्धिसर्वसमीहितसिद्धिर्भूयात् । 'शिवमस्तु सर्वजगतः परहितनिरता भवन्तु भूतगणाः ।
दोषाः प्रयान्तु नाशं सर्वत्र सुखी भवतु लोकः ॥ १ ॥ सर्वेऽपि सन्तु सुखिनः सर्वे सन्तु निरामयाः । सर्वे भ-
द्राणि पश्यन्तु मा कश्चिद्दुःखभाग्भवेत् ॥ २ ॥ जगत्यां सन्ति ये जीवाः स्वस्वकर्मानुसारिणः । ते सर्वे वा-
ञ्छितं स्वं स्वं प्राप्नुवन्तु सुखं शिवम् ॥ ३ ॥" इति शान्तिदण्डकं जलधाराभिमन्त्रणसहितं त्रिःपठेत् । शा-
न्तिकलशजलेन शान्तिकारयितारं सपरिवारमभिषिञ्चेत् । सर्वत्र गृहं ग्रामं च दिक्पालादिसर्वदेवतवि-
सर्जनं पूर्ववत् । इति शान्तिकम् । "सर्वत्र गृहिसंस्कारे सूतिमृत्युविवर्जिते । प्रतिष्ठासु च सर्वासु षण्मास्यां

वत्सरेऽथ वा ॥ १ ॥ आरब्धे च महाकार्ये जातेष्युत्पातदर्शने । रोगे दोषे महाभीतौ सङ्कटोपगमेऽपि च ॥२॥ गतभूम्यादिलाभे च महापापस्य संभवे । काराप्यं (कर्तव्यं) शान्तिकं नूनं धीमद्भिर्गृहमेधिभिः ॥ ३ ॥ दुरितानि क्षयं यान्ति रोगदोषौ च शाम्यतः । दुष्टदेवासुरामर्त्याः सपत्नाः स्युः पराङ्मुखाः ॥ ४ ॥ सौमनस्यं शुभं श्रेयस्तुष्टिः पुष्टिर्विवर्धते । समीहितस्य सिद्धिः स्याच्छान्तिकस्य विधानतः ॥ ५ ॥" इति सामान्यशान्तिकफलम् । शान्तिकान्ते साधुभ्योपि फलवस्त्रपात्रभोजनोपकरणदानं दद्यात् । अत्र गृहे कथिते गृहाधिपस्य नामोच्चारं कुर्यात् ॥ इति गृहशान्तिकम् ॥

अथ नक्षत्रग्रहशान्तिकं कथ्यते । कुग्रहैः क्रूरवेधैर्वाप्युत्पातैर्ग्रहणैरपि । दूषिते जन्मनामर्क्षे प्रमादादथ कर्मणि ॥ १ ॥ अयुक्तधिष्ण्येऽविहिते, जातयोः सार्पमूलयोः । ज्येष्ठायां पुत्रसुतयोर्धिष्ण्योत्पन्नेऽथ वा गदे ॥ २ ॥ ग्रहचक्रेषु वधकदशायामागतेष्युडोः । एतत्कारणसंप्राप्तौ कुर्यान्नक्षत्रशान्तिकम् ॥ ३ ॥ गोचरे वामवेधे च तथाष्टवर्गसंश्रये । कार्येऽबले ग्रहे जाते जन्मकाले दशासु च ॥ ४ ॥ एतेषु कारणेष्वेव कुर्वीत ग्रहशान्तिकम् । ऋक्षशान्तिकमृक्षेऽत्र तद्वारे ग्रहशान्तिकम् ॥ ५ ॥ ॥ तत्र प्रथमं नक्षत्रशान्तिकं लिख्यते । यथा—पुष्पाञ्जलिं गृहीत्वा—"अश्विन्यादीनि धिष्ण्यानि संमतान्यश्विजादिभिः । युतानि शान्तिं कुर्वन्तु पूजितान्याहुतिक्रमैः ॥ १ ॥" अनेन वृत्तेन स्थापनादौ पीठोपरि पुष्पाञ्जलिक्षेपः । अश्विनीशान्तिके अश्विनीकुमारमूर्तिद्वयं संस्थाप्य पूर्वोक्तविधिना संपूज्य सर्वौषधिभिर्घृतमधुगुग्गुलसहिताभिर्होमं कुर्यात् । सर्वेषु न-

क्षत्रहोमेषु कुण्डं चतुष्कोणं । समिधोऽश्वत्थन्यग्रोधप्लक्षार्कमय्यः प्रादेशप्रमाणाः । आहुतयः प्रत्येकं नक्षत्रं
क्षत्रहोमेषु कुण्डं चतुष्कोणं । समिधोऽश्वत्थन्यग्रोधप्लक्षार्कमय्यः प्रादेशप्रमाणाः । आहुतयः प्रत्येकं नक्षत्रं
प्रति अष्टाविंशतिहोमः । स्वस्वमूलमन्त्रैः संस्थापनं पीठोपरि तिलकमात्रेण प्रकृतिमय्या वा स्थापना ॥ १ ॥
भरणीशान्तिके यमं संस्थाप्य पूर्ववत्संपूज्य घृतगुग्गुलमधुमिश्रितेन विशेषेण होमः ॥ २ ॥ कृत्तिकाशान्तिके
अग्निं संस्थाप्य पूर्ववत्संपूज्य तिलयवघृतैर्होमः ॥ ३ ॥ रोहिणीशान्तिके ब्रह्माणं संस्थाप्य पूर्ववत्संपूज्य तिलय-
वघृतैः सदर्भैर्होमः ॥ ४ ॥ मृगशिरश्शान्तिके चन्द्रं संस्थाप्यपू० घृतयुताभिः सर्वौषधिभिर्होमः ॥ ५ ॥ आ-
र्द्राशान्तिके शम्भुं संस्थाप्य पू० घृततिलहोमः ॥ ६ ॥ पुनर्वसुशां० अदितिंसंपूज्य कुसुम्भलाक्षामदयन्ती-
मांमीप्रभृतिभिर्घृतयुतैर्होमः ॥ ७ ॥ पुष्यशां० जीवंसंपूज्य तिलयवघृतकुशैर्होमः ॥ ८ ॥ आश्लेषाशान्तौ
नागान्संपूज्य क्षीरघृताभ्यां होमः । आश्लेषाजातस्य शान्तिकं मूलविधानादवसेयम् ॥ ९ ॥ मघाशान्तिके
पितॄन्संपूज्य घृतमिश्रितैस्तिलपिण्डैर्होमः ॥ १० ॥ पूर्वाफाल्गुनीशान्तिके योनिं संपूज्य मधूकपुष्पैः सघृतै-
र्होमः ॥ ११ ॥ उत्तराफाल्गुनीशान्तौ सूर्यं संपूज्य घृतमधुयुतैः कमलैर्होमः ॥ १२ ॥ हस्तशान्तौ सूर्यं संपूज्य
घृतमधुयुतैः कमलैर्होमः ॥ १३ ॥ चित्राशान्तौ विश्वकर्माणं संपूज्य तिलमधुघृतैर्होमः ॥ १४ ॥ स्वातीशान्तौ
वायुं संपूज्य घृतफलैर्होमः ॥ १५ ॥ विशाखाशान्तौ इन्द्राग्नी संपूज्य घृतमधुपायसैः केवलघृतेन वा होमः
॥ १६ ॥ अनुराधाशान्तौ सूर्यं संपूज्य घृतमधुयुतैः कमलैर्होमः ॥ १७ ॥ ज्येष्ठाशान्तौ इन्द्रं संपूज्य घृतमधु-
पायसैर्होमः ॥ १८ ॥ ज्येष्ठाजातयोः कन्यापुत्रयोः गृहमध्यगतस्य ज्येष्ठस्य कुम्भस्य ताम्रचरोःस्थालस्य भाज-

नस्य विप्रादेर्दानं विधेयम्। तावत्पिता तस्य मुखं न पश्यति । तत्कर्मणोऽकरणे ज्येष्ठस्य पितामहस्य पितुः पितृव्यस्य महत्तरस्य विनाशो भवति ॥ १८ ॥ मूलशान्तौ निर्ऋतिं संपूज्य तिलसर्षपाऽऽसुरीकटुतैललवणघृतैर्होमः ॥ १९ ॥" ॥ तत्र ज्येष्ठामूलाश्लेषागण्डान्तव्यतीपातवैधृतिशूलविष्टिवज्रविष्कम्भपरिघाऽतिगण्डजातानां बालकानां मुहूर्तघटिकापादभवेलादिवारादिभवा दोषा ज्योतिश्शास्त्रादवसेयाः। शान्तिकं चात्रोच्यते ॥

अथ मूलाश्लेषाविधानम् ॥ "अभुक्तमूलसंभवं परित्यजेच्च बालकम्। समाष्टकं पिताथ वा न तन्मुखं विलोकयेत् ॥ १ ॥ तदाद्यपादके[1] पिता विपद्यते जनन्यथ । धनक्षयस्तृतीयके चतुर्थकः शुभावहः ॥ २ ॥ प्रतीपमन्त्यपादतः फलं तदेव सार्पभे । तदुक्तदोषशान्तये विधेयमत्र शान्तिकम् ॥ ३ ॥ शतौषधीमूलमृदम्बुरत्नसद्बीजगर्भैः कलशैः समन्त्रैः। कुर्याज्जनित्रीपितृबालकानां स्नानं शुभार्थं सह होमदानैः ॥ ४ ॥" पूर्वं विलिप्तभूमौ। "कर्पूरचन्दनामोदवासितैर्मन्त्रसंस्कृतैः । स्वस्तिकः स्वस्तिकृद्भूयादक्षतैरक्षतैः कृतः ॥ १ ॥" तदुपरि श्रीपर्णीपीठं संस्थाप्य तदुपरि ग्रहनवकं संस्थाप्य तेषां मध्ये पुरुषाकारमूललिखनं सुरभिद्रव्यैः। आश्लेषायां सर्पलिखनम्। तदुपरि ॐ ह्रीं अहये नमः इति लिखित्वा कलशः स्थाप्यते सुरभिद्रव्यमिश्रपानीयैः पूर्यते। अष्टोत्तरशतप्रमाणाभिः पुष्पशुष्कार्द्रफलमुद्रान्विताभिर्धूपदीपनैवेद्यैः कलशपूजनं तत्कलशस्याच्छादनाय

१ तथाद्यपादके इति पाठः।

हस्तद्वादशमात्रवस्त्रं तदग्रे पूर्वाभिमुखशिशुमातुरुपवेशाय हस्तदशमात्ररक्तवस्त्रं तदग्रे पूर्वाभिमुखः शिशु-
निमित्तं सुवर्णमयाङ्गुलीयकं नालिकेरद्वयं कलशमध्ये पूर्वं स्थापयेत् । शुष्कार्द्रफलैश्च पूरयेत् । एकं नारिकेलं
शान्तिकसमये कलशे निक्षिपेत् । ततः ॐ नमो भगवते अरिहउ सुविहिनाहस्स पुष्पदन्तस्स सिज्झ उमे
भगवई महाविज्जा पुप्फे सुपुप्फे पुप्फदन्ते पुप्फवइ ठठः स्वाहा । अनेन एकविंशतिवारं दर्भेण कलशस्य
जलमभिमन्त्र्य शतमूलचूर्णं निक्षिप्य बालं शिरस्यभिषिञ्चेत् कलशेन । अत्र कुम्भे नारिकेलं न्यसेत् । ततो-
ऽनन्तरं बालस्य मदनफलकङ्कयरिष्टयुतानि कङ्कणानि सर्वाङ्गेषु बध्नीयात् । ततो बालकरे रूप्यमुद्रादानं ।
कण्ठे स्वर्णमयी मूलपत्रिकापरिधापनं । अधिवासनाच्छादनं बिम्बवत् । ततो वस्त्रेणाच्छादितं बालं पितुः स-
मीपे संस्थापयेत् । ततो गुरुः लग्नवेलायां बालस्य कर्णे इति मन्त्रं त्रिः पठेत् । यथा—"जं मूलं सुविहिजम्मेण
जायं विग्घविणासणं । तं जिणस्स पइट्ठाए बालस्स सुशिवंकरं ॥ १ ॥" ततोऽनन्तरं बालस्य कपोले चपेटा-
त्रयं देयं । ततो रुदन्तं बालकं वामहस्तेन पितुरर्पयेत् पश्चान्महामहोत्सवेन वासगृहं यान्ति । बालस्य कण्ठे
मूले मूलवृक्षाङ्कितं आश्लेषायां सर्पाङ्कितं स्वर्णमयं रूप्यमयं वा पत्रकं परिधापयेत् । इति मूलाश्लेषाविधा-
नम् ॥ गुरवे स्वर्णमुद्रिकादानं । बालकस्य मण्डिपरिधापनं । कन्याया वस्त्रत्रयस्य परिधापनं । केचिच्च मूलपा-
दचतुष्के भिन्नं स्नात्रं बालस्याहुः । "दिग्बन्धकरणपूर्वं प्रक्षिप्य बलिं विधाय रक्षां च । अङ्गेषु शिशुजनन्यो-
र्विधिवन्मन्त्राक्षराण्यस्येत् ॥ १ ॥ लक्षाक्षतप्रमाणं प्रथमं स्नानं समन्त्रमिह विहितम् । मूलाद्यपाददोषान् हरतु

पितुर्वितनुताद्भद्रम् ॥ २ ॥ युगन्धर्यां ततः स्नानं तथैव विहितं हितम् । दोषान्द्वितीयपादस्य जनन्या हरति क्षणात् ॥ ३ ॥ तृतीयं सर्षपस्नानं दोषतानवहेतवे । भूयात्तृतीयपादस्य धनवृद्धिनिबन्धनम् ॥ ४ ॥ सप्तधान्यमयं स्नानं चतुर्थं मन्त्रपूर्वकम् । सर्वदोषापहं भूयात्सर्वसंपत्तये पितुः ॥ ५ ॥ अष्टादशार्हत्प्रतिमा विधेया स्नानोदकान्येकतमे च कुम्भे । विधाय कुर्यादभिषेकमेके कृतस्य बालस्य शुभाभिवृद्ध्यै ॥ ६ ॥ दर्शयेत्तदनु दर्पणं शिशोरर्घपात्रमपि दर्शयेत्तथा । पद्ममुद्गरगरुत्मदादिका मुद्रिकाः प्रकटयेत्ततो गुरुः ॥ ७ ॥ बीजपूरकनारिङ्गबदरप्रमुखैः फलैः । पूरिताङ्कमथो बालं वाससाच्छादयेद्गुरुः ॥ ८ ॥ लग्नसमयेऽथ बालकमुत्थाप्य विलोक्य दधि मुखमस्य । तदनु च घृतपात्रेऽसौ साक्षात्सर्वोप्यवेक्षेत ॥ ९ ॥ नश्यन्ति दुरिततत्तयः स्फूर्जन्ति समं ततोऽपि कुशलानि । मूलविधाने विहिते सिद्ध्यन्ति मनोरथाः सर्वे ॥ १० ॥ आश्लेषामूलजातानां शिशूनां न पिता मुखम् । पश्येद्यावन्न द्वितीयागमे शान्तिकमाचरेत् ॥ ११ ॥ गण्डान्तव्यतिपातभद्रादिषु समयजातेषु । बालेषु सूतकान्ते शान्तिकमेवं विधातव्यम् ॥ १२ ॥ तिथिवारेन्दुलग्नादि न पश्येद्धिष्ण्य आगते । तच्छान्तिकं प्रकुर्वीत विष्ट्यादिसूतकान्ततः ॥ १३ ॥ त्रिज्येष्ठे च त्रिवेण्यां च कन्याद्वयसमुद्भवे । जाते हीनाधिकाङ्गे च मूलस्नानं प्रशस्यते ॥ १४ ॥ तथा अथवा श्रीपुष्पदन्तमन्त्रस्नानानन्तरं बालस्य कङ्कणबन्धादर्वाक् विध्यन्तरमामनन्ति । यथापूर्वं दिग्बन्धनं । यथा पूर्वादिशि ॐ इन्द्राय नमः इन्द्राण्यै नमः । ॐ अग्नये नमः

१ घृतभृतपात्रे साक्षात्सर्वोप्यवीक्षेत इति पाठः ।

आग्नेय्यै नमः । ॐ यमाय नमः याम्यै नमः । ॐ निर्ऋतये नमः नैर्ऋत्यै नमः । ॐ वरुणाय नमः वारुण्यै नमः । ॐ वायवे नमः वायव्यै नमः । ॐ कुबेराय नमः कौबेर्यै नमः । ॐ ईशानाय नमः ईशान्यै नमः । ॐ नागेभ्यो नमः नागाण्यै नमः । ॐ ब्रह्मणे नमः ब्रह्माण्यै नमः । ॐ इन्द्राग्नियमनिर्ऋतिवरुणवायुकुबेरेशाननागब्रह्मणो दिगधीशाः स्वस्वशक्तियुताः सायुधबलवाहनाः स्वस्वदिक्षु सर्वदुष्टक्षयं सर्वविघ्नोपशान्तिं कुर्वन्तु २ स्वाहा इति पुष्पाक्षतक्षेपैर्दिग्बन्धनं नैवेद्यक्षेपश्च । ततः मातृशिश्वोः अङ्गेषु मन्त्रन्यासश्च यथा—ॐ मस्तके श्रीं ललाटे अं भ्रुवोः ह्रां नेत्रयोः ह्रीं नासायां ऐं कर्णयोः ह्रीं कण्ठे ह्रीं हृदि ह्रूं बाह्वोः ख्रां उदरे क्ली नाभौ हः लिङ्गे ह्रां जङ्घयोः यः पादयोः क्लूं सर्वसंधिषु । ततोऽनन्तरं पूर्वोक्तश्लोकपाठपूर्वं मूलचतुःपादकथितवस्तु कोरान्नमयं स्नात्रं क्रमेण ४ । तदनन्तरं पूर्वोक्तशतमूल्याद्यौषधस्नात्रं क्रमेण । ततः पूर्वोक्तजिनस्नात्रोदकेन स्नात्रम् । ततस्तीर्थोदकशुद्धजलस्नात्रम् । तदनन्तरं दर्पणदर्शनं अर्घपात्रदर्शनं शिशोः कारयेत् । पद्ममुद्गरगरुडकामधेनुपरमेष्ठिरूपाः पञ्च मुद्राश्च बालकशिरसि कुर्यात् । ततो बीजपूरादिफलसहितं बालं वाससाच्छादितं नयेत् । तदनन्तरं लग्नवेलायां मुखमुद्घाट्य दधिपात्रे घृतपात्रे पिता बालमुखं दृष्ट्वा पश्चात्साक्षादवलोकयेत् । अयं च विधिः पूर्वशान्तिकमध्ये पृथग्वा कार्यः । इति मूलविधानम् ॥

पूर्वाषाढादिशान्तिकानि ॥ पूर्वाषाढाशान्तिके वरुणं संस्थाप्य पूर्ववत्संपूज्य घृतमधुगुग्गुलकमलैर्होमः

1 ईदृशाः प्रयोगा रूढाः ।

॥ २० ॥ उत्तराषाढाशान्तिके विश्वेदेवान्संपूज्य मधुसर्वान्नसर्वफलैर्होमः ॥ २१ ॥ अभिजित्शान्तौ ब्रह्माणं सं० घृततिलयवदर्भैर्होमः ॥ २२ ॥ श्रवणशान्तौ विष्णुंसं० सर्वत्र घृतयुतवस्तुहोमः ॥ २३ ॥ धनिष्ठाशान्तौ वसून्संपूज्य घृतमधुमुक्ताफलहोमः ॥ २४ ॥ शतभिषक्शान्तौ वरुणं सं० घृतमधुफलकमलहोमः ॥ २५ ॥ पूर्वाभाद्रपदाशान्तौ अजपादं सं० घृतमधुभ्यां होमः ॥ २६ ॥ उत्तराभाद्रपदाशान्तौ अहिर्बुध्न्यं सं० घृतमधुहोमः ॥ २७ ॥ रेवतीशान्तौ सूर्यं सं० घृतमधुयुतैः कमलैर्होमः ॥ २८ ॥ ॐ नमो अश्विन्यादिरेवतीपर्यन्तनक्षत्रेभ्यः सर्वनक्षत्राणि सायुधानि सवाहनानि सपरिच्छदानि इह नक्षत्रशान्तिके आगच्छन्तु २ इदमर्घ्यं आचमनीयं गृह्णन्तु २ सन्निहितानि भवन्तु स्वाहा २ जलं गृह्णन्तु २ गन्धं अक्षतान् फलानि मुद्रां पुष्पं धूपं दीपं नैवेद्यं सर्वोपचारान्० शान्तिं कुर्वन्तु २ तुष्टिं पुष्टिं ऋद्धिं वृद्धिं सर्वसमीहितानि यच्छन्तु २ स्वाहा । इति नक्षत्राणां संकुलपूजा । नक्षत्रपीठोपरि अष्टाविंशतिहस्तप्रमाणसदशाव्यङ्गवस्त्राच्छादनं कुर्यात् । शान्तिके क्रियमाणे यस्य नक्षत्रस्य शान्तिकं विधीयते तस्यैव अनया रीत्या होमः । शेषाणां होमः पूजा च पूर्ववत् । केचिच्च भिन्नमपि नक्षत्रशान्तिकर्माचक्षते ॥

अथ लोकाचारेण स्नानादिना नक्षत्रशान्तिकं लिख्यते ॥ मदयन्तिकाश्च गन्धा मदनफलवचामधूनि शस्यन्ते । प्रथमर्क्षे भरणीषु च सिद्धार्थकभद्रदारुवचाः ॥ १ ॥ न्यग्रोधशिरीषाश्वत्थपत्रगन्धाश्च कृत्तिकास्नाने । बहुबीजशस्ततोयैर्जयार्थिनो रोहिणीस्नानम् ॥ २ ॥ मुक्ताकाञ्चनमपि संप्रयुज्य तेनाम्भसा मृगाङ्कर्क्षे । रौद्रे

वचाश्वगन्धाप्रियङ्गुमिश्रैर्जलैः कथितम् ॥ ३ ॥ आदित्ये गोमयगोष्ठमृद्भिरथ गौरशालिभिः पुष्यैः । सिद्धार्थ-
द्विसहस्राप्रियङ्गुमदयन्तिकाभिश्च ॥४॥ वल्मीकशतान्मृद्भिः सार्पे पित्र्ये च देवनिर्माल्यैः । पूर्वासु फाल्गुनीषु च
सलवणघृतशाल्मलैः प्रोक्तम् ॥ ५ ॥ शतपुष्पया प्रियङ्ग्वा मुस्ताभिश्चोत्तरासु कुर्वीत । हस्ते सरोगिरिमृदा
चित्रायां देवनिर्माल्यैः ॥ ६ ॥ स्वातौ जलरुहकुसुमैरैन्द्रर्क्षे मत्स्यचम्पकक्षौद्रैः । मैत्रे सरिदुभयमृदा हरिताल-
मृदा च माहेन्द्रे ॥ ७ ॥ भद्रासने शमीमयपत्रसहस्रद्वयाम्बुभिर्मूले । समधूकपद्ममत्स्यैः स्नानमथो वापि पू-
र्वासु ॥ ८ ॥ कुर्यादुशीरचन्दनपद्मकमिश्रेण वारिणा वैश्वे । नद्युभयकूलसंगतमृत्कनकैः कीर्तितं श्रवणे ॥ ९ ॥
घृतभद्रदारुमधुभिश्च वासवे वारुणे घृतक्षौद्रैः । समदनफलसहदेवीवृश्चिकमदयन्तिकामिश्रैः ॥ १० ॥ श्रीवा-
सकप्रियङ्गुश्चाजे स्यादुत्तराश्च गुरुगन्धाः । शस्ताः समपद्मोशीरचन्दनैर्मानवेन्द्राणाम् ॥ ११ ॥ रेवत्यां वृषभ-
द्विपविषाणकोशैः ससर्पिर्मधुपूर्णैः । गोरोचनाञ्जनयुतैः सलिलैश्च यियासतां स्नानम् ॥ १२ ॥ गिरिवल्मीकन-
दीमुखकूलद्वयशक्रपादमृद्भिरतः । द्विपवृषविषाणपार्थिवगणिकाद्वाराहृताभिश्च ॥ १३ ॥ गिरिशिखराद्धूर्वाणां
वल्मीकमृदा च शोधयेत्कर्णौ । नद्युभयकूलसञ्ज्ञान्मृद्भिरथ क्षालयेत्पार्श्वौ ॥ १४ ॥ इन्द्रस्थानाद्ग्रीवां बाहू
करिवृषभयोर्विषाणाग्रात् । हृदयं च नृपद्वारात्करमपि वेश्यागृहद्वारात् ॥ १५ ॥ अक्षतमाषाः खिन्नास्तिलस-

१ सहदेवाम्बुश्रूकमदयन्तिकामिश्रैरिति पाठः । २ मन्ये छन्दोभङ्गभीतेन रेफस्यैच्छिकः कृतो लोपः । तथाच छन्दोविदां समयः । माषमेव मषं
कुर्याच्छन्दोभङ्गं न कारयेत् ।

हितास्तन्दुला दधि च गव्यम् । वृषभपिशितं मृगस्य च पञ्चानामाश्विनादीनाम् ॥ १६ ॥ रुधिरविलयनपाय-
सभुजङ्गमांसानि शर्करादीनाम् । पित्र्ये तिलौदनं षष्टिकान्नमृक्षद्वये परितः ॥ १७ ॥ प्राश्य प्रियङ्गुचित्राण्ड-
जाफलं यावकं कुलत्थांश्च । मधुसर्पिषी च हस्तान्मूलान्नकसर्पिषी मूलात् ॥ १८ ॥ श्रवणादीनामद्याच्छाकं
शालिं बिडालमांसं च । आजं यथेष्टमांसं च शक्तवो माषसंयुक्ताः ॥ १९ ॥ प्राच्यादिघृतं तिलोदनं
मत्स्याः क्षीरमिति प्रदक्षिणम् । अद्यान्नृपतिर्यथादिशं नक्षत्राभिहितं च सिद्धये ॥ २० ॥ अस्वादु च्युतकचम-
क्षिकानुविद्धं दुर्गन्धि क्षयदमभूरि यच्च यद्वत् । सुस्निग्धं मृदु रुचिरं मनोनुकूलं स्वाद्वन्नं बहु च जयाय यान-
काले ॥ २१ ॥ जन्मर्क्षमाद्यं दशमं च कर्म संघातिकं षोडशमृक्षमाद्यात् । अष्टादशं स्यात्समुदायसंज्ञं वैना-
शिकं विंशतितस्तृतीयम् ॥ २२ ॥ यत्पञ्चविंशं खलु मानसात्तत्प्रत्यक्ष एवं पुरुषस्तु सर्वः । राज्ञो नवर्क्षाणि
वदन्ति जातिदेवाभिषेकैः सहितानि तानि ॥ २३ ॥ राज्ञोऽभिषेकर्क्षमुशन्त्यमिश्रं साधारणे द्वे सह षड्भि-
राद्यैः । किंचात्र दोषाश्च गुणाश्च सर्वे प्रधानमेकं पुरुषं भजन्ते ॥ २४ ॥ कूर्मोपदिष्टानि हि देशभानि राज्या-
भिषेकेऽहनि वाभिषेकम् । या जातयो भस्य भवन्त्यतस्ता वक्ष्यामि दैवज्ञनिराकुलार्थम् ॥ २५ ॥ पूर्वात्रयं सा-
नलमग्रजानां राज्ञां तु पुष्येण सहोत्तराणि । सपौष्णमैत्रं पितृदैवतं च प्रजापतेर्भं च कृषीवलानाम् ॥ २६ ॥
आदित्यहस्ताभिजिदाश्विनानि वणिग्जनानां प्रभवन्ति भानि । मूलत्रिनेत्रानिलवारुणानि भान्युग्रजातेः
प्रभविष्णुतायाः ॥ २७ ॥ सौम्येन्द्रचित्रावसुदैवतानि सेवागतस्वाम्यमुपागतानि । सार्पं विशाखा श्रवणो

भरण्या चण्डालजातेरपि निर्दिशन्ति ॥ २८ ॥ रविरविसुतभोगमागतं क्षितिसुतभेन च वक्रदूषितम्। ग्रहणगतमथोल्कया हतं नियतमुखाकरपीडितं च यत् ॥ २९ ॥ तदुपहतमिति प्रचक्षते प्रकृतिविपर्ययमेव वा। निगदितमरिवर्गदूषणं कथितविपर्ययगं समृद्धये ॥ ३० ॥ रोगाभ्यागमवित्तनाशकलहासंपीडिते जन्मभे सिद्धिं कर्म न याति कर्मणि हते भेदस्तु सांघातिके। द्रव्यस्योपचितस्य सामुदयिके संपीडिते संक्षयो वैनाशे तु भवन्ति कायविपदश्चिन्ता सुखं मानसे ॥ ३१ ॥ निरुपद्रुतभे निरामयः सुखवान्नष्टरिपुर्धनान्वितः। षडुपद्रुतभे विनश्यति त्रिभिरन्यैश्च सहावनीश्वरैः ॥ ३२ ॥ न भवति शरीरपीडा यस्य विना शान्तिभिर्न पीडायाः। तस्य शरीरचियुक्तिं पक्षान्ते देवलः प्राह ॥ ३३ ॥ सर्वेषां पीडायां दिनमेकमुपोषितोऽनले जुहुयात्। सावित्र्या क्षीरतरोः समिद्भिरमरद्विजातपुरतः ॥ ३४ ॥ गोक्षीरसितवृषशकृन्मूत्रैः पत्रैश्च पूर्णकोशायाः। स्नात्रं जन्मनि दृष्टे स्वाचारवतां हरति पापम् ॥ ३५ ॥ कर्मणि मधुघृतहोमो दशाहमक्षारमद्यमांसादः। दूर्वाप्रियङ्गुसर्षपशतावरीस्नानमाधेयम् ॥ ३६ ॥ संघातिके तु तत्से मांसमधुक्षौर्यमन्मथांस्त्यक्त्वा। दान्तो दूर्वां जुहुयाद्दानं दद्याद्यथाशक्ति ॥ ३७ ॥ समुदायिके तु दद्यात्काञ्चनरजताद्युपद्रुते धिष्ण्ये। वैनाशिकेऽन्नपानं वसुधां च गुणान्विते दद्यात् ॥ ३८ ॥ मानसतापे होमः सरोरुहैः पायसैर्द्विजाः पूज्याः। गजमदशिरीषचन्दनतिलातिवलवारिणा स्नानम् ॥ ३९ ॥ इति लोकयात्रानुसारेण नक्षत्रशान्तिकम् ॥

अथ ग्रहशान्तिकम् ॥ तत्र पूर्वं ग्रहस्थापनम्। शुद्धभूमौ गोमयानुलिप्तायां श्रीखण्डश्रीपर्णीपीठे चन्दना-

नुलिप्ते स्वस्ववर्णैर्ग्रहान्स्थापयेत् विधिपूजितायास्तीर्थंकरप्रतिमायाः पुरः । तेषां स्थापनकृतिर्यथा—"मध्ये तु भास्करं विद्याच्छशिनं पूर्वदक्षिणे । दक्षिणे लोहितं विद्याद्बुधः पूर्वोत्तरेण तु ॥ १ ॥ उत्तरेण गुरुं विद्यात्पूर्वेणैव तु भार्गवम् । पश्चिमेन शनिं विद्याद्राहुं दक्षिणपश्चिमे ॥ २ ॥ पश्चिमोत्तरतः केतुः स्थाप्यश्च किल तन्दुलैः । मार्तण्डे मण्डलं वृत्तं चतुरस्रं निशाकरे ॥ ३ ॥ महीपुत्रे त्रिकोणं स्याद्बुधे वै बाणसन्निभम् । गुरौ तु पट्टिकाकारं पञ्चकोणं तु भार्गवे ॥ ४ ॥ धनुराकृतिर्मन्दे तु शूर्पाकारं तु राहवे । केतवे तु ध्वजाकारं मण्डलानि नवैव तु ॥५॥ शुक्रार्कौ प्राङ्मुखौ ज्ञेयौ गुरुसौम्यावुदङ्मुखौ। प्रत्यङ्मुखः शनिः सोमः शेषाश्च दक्षिणामुखाः ॥६॥" इति ग्रहाणां मण्डलस्थापनविधिः प्रतिष्ठाष्टाह्निकादिषु स्थापनीयः। श्रेयः स्यात्। तत एवं संस्थाप्य पुष्पाञ्जलिं गृहीत्वा—"जगद्गुरुं नमस्कृत्य श्रुत्वा सद्गुरुभाषितम् । ग्रहशान्तिं प्रवक्ष्यामि लोकानां सुखहेतवे ॥ १ ॥ जिनेन्द्रैः खेचरा ज्ञेयाः पूजनीया विधिक्रमात्। पुष्पैर्विलेपनैर्धूपैर्नैवेद्यैस्तुष्टिहेतवे ॥ २ ॥ पद्मप्रभस्य मार्तण्डश्चन्द्रश्चन्द्रप्रभस्य च। वासुपूज्यो भूमिपुत्रो बुधोऽप्यष्टजिनेश्वराः[1] ॥ ३ ॥ विमलानन्तधर्माराः शान्तिः कुन्थुर्नमिस्तथा। वर्धमानो जिनेन्द्राणां पादपद्मे बुधं न्यसेत् ॥ ४ ॥ ऋषभाजितसुपार्श्वा अभिनन्दनशीतलौ। सुमतिः संभवः स्वामी श्रेयांसश्च बृहस्पतिः ॥ ५ ॥ सुविधिः कथितः शुक्रः सुव्रतश्च शनैश्चरः । नेमिनाथो भवेद्राहुः केतुः श्रीमल्लिपार्श्वयोः ॥ ६ ॥ जन्मलग्ने च राशौ च पीडयन्ति यदा ग्रहाः। तदा संपूजयेद्धीमान्खेचरैः सहि-

१ प्यष्टजिनेषु च इति पाठः ।

तान् जिनान् ॥ ७ ॥ गन्धपुष्पादिभिर्धूपैर्नैवेद्यैः फलसंयुतैः । वर्णसदृशदानैश्च वासोभिर्दक्षिणान्वितैः ॥ ८ ॥
आदित्यसोममङ्गलबुधगुरुशुक्राः शनैश्चरो राहुः । केतुप्रमुखाः खेटा जिनपतिपुरतोऽवतिष्ठन्तु ॥ ९ ॥ जिना-
नामग्रतः स्थित्वा ग्रहाणां तुष्टिहेतवे । नमस्कारस्तवं भक्त्या जपेदष्टोत्तरं शतम् ॥ १० ॥ भद्रबाहुरुवाचेदं
पञ्चमः श्रुतकेवली । विद्याप्रवादतः पूर्वं ग्रहशान्तिविधिस्तवः ॥ ११ ॥" इति भणित्वा पञ्चवर्णपुष्पाञ्जलिं क्षि-
पेत् । ततः सूर्यपूजने—ॐ घृणि २ नमः श्रीसूर्याय सहस्रकिरणाय रत्नादेवीकान्ताय वेदगर्भाय यमयमुनाजन-
काय जगत्कर्मसाक्षिणे पुण्यकर्मप्रभावकाय पूर्वदिगधीशाय स्फटिकोज्ज्वलाय रक्तवस्त्राय कमलहस्ताय ससा-
श्वरथवाहनाय श्रीसूर्यः सायुधः सवाहनः सपरिच्छदः इह ग्रहशान्तिके आगच्छ २ इदमर्घ्यं पाद्यं बलिं चरुं
आचमनीयं गृहाण २ सन्निहितो भव २ स्वाहा जलं गृहाण २ गन्धं पुष्पं अक्षतान् फलानि मुद्रां धूपं दीपं
नैवेद्यं० सर्वोपचारान् शान्तिं कुरु तुष्टिं पुष्टिं ऋद्धिं वृद्धिं सर्वसमीहितं देहि २ स्वाहा ॥ "अदितेः कुक्षिसं-
भूतो भ(ध)रण्यां विश्वपावनः । काश्यपस्य कुलोत्तंसः कलिङ्गविषयोद्भवः ॥ १ ॥ रक्तवर्णः पद्मपाणिर्म-
र्मूर्तिस्त्रयीमयः । रत्नादेवीजीवितेशः ससाश्वोऽरुणसारथिः ॥ २ ॥ एकचक्ररथारूढः सहस्रांशुस्तमोपहः ।
ग्रहनाथ ऊर्ध्वमुखः सिंहराशौ कृतस्थितिः ॥ ३ ॥ लोकपालोऽनन्तमूर्तिः कर्मसाक्षी सनातनः । संस्तुतो
बालखिल्यैश्च विघ्नहर्ता दरिद्रहा ॥ ४ ॥ तत्सुता यमुना चापी भद्रायमशनैश्चराः । अश्विनीकुमारौ पुत्रौ नि-

१ दीपैः फलनैवेद्यसंयुतैरिति पाठः ।

शाहा दैत्यसूदनः ॥ ५ ॥ पुन्नागकुङ्कुमैर्लेपै रक्तपुष्पैश्च धूपनैः । द्राक्षाफलैर्गुडान्नेन प्रीणितो दुरितापहः ॥ ६ ॥ पद्मप्रभजिनेन्द्रस्य नामोच्चारेण भास्करः । शान्तिं तुष्टिं च पुष्टिं च रक्षां कुरुकुरु ( ध्रुवं ) द्रुतम् ॥ ७ ॥ सूर्यो द्वादशरूपेण माठरादिभिरावृतः । अशुभोऽपि शुभस्तेषां सर्वदा भास्करो ग्रहः ॥ ८ ॥ इति सूर्यपूजा ॥ ॥

चन्द्रपूजने—ॐ पंचंचं नमश्चन्द्राय शम्भुशेखराय षोडशकलापरिपूर्णाय तारागणाधीशाय आग्नेयदिगधीशाय अमृतमयाय सर्वजगत्पोषणाय श्वेतशरीराय श्वेतवस्त्राय श्वेतदशवाजिवाहनाय सुधाकुम्भहस्ताय श्रीचन्द्रः सा० शेषं पूर्ववत् ॥ "अत्रिनेत्रसमुद्भूतः क्षीरसागरसंभवः । जातो यवनदेशे च चित्रायां समदृष्टिकः ॥ १ ॥ श्वेतवर्णः सदाशीतो रोहिणीप्राणवल्लभः । नक्षत्र ओषधीनाथस्तिथिवृद्धिक्षयंकरः ॥ २ ॥ मृगाङ्कोऽमृतकिरणः शान्तो वासुकिरूपभृत् । शम्भुशीर्षकृतावासो जनको बुधरेवयोः ॥ ३ ॥ अर्चितश्चन्दनैः श्वेतैः पुष्पैर्धूपवरेक्षुभिः । नैवेद्यपरमान्नेन प्रीतोऽमृतकलामयः ॥ ४ ॥ चन्द्रप्रभजिनाधीशनाम्ना त्वं भगणाधिपः । प्रसन्नो भव शान्तिं च कुरु रक्षां जयश्रियम् ॥ ५ ॥" इति चन्द्रपूजा ॥ २ ॥

भौमपूजने—ॐ ह्रीं हूं हं सः नमः श्रीमङ्गलाय दक्षिणदिगधीशाय विद्रुमवर्णाय रक्ताम्बराय भूमिस्थिताय कुद्दालहस्ताय श्रीमङ्गलाय सा० । शेषं० ॥ "भौमो हि मालवे जात आषाढायां धरासुतः । रक्तवर्ण ऊर्द्ध्वदृष्टिर्नवार्चिस्साक्षको बली ॥ १ ॥ प्रीतः कुङ्कुमलेपेन विद्रुमैश्च विभूषणैः । पूगैर्नैवेद्यकासारै रक्तपुष्पैः सुपूजितः ॥ २ ॥ सर्वदा वासुपूज्यस्य नाम्नासौ शान्तिकारकः ॥ रक्षां कुरु धरापुत्र अशुभोपि शुभो भव ॥ ३ ॥" इति भौमपूजा ॥ ३ ॥ बुधपूजने—

ॐ ऐं नमः श्रीबुधाय उत्तरदिगधीशाय हरितवर्णाय हरितवस्त्राय कलहंसवाहनाय पुस्तकहस्ताय श्रीबुध सा०
शेषं॥ "मगधेषु धनिष्ठायां पञ्चार्चिः पीतवर्णभृत्। कटाक्षदृष्टिकः श्यामः सोमजो रोहिणीभवः ॥१॥ कर्कोटरूपो
रूपाढ्यो धूपपुष्पानुलेपनैः। दुग्धान्नैर्वरनारङ्गैस्तर्पितः सोमनन्दनः ॥ २ ॥ विमलानन्तधर्माराशान्तिकुन्थुनमि-
स्तथा। महावीरादिनामस्थः शुभो भूयात्सदा बुधः ॥ ३ ॥" इति बुधपूजा ॥ ४ ॥ ॥ बृहस्पतिपूजने—ॐ
जीव २ नमः श्रीगुरवे बृहतीपतये ईशानदिगधीशाय सर्वदेवाचार्याय सर्वग्रहबलवत्तराय काञ्चनवर्णाय पीत-
वस्त्राय पुस्तकहस्ताय हंसवाहनाय श्रीगुरो सा० शेषं० ॥ "बृहस्पतिः पीतवर्ण इन्द्रमन्त्री महामतिः । द्वाद-
शार्चिर्देवगुरुः पद्मश्च समदृष्टिकः ॥ १ ॥ उत्तराफल्गुनीजातः सिन्धुदेशसमुद्भवः । दधिभाजनजम्बीरैः पीत-
पुष्पैर्विलेपनैः ॥ २ ॥ ऋषभाजितसुपार्श्वा अभिनंदनशीतलौ । सुमतिः संभवः स्वामी श्रेयांसो जिननायकः
॥ ३ ॥ एतत्तीर्थकृतां नाम्ना पूजया च शुभो भव । शान्तिं तुष्टिं च पुष्टिं च कुरु देवगणार्चितः ॥ ४ ॥" इति
गुरुपूजा ॥ ५ ॥ ॥ शुक्रपूजने—ॐ सुं नमः श्रीशुक्राय दैत्याचार्याय आग्नेयदिगधीशाय स्फटिकोज्ज्वलाय
श्वेतवस्त्राय कुम्भहस्ताय तुरगवाहनाय श्रीशुक्र सा० शेषं० ॥ "शुक्रः श्वेतो महापद्मः षोडशार्चिः कटाक्ष-
दृक्। महाराष्ट्रेषु ज्येष्ठायामथाभूद्भृगुनन्दनः ॥ १ ॥ दानवाचार्यो दैत्यगुरुर्विद्यासंजीविनीविधिः[1] । सुगन्धच-
न्दनालेपैः सितपुष्पैः सुपूजितः ॥ २ ॥ घृतनैवेद्यजम्बीरैस्तर्पितो भार्गवो ग्रहः । नाम्ना सुविधिनाथस्य दृष्टोऽ-

1 निधिः इति पाठ. ।

रिष्टनिवारकः ॥ ३ ॥” इति शुक्रपूजा ॥ ६ ॥ ॥ शनिपूजने—ॐ शः नमः शनैश्चराय पश्चिमदिगधीशाय नीलदेहाय नीलाम्बराय परशुहस्ताय कमठवाहनाय श्रीशनैश्चर सा० शेषं० ॥ “शनैश्चरः कृष्णवर्णश्छायाजो रेवतीभवः । नीलवर्णः सुराष्ट्रायां शङ्खः पिङ्गलकेशकः ॥ १ ॥ रविपुत्रो मन्दगतिः पिप्पलादनमस्कृतः । रौद्रमूर्तिरधोदृष्टिः स्तुतो दशरथेन च ॥ २ ॥ नीलपत्रिकया प्रीतस्तैलेन कृतलेपनः । उत्पित्तकाचकासारतिलदानेन तर्पितः ॥ ३ ॥ मुनिसुव्रतनाथस्य आख्यया पूजितः सदा । अशुभोऽपि शुभाय स्यात्ससार्चिः सर्वकामदः ॥ ४ ॥” इति शनिपूजा ॥ ७ ॥ ॥ राहुपूजने—ॐ क्षः नमः श्रीराहवे नैर्ऋतिदिगधीशाय कज्जलश्यामलाय श्यामलवस्त्राय परशुहस्ताय सिंहवाहनाय श्रीराहो सा० शेषं० ॥ “शिरोमात्रः कृष्णकान्तिर्ग्रहमल्लस्तमोमयः । पुलकश्च अधोदृष्टिर्भरण्यां सिंहिकासुतः ॥ १ ॥ संजातो बर्बरकूले सधूपैः कृष्णलेपनैः । नीलपुष्पैर्नारिकेलैस्तिलमाषैश्च तर्पितः ॥ २ ॥ राहुः श्रीनेमिनाथस्य पादपद्मेऽतिभक्तिभाक् । पूजितो ग्रहकल्लोलः सर्वकाले सुखावहः ॥ ३ ॥” इति राहुपूजा ॥ ८ ॥ ॥ केतुपूजने—ॐ नमः श्रीकेतवे राहुप्रतिच्छदाय श्यामाङ्गाय श्यामवस्त्राय पन्नगवाहनाय पन्नगहस्ताय श्रीकेतो सा० शेषं० ॥ “पुलिन्दविषये जातोऽनेकवर्णोऽहिरूपभृत् । आश्लेषायां सदा क्रूरः शिखिभौमतनुः फणी ॥ १ ॥ पुण्डरीककबन्धश्च कपालतोरणः खलः । कीलकस्तामसो धूमो नानानामोपलक्षितः ॥ २ ॥ मल्लेः श्रीपार्श्वनाथस्य नामधेयेन राक्ष्यसौ । दाडिमैश्च विचित्रान्नैस्तर्प्यते चित्रपूजया ॥ ३ ॥ राहोः सप्तमराशिस्थः कारणे दृश्यतेऽम्बरे । अशुभोऽपि शुभो नित्यं केतुर्लोके

महाग्रहः ॥ ४ ॥ इति केतुपूजा ॥ ९ ॥ ॥ ततो नवग्रहपीठोपरि सदशाव्यङ्गनव्यवस्त्रं नवहस्तप्रमाणं दद्यात् ॥
“जिननामकृतोच्चारा देशनक्षत्रवर्णकैः । स्तुताश्च पूजिता भक्त्या ग्रहाः सन्तु सुखावहाः ॥ १ ॥ जिननामा-
ग्रतः स्थित्वा ग्रहाणां सुखहेतवे । नमस्कारशतं भक्त्या जपेदष्टोत्तरं नरः ॥ २ ॥ एवं यथानामकृताभिषेका
आलेपनैर्धूपनपूजनैश्च । फलैश्च नैवेद्यवरैर्जिनानां नाम्ना ग्रहेन्द्राः शुभदा भवन्तु ॥ ३ ॥ साधुभ्यो दीयते दानं
महोत्साहो जिनालये । चतुर्विधस्य संघस्य बहुमानेन पूजनम् ॥ ४ ॥ भद्रबाहुरुवाचेदं पञ्चमः श्रुतकेवली ।
विद्याप्रवादतः पूर्वाद्ग्रहशान्तिविधिं शुभम् ॥ ५ ॥” ग्रहाणां सर्वेषां मध्योक्तपुष्पफलनैवेद्यैः पूजनम् । अन्यच्च
सूर्यादीनां ग्रहाणां क्रमेण पुष्पाणि पूजार्थं—रक्तकरवीर १ कुमुद २ जासूल ३ चम्पक ४ शतपत्री ५ जाती
६ बकुल ७ कुन्द ८ पञ्चवर्णपत्री ९ ॥ फलानि क्रमेण—द्राक्षा १ पूग २ नारिङ्ग ३ जम्बीर ४ बीजपूर ५ खर्जूर
६ नालिकेर ७ दाडिम ८ खारीक ९ अक्षोड १० ॥ क्रमेण नैवेद्यानि—गुडौदन १ क्षीर २ कसार ३ घृतपूर ४
दधिकरम्ब ५ भक्तघृत ६ किशर ७ माष ८ सावरथउ ९ ॥ ततः सूर्यशान्तिके—घृतमधुकमलहोमः । सर्वेषां
मूलमन्त्रेण अष्टोत्तरशताहुतिप्रमाणः । समिधः सर्वत्र पिप्पलन्यग्रोधप्लक्षमय्यः । तन्दुलश्वेतवस्त्रतुरगदानं ॥१॥
चन्द्रशान्तिके—घृतसर्वौषधिहोमः तन्दुलमुक्ताफलश्वेतवस्त्रदानम् ॥ २ ॥ मङ्गलशान्तिके—घृतमधुसर्वधातु-
होमः रक्ताम्बररक्ततुरगदानं ॥ ३ ॥ बुधशान्तिके—घृतमधुप्रियङ्गुहोमः मरकतधेनुदानं ॥ ४ ॥ गुरुशान्तिके
—घृतमधुयवतिलहोमः स्वर्णपीतवस्त्रदानं ॥ ५ ॥ शुक्रशान्तिके—पञ्चगव्यहोमः श्वेतरत्नधेनुदानं ॥ ६ ॥ श-

निशान्तिके—तिलघृतहोमः कृष्णगोवृषभनीलमणिदानं ॥ ७ ॥ राहुशान्तिके—तिलघृतहोमः छागशस्त्रादिदानं ॥ ८ ॥ केतुशान्तौ तिलघृतहोमः ऊर्णालोहदानं ॥ ९ ॥ होमे कुण्डं त्रिकोणमेव । ॐ नमः सूर्यसोमाङ्गारकबुधबृहस्पतिशुक्रशनैश्चरराहुकेतुभ्यो ग्रहेभ्यः सर्वे ग्रहाः सायुधाः सवाहनाः सपरिच्छदाः इह ग्रहशान्तिके आगच्छन्तु २ इदमर्घ्यं० आचमनीयं गृह्णन्तु २ सन्निहिता भवन्तु २ स्वाहा जलं गृह्णन्तु २ गन्धं अक्षतान् फलानि मुद्रां पुष्पं धूपं दीपं नैवेद्यं० सर्वोपचारान्० शान्तिं कुर्वन्तु २ तुष्टिं पुष्टिं ऋद्धिं वृद्धिं० सर्वसमीहितानि यच्छन्तु २ स्वाहा ॥ इति ग्रहाणां संकुलपूजा ॥

प्रकारान्तरेण ग्रहपूजा ॥ अथवा अन्यच्च ग्रहाणां पूजा बालावबोधाय देशभाषयैव यथा—श्रीआदिनाथस्याग्रे कुङ्कुमश्रीखण्डमयं रविबिम्बं लिख्यते। बिम्बपट्टलिकायां पात्री ९ पूग ९ पत्र ९ नालिकेर १ काचाकपूरवालु १ नैवेद्यलापसीपाइली ९ पीतपटउलाखंडु १ पहिरावणी द्रामु १ लोह ९ होमस्तिलयवघृतेन क्रियते ॥ १ ॥ सोमपूजने—श्रीखण्डमयं चन्द्रबिम्बं श्रीचन्द्रप्रभस्याग्रे लिखनीयं । पात्री ९ पत्र ९ पूग ९ बीजपूर १ काचाकपूरवालु १ नैवेद्यंवटक ९ पहिरावणीजादरुखण्डु १ द्रामु १ लोह ९ होम० ॥ २ ॥ मङ्गलपूजने—कुङ्कुमेन मङ्गलो लिख्यते । पात्री ९ पत्र ९ पूग ९ नारङ्ग १ काचाकपूरवालु १ नैवेद्यलाडूसत्कचूरि रक्तपटला खण्ड १ पहिरावणीमुद्रा १ लोहडिया ९ होम० ॥ ३ ॥ बुधपूजने—गोरोचनामयं बुधबिम्बं लिख्यते । पात्री ९ पत्र ९ पूग ९ करुणाफल १ काचाकपूरवालु १ नैवेद्यबलासत्कवाकुला पाइली ९ मुद्रा १ लोहडिया ९ परिधाप-


॥ २३३ ॥

बृहस्पतिपूजने—सुवर्णमयोऽथवा कुङ्कुममयो जिनस्याग्रे लिख्यते।
निका मोचनवलउखण्ड १ होम० ॥ ४ ॥ पीतयज्ञोपवीत १ पात्री ९ पत्र ९ पूग ९ काचाक० नैवेद्य घूघरीमाणा ३ पहि० अगहिलखण्ड १ मुद्रा १ लो० ९ दाडिमफल १ होम० ॥ ५ ॥ शुक्रपूजने—रूप्यमयोऽथवा कुङ्कुममयो जिनस्याग्रे लिख्यते। चन्द्रप्रभस्य पात्री ९ पत्र ९ पूग ९ काचाक० केलाफल ९ पहिरावणी जादरुखण्ड १ मुद्रा १ लोह ९ नैवेद्य मुहाली ९ होम० ॥ ६ ॥ शनिपूजने—लोहमयः कस्तूरीमयो वा शनिर्लिख्यते। पात्री ९ पत्र ९ पूग ९ काचाक० नालिकेर १ नै० तिलवटि परिधापनिका कृष्णपटोलाखण्ड १ लो० ९ होम० ॥ ७ ॥ राहुपूजने—कस्तूरीमयो राहुर्लिख्यते। पात्री ९ पत्र ९ पूग ९ काचाक० वटकानि नैवेद्य मुद्रा १ लो० ९ पहिरावणी पाडु खण्ड १ नालिकेर १ होम० ॥ ८ ॥ ॥ विल्कलतारकगमनविधिः ॥ यदा उच्चालके गम्यते तदा शुक्रे अस्तंगते चल्यते। यदा शुक्रो दृश्यते तदा स्थित्वा कुल्हाडकं जलमृत्तिकाभ्यां भृत्वा मार्गे खनित्वा क्षिपेत् तदुपरि गम्यते। यत्र ग्रामे स्थीयते ततो ग्रामादग्रभूमौ गत्वा पश्चाद्व्याघुट्य ग्रामे स्थीयते तारकपीडा न भवति ॥ इति प्रकारान्तरेण ग्रहपूजा ॥

अथ ग्रहशान्तिस्नानानि ॥ अथ लोकोपचारेण ग्रहशान्त्यर्थं स्नानानि यथा ॥—"मनःशिलैलासुरदारुकुङ्कुमैरुशीरयष्टीमधुपद्मकान्वितैः। सताम्रपुष्पैर्विषमस्थिते रवौ शुभावहं स्नानमुदीरितं बुधैः ॥ १ ॥ पञ्चगव्यगजदानविमिश्रैः शङ्खशुक्तिकुमुदस्फटिकैश्च। शीतरश्मिकृतवैकृतहर्तृ स्नानमेतदुदितं नृपतीनाम् ॥ २ ॥

बिल्वचन्दनबलारुणपुष्पैर्हिङ्गुलूकफलिनीबकुलैश्च । स्नानमद्भिरिह मांसियुताभिर्भौमदौस्थ्यविनिवारणमाहुः ॥ ३ ॥ गोमयाक्षतफलैः सरोचनैः क्षौद्रशुक्तिभवमूलहेमभिः । स्नानमुक्तमिदमत्र भूभृतां बौधजाऽशुभविनाशनं बुधैः ॥ ४ ॥ मालतीकुसुमशुभ्रसर्षपैः पल्लवैश्च मदयन्तिकोद्भवैः । मिश्रमम्बु मधुकेन च स्फुटं वैकृतं गुरुकृतं निकृन्तति ॥ ५ ॥ एलया च शिलया समन्वितैर्वारिभिः सफलमूलकुङ्कुमैः । स्नानतो भृगुसुतोपपादितं दुःखमेति विलयं न संशयः ॥ ६ ॥ असिततिलाञ्जनरोध्रबलाभिः शतकुसुमाघनलाजयुताभिः । रवितनये कथितं विषमस्थे दुरितहृदाप्लवनं मुनिमुख्यैः ॥ ७ ॥ सदौषधैर्यान्ति गदा विनाशं यथा यथा दुःखभयानि तन्त्रैः । तथोदितस्नानविधानतोऽपि ग्रहाशुभं नाशमुपैत्यवश्यम् ॥ ८ ॥ अर्काद्ब्राह्ममहीरुहात्खदिरतोऽपामार्गतः पिप्पलादाद्रौदुम्बरशाखिनोप्यथ शमीदूर्वाकुशेभ्यः क्रमात् । सूर्यादिग्रहमण्डलस्य समिधो होमाय कार्या बुधैः सुस्निग्धाः सरलाश्च वोवनिचिताः (१) प्रादेशमात्राश्च ताः ॥ ९ ॥ धेनुः शङ्खोऽरुणरुचिवृषः काञ्चनं पीतवस्त्रं श्वेतश्चाश्वः सुरभिरसिता कृष्णलोहं महाजः । सूर्यादीनां मुनिभिरुदिता दक्षिणास्तद्ग्रहाणां स्नानैर्दानैर्हवनबलिभिस्तेऽत्र तुष्यन्ति यस्मात् ॥ १० ॥ देवब्राह्मणवन्दनाद्गुरुवचःसंपादनात्प्रत्यहं साधूनामपि भाषणाच्छ्रुतिरवश्रेयःकथाकर्णनात् । होमादध्वरदर्शनाच्छुचिमनोभावाज्जपाद्दानतो नो कुर्वन्ति कदाचिदेव पुरुषस्यैवं ग्रहाः पीडनम् ॥ ११ ॥ विकालचर्यां मृगयां च साहसं सुदूरयानं गजवाजिवाहनम् । गृहे परेषां

१ यस्मिन् इति पाठ. ।

गमनं च वर्जयेद्ग्रहेषु राजा विपमस्थितेष्विह ॥ १२ ॥ धार्यं तुष्ट्यै विद्रुमं भौमभान्वो रूप्यं शुक्रेन्द्वोश्च हेमे-
न्दुजस्य । मुक्ता सूरेर्लोहमर्कात्मजस्य राजावर्तः कीर्तितः शेषयोश्च ॥ १३ ॥ माणिक्यं तरणेः सुजात्यममलं
मुक्ताफलं शीतगोर्माहेयस्य च विद्रुमं मरकतं सौम्यस्य गारुत्मतम् । देवेज्यस्य च पुष्परागमसुरामात्यस्य वज्रं
शनेर्नीलं निर्मलमन्ययोश्च गदिते गोमेदवैडूर्यके ॥ १४ ॥ ॥ राहुकेत्वोः शनिवारे पूजा शान्तिकं च ॥ "यथा
याणप्रहाराणां कवचं वारणं भवेत् । तथा देवोपघातानां शान्तिर्भवति वारणम् ॥ १ ॥" तथा च नक्षत्रस्य
ग्रहस्य विशेषपूजने प्रस्तुतनक्षत्रग्रहयोः प्राधान्येन स्थापनं विशेषपूजाहोमौ च शेषाणां परिकरवत् स्थापनं
ममपूजा च । नक्षत्रग्रहादीनां विसर्जनं पूर्ववत् । यान्तु देव० आज्ञाहीनं इत्यादि ॥ इति ग्रहशान्तिकम् ॥ ॥
॥ सूर्यादिग्रहस्तुतिः ॥ "जपाकुसुमसंकाशं काश्यपेयं महाद्युतिम् । तमोरिं सर्वपापघ्नं प्रणतोऽस्मि दिवाकरम्
॥ १ ॥ दध्याभं खण्डकाकारं क्षीरोदधिसमुद्भवम् । नमामि सततं सोमं शम्भोर्मुकुटभूषणम् ॥ २ ॥ धरणी-
गर्भसंभूतं विद्युत्कान्तिसमप्रभम् । कुमारं शक्तिहस्तं च मङ्गलं प्रणमाम्यहम् ॥ ३ ॥ प्रियङ्गुकलिकाश्यामं
रूपेणाप्रतिमं बुधम् । सौम्यं सोमगणोपेतं नमामि शशिनः सुतम् ॥ ४ ॥ देवानां च ऋषीणां च गुरुं काञ्च-
नसंनिभम् । बुद्धिभूतं त्रिलोकस्य प्रणमामि बृहस्पतिम् ॥ ५ ॥ हेमकुन्दमृणालाभं दैत्यानां परमं गुरुम् ।
सर्वशास्त्रप्रवक्तारं भार्गवं प्रणमाम्यहम् ॥ ६ ॥ नीलाञ्जनसमाकारं रविपुत्रं महाग्रहम् । छायामार्तण्डसंभूतं
तं नमामि शनैश्चरम् ॥ ७ ॥ अर्धकायं महावीर्यं चन्द्रादित्यविमर्दनम् । सिंहिकागर्भसंभूतं तं राहुं प्रणमाम्य-

हम् ॥ ८ ॥ पलालधूमसंकाशं तारकाग्रहमर्दकम् । रुद्राद्रुद्रतमं घोरं तं केतुं प्रणमाम्यहम् ॥ ९ ॥ इदं व्यासमुखोद्भूतं यः पठेत्सुसमाहितः । दिवा वा यदि वा रात्रौ तेषां शान्तिर्भविष्यति ॥ १० ॥ ऐश्वर्यमतुलं चैवमारोग्यं पुष्टिवर्धनम् । नरनारीवश्यकरं भवेद्दुःस्वप्ननाशनम् ॥ ११ ॥ ग्रहनक्षत्रपीडां च तथा चाग्निसमुद्भवम् । तत्सर्वं प्रलयं याति व्यासो ब्रूते न संशयः ॥ १२ ॥" इति ग्रहपूजनान्ते त्रिः पठेत् शान्त्यर्थम् । इत्याचार्यश्रीवर्धमानसूरिकृते आचारदिनकरे उभयधर्मस्तम्भे शान्तिकाधिकारकीर्तनो नाम चतुस्त्रिंशत्तम उदयः ॥

## पञ्चत्रिंशोदयः ।

अथ पौष्टिकविधिरुच्यते ॥ सचायम् । श्रीयुगादिजिनबिम्बं चन्दनचर्चितपीठोपरि संस्थाप्य पूर्ववत्पूजां विधाय तद्बिम्बालाभे पूर्ववत् ऋषभबिम्बं परिकल्प्य बृहत्स्नात्रविधिना पञ्चविंशतिपुष्पाञ्जलीन्प्रक्षिपेत् । ततः प्रतिमाग्रे पञ्च पीठानि पूर्ववत्संस्थाप्य प्रथमपीठे चतुःषष्टिसुरासुरेन्द्रस्थापनं पूजनं च पूर्ववत् । द्वितीयपीठे दिक्पालस्थापनं पूजनं च पूर्ववत् । तृतीयपीठे सक्षेत्रपालग्रहस्थापनं पूजनं च पूर्ववत् । चतुर्थपीठे षोडशविद्यादेवीस्थापनं पूजनं च पूर्ववत् । पञ्चमपीठे षड्द्रहदेवीस्थापनं । तत्पूजनविधिरभिधीयते । प्रथमं पुष्पाञ्जलिं गृहीत्वा "श्रीह्रीधृतयः कीर्तिर्बुद्धिर्लक्ष्मीश्च षण्महादेव्यः । पौष्टिकसमये संघस्य वाञ्छितं पूरयन्तु मुदा ॥१॥" अनेन वृत्तेन पुष्पाञ्जलिक्षेपः । ॐ श्रिये नमः । ॐ ह्रियै नमः । ॐ धृतये नमः । ॐ कीर्तये नमः । ॐ बुद्धये

इत्युक्त्वा पीठे षण्णां क्रमेण संस्थापनं कुर्यात् । श्रियं प्रति—ॐ श्रीं श्रियै नमः
नमः । ॐ लक्ष्म्यै नमः । इत्युक्त्वा पीठे षण्णां क्रमेण संस्थापनं कुर्यात् । सर्वाङ्गभूषणधरोप-
इति मूलमन्त्रः ॥ "अम्भोजयुग्मवरदाभयपूतहस्ता पद्मासना कनकवर्णशरीरवस्त्रा । सर्वाङ्गभूषणधरोप-
चिताङ्गयष्टिः श्रीः श्रीविलासमतुलं कलयस्त्वनेकम् ॥ १ ॥" ॐ श्रियै पद्मद्रहनिवासिन्यै श्रियै नमः श्रि
इह पौष्टिके आगच्छ २ सायुधा सवाहना सपरिकरा इदमर्घ्यं० आचमनीयं गृहाण २ सन्निहिता भव २
स्वाहा जलं गृहाण २ गन्धं अक्षतान् फलानि मुद्रां पुष्पं धूपं दीपं नैवेद्यं सर्वोपचारान्० शान्तिं कुरु २
तुष्टिं पुष्टिं ऋद्धिं वृद्धिं० सर्वसमीहितानि देहि २ स्वाहा । अनेन सर्वपूजा करणं ॥ १ ॥ ह्रियं प्रति—ॐ ह्रीं
ह्रियै नमः इति मूलमन्त्रः ॥ "धूम्राङ्गयष्टिरसिखेटकवीजपूरवीणाविभूषितकरा धृतरक्तवस्त्रा । ह्रीर्घोरवारण-
विघातनवाहनाढ्या पुष्टीश्च पौष्टिकविधौ विदधातु नित्यम् ॥ १ ॥" ॐ नमो ह्रियै महापद्मद्रहवासिन्यै ह्रि
इह० शेषं० ॥ २ ॥ धृतिं प्रति—ॐ धां धीं धौं धः धृतये नमः इति मूल० ॥ "चन्द्रोज्वलाङ्गवसना
शुभमानसौकः पत्रिप्रयाणकृदनुत्तरसत्प्रभावा । स्रक्पद्मनिर्मलकमण्डलुवीजपूरहस्ता धृतिं धृतिरिहानिशमा-
दधातु ॥ १ ॥" ॐ नमो धृतये तिगिच्छिद्रहवासिन्यै धृते इह० शेषं० ॥ ३ ॥ कीर्तिं प्रति—ॐ ध्रीं शः कीर्तये
नमः इति मूल० ॥ "शुक्लाङ्गयष्टिरुडुनायकवर्णवस्त्रा हंसासना धृतकमण्डलुकाक्षसूत्रा । श्वेताब्जचामरविला-
सिकरातिकीर्तिः कीर्तिं ददातु वरपौष्टिककर्मणात्र ॥ १ ॥" ॐ नमः कीर्तये केशरिद्रहवासिन्यै इह० शेषं०
॥ ४ ॥ बुद्धिं प्रति—ॐ ऐं धीं बुद्धये नमः इति मूल० ॥ "स्फारस्फुरत्स्फटिकनिर्मलदेहवस्त्रा शेषाहिवाहन-

गतिः पटुदीर्घशोभा । वीणोरुपुस्तकवराभयभासमानहस्ता सुबुद्धिमधिकां प्रददातु बुद्धिः ॥ १ ॥" ॐ नमो बुद्धये महापुण्डरीकद्रहवासिन्यै बुद्धे इह० शेषं० ॥ ५ ॥ लक्ष्मीं प्रति—ॐ श्रीं ह्रीं क्लीं महालक्ष्म्यै नमः इति मूल० ॥ "ऐरावणासनगतिः कनकाभवस्त्रदेहा च भूषणकदम्बकशोभमाना । मातङ्गपद्मयुगुलप्रसृतातिकान्तिर्वेदप्रमाणककरा जयतीह लक्ष्मीः ॥ १ ॥" ॐ नमोलक्ष्म्यै पुण्डरीकद्रहवासिन्यै लक्ष्मि इह० शेष० ॥ ६ ॥ ततः ॐ श्रीह्रीधृतिकीर्तिबुद्धिलक्ष्म्यो वर्षधरदेव्यः सायुधाः सवाहनाः सपरिच्छदा इह पौष्टिके आगच्छन्तु २ इदं० आचमनीयं गृह्णन्तु २ सन्निहिता भवन्तु २ स्वाहा जलं गृह्णन्तु २ गन्धं अक्षतान् फलानि मुद्रां पुष्पं धूपं दीपं नैवद्यं सर्वोपचारान् २ शान्तिं कुर्वन्तु २ तुष्टिं पुष्टिं ऋद्धिं वृद्धिं सर्वसमीहितानि यच्छन्तु स्वाहा । अनेन संकुलपूजा । एवं पीठपञ्चकस्थापनां संपूज्य क्रमेण प्रत्येकं मूलमन्त्रैर्होमं कुर्यात् । अत्र पौष्टिके सर्वोपि होमोऽष्टकोणकुण्डे आम्रसमिद्भिः इक्षुदण्डखर्जूरद्राक्षाघृतपयोभिः । ततः पूर्वप्रक्षिप्तासु पुष्पाञ्जलिषु जिनबिम्बे बृहत्स्नात्रविधिना परिपूर्णं स्नात्रं कुर्यात् । तच्च स्नात्रोदकं तीर्थोदकसंमिश्रं शान्तिककलशवत् संस्थापिते प्रगुणीकृते पौष्टिककलशे निक्षिपेत् । तत्र सुवर्णरूप्यमुद्राद्वयं नालिकेरं निक्षिपेत् । कलशं सम्यक्संपूजयेत्पूर्ववत् । छदिसंलग्नं कलशतलस्पर्शिसदशाव्यङ्गवस्त्रं चोपरि लम्बयेत् । पीठपञ्चके च क्रमेण चतुःषष्टिकरषोडशकरदशकरषट्करैर्वस्त्रैराच्छादनं । गुरुस्नात्रकारगृहाध्यक्षकलशाः पूर्वमेव सकङ्कणा विधेयाः स्वर्णकङ्कणमुद्रिके च गुरवे देये सदशाव्यङ्गश्वेतकौशेयं च । ततः स्नात्रकारद्वयं पूर्ववदखण्डितधारया शुद्धोदककलशे

निक्षिपति ॥ गुरुश्च कुशेन पतन्तीं धारां पौष्टिकदण्डकं पठन् निक्षिपति । पौष्टिकदण्डको यथा—"येनैतद्भ-
वनं निजोदयपदे सर्वाः कला निर्मलं शिल्पं (शल्यं) पालनपाठनीतिसुपथे बुद्ध्या समारोपितम् । श्रेष्ठाद्यः
पुरुषोत्तमस्त्रिभुवनाधीशो नराधीशतां किंचित्कारणमाकलय्य कलयन्नर्हन् शुभायादिमः ॥ १ ॥" इह हि तृती-
याराावसाने पट्पूर्वलक्षवयसि श्रीयुगादिदेवे परमभट्टारके परमदैवते परमेश्वरे परमतेजोमये परमज्ञानमये
परमाधिपत्ये समस्तलोकोपकाराय विपुलनीतिविनीतिख्यापनाय प्राज्यं राज्यं प्रवर्तयितुकामे सम्यग्दृष्टयश्च-
तुःषष्टिसुरासुरेन्द्राश्चलितासना निर्दम्भसंरम्भभाजोऽवधिज्ञानेन जिनराज्याभिषेकसमयं विज्ञाय प्रमोदमे-
दुरमानसाः निजनिजासनेभ्य उत्थाय ससम्भ्रमं सामानिकाङ्गरक्षकत्रायस्त्रिंशल्लोकपालानीकप्रकीर्णकाभियो-
गिकलोकान्तिकयुजः साप्सरोगणाः सकटकाः स्वस्वविमानकल्पान् विहायैकत्र संघट्टिता इक्ष्वाकुभूमिमाग-
च्छन्ति । तत्र जगत्पतिं प्रणम्य सर्वोपचारैः संपूज्याभियोगिकानादिश्य संख्यातिगैर्योजनमुखैर्मणिकलशैः
सकलतीर्थजलान्यानयन्ति । ततः प्रथमार्हतं पुरुषप्रमाणे मणिमये सिंहासने कटिप्रमाणपादपीठपुरस्कृते दि-
व्याम्बरधरं सर्वभूषणभूषिताङ्गं भगवन्तं गीतनृत्यवाद्यमहोत्सवे सकले प्रवर्तमाने नृत्यत्यप्सरोगणे प्रादुर्भ-
वति दिव्यपञ्चके सर्वसुरेन्द्रास्तीर्थोदकैरभिषिञ्चन्ति त्रिभुवनपतिं तिलकं पट्टबन्धं च कुर्वन्ति शिरस्युल्लास-
यन्ति श्वेतातपत्रं चालयन्ति चामराणि वादयन्ति वाद्यानि शिरसा वहन्त्याज्ञां प्रवर्तयन्ति च । ततो वय-
मपि कृततदनुकाराः स्नात्रं विधाय पौष्टिकमुद्घोषयामः । ततस्त्यक्तकोलाहलैर्धृतावधानैः श्रूयतां स्वाहा ॐ

पुष्टिरस्तु रोगोपसर्गदुःखदारिद्र्यडमरदौर्मनस्यदुर्भिक्षमरकेतिपरचक्रकलहवियोगविप्रणाशात्पुष्टिरस्तु आचार्योपाध्यायसाधुसाध्वीश्रावकश्राविकाणां पुष्टिरस्तु ॐ नमोऽर्हद्भ्यो जिनेभ्यो वीतरागेभ्यस्त्रिलोकनाथेभ्यः भगवन्तोर्हन्तः ऋषभाजित० वर्धमानजिनाः २४ भरतैरावतविदेहसंभवा अतीतानागतवर्तमानाः विहरमाणाः प्रतिमास्थिताः भुवनपतिव्यन्तरज्योतिष्कवैमानिकविमानभुवनस्थिताः नन्दीश्वररुचककुण्डलेषुकारमानुषोत्तरवर्षधरवक्षस्कारवेताढ्यमेरुप्रतिष्ठा ऋषभवर्धमानचन्द्राननवारिषेणाः सर्वतीर्थंकराः पुष्टिं कुर्वन्तु स्वाहा। भुवनपतिव्यन्तरज्योतिष्कवैमानिकाः सम्यग्दृष्टिसुराः सायुधाः सपरिवाराः पुष्टिं कुर्वन्तु स्वाहा। ॐ चमरबलिधारणभूतानन्दवेणुदेववेणुदारिहरिकान्तहरिसह अग्निशिखाग्निमानवपुण्यवसिष्ठजलकान्तजलप्रभअमितगतिमितवाहनवेलम्बप्रभञ्जनघोषमहाघोषकालमहाकालसुरूपप्रतिरूपपुण्यभद्रमाणिभद्रभीममहाभीमकिंनरकिंपुरुषसत्पुरुषमहापुरुष अहिकाय महाकाय ऋषिगीतरतिगीतयशसन्निहितसन्मानधातृविधातृऋषिऋषिपालईश्वरमहेश्वरसुवक्षविशालहास्यहास्यरतिश्वेतमहाश्वेतपतङ्गपतगरतिचन्द्रसूर्यशक्रेशानसनत्कुमारमाहेन्द्रब्रह्मलान्तक(शुक्रारणा)शुकसहस्रारणाच्युतनामानश्चतुष्षष्टिसुरासुरेन्द्राः सायुधाः सवाहनाः सपरिवाराः पुष्टिं कुर्वन्तु स्वाहा। इन्द्राग्नियमनिर्ऋतिवरुणवायुकुबेरेशाननागब्रह्मरूपा दिक्पालाः सायुधाः सवाहनाः सपरिच्छदाः पुष्टिं कुर्वन्तु स्वाहा। ॐ सूर्यचन्द्राङ्गारकबुधबृहस्पतिशुक्रशनैश्चरराहुकेतुरूपा ग्रहाः सक्षेत्रपालाः पुष्टिं कुर्वन्तु २ स्वाहा। ॐ रोहिणी १६ षोडशविद्यादेव्यः सा० सवा० सप० पुष्टिं कुर्वन्तु स्वाहा। ॐ श्री ह्री धृ-

तिकीर्तिबुद्धिलक्ष्मीधर्मधरदेव्यः पुष्टिं कुर्वन्तु स्वाहा । ॐ गणेशदेवताः पुरदेवताः पुष्टिं कुर्वन्तु स्वाहा । अस्मिंश्च मण्डले जनपदस्य पुष्टिर्भवतु जनपदाध्यक्षाणां पुष्टिर्भवतु राज्ञां पुष्टिर्भवतु राज्यसन्निवेशानां पुष्टिर्भवतु पुरस्य पुष्टिर्भवतु पुराध्यक्षाणां पु० ग्रामाध्यक्षाणां पु० सर्वाश्रमाणां पु० सर्वप्रकृतीनां पु० पौरलोकस्य पु० पार्षलोकस्य पु० जैनलोकस्य पु० अत्र च गृहे गृहाध्यक्षस्य पुत्रभ्रातृस्वजनसम्बन्धिकलत्रमित्रसहितस्य पु० एतत्समाश्रितकार्यस्य पु० तथा दासभृत्यसेवककिंकरद्विपदचतुष्पदबलवाहनानां पु० भाण्डागारकोष्ठागाराणां पुष्टिरस्तु ॥ "नमः समस्तजगतां पुष्टिपालनहेतवे । विज्ञानज्ञानसामस्त्यदेशकायादिमाऽर्हते ॥ १ ॥ येनादौ सकला सृष्टिर्विज्ञानज्ञानमापिता । स देवः श्रीयुगादीशः पुष्टिं तुष्टिं करोत्विह ॥ २ ॥" यत्र चेदानीमायतन-निवासे तुष्टिपुष्टिऋद्धिवृद्धिमाङ्गल्योत्सवविद्यालक्ष्मीप्रमोदवाञ्छितसिद्धयः सन्तु शान्तिरस्तु पुष्टिरस्तु ऋद्धि-रस्तु वृद्धिरस्तु यच्छ्रेयस्तदस्तु "प्रवर्धतां श्रीः कुशलं सदास्तु प्रसन्नतामश्नुतु देववर्गः । आनन्दलक्ष्मीगुरुकीर्ति-सौख्यसमाधियुक्तोऽस्तु समस्तसंघः ॥ १ ॥ सर्वमङ्गल० ॥ २ ॥" इति दण्डकं त्रिः पठित्वा पौष्टिककलशे पूर्णे पौष्टिककारकः कुशेनाभिषिञ्चेत् । गृहे च सुहृद्गृहे च तेन जलेन सदाभ्युक्षणं कुर्यात् । पीठपञ्चकविसर्जनं पूर्ववत् यान्तु देवगणा० इत्यादि आज्ञाहीनं० इत्यादि साधुभ्यो वस्त्रान्नपानदानं विपुलं गुरुपूजनं च सर्वोप-चारैः ॥ "सर्वत्र गृहिसंस्कारे सूतिमृत्युविवर्जिते । दीक्षाग्रहणतश्चादौ व्रतारम्भे समस्तके ॥ १ ॥ प्रतिष्ठासु च सर्वासु राज्यसंघपदे तथा । सर्वत्र शोभनारम्भे सर्वेष्वपि च पर्वसु ॥ २ ॥ महोत्सवे च संपूर्णे महाकार्ये

समापिते। इत्यादिस्थानकेष्वाहुः पौष्टिकस्य विधापनम् ॥ ३ ॥ आधयो व्याधयश्चैव दुरितं दुष्टशत्रवः। पापानि च क्षयं यान्ति महत्पुण्यं विवर्धते ॥ ४ ॥ सुप्रसन्ना देवताः स्युर्यशोबुद्धिमहाश्रियः। आनन्दश्च प्रतापश्च महत्त्वं पुष्टिमृच्छति ॥५॥ आरब्धं च महाकार्यं प्रयत्नादेव सिद्ध्यति। भूतग्रहपिशाचादि दोषा धिष्ण्यग्रहैः कृताः ॥ ६ ॥ रोगाश्च प्रलयं यान्ति न विघ्नं क्वापि जायते। पौष्टिकस्य फलं प्राहुरित्याचारविचक्षणाः ॥ ७ ॥" इति पौष्टिकम् ॥ "सर्वत्र गृहिसंस्कारे सूतिमृत्युविवर्जिते। प्रारब्धे च महाकार्ये प्रतिष्ठास्वखिलास्वपि ॥ १ ॥ राज्याभिषेकसमये शान्तिकं पौष्टिकं द्वयम्। विधापयेद्विशुद्धात्मा तत्त्वाचारविचक्षणः ॥ २ ॥ इत्याचार्यवर्धमानसूरिकृते आचारदिनकरे उभयधर्मस्तम्भे पौष्टिककीर्तनो नाम पञ्चत्रिंशत्तम उदयः ॥ ३५ ॥

## षट्त्रिंशोदयः।

अथ बलिविधानविधिः ॥ सचायम्। बलिशब्देन तत्तद्दैवतसन्तर्पणख्यातं नैवेद्यमुच्यते। सच नाना(स्वा)खाद्यपेयचूष्यलेह्याशनपानखादिमस्वादिमसहितो देवताग्रत उपह्रियते। तत्र देवताविशेषेण बलीनां बलिदानविधेरपि भेदः। स चोच्यते। अर्हतोऽग्रतः तद्दिनगृहाचारभोज्याहाराणां सर्वेषां तैलकाञ्जिकपक्ववर्जितानां ढौकनं पवित्रपात्रेण तत्कालराद्धस्याग्रपिण्डस्य ढौकनं। न तत्र देवनैवेद्यकृते पृथक्पाकाद्युपक्रमो विधेयः। पुरापि भगवानायुःकर्माणि समीपस्थे गृहीतव्रतः स्वयोगनिष्पन्नैराहारैः शरीरधारणमकृत अतो भवि-

कैरपि स्वमानसस्य सन्तोषाय भगवतो नैवेद्यस्थाने गृहमानुपभोजनार्थं कृत एव आहारः पुरस्क्रियते । तत्र
नैवेद्यं नानाखाद्यपेयचूष्यलेह्योदनघृतव्यञ्जनपक्वान्नरागषाडवक्षीरदधिगुडादिसमन्वितं पवित्रे पात्रे स्वर्णमये
रूप्यमये ताम्रमये कांस्यमये वा स्वसंपदुचिते निधाय जिनबिम्बाग्रतः सुविलिप्तभूमौ संस्थाप्य अञ्जलिं बध्वा
परमेष्ठिमन्त्रं पठित्वा इति पठेत् ॥ "अर्हन्तः प्राप्तनिर्वाणा निराहारा निरञ्जकाः । जुषन्तु बलिमेतं मे मनःस-
न्तोषहेतवे ॥ १ ॥" इति जिनबिम्बबलिः ॥ ॥ विष्णुरुद्रबलौ तु गृहव्यापारस्वयोगनिष्पन्नान्नादेव कल्प्यते ।
यतः श्रुतिवाक्यम्—"पितरस्तर्पयामास रामः कन्दैः फलैरपि । यदन्नं पुरुषोऽश्नाति तदन्नं तस्य देवताः ॥ १ ॥
पितॄणां च पुनः कार्यं मनःकामितभोजनम् । दद्यात्स्वगुरुविप्रेभ्यस्ततस्तृप्यन्ति ते सदा ॥ २ ॥" इति पितृव्य-
वहारबलिः ॥ ॥ "पूजां विधाय देवीनां स्वस्वाम्नायविशेषतः । भवन्ति बलयो देयास्तद्भृत्परिकरेऽपि च॥१॥"
देवीपूजने नानापक्वान्नकरम्भसप्तधान्यबकुलकयुतो बलिर्देयः । गणपतेः सद्यस्कमोदकैर्बलिः । क्षेत्रपालभेदानां
तिलपूर्णतैलकरम्भैः सपूपकादिबकुलकैर्बलिः । चक्रपूजने नन्द्यावर्तादिपूजने नानापक्वान्नोदनव्यञ्जनयुतो बलि-
र्भिन्नभिन्नपात्रैस्तत्संख्यया दीयते । प्रत्येकं सुरासुरेश्वरग्रहदिक्पालविद्यादेवीलोकान्तिकजिनमातॄणां परमे-
ष्ठिचतुर्णिकायदेवानां भिन्नभिन्नपात्रैर्बलिः । शाकिनीभूतवेतालग्रहयोगिनीनां मिश्रधान्यतैलनानामुखदीप-
सहितः चतुःपथे बलिः । तादृश एव बलिः भूतप्रेतपिशाचराक्षसादीनां संतर्पणाय श्मशाने । निधिलाभे तु
निधिदेवतोचितो बलिर्दीयते । निधिदेवतावचनाभावे तु निधिसमीपे सुलिप्तभूमौ धनदं संस्थाप्य पूर्ववत्पूजां

विधाय निधिग्रहणं कुर्यात् ॥ "पृष्ठे कृत्वा गुरुं शुक्रं वत्सं च कुलदेवताम् । मातरः पूजनाकाले स्थापनीया मनीषिभिः ॥ १ ॥ प्रायेण देवताः सर्वा जिनाजशिववर्जिताः । तद्वर्णगन्धैः पुष्पैश्च पूजनीया मनीषिभिः ॥ २॥ यो बलिः कथितः पूर्वं प्रतिष्ठाशान्तिकादिषु । विधेयः सर्वदेवानां स एवार्हतदर्शने ॥ ३ ॥ सर्वदेवोपहारेषु सर्वदेव्यर्चनेषु च । निजगुर्वागमः सर्वः प्रमाणं कार्य उत्तमैः ॥ ४ ॥" इति बलिविधानम् ॥ इत्याचार्यश्रीवर्धमानसूरिकृते आचारदिनकरे उभयधर्मस्तम्भे बलिदानकीर्तनो नाम षट्त्रिंशत्तम उदयः ॥ ३६ ॥

## सप्तत्रिंशोदयः ।

अथ प्रायश्चित्तविधिः ॥ सचायम् । इह हि प्रायश्चित्तं नाम पापस्य प्रमादकृतस्य विशुद्धिहेतु । तत्र च क्रोधमानमायालोभप्रकोपैः शब्दरूपरसगन्धस्पर्शैः प्रेरित आत्मा जानन्नपि पुण्यपापोपायं फलविपाकं च यदाचरति न तस्य प्रायश्चित्ताचरणेनापगमः । तत्कर्म भवान्तरे भुक्तमेव क्षीयते । अथोग्रतपसा अथवा वाङ्मनश्चिन्मयाविर्भावेण शुक्लध्यानेन तत्कर्म क्षीयते नान्यथा । यत उक्तमागमे—"पावाणं खलु भो कडाणं कम्माणं पुव्विं दुच्चिन्ताणं दुप्पडिकंताणं वेअइत्ता मुक्खो नत्थि । अवेअयत्ता तवसा वा जोसइत्ता" ॥ ॥ तथा च—अज्ञानत्वेना(?) नानाभोगेन परानुवृत्त्या भयेन हास्येन नृपादिबलात्कारेण प्राणरक्षार्थं गुरुसंघप्रत्यनीकविघातार्थं परबन्धनमरकदुर्भिक्षादिसंकटे कृतानां पातकानामपगमः सद्गुरुगीतार्थप्रोक्तप्रायश्चित्तविधिसमाच-

प्रायश्चित्तविधिं न केवलिनं विना कोपि जानाति । दुर्ज्ञेयो हि
रणेन घटते । तत्र सम्यक् पातकागमकारकं मनःपरिणामोद्भवः शुभाशुभः कर्मबन्धः । सूक्ष्मा गतिर्हि
शीघ्रविदार्यमाणवस्त्रतन्तुच्छेदकालज्ञाये(?)तेन मनःपरिणामोद्भवः शुभाशुभः कर्मबन्धः । सूक्ष्मा गतिर्हि
मनःपरिणामस्य । सूक्ष्मसूक्ष्मप्रमाणा हि दूरघृतान्तरा असंख्याः परिणामाः । क्रोधमानमायालोभरागद्वेषप-
अप्रकारविषयाणां मनोगतानां तत्पातकपरिच्छेदकर्तॄणां परिणामानां च दूरान्तराः संख्यातीता भावानां
गतयः । अतः केवलज्ञानं विना दुरवसेयश्चतुर्भिर्ज्ञानैरपि प्रायश्चित्तविधिः । तथापि दुःषमकाले श्रुताक्षरैर्गीता-
र्थश्रुतधरोपदेशैः किंचित्प्रायश्चित्तविधिरङ्गीक्रियते । तथा गीतार्थगवेषणां विधाय प्रायश्चित्ताचरणमारभ्यते—
"सल्लुद्धरणनिमित्तं गीयच्छन्नेसणाउ उक्कोसा । जोअणसयाइं सत्तउ बारसवासाइं कायव्वा ॥ १ ॥ गुरुपमु-
हाणं कीरइ असुद्धेहि जित्तियं कालंति । जावज्जीवं गुरुणो असुद्धसुद्धेहिवावि कायव्वं ॥ २ ॥ वसहे बारस-
वासा अट्ठारसभिक्खुणो मासा । इअ मज्झे कालगओ पावइ आलोयणाइफलम् ॥ ३ ॥" एवं सप्तशतयो-
जनार्यदेशभ्रान्त्या द्वादशवर्षमध्ये यदि तत्कालप्रवर्तमानसमस्तश्रुतधरं गीतार्थं गुरुं चेदालोचेदालोचनाग्राही
लभते तदा तद्वाक्यप्राप्तप्रायश्चित्तविधिकरणेन सम्यक् तत्पातकान्मोक्षमाप्नोति । अथ च केनालोचनाप्राय-
श्चित्तमनुज्ञेयम् १ कस्यानुज्ञेयं २ कः प्रायश्चित्तकालः ३ प्रायश्चित्तानाचरणे के दोषाः ४ प्रायश्चित्ताचरणे के
गुणाः ५ प्रायश्चित्तग्रहणे को विधिः ६ इत्युच्यते । प्रायश्चित्तानुज्ञातृगुरुलक्षणं यथा—"संपूर्णश्रुतपाठज्ञो गी-
तार्थः पूर्णयोगकृत् । व्याख्याता सर्वशास्त्राणां षट्त्रिंशद्गुणसंयुतः ॥ १ ॥ शान्तो जितेन्द्रियो धीमान् धीरो

रोगादिवर्जितः। अनिन्दकः क्षमाधारी ध्याता जितपरिश्रमः ॥ २ ॥ तत्त्वार्थविद्धारणावान् नृपरङ्कसमाशयः। वारंवारं श्रुतं दृष्ट्वा विवक्षुर्वचनं शुभम् ॥ ३ ॥ अनालस्यः सदाचारः क्रियावान्कपटोज्झितः। हास्यभीतिजुगुप्साभिः शोकेन च विवर्जितः ॥ ४ ॥ प्रमाणं कृतपापस्य जानन्श्रुतमतिक्रमैः। इत्यादिगुणसंयुक्तः प्रायश्चित्ते गुरुः स्मृतः ॥ ५ ॥" प्रायश्चित्तानुचारककर्तृलक्षणम्—"संवेगवान्गुणाकाङ्क्षी तत्वज्ञः सरलाशयः। गुरुभक्तो निरालस्यस्तपःक्षमशरीरकः ॥ १ ॥ चेतनावान्स्मरन्सर्वं निजाचीर्णं शुभाशुभम्। जितेन्द्रियः क्षमायुक्तः सर्वं प्रकटयन्कृतम् ॥ २ ॥ निर्लज्जः पापकथने स्वप्रशंसाविवर्जितः। सुकृतस्य परं गोप्ता दुष्कृतस्य प्रकाशकः ॥ ३ ॥ पापभीरुः पुण्यधनलाभाय विहितादरः। सदयो दृढसम्यक्त्वः परोपेक्षाविवर्जितः ॥ ४ ॥ एवंविधो यतिः साध्वी श्रावकः श्राविकापि वा। आलोचनाविधानाय योग्यो भवति निश्चितम् ॥ ५ ॥" ॥ आलोचनाग्रहणकालो यथा—"पक्षे चैव चतुर्मास्यां तथा संवत्सरेपि च। प्रमादकृतपापान्ते प्राप्ते च प्रवरे गुरौ ॥ १ ॥ तीर्थे च तपआरम्भे महारम्भान्त एव च। इति काले विधेयं स्यात्प्रायश्चित्तप्ररूपणम् ॥ २ ॥" ॥ प्रायश्चित्तानाचरणे दोषो यथा—"लज्जया गौरवेणापि प्रमादेनापि केन वा। गर्वेणावज्ञया चैव मूढत्वेनाथ वा नरः ॥ १ ॥ कदापि नालोचयति पापं यदि समं नरः। तदा तस्य फलं सर्वं श्रूयतां दोषसंकुलम् ॥ २ ॥ अनालोचितपापश्चेत्कदाचिन्म्रियते पुमान्। तस्य तत्पापयोगेन दुर्बुद्धिः स्याद्भवान्तरे ॥ ३ ॥ दुर्बुद्ध्या विपुलं पापं करोत्यन्यद्विमूढधीः। तेन पापेन दारिद्र्यं दुःखं च लभतेतराम् ॥ ४ ॥ प्रयाति नरकं घोरं पशुत्वं प्राप्नु-

यादपि । कुमानुषत्वे पतितो दुष्टदेशकुलोद्भवः ॥ ५ ॥ सरोगः खण्डिताङ्गश्च कुर्यात्प्रचुरपातकम् । तेन पापेन महता कुदेवत्वादिसंश्रितः ॥ ६ ॥ पश्चात्तापं च कुरुते बोधिबीजं न चाप्नुयात् । द्वीन्द्रियत्वैकेन्द्रियत्वे निगोदत्वमवाप्नुयात् ॥७॥ भ्राम्येदनन्तसंसारं कष्टान्म्रियेति वा ततः । इति दोषान् विलोक्यात्र प्रायश्चित्तमुपाचरेत् ॥ ८ ॥" ॥ प्रायश्चित्ताचरणे गुणा यथा—"सर्वपापप्रशमनं सर्वदोषनिवारणम् । प्रवर्धनं च पुण्यानां धर्मणामात्ममोदनम् ॥ १ ॥ शल्यापहारो जीवस्य नैर्मल्यं ज्ञानसंगतिः । पुण्यस्य संचयो भूयाच्छिन्नस्य च परिक्षयः ॥ २ ॥ संप्राप्तिः स्वर्गशिवयोः कीर्तिर्विस्तारिणी भुवि । प्रायश्चित्ताचरणतः फलमेतन्निगद्यते ॥ ३ ॥"
प्रायश्चित्तग्रहणविधिरुच्यते । यथा—"मृदुध्रुवचरक्षिप्रैर्वारे भौमं शनिं विना । आद्याटनतपोनद्यालोचनादिषु मं शुभम् ॥ १ ॥" शुभनक्षत्रतिथिवारलग्नेषु गुरुशिष्ययोश्चन्द्रबले साधुः सर्वचैत्येषु चैत्यवन्दनं कुर्यात् । सर्वसाधूनभिवन्दयेत् आचाम्लतपः कुर्याद्वा । गृहस्थस्तु सर्वचैत्येषु महापूजां बृहत्स्नात्रविधिना साधर्मिकवात्सल्यं संघपूजां साधुभ्यो विपुलवस्त्रान्नपानपात्रज्ञानोपकरणदानं पुस्तकपूजनं मण्डलिपूजनं च कुर्यात् । ततः प्रशस्तायां शुभवेलायां यतिः श्राद्धो वा गुरुं प्रदक्षिणीकृत्य ईर्यापथिकीं प्रतिक्रम्य स्तुतिचतुष्केण चैत्यवन्दनं विदध्यात् । ततो मुखवस्त्रिकां प्रतिलिख्य द्वादशावर्तवन्दनं दत्वा सर्वसाधून्वन्दित्वा गुर्वग्रे मुखवस्त्रिकां प्रतिलेखयेत् । ततः क्षमाश्रमणं दत्वा भणति–भगवन् शुद्धिं संदिसावेमि । पुनः क्षमाश्रमणं दत्वा—शुद्धिं पडिगाहेमि । पुनः क्षमाश्रमणं दत्वा–भगवन् आलोयणं संदिसावेमि । पुनः क्षमाश्रमणं दत्वा—आलोयणं

आलोएमि। संदिसावेह। आलोएह इति गुरुवाक्यं। ततः सव्वपायश्चित्तसुद्धिनिमित्तं करेमि काउसग्गं अन्नत्थऊ० जाय० अप्पा०। चतुर्विंशतिस्तवचतुष्कचिन्तनं पारयित्वा मुखेन चतुर्विंशतिस्तवभणनम्। ततो गुर्वग्रे ऊर्ध्वीभूय परमेष्ठिमन्त्रं त्रिः पठेत्। तत इति गाथास्त्रिः पठनीयाः। यथा—"वंदित्तु वद्धमाणं गोयमसामिं च जम्बुनामं च। आलोअणाविहाणं वुत्थामि जहाणुपुव्वीए ॥ १ ॥ आलोयणदायव्वा कस्सवि केणावि कत्थ काले वा। के अ अदाणे दोसा हुंति गुणा के अदाणे वा ॥ २ ॥ जे मे जाणंति जिणा अवराहा जेसु जेसु ठाणेसु। तेहं आलोएमि उवट्ठिओ सव्वकालंपि ॥ ३ ॥" इति गाथात्रयं त्रिः पठेत्। इति पठित्वा गुर्वग्रे विनयासनेनोपविश्य मुखवस्त्रिकाच्छन्नमुखः अञ्जलिमुकुलिताग्रहस्तः सर्वकृतं सस्मृतं दुःकृतं कर्म कथयेत्। गुरुश्च समाहितः शृणुयाद्धृदयेन वा अक्षरन्यासेन वा सर्वं तदुक्तमवधारयेच्च। शिष्येणापि न किंचिद्गोपनीयं। यदुक्तम्—"जह बालो जंपन्तो कज्जमकज्जं च साहए सव्वं। तह आलोअणकाले आलोइज्जा गुरुपुरओ ॥ १ ॥" ततो गुरुः सर्वदुष्कृतमवधार्य श्रुतानुगामी स्वमत्यनुसारेण तद्दुःकृतानुसारेण च तदुचितं तपः कायोत्सर्गप्रतिक्रमणादिकं दशविधं प्रायश्चित्तानुचरणमनुजानीयात्। तद्दशविधं प्रायश्चित्तानुचरणं यथागमं यथागुरुवचनं कथ्यते। यथा—"पूर्वमालोचना चैव १ प्रतिक्रमणमेव च २। उभयं च तृतीयं स्यात् ३ विवेकश्च चतुर्थकः ४ ॥ १ ॥ कायोत्सर्गः पञ्चमः स्यात् ५ तपः षष्ठमुदाहृतम् ६। छन्दस्तु सप्तमो ज्ञेयो ७ मूलमष्टममादिशेत् ८ ॥ २ ॥ अनवस्था च नवमं ९ दशमं च पराञ्चिकम् १०। एवं दशविधा ज्ञेया प्रायश्चित्तस्य योजना

॥ ३ ॥" ॥ आलोचनार्हं प्रायश्चित्तं यथा—"करणीयाश्च ये योगा मूलोत्तरगुणादयः । साधोस्तेषूपयुक्तस्य शुद्धिरालोचना मता ॥ ४ ॥ निरन्तरातिचारस्य छद्मस्थस्यापि योगिनः । आलोचनां विना शुद्धिर्जायते न कदाचन ॥ ५ ॥ ग्रहणे भोजनादीनां धर्मागाराच्च निर्गमे । उच्चारभूमिगमने विहारे चैत्यवन्दने ॥ ६ ॥ अन्याश्रमस्थानां चैव साधूनामभिवादने । तद्गृहे च गृहस्थादेः प्रत्याख्यानविधापने ॥ ७ ॥ गुर्वादेशाद्गृहस्थानां गृहयाने प्रयोजनात् । राजादीनां च संलापेऽन्यस्मिन्कार्ये शुभेपि वा ॥ ८ ॥ यद्धिर्हस्तशताद्गसे बुधैरालोचना मता । विशुद्धाचारयुक्तोपि निर्मलं संयमं श्रितः ॥ ९ ॥ व्रतगुप्तिसमित्यादिनिःशेषपरिपालकः । निर्दोषव्रतगर्वेण यदि नालोचनाकरः ॥ १० ॥ नैव शुद्धं व्रतं तस्य कदाचिदपि जायते । तस्माद्धस्तशताद्बाह्ये कृते कार्ये शुभेपि वा ॥ ११ ॥ आलोचना विधातव्या भैक्षान्नकरणादिकाः । आलोचयति भिक्षायां दानं देयं समाश्रितम् ॥ १२ ॥ ग्रहणे स्वाश्रयं चैव भाषणे चेष्टितेपि च । यद्यत्तु चेष्टितं प्रासं भाषितं वा शुभाशुभम् ॥ १३ ॥ तत्सर्वं गुरवे कथ्यं प्रष्टव्यं चैव तत्फलम् । करणीयं तदादिष्टमेवमालोचना मता ॥ १४ ॥ स्वगणात्कारणेनान्यगणं यातस्तपोधनः । उपसंपद आदाने कुर्यादालोचनां पुरा ॥ १५ ॥" इत्यालोचना संपूर्णा ॥ ॥ प्रतिक्रमणार्हं यथा—"भङ्गे समितिगुप्त्योश्च प्रमादेन कदाचन । गुरोराशातनायां च विनयभ्रंश एव च ॥ १ ॥ गुर्विच्छाया अकरणे पूज्यपूजाव्यतिक्रमे । लघुसूक्ष्मासु मूर्च्छायां क्षुते कासे विजृम्भणे ॥२॥ विधिहीने च विहिते विवादे परयादिभिः । संक्लेशकरकार्येषु लेपादिषु कृतेष्वपि ॥ ३ ॥ हासेऽन्यहासने चैव कन्दर्पे परनिन्दने ।

कौत्कुच्ये विहिते चापि कदाचिच्च प्रमादतः ॥ ४ ॥ भक्तस्त्रीदेशभूपालाश्रितवार्ताकृतावपि । कषायविषयादीनामनुषङ्गे प्रमादतः ॥ ५ ॥ श्रवणावर्जनादौ च किंचिद्धीनाधिकोदिते । बहिर्वसतितो द्रव्याद्भावाच्च स्खलिते तथा ॥ ६ ॥ अनाभोगाच्च सहसाकाराद्भङ्गे व्रतस्य च । आभोगादपि सूक्ष्मे च स्नेहे हासे भयेपि च ॥७॥ शोके प्रदोषे कन्दर्पे वादे च विकथाचये । एतेषु सर्वथा कार्यं प्रतिक्रमणमञ्जसा ॥८॥ प्रतिक्रमणमात्रेण शुद्धिः स्याच्छुद्धचेतसाम् । प्रतिक्रमणाकरणे न शुद्धिः स्यात्कदाचन ॥ ९ ॥" इति प्रतिक्रमणप्रायश्चित्तं संपूर्णम् ॥ ॥ अथालोचनाप्रतिक्रमणरूपतदुभयार्हं यथा—"संभ्रमाद्वा भयाद्वापि सहसाकारतोपि वा । गुर्वादेरवरोधेन संघस्य प्रार्थनादपि ॥ १ ॥ महतः संघकार्याद्वा सर्वव्रतविखण्डने । तथातीचारकरण आचारे शङ्कितेऽपि वा ॥ २ ॥ दुर्भाषिते वा दुश्चिन्ताकृतौ दुश्चेष्टितेपि वा । प्रमादाद्विस्मृते चापि कर्तव्ये दिनरात्रिजे ॥ ३ ॥ ज्ञानदर्शनचारित्रविभङ्गे च प्रमादतः । सहसाकारतश्चापि नियमानां विखण्डने ॥ ४ ॥ उपयुक्तस्य शुद्धस्य साधोः संयमशालिनः । एवमादिषु कार्येषु तद्युग्मार्हं विनिर्दिशेत् ॥ ५ ॥" इति तदुभयार्हं प्रायश्चित्तं संपूर्णम् ॥ ॥ अथ विवेकार्हम्—"वसने भोजने पाने शय्यायामासनेपि च । अज्ञानत्वाच्छुद्धिहीने गृहीते शुद्धिरुज्झनात् ॥ १ ॥ उदयास्तमविज्ञाय गृहीते वसनाशने । अज्ञात्वा कारणाद्भोगोपभोगे तस्य चाहृते ॥ २ ॥ ज्ञाते सूर्योदयास्ते च तत्त्यागाच्छुद्धिरुत्तमा । प्रायश्चित्तमिदं प्राहुर्विवेकार्हं विचक्षणाः ॥ ३ ॥" इति विवेकार्हं प्रायश्चित्तं संपूर्णम् ॥ ॥ अथ कायोत्सर्गार्हं यथा—"गमनागमने चैव विहारे निर्गमेपि वा । दृष्टे श्रुते वा सावद्ये सा-

कायोत्सर्गेण संशुद्धिर्जायते तत्त्ववेदिनाम् ॥२॥"
वपस्वप्नदर्शने ॥ १ ॥ नद्यादिलङ्घने नावारोहणे शीघ्रसर्पणे । कायोत्सर्गेण संशुद्धिर्जायते तत्त्ववेदिनाम् ॥ २ ॥
एतद्विशेषो यथा—"भक्ते पाने तथा शय्यासने शुद्धेपि चाहृते । उच्चारे च प्रस्रवणे विप्रादन्यांगमापिते ॥ ३ ॥
बहिर्हस्तशतादेव धर्मागाराद्विनिर्गमे । अर्हद्गुरुमहत्साधुशय्यासनपरिग्रहे ॥ ४ ॥ उच्छ्वासपञ्चविंशत्या कायो-
त्सर्गं नियोजयेत् । स्वप्ने प्राणिवधादीनां महाव्रतविघातिनाम् ॥ ५ ॥ विधेयः शतमुच्छ्वासान्कायोत्सर्गो महा-
तमभिः । उच्छ्वासाष्टोत्तरशतं चतुर्थं च विधीयते ॥ ६ ॥ आचारे खण्डिते चापि प्रायश्चित्तमिदं स्मृतम् । दैव-
सिके शतमुच्छ्वासाः पञ्चाशद्रात्रिकेपि च ॥ ७ ॥ शतत्रये पाक्षिके चातुर्मासे शतपञ्चकम् । अष्टोत्तरसहस्रं तु
वार्षे आवश्यके स्मृतम् ॥ ८ ॥ श्रुतोद्देशसमुद्देशानुज्ञासु सकलासु च । सप्तविंशतिमुच्छ्वासान्कायोत्सर्गे वि-
निर्दिशेत् ॥ ९ ॥ अष्टोच्छ्वासान्प्रतिक्रमण(कर्म)प्रस्थानयोरपि । अयं विशेषः सर्वेषु कायोत्सर्गेषु दृश्यते
॥ १० ॥" इति कायोत्सर्गार्हं प्रायश्चित्तं संपूर्णम् ॥ ॥ अथ तपोर्हं प्रायश्चित्तं यथा—"तपस्तु ज्ञानातिचारा-
दिषु कालादिभ्रंशरूपेषु महाव्रतखण्डनकरेषु पातके चोपदिश्यते ॥ तथाच तपसः संज्ञा यथा—"पूर्वार्धं चैव
मध्याह्नं कालातिक्रमके लघु । विलम्बः पितृकालश्च पुरिमार्धाह्वयं दिशेत् ॥ १ ॥ पादो यतिः स्वभावश्च प्राणा-
भारः सुभोजनम् । अरोगः परमः शान्तो नामान्येकासने विदुः ॥ २ ॥ अरसो विरसः पूतो निःस्नेहो यति-
कर्म च । त्रिपादो निर्मदः श्रेष्ठो नाम (स्यात्) निर्वृतिष्विदम् ॥ ३ ॥ अम्लं सजलमाचाम्लं कामघ्नं च द्विपा-
दकम् । धातुकृच्छ्रीतमेकान्नं नामाचाम्ले विनिर्दिशेत् ॥ ४ ॥ अनाहारश्चतुःपादो मुक्तो निःपाप उत्तमः । गुरुः

प्रशमनो धर्मा उपवासाभिधा इमाः ॥ ५ ॥ पथ्यः परः समो दान्तश्चतुर्धाख्या इतीरिताः । पुण्यं सुखं हितं भद्रं षष्ठाख्यं परिकल्पयेत् ॥ ६ ॥ प्रमितं सुन्दरं कृत्यं दिव्यं मित्रं सिचाष्टमम् । धार्यं धैर्यं बलं काम्यं दशमे नामसंग्रहः ॥ ७ ॥ दुष्करं निर्वृतिर्मोक्षो नाम द्वादशमे मतम् । सेव्यं पवित्रं विमलं चतुर्दशममुच्यते ॥ ८ ॥ जीव्यं विशिष्टं विख्यातं नाम ससोपवासकम् । प्रवृद्धं वर्धमानं चाष्टोपवासविशेषणम् ॥ ९ ॥ नव्यं रम्यं तारकं च नवानशनसंज्ञितम् । दशोपवाससंयोगे ग्राह्यमादेयमन्तिमम् ॥ १० ॥ इति प्रत्याख्यानसंज्ञा ॥ ॥ अथ स्थूलसूक्ष्मतपोविभागसंकलना यथा—"परमेष्ठिमहामन्त्रो १ नमस्कारयुतस्तथा २ । पौरुषी चैव ३ पूर्वार्धं ४ मापराह्णं ५ द्व्यासनं ६ ॥ १ ॥ एकासनं ७ निर्विकृति ८ स्तथा चाम्ल ९ मुपोषणं १० । परस्परविभागेन गणनैषामुदीर्यते ॥ २ ॥ नमस्कारमहामन्त्रनिःशेषपरिवर्तनात् । चतुश्चत्वारिंशतं च ४४ सार्धया नियमो भवेत् ॥ ३ ॥ नमस्कारयुताख्यस्य १ त्र्यशीति ८३ मंत्रपाठतः । सार्धाच्च मन्त्र[सं]युक्तं द्वया भवति पौरुषी ॥ ४ ॥ पञ्चविंशत्युत्तरेकशत १२५ मन्त्रविवर्जनात् । मन्त्रयुक्तत्रयात्सार्धपरख्या स्याद्विलम्बकः ३ ॥ ५ ॥ द्विशती २०० मन्त्रपाठाच्च मन्त्रयुक्तचतुष्टयात् । स्पार्धादर्धतृतीयायाः पौरुष्याच्च विलम्बकः ॥ ६ ॥ पादोनद्वयसंख्यायाः संभवत्यापराह्णिकम् ४ । सार्धद्विशत्या २५० मन्त्रस्य षट्कान्मन्त्रयुतस्य च ॥ ७ ॥ पादोनाच्च त्रिपौरुष्या पूर्वार्धद्वयतोपि वा । अपराह्णेन सार्धेन पूर्यते च द्व्यासनम् ॥ ८ ॥ मन्त्रपाठपञ्चशत्या ५०० रुद्धमन्त्रयुतादपि । सपादात्पौरुषीषट्कात्पूर्वार्धकचतुष्टयात् ॥ ९ ॥ सार्धद्वयापराह्णाच्च युग्मसंख्याद्व्यासनात् । प्रत्याख्यानमेकभक्तं

पूर्यते गतसंशयम् ६ ॥ १० ॥ सप्तषष्टियुतायाश्च षट्शत्या ६६७ मन्त्रपाठतः । पञ्चयुक्तदशसंख्यमन्त्रयुक्तप्रयो-
गतः ॥ ११ ॥ अष्टकादेव पौरुष्याः पूर्वार्धं सार्धपञ्चकात् । सार्धं त्रयापराह्णाच्च द्व्या शतत्रयादपि ॥ १२ ॥ सा-
र्धैकभक्ताज्जायेत तपो नैर्वृतिकाभिधम् । मन्त्रपाठसहस्राच्च १००० सार्धद्वाविंशतेरपि ॥ १३ ॥ मन्त्रयुक्ता द्वाद-
शकात्पौरुषीणामतिक्रमात् । पूर्वार्धाष्टकतश्चापि पञ्चकादापराह्णिकात् ॥ १४ ॥ चतुर्द्व्यासनादेवमेकभक्तद्व्या-
दपि । सार्धैर्नैर्विकृता ज्ञेयमाचाम्लं परिपूरितम् ॥ १५ ॥ सहस्रद्वय २००० मन्त्राच्च तथा मन्त्रयुतादपि । पञ्च-
चत्वारिंशतस्तु पौरुष्या जिनसंख्यया ॥ १६ ॥ पूर्वार्धानां षोडशकाद्दशकादापराह्णिकात् । द्व्यासनाष्टकाच्चैव
एकभक्तचतुष्टयात् ॥ १७ ॥ त्र्यान्नैर्वृकृतानां च तथा चाम्लद्व्यादपि । उपवासव्रतं पूर्णमेकं तद्दिवसे
कृतम् ॥ १८ ॥ लघुव्रतैर्यथा पूर्णं संजायेत गुरुव्रतम् । तथा गुरुव्रतेनापि पूर्णानि स्युर्लघून्यपि ॥ १९ ॥ व्रता-
दीनां परावर्तः प्रायश्चित्तोपधानयोः । अशक्तानां खण्डलघु क्रियते हि गुरुव्रतम् ॥ २० ॥ शक्तानां लघुसं-
मील्य नीयते [च] गुरुव्रतम् । तपःकार्येषु चान्येषु यद्यथा तत्तथा व्रतम् ॥ २१ ॥" इति तपोऽर्हं प्रायश्चित्तं संपू-
र्णम् ॥ ॥ अथ ज्ञानातिचारेषु प्रायश्चित्तकरणं काल १ विनय २ बहुमानो ३ पधान ४ निह्नव ५ व्यञ्जना ६
र्थे तदुभयातिक्रमादष्टविधोऽतिचारस्तत्र प्रायश्चित्तं यथा—"उद्देशेऽध्ययने चैव श्रुतस्कन्धे तथाङ्गके । अना-
गाढेषु चैत्येषु प्रायश्चित्तं क्रमाद्भवेत् ॥ १ ॥ विरसः पितृकालश्च प्राणाधारो द्विपादकः । अगाढेषु तथैतेषु प्राय-
श्चित्तं क्रमाद्भवेत् ॥ २ ॥ कालातिक्रमणं पाद आचाम्लं धर्म एव च । सूत्रार्थभङ्गे सामान्ये कामप्रमुक्तमेव च

॥ ३ ॥ उद्देशवाचनाद्येषु प्राप्ताप्राप्तेषु कर्हिचित् । अविसर्जनतः काले मण्डल्या अप्रमार्जनात् ॥ ४ ॥ सर्वेषु
निर्महोऽमीषु गुरुरक्षासनाशनात् । अनागाढे तथा गाढे भग्ने किंचिच्च सर्वथा ॥ ५ ॥ तत्त्यागे सत्क्रिये च
भग्ने किंचिच्च सर्वथा । क्रमात्पथ्यं तथा पुण्यं सजलं पथ्यमेव च ॥ ६ ॥" इति ज्ञानातिचारतपः ॥ ॥ अथ
दर्शनातिचारे निःशङ्कितादिलङ्घने यथा—"शङ्काद्येष्वतिचारेषु चतुःपादतपो भवेत् । मिथ्योपबृंहणाज्ज्ञेयं
प्रायश्चित्तं क्रमादिदम् ॥ ७ ॥ विलम्बः सर्वसाधूनां साध्वीनां च सुभोजनम् । सजलं श्रावकाणां चाश्रावि-
काणां गुरुस्तथा ॥ ८ ॥ साध्वादीनां चतुर्णां च मिथ्याशास्त्राभिभाषणात् । विरसश्च विलम्बश्च प्राणाधारो
द्विपादकः ॥ ९ ॥ यतेस्तु दर्शनाचारे परिवारादिपालने । व्रतसाधर्मिकार्थं च प्रायश्चित्तं न किंचन ॥ १० ॥"
इति दर्शनाचारप्रायश्चित्तम् ॥ ॥ अथ चारित्राचारप्रणिधानयोगादिलङ्घने प्रायश्चित्तं यथा—"एकेन्द्रियाणां
संघट्टे तथा तत्परितापने । महासंतापने चैव तथोत्थापनमेव च ॥ ११ ॥ आद्ये विरसमाख्यातं द्वितीये च
विलम्बकम् । प्राणाधारस्तृतीये च चतुर्थे सजलं भवेत् ॥ १२ ॥ विकालाख्यानन्तकायानां संघट्टेऽल्पतापने ।
महासंतापने चैव तथोत्थापन एव च ॥ १३ ॥ प्रथमे पितृकालश्च द्वितीये विरसस्तथा । तृतीये चैककामघ्नश्च-
तुर्थे धर्म एव च ॥ १४ ॥ पञ्चेन्द्रियाणां संघट्टे तथेषत्परितापने । अत्यन्ततापने चैव स्थानादुत्थापने क्रमात्
॥ १५ ॥ यतिस्वभावः प्रथमे द्वितीये धातुकृत्पुनः । तृतीये पथ्य उद्दिष्टश्चतुर्थे भद्र एव च ॥ १६ ॥ मृषावाद-
व्रते नूनमदत्तादान एव च । द्रव्यक्षेत्रकालभावैर्भग्ने हीनाधिकोत्तमे ॥ १७ ॥ कार्यं क्रमादेकभक्तं कामघ्नमुक्त-

मेव च । लिप्ते पात्रे स्थिते रात्रावनाहारः प्रकीर्तितः ॥ १८ ॥ पुण्यं चैव विधातव्यं निशायां शुष्कसंनिधौ । स्थिते निश्यशने कार्यं सुन्दरं मुनिसत्तमैः ॥ १९ ॥ दोषाः पिण्डे षोडश स्युरुद्गमे चातिदारुणाः । षोडशोत्पादनायां स्युरेषणायां दशैव ते ॥ २० ॥ पञ्चग्रासैषणायां च चत्वारिंशच्च सप्त च । एवं पिण्डे सर्वदोषास्तत्प्रायश्चित्तमुच्यते ॥ २१ ॥ आधाकर्मो १ देशिकं २ च प्रतिकर्म ३ विमिश्रकम् ४ । स्थापना ५ प्राभृतं ६ चैव प्रादुःकरणमेव च ७ ॥ २२ ॥ क्रीतं ८ तथा च प्रामित्यं ९ परिवर्तित १० मेव च । अभ्याहृतं ११ तथोद्भिन्नं १२ मालापहृतमेव च १३ ॥ २३ ॥ आच्छेद्य १४ मनुसृष्टं च १५ तथा चाध्यवपूरकम् १६ । पिण्डोद्गमे षोडशैते दोषा धीरैरुदाहृताः ॥ २४ ॥ धात्री १ दूती २ निमित्तं च ३ जीविका च ४ वनीपकः ५ । चिकित्सा ६ क्रोध ७ मानौ ८ च माया ९ लोभौ १० च संस्तवः ११ ॥ २५ ॥ विद्या १२ मन्त्र १३ स्तथा चूर्णं १४ योगो १५ वैमूलकर्म च १६ । उत्पादनायां पिण्डस्य दोषाः स्युः षोडशाप्यमी ॥ २६ ॥ शङ्कितं १ म्रक्षितं २ चैव निक्षिप्तं ३ पिहितं ४ तथा । संहृतं ५ पादको ६ न्मिश्रे ७ ततश्चापरिमाणकम् ८ ॥ २७ ॥ लिप्तं ९ चैव परिभ्रष्टं १० दश दोषा उदाहृताः । गृहिसाधूभयभवाः पञ्चाथ ग्रासजाः पुरः ॥ २८ ॥ संयोजना १ प्रमाणं च २ तथाङ्गारश्च ३ धूमकः ४ । कारणं ५ सप्तचत्वारिंशद्दोषाः पिण्डजा अमी ॥ २९ ॥ एतेषां च यथायुक्त्या प्रायश्चित्तमुदाहृतम् । एषणोत्पादना ग्रासोद्गमदोषाः समाः क्वचित् ॥ ३० ॥ कर्मणोद्देशिके चैव तथा च परिवर्तिते । पाखण्डैः स्वग्रहैर्मिश्रैर्यादरप्राभृतेऽपि च ॥ ३१ ॥ सत्प्रत्यपायाहृते च पिण्डे लोभेन चाहृते । प्रत्येकानन्तवत्पा-

यैर्निक्षिप्ते पिण्डितेऽथ वा ॥ ३२ ॥ संहृते च तथोन्मिश्रे संयोगाङ्गारयोरपि । द्विविधे च निमित्ते च प्रायश्चित्तं गुरुः परम् ॥ ३३ ॥ कर्मण्यौद्देशिके मिश्रे धात्र्यादौ च प्रकाशने । पुरः पश्चात्संस्तवे च कुत्सिते कर्मणि स्फुटम् ॥ ३४ ॥ संसक्ते पुनरालिप्ते करे पात्रे च कुत्सितैः । परीते चैव निक्षिप्ते पिहिते संहृतेपि च ॥ ३५ ॥ मिश्रिते कुत्सितैरेवमतिमाने प्रमाणके । धूमे दुष्कारणे चैव प्रायश्चित्तं च धातुहृत् ॥ ३६ ॥ कृतेऽप्युपकृते पूतौ परम्परगते तथा । अदनान्ते तथा मित्रेऽनन्तरानन्तरागते ॥ ३७ ॥ एवमादिषु कर्तव्यमेकभक्तमघापहम् । ओघोपकरणात्पूतौ स्थापिते प्राभृतेपि च ॥ ३८ ॥ उद्देशिके लोकपरे प्रमेये परिवर्तिके[1] । परभावे तथा क्रीते स्वग्रामादाहृतेपि च ॥ ३९ ॥ मालोपहृतके चादौ जघन्ये दर्दरादिके । चिकित्सायां संस्तवे च सूक्ष्मे च म्रक्षिते त्रिके ॥ ४० ॥ दायकोपिहिते चैव प्रत्येकं च परम्परान् । स्थापिते पिहिते मिश्रेऽनन्तरे च तथाविधः ॥ ४१ ॥ शङ्कायां दोषयुक्तायां कालातिक्रम इष्यते । इतरस्थापिते सूक्ष्मे सरजस्के तथा विधिः ॥ ४२ ॥ स्निग्धे च म्रक्षिते मिश्रे स्थापिते च परम्परम् । परिष्ठापनिकायां च विरसं प्राहुरुत्तमाः ॥ ४३ ॥ एतेषु सर्वदोषेषु विस्मृतेरप्रतिक्रमात् । पिण्डीभूतेषु कर्तव्यं यतिभिर्धर्ममीहितैः ॥ ४४ ॥ धावने लङ्घने चैव संघर्षे सत्वरं गतौ । क्रीडायां कुहनायां च वान्ते गीते स्मितेऽधिके ॥ ४५ ॥ परुषे भाषणे चैव प्राणिनां रुत एव च । स्यात्प्रायश्चित्तमेतेषु पथ्यं गीतार्थभाषितम् ॥ ४६ ॥ त्रिविधस्योपधेर्भ्रंशे विस्मृते प्रतिलेखने । क्रमादमोपने श्रेष्ठं पूर्वार्धं

[1] परिवर्तितै इति पाठः ।

न सुभोजनम् ॥ ४७ ॥ एतत्त्रयस्याकरणे कामघ्नं प्राहुरादिमाः । गृहीते शोषिते चैव [सु]धौते चोपमण्डले
॥ ४८ ॥ दाने भोगे तथाऽऽदाने क्रमात्तप उदीरितम् । प्राणाधारश्च कामघ्नः पथ्यः पापहरः स्मृतः ॥ ४९ ॥ स-
वेषां चैव करणे पुण्यं प्राहुर्मुनीश्वराः । पतने मुखवस्त्रस्य तथा धर्मध्वजस्य च ॥ ५० ॥ विरमश्च तथा पथ्यो
नाशे पथ्यो हितस्तयोः । अनाध्याने च कालस्य परिभोगे च विस्मृते ॥ ५१ ॥ आद्ये निःस्नेहमादिष्टं द्वितीये
धर्मे एव च । अविधेरशनादीनां कालातिक्रम इष्यते ॥ ५२ ॥ असंवृतौ च प्राणस्य त्रिभूम्यप्रतिलेखने । नि-
र्मदं कथयन्तीह सर्वस्यासंवृतावथ ॥ ५३ ॥ अनादाने तथा भङ्गे कालातिक्रममादिशेत् । तपसां प्रतिमानां
चाभिग्रहाणां समानतः ॥ ५४ ॥ पक्षे चैव चतुर्मासे वत्सरे चाप्रतिक्रमे । क्रमात्रिपादकामघ्नचतुःपादाः प्रकी-
र्तिताः ॥ ५५ ॥ कायोत्सर्गे वन्दने च तथा शक्रस्तवेपि च । उत्सारिते वेगकृते भग्ने ज्ञेयं क्रमात्तपः ॥ ५६ ॥
एतमध्याह्नपादाख्यं सर्वेषु सजलं पुनः । चरित्राचार आख्यातं प्रायश्चित्तं तपोमयम् ॥ ५७ ॥" ॥ ॥ अथ तप
आचारे तपःप्रायश्चित्तं यथा—"संजाते तु तपःस्नाने लघ्वम्लपरमाकृतौ । तद्भङ्गे चापरः कार्यो द्विवा चाप्रति-
लेखिते ॥ ५८ ॥ व्युत्सृष्टे निशि मूत्रादौ वासरे शयनेपि च । क्रोधे च दीर्घे भीते च सुरभिद्रव्यसेवने ॥५९॥
अशने चाऽऽसवादीनां कालातिक्रममादिशेत् । ज्ञातिबन्धनभेदार्थं निंवासात्स्वजनालये ॥ ६० ॥ निस्नेहः
शेषलोकानामालये च विलम्बकः । एवं च तपआचारे प्रायश्चित्तं विनिर्दिशेत् ॥ ६१ ॥" ॥ ॥ अथ वीर्याति-
चारे स्खलिते तपःप्रायश्चित्तं यथा—"निवेशाच्च प्रमादौघादासने प्रतिलेखिते । तत्कार्ये यत्र सवधे प्रायश्चि-

त्तमुदाहृतम् ॥ ६२ ॥ अनापृच्छ्य स्थापने च गुरून्सर्वेषु वस्तुषु । अरसः स्यात्तपःशक्तिगोपनाच्च सुभोजनम् ॥ ६३ ॥ मुक्तः सर्वासु मायासु दर्पात्पश्चेन्द्रियादिषु । उद्वेजने च संक्लिष्टकर्मणां करणेऽपि च ॥ ६४ ॥ दीर्घमेकत्र वासे च ग्लानवत्खाङ्गपालने । सर्वोपधस्तथा पूर्वपश्चाचाप्रतिलेखने ॥ ६५ ॥ एतेषु सर्वदोषेषु चतुर्मासव्यतिक्रमे । वत्सरातिक्रमे चापि साधुभिर्ग्राह्यमिष्यते ॥ ६६ ॥ तथा च छेदरूपेपि प्रायश्चित्ते समाहितः । न गर्वं तद्विधानेन दध्याद्वाचंयमः क्वचित् ॥ ६७ ॥ छेदादिकरणाच्छुद्धे प्रायश्चित्ते महामुनिः । कुर्वीत तपसा शुद्धिं जीवकल्पानुसारतः ॥ ६८ ॥ यच्च नोदितं पापमत्रैवालोचनाविधौ । भिन्नादिना प्रवक्ष्यामि षण्मासं शुद्धिमुत्तमाम् ॥ ६९ ॥ भिन्नं चापि विशिष्टं च चतुःषण्मासकालतः । लघुसंज्ञं गुरुसंज्ञं विरसः प्रतिमाश्रयात् ॥ ७० ॥ चतुर्मासेषु लघु यत्पूर्यं तद्विरसादिभिः । गुरुः षण्मासिकं पूर्यं सुन्दरादिभिरन्तराः ॥ ७१ ॥ सिद्धान्तस्यानुसारेण क्रमं ज्ञात्वा च पाप्मनाम् । उक्तपापेषूक्ततपो देयं च विरसादिकम् ॥ ७२ ॥ एतत्सर्वं यत्पुरोक्तं तत्सामान्यविधिश्रितम् । प्रायश्चित्तविभागस्तु देयो द्रव्यादिभिर्बुधैः ॥ ७३ ॥ द्रव्यं क्षेत्रं तथा कालं भावं पुरुषसेवनम् । संलक्ष्याधिकमूनं वा प्रायश्चित्तं च दीयते ॥ ७४ ॥ अशनादिर्भवेद्द्रव्यं क्षेत्रं देशपुरादि वा । कालः शीतोष्णवर्षादिर्भावो ग्लानिनिरामयौ ॥ ७५ ॥ चतुर्धा कथिता शास्त्रे पुरुषप्रतिसेवना । आवृत्तिश्च १ प्रमादश्च २ दर्पः ३ कल्प ४ श्चतुर्थकः ॥ ७६ ॥" ॥ द्रव्ये यथा—"आहारं सुलभं पुष्टं दृष्ट्वा दद्यात्तपोधिकं । हीनं च दुर्लभं ज्ञात्वा दद्यादूनं तथाधिकम् ॥ ७७ ॥" ॥ क्षेत्रे यथा—"देशे च सरसारूपे तपो-

न्यूनमाहुर्मनीषिणः ॥ ७८ ॥ वर्षासु शिशिरे चापि प्रमितं धैर्यदुष्करौ ।
धिकमुदीरयेत् । तथा च निर्जले रूक्षे न्यूनमाहुर्मनीषिणः ॥ ७८ ॥ वर्षासु शिशिरे चापि
पूर्वार्धाचाम्लपुण्यान्तमुष्णकाले विनिर्दिशेत् ॥ ७९ ॥ तस्मिन्नवविधं दृष्ट्वा तपोयोजनमागमे । विदधीत परं
काले विभागं तपसां तथा ॥ ८० ॥" ॥ भावे यथा—"दृष्टस्य प्रचुरं तीव्रं तपो दद्यादशङ्कितम् । स्तोकं
ग्लानस्य सुकरमथ कालं विलङ्घयेत् ॥ ८१ ॥" ॥ पुरुषप्रतिसेवनायां यथा—"अगीतार्थाश्च गीतार्था अक्ष-
माश्च क्षमा अपि । अशठाश्च शठाश्चैव दुष्टाः सन्तस्तथाविधाः ॥ ८२ ॥ परिणामाश्च वस्तूनां हीनमध्याधिकाः
पुनः । कायशक्तिः स्वतश्चापि मध्या हीनाधिका नृणाम् ॥ ८३ ॥ निर्मन्तवो मन्तुमन्तः स्युः केचित्स्वल्पमन्तवः ।
शल्यस्थिता दयार्हाश्च चत्वारः पूर्वभाषिताः ॥ ८४ ॥ सापेक्षेतरमन्दाश्च पुरुषा ये प्रकीर्तिताः । यः शक्तिधृ-
तिकल्पस्थस्तथा सर्वगुणैर्युतः ॥ ८५ ॥ अधिकं च तपःकर्म तस्य देयं विचक्षणैः । तथा हीनगुणस्यापि हीनं
देयं तथाविधम् ॥ ८६ ॥ अत्यन्तहीनस्य पुनस्तपस्त्यागं विनिर्दिशेत् । ये च पालितचारित्रा अज्ञातार्थास्त-
थाऽसहः ॥ ८७ ॥ तेषां च प्रतिमं देयं विरसादिविभाजितम् । यदेतच्च तपःकर्म प्रायश्चित्ते पुरोदितम् ॥ ८८ ॥
एतत्प्रमादयुक्तस्य सर्वं देयं मनीषिभिः । दर्पमुक्तस्य च स्थानान्तरं किंचिद्विशेषतः ॥ ८९ ॥ आवृत्तिभाजः
किंचिदाधिकं किंचिच्च दर्पवत् । प्रतिक्रमणमाख्येयं कल्पे तदुभयं च वा ॥ ९० ॥ प्रमादोऽनवधानत्वं दर्परूप-
वल्गादिकः । आवृत्तिकार्यकाङ्क्षित्वं कल्प आचारसंश्रयः ॥ ९१ ॥ एतासु कर्मबन्धः स्यात्सेवनासु चतसृषु ।
पूर्वोक्तविधिना देयं प्रायश्चित्तं च तास्वपि ॥ ९२ ॥ आलोचनायाः कालं च ज्ञात्वा क्लेशाद्विशुद्धितः । हीना-

॥ ७ ॥ उत्पन्नोत्पत्स्यमानो वा यत्र दोषस्ततस्ततः । क्षेत्राद्द्रव्यात्तथा भावात्कालाद्दूरे दधीत तम् ॥ ८ ॥ यावन्मात्रं पुराकालं येन पापं समाहृतम् । तावत्कालं स कुर्वीत तपोऽनन्तरभाषितम् ॥ ९ ॥ एकाकी मौनसंयुक्तो बहिर्भूतो गणाज्जनात् । ध्यानमुज्झितभिक्षावान्कुर्याच्चिन्ताविवर्जितं ॥ १० ॥" इति पराञ्चिकप्रायश्चित्तं संपूर्णम् ॥ अनवस्था तपःकर्मप्रायश्चित्तं पराञ्चिकम् । श्रुतकेवलिना छिन्नं शेषं तीर्थावधि स्फुटम् ॥ इति जीवकल्पानुसारेण नानाविधप्रायश्चित्तं संपूर्णम् ॥

संक्षेपात्कथितः पूर्वो जीवकल्पोऽनगारिणाम् । अथ संश्रावकाणां तु कथ्यते तपसैव हि ॥ १ ॥ यथा—
"शङ्कां काङ्क्षां विचिकित्सां मिथ्यादृष्टिप्रशंसनम् । तत्संस्तवं मनाकृत्वा शीतं बाढं गुरुः पुनः ॥ २ ॥ अवन्दने जिनानां च पूजापत्रादिताडने । प्रतिमायाश्च पतने मार्जने विधिवर्जिते ॥ ३ ॥ एतेषु प्रायश्चित्तं तु क्रमादुग्रत उच्यते । पञ्चविंशतिमन्त्रैश्च पञ्चभिः पञ्चभिस्तथा ॥ ४ ॥ यतिस्वभावेन पुनश्चतुर्थ्यः शुद्धिरिष्यते । पार्श्वस्थादिमुनीनां च गुरुबुद्ध्यानुदानतः ॥ ५ ॥ पञ्चविंशतिसंख्येन मन्त्रजापेन शुद्ध्यति । पट्टिकापुस्तकादीनां ज्ञानोपकरणस्य च ॥ ६ ॥ पातनात्पादसंघट्टात्पञ्चमन्त्रजपाच्छुभम् । प्रत्याख्याने मन्त्रयुते ग्रन्थिमुष्टियुते तथा ॥ ७ ॥ भग्ने त्रिशतसंख्येन मन्त्रजापेन शुद्ध्यति । एतेषां ज्ञातशङ्केषु त्रिगुणो जाप इष्यते ॥ ८ ॥ अदाने त्यक्तविकृतेः प्रायश्चित्तं च पूर्ववत् । केचिच्छंकादिके प्राहुः पञ्चरूपेऽतिचारके ॥ ९ ॥ प्रत्येकमुत्तमं तत्र गाढागाढे विशेषतः । द्वीन्द्रियाणां त्रीन्द्रियाणां चतुरक्षभृतामपि ॥ १० ॥ संघट्टे चाल्पसंतापे सुभोजनमुदाहृतम् ।

गाढसंतापने शीतं मारणे चोत्तमं विदुः ॥ ११ ॥ पञ्चेन्द्रियाणां संघट्टे पादमल्पे च तापने । शीतसंतापने गाढे निःपापः परिकीर्तितः ॥ १२ ॥ मारणे पुण्यमाख्यातमेव आद्यव्रते विधिः । स्थूले चैव मृषावादे हीने मध्ये तथाधिके ॥ १३ ॥ यतिस्वभावः सजलं निःपापश्च क्रमात्स्मृतः । एवं चौर्यव्रते ज्ञेयं प्रायश्चित्तमसत्यवत् ॥ १४ ॥ प्रायश्चित्तमथाख्येयं श्राद्धानां मैथुनव्रते । गृहीते नियमे स्वस्य कलत्रस्यापि संगमात् ॥ १५ ॥ उपवासव्रतं प्राहुः प्रायश्चित्तं विचक्षणाः । वेश्यायाः संगमादेव शुद्धिर्भद्र उदाहृता ॥ १६ ॥ हीनजातिपरस्त्रीणामज्ञानात्त्रये (?) थवा । आदेयं परमं प्राहुः प्रायश्चित्तं मुनीश्वराः ॥ १७ ॥ विशुद्धकुलवध्वाश्च भोगे मूलं यथोदितम् । ग्राह्यं च नरसंभोगे मुक्तं मैथुनचिन्तने ॥ १८ ॥ सुन्दरं निविडे रागे प्रायश्चित्तमुदीरितम् । स्थूले परिग्रहे हीने मध्यमे परमे तथा ॥ १९ ॥ यतिस्वभावं कामघ्नं चतुःपादं क्रमाद्विदुः । दिग्व्रतस्यातिक्रमे तु शर्वरीभोजने तथा ॥ २० ॥ पातकस्य प्रशमनं विदुः प्रशमनं परम् । मांसाशने मद्यपाने ग्राह्यं पातकघातनम् ॥२१॥ अनन्तकाये भुक्ते तु निःपापं पापनाशनम् । त्यक्तप्रत्येकभोगेषु शीतमाहुर्मनीषिणः ॥ २२ ॥ कर्मादानेषु सर्वेषु कृतेषु कथितं सुखम् । अनर्थदण्डेनाहारः प्रोक्ते सामायिके कृते ॥ २३ ॥ देशावकाशिके भग्ने पौषधे भग्न एव च । अतिथीनामनर्चायां क्रमात्तप उदीर्यते ॥ २४ ॥ आनाहारश्च कामघ्नं कामघ्नं मुक्त एव च । प्रायश्चित्तमिदं प्रोक्तं व्रतेषु द्वादशस्वपि ॥ २५ ॥ अयमेव श्राविकाणां प्रायश्चित्तविधिः स्मृतः । विशेषः कोपि तासां तु पुनरेव प्रकीर्त्यते ॥ २६ ॥ सामायिकव्रतस्थायाः स्थितायाः पौषधेऽथवा । नृसंघट्टे मन्त्रजापः पञ्चविंशतिसं-

धिकं च मध्यं च दद्दीत तदपेक्षया ॥ ९३ ॥ द्रव्यादिगुणबाहुल्ये प्रायश्चित्तं बहूदितम् । तद्धीनत्वे तेषवहीनं त्यागमत्यन्तहीनके ॥ ९४ ॥ सर्वहीनं पुनः कर्म कुर्यादन्यत्तपः समम् । वैयावृत्यादिकरणं सुसाधूपासनं तथा ॥ ९५ ॥" इति तपोर्हं प्रायश्चित्तं संपूर्णम् ॥

अथ छेदार्हं यथा—"तपसा गर्वितः कश्चिदसमर्थस्तपस्यथ । अश्रद्दधानस्तपसि तपसा यो न दम्यते ॥ १ ॥ अत्यन्तपरिणामश्च गुणभ्रंशिकृतादरः । प्रपद्यमानश्छेदे च पार्श्वस्थादिवितापितः ॥ २ ॥ तपोभूमिमतिक्रान्त्वा सच्छेदं प्रतिपद्यता । तेन चाजन्मपर्यन्तं विधेयं विरसादिकम् ॥ ३ ॥ यदारब्धमाद्यदिन आमृत्यु तदुपासनम् । छेदार्हमिति गीतार्थैः प्रायश्चित्तमुदीर्यते ॥ ४ ॥" इति च्छेदार्हं प्रायश्चित्तं संपूर्णम् ॥ ॥ अथ मूलार्हं यथा—"पञ्चेन्द्रियाणामावृत्तेर्घाते दर्पाच्च मैथुने । समस्तविषयाणां च गाध्यात्संततसेवने ॥ १ ॥ मूलोत्तरगुणानां च विभङ्गे तपसो मदे । ज्ञानदर्शनचारित्रविभ्रष्टे करणोत्थिते ॥ २ ॥ अवसन्ने च पार्श्वस्थे मूलकर्मादिकारिणि । भिक्षौ प्रायस्तपोभ्रष्टे संप्रासे च पराश्रिताम् ॥ ३ ॥ प्रायश्चित्तं तत्र भवेत्पूर्वं च्छेदः कियद्दिनम् । ततः पाराञ्चिकं चैव ततो मूलं समादिशेत् ॥ ४ ॥ मूलमित्युच्यते यद्यथा भ्रष्टं च संयमे । तत्तथैव प्रकुर्वाणः प्राणान्निर्मलतां नयेत् ॥ ५ ॥" इति मूलप्रायश्चित्तं संपूर्णम् ॥ ॥ अथ अनावृत्तार्हं यथा—"प्रदुष्टो जीवहिंसां यः कुरुते स्तैन्यमेव च । पराञ्चिकेभ्यः पापेभ्यो न बिभेति कदाचन ॥ १ ॥ आवृत्तिषु च दुष्टासु

वर्तमानो निरन्तरम् । स लिङ्गक्षेत्रकालाद्यैरनवस्थाप्य एव हि ॥ २ ॥ लिङ्गेन येन दुष्कर्म कृतं तदपनीयते ।
गेहैरक्यैर्यिहितं पापं भावैस्तेषां च वर्जयेत् ॥ ३ ॥ भावलिङ्गं समादाय स्थाप्यं क्षेत्रेऽप्यदूषणे । यावत्कालं पाप-
कर्म कृतं तावत्तपोऽधिकम् ॥ ४ ॥ विधेयं पापहीनत्वे मासषट्कं समासतः । परमेष्ठ्याशातनायां वर्षमेकं
तथा तपः ॥ ५ ॥ वर्षं द्वादश वर्षाणि तत्पापस्यानुसारतः । भवेदुज्झितभिक्षावान्स्तोकोपकरणान्वितः ॥ ६ ॥
अथवा सर्वमुपधिं त्यजेत्पाणिपरिग्रहः । वन्दते वन्द्यतो नैव परिहारं दिने दिने ॥ ७ ॥ कुर्वीताहारमध्येऽपि
किंचित्किंचिन्मनागपि । संवासो यतिभिः सार्धं श्राद्धैर्वा तस्य कल्पते ॥ ८ ॥ नालापस्तैः समं क्वापि मुक्त्वा-
र्हत्प्रमुखस्तवम् । प्रायश्चित्तमनावृत्तं प्राहुरेतत्कृतागमाः ॥ ९ ॥" इति अनावृत्तप्रायश्चित्तं संपूर्णम् ॥ ॥ अथ
पाराश्चिकं प्रायश्चित्तं यथा—"अर्हन्तमागमं सूरिं श्रुतज्ञं गणनायकम् । गुणिनं बहुदर्पेण क्रोधेनाशातयन्सदा
॥ १ ॥ स्वलिङ्गे परलिङ्गे च दुष्टो बहुकपायवान् । अत्यन्तविपयासक्तो गुरोराज्ञादिघातकः ॥ २ ॥ अवध्यवध-
कारी च राजगुर्वङ्गनारतः । प्रकाशदुष्टकर्मा च स्त्यानर्द्ध्या च पुरस्कृतः ॥ ३ ॥ अनङ्गसेवानिरतः कुस्थानकक्रू-
तादरः । सप्तव्यसनसंसक्तः परद्रव्यग्रहोद्यतः ॥ ४ ॥ परद्रोहकरो नित्यं पिशुनत्वकृतादरः । पराश्चिपातक-
स्यास्य प्रायश्चित्तं तथाविधं ॥ ५ ॥ सलिङ्गोत्क्षेत्रतो वापि कालादाचारतस्तथा । वसतेश्च निवासाच्च वाटका-
वृन्दतस्तथा ॥ ६ ॥ पुराद्ग्रामाच्च देशाच्च कुलात्संघाद्गणादपि । स बहिः क्रियते तस्य प्रवेशं क्वापि नार्पयेत

1 पाठान्तरीति पाठः ।

॥ ७ ॥ उत्पन्नोत्पत्स्यमानो वा यत्र दोषस्ततस्ततः । क्षेत्राद्द्रव्यात्तथा भावात्कालाद्दूरे दधीत तम् ॥ ८ ॥ याव-
न्मात्रं पुराकालं येन पापं समाहृतम् । तावत्कालं स कुर्वीत तपोऽनन्तरभाषितम् ॥ ९ ॥ एकाकी मौनसं-
युक्तो बहिर्भूतो गणाज्जनात् । ध्यानमुज्झितभिक्षावान्कुर्याच्चिन्ताविवर्जितं ॥ १० ॥" इति पराञ्चिकप्रायश्चित्तं
संपूर्णम् ॥ अनवस्था तपःकर्मप्रायश्चित्तं पराञ्चिकम् । श्रुतकेवलिना छिन्नं शेषं तीर्थावधि स्फुटम् ॥ इति जीव-
कल्पानुसारेण नानाविधप्रायश्चित्तं संपूर्णम् ॥

संक्षेपात्कथितः पूर्वो जीवकल्पोऽनगारिणाम् । अथ संश्रावकाणां तु कथ्यते तपसैव हि ॥ १ ॥ यथा—
"शङ्कां काङ्क्षां विचिकित्सां मिथ्यादृष्टिप्रशंसनम् । तत्संस्तवं मनाकृत्वा शीतं बाढं गुरुः पुनः ॥ २ ॥ अवन्दने
जिनानां च पूजापत्रादिताडने । प्रतिमायाश्च पतने मार्जने विधिवर्जिते ॥ ३ ॥ एतेषु प्रायश्चित्तं तु क्रमाद्-
ग्रत उच्यते । पञ्चविंशतिमन्त्रैश्च पञ्चभिः पञ्चभिस्तथा ॥ ४ ॥ यतिस्वभावेन पुनश्चतुर्थ्यः शुद्धिरिष्यते । पार्श्व-
स्थादिमुनीनां च गुरुबुद्ध्यानुदानतः ॥ ५ ॥ पञ्चविंशतिसंख्येन मन्त्रजापेन शुद्ध्यति । पट्टिकापुस्तकादीनां
ज्ञानोपकरणस्य च ॥ ६ ॥ पातनात्पादसंघट्टात्पञ्चमन्त्रजपाच्छुभम् । प्रत्याख्याने मन्त्रयुते ग्रन्थिमुष्टियुते तथा
॥ ७ ॥ भग्ने त्रिशतसंख्येन मन्त्रजापेन शुद्ध्यति । एतेषां ज्ञातशङ्केषु त्रिगुणो जाप इष्यते ॥ ८ ॥ अदाने त्य-
क्तविकृतेः प्रायश्चित्तं च पूर्ववत् । केचिच्छंकादिके प्राहुः पञ्चरूपेऽतिचारके ॥ ९ ॥ प्रत्येकमुत्तमं तत्र गाढागाढे
विशेषतः । द्वीन्द्रियाणां त्रीन्द्रियाणां चतुरक्षभृतामपि ॥ १० ॥ संघट्टे चाल्पसंतापे सुभोजनमुदाहृतम् ।

ख्यकः ॥ २७ ॥ तत्रापि वालस्वीकारे कार्यमोद्यमञ्जसा । पञ्चाणुव्रतभङ्गे तु तासां शोधनमन्तिमम् ॥ २८ ॥ प्रत्याख्यानवियुक्तौ तु चतुःपादोप्यकारणात् । प्रत्याख्याने च चरमे कृते प्राहुः सुभोजनम् ॥ २९ ॥ जीवोदकस्य संशोषे षट्पदीनां च घातने । मठचैत्यनिवासे च तासां शोधनमन्तिमम् ॥ ३० ॥ श्राविका यस्य तपसः प्रत्याख्यानं भनक्ति च । प्रत्याख्यानं तदेव स्यात्करणीयं तया पुनः ॥ ३१ ॥ आलोचनाव्रतं चैव क्षामणं जिनपूजनम् । स्वाध्यायोऽनशनं चेति षट्कर्माण्यन्तकर्मणि ॥ ३२ ॥" इति प्रायश्चित्ताधिकारे श्रावकजीतकल्पः संपूर्णः ॥

अथ लघुजीतकल्पविधिना यतिप्रायश्चित्तम् ॥ अथान्यविधिना साधुश्राद्धयोः पापनाशनः । प्रायश्चित्तविधिः शुद्धः शास्त्रदृष्ट्या निगद्यते ॥ १ ॥ पूर्वं च पञ्चाचारेषु लङ्घितेषु प्रमादतः । प्रायश्चित्तं यतीनां च तत्तद्भेदैरुदीर्यते ॥ २ ॥ पूर्वं सूत्राशातनायां कामघ्नं शुद्धये विदुः । तस्यामर्थगतायां च चतुःपादः प्रकीर्तितः ॥ ३ ॥ आशातनायां हीनायां मध्यमोत्तमयोरपि । विलम्बः परमः शीतं क्रमात्तप उदाहृतम् ॥ ४ ॥ सामान्याशातनायां तु परमाः पञ्च कीर्तिताः । काले चावश्यके स्वाध्यायप्रस्थापन उज्झिते ॥ ५ ॥ विरसोऽक्षपरित्यागे व्याख्याने धर्म ईरितः । अविधाने निषद्याया गुरोर्निःपाप उच्यते ॥ ६ ॥ कायोत्सर्गवन्दनयोस्त्यागेप्येवं तपः स्मृतम् । अनागाढेषु योगेषु देशभङ्गे च धातुहृत् ॥ ७ ॥ सर्वभङ्गे प्रशमनं प्रायश्चित्तं प्रचक्षते । तथाचागाढयोगेषु देशभङ्गे गुरुः स्मृतः ॥ ८ ॥ सर्वभङ्गे सुन्दरं च पूतं सद्गुणनिन्दने । ज्ञानाचार इदं प्रोक्तं प्रायश्चित्तं

मुनीश्वरैः ॥ ९ ॥ आगातनायां देवस्य गुरोः स्थाप्यगुरोरपि । शान्तेश्च स्थापनाचार्यनाशे शीतमुदाहृतम्
॥ १० ॥ कालातिक्रम आदिष्टस्त(थै)स्यैवाप्रतिलेखने । अवतारणकादीनां करणे ग्राह्यमिष्यते ॥ ११ ॥ शङ्का-
त्रिपञ्चके कार्यं देशादेव विलम्बकम् । तत्राचार्यस्य परमं पाठकस्य च धातुहृत् ॥ १२ ॥ आचार्यस्य पाठकस्य
मुक्तं शीतं क्रमात्कचित् । इत्येवं दर्शनाचारे प्रायश्चित्तमुदाहृतम् ॥ १३ ॥ व्रते प्राणातिपाताख्ये पृथ्व्यप्सेजो-
मरुत्वताम् । प्रत्येकशाखिनां चैव संस्पर्शे विरसं विदुः ॥ १४ ॥ अगाढतापे पूर्वार्धं गाढतापे सुभोजनम् । वि-
घातने पुनः शीतं वदन्ति श्रुतवेदिनः ॥ १५ ॥ सूक्ष्माम्बुतेजसोः स्पर्शे पूर्वार्धं शोधनं परम् । तयोर्बादरयोः
स्पर्शे कामघ्नं विदुरादिमाः ॥ १६ ॥ स्पर्शे जलचराणां तु प्राणाधारं विनिर्दिशेत् । जलार्द्रवस्त्रसंघट्टे कथयन्ति
सुभोजनम् ॥ १७ ॥ कम्बलेनाप्तेजसोश्च स्पर्शने विरसं मतम् । ज्वलने शङ्कितपदं स्पृष्टे सजलमिष्यते ॥ १८ ॥
हरिताङ्कुरसंमर्दे क्रोशेक्रोशे गुरुर्गुरुः । हरितानां च संस्पर्शे भूयसा बीजमर्दने ॥ १९ ॥ सुन्दरं किसलोन्मर्दे
घर्माच्छुद्धिर्दिनेदिने । नद्युत्तारे गुरुः कार्यस्तस्माच्छुद्धिरुदीरिता ॥ २० ॥ तथाचानन्तकायानां चतुस्त्रिद्व्यक्षदे-
हिनाम् । संस्पर्शे पितृकालस्तु शीतं मर्दलवादने ॥ २१ ॥ आगाढपरितापे तु प्राणाधारः प्रकीर्तितः । एषां
च गाढसंतापे सजलं शोधनं विदुः ॥ २२ ॥ विघाते च तथैतेषां धर्मपुण्यमपि कचित् । असंख्यद्वीन्द्रियध्वंसे
पुण्यद्वयमुदाहृतम् ॥ २३ ॥ असंख्यत्रीन्द्रियध्वंसे शुद्धौ पुण्यत्रयं विदुः । असंख्यचतुरक्षाणां ध्वंसे पुण्यचतु-
ष्टयम् ॥ २४ ॥ असंख्यासंज्ञिनां ध्वंसे शोधनं पुण्यपञ्चकम् । षट्पदीबहुनाशे तु कर्तव्यं पुण्यपञ्चकम् ॥ २५ ॥

पञ्चेन्द्रियाणां संघट्टे प्राणाधारे विशुद्धिकृत् । तेषामागाढसंतापे कामघ्नं पापनाशनम् ॥ २६ ॥ तेषां च गाढसंतापे निःपापः पापखण्डनः । विघातने पुनः पुण्यं बहूनां च विघातने ॥ २७ ॥ तेषां तत्संख्यया पुण्यकारणानि विनिर्दिशेत् । जीवघाते प्रमादेन प्रायश्चित्तं न कोपतः ॥ २८ ॥ अमार्जिताङ्गकण्डूयाकरणे निर्मदं वदेत् । भित्तिस्तम्भासनादौ च संस्पृष्टे मार्जनोज्झिते ॥ २९ ॥ युवतीवस्त्रसंघट्टे कायभूम्यप्रमार्जने । एतेषु सर्वदोषेषु विरसं शोधनं विदुः ॥ ३० ॥ आर्द्रामलकमाने च पृथिवीकायमर्दने । चुलुमात्रसचित्ताम्बु पुरःपाश्चात्यकर्मसु ॥ ३१ ॥ द्विक्रोशमात्रमुडुपनौभ्यां प्रतरणेऽम्बुनः । नाभिमात्राम्बुसंस्पर्शे बह्वग्निस्पर्शने तथा ॥ ३२ ॥ भक्तस्त्रीदेशराड्वार्ताकरणे क्रोधमानयोः । मायायाश्च संविधाने प्रचुरे च प्रमादतः ॥ ३३ ॥ शय्या (?) दानप्रमाणायां तथा सन्निधिभोजने । तथा च कालवेलायां जलपानेऽङ्घ्रिधावने ॥ ३४ ॥ एतेषु सर्वदोषेषु कामघ्नं शोधनं परम् । पूर्वार्धार्हमथो पापशोधनं परिकीर्त्यते ॥ ३५ ॥ उपयोगस्याकरणे गोचरस्याप्रतिक्रमे । तयोरविधिना कृत्ये नद्याः संतरणे तथा ॥ ३६ ॥ अमार्जने क्रमणयोर्गृहिप्रत्यक्षमेव च । करणे च पुरीषादेर्भाषणे गृहिभाषया ॥ ३७ ॥ तथार्हत्प्रतिमापार्श्वे कफादिपरिमोचने । मात्रादिधारणे चैव ग्लानादीनामपालने ॥ ३८ ॥ श्राद्धेभ्यः सहवासिभ्यः कारिते चाङ्गमर्दने । अकालसंवाहनायां शय्याद्यप्रतिलेखने ॥ ३९ ॥ द्वारप्रवेशे निर्याणे तद्भूम्यप्रतिलेखने । स्वाध्यायेऽप्यकृते चैव जलान्नग्रहणे तथा ॥ ४० ॥ पारणा मुखवस्त्रं च विनाभुक्तान्नपानयोः । गुरोरग्रेप्यनालोच्य प्राशने भक्तपानयोः ॥ ४१ ॥ अकाले च मलोत्सर्गभूमौ गमन एव च । अ-

नाचाराचरणे च चैत्यसाध्वोरवन्दने ॥ ४२ ॥ गृहस्थासनभोगे च ईर्यापथ्यप्रतिक्रमे । मुखवस्त्रेण सचित्तवस्तु-
ग्रहण एव च ॥ ४३ ॥ क्षणमात्रं पदत्राणवाहनादिपरिग्रहे । अचक्षुर्विषये मार्गे परिभ्रमण एव वा ॥ ४४ ॥
पात्राद्युपधिवृन्देभ्यो बीजादेरपसारणे । एतेषु शुद्धिविषये कालातिक्रम इष्यते ॥ ४५ ॥ दीर्घाध्वगमने चैव
दीर्घकालरुजासु च । वर्षारम्भे वस्त्रशौचे त्रिष्वाचाम्लमुदाहृतम् ॥ ४६ ॥ केचिदेष्वेव च प्राहुरादेयं शोधनं
परम् । संवत्सरचतुर्मास्योरन्ते ग्राह्यमदूषणे ॥ ४७ ॥ चतुर्मासावसाने च सर्वातीचारशोधने । प्राहुः पुण्यं
केचिदन्ये आगमाहुः सुसाधवः ॥ ४८ ॥ अथो तपोतिचारस्य प्रायश्चित्तमुदीर्यते । यत्तपो भज्यते तत्र तत्तपः
पुनरिष्यते ॥ ४९ ॥ ग्रन्थ्यादिनियमादीनां निर्गमेऽष्टोत्तरं शतम् । मन्त्रं जपेदिदं प्रोक्तं प्रायश्चित्तं तपोविधौ
॥ ५० ॥ प्रत्याख्यानस्य भङ्गे च कदाचित्स्मृत्यभावतः । तद्दिने न त्यजेत्तच्च प्रत्याख्यानं समाहितः ॥ ५१ ॥
विचिन्त्य भग्नो नियमः प्रायश्चित्तान्न शुद्ध्यति । अस्मृत्या चैव भग्नस्य शुद्धिः स्याद्गुरुवाक्यतः ॥ ५२ ॥ सत्यां
शक्तौ नेत्र किंचिज्ज्ञानाभ्यासस्तपोदमम् । वैयावृत्यं च शुश्रूषा संयमोपायमेव च ॥ ५३ ॥ कुर्यात्तस्य विशु-
द्ध्यर्थं सुभोजनमुदाहृतम् । योगवाहिमुनीनां च प्रायश्चित्तमथोच्यते ॥ ५४ ॥ असंघट्टितमन्नादि भुङ्क्ते चेद्यो-
गसाधकः । निशि संस्थापयेत्पात्रं पाना[न्ना]दिविगुण्ठितम् ॥ ५५ ॥ भुक्तेऽन्नपानमात्मन्नं संनिधं कथितं च
वा । अकाले च मलोत्सर्गं कुरुते मूत्रमेव च ॥ ५६ ॥ स्थण्डिलाप्रतिलेखी च स्थण्डिलातीतकर्मकृत् । असाधुक-
रवृत्तिस्थः क्रोधं मानं च कैतवम् ॥ ५७ ॥ लोभं वा कुरुते गाढं पूर्णां पञ्चमहाव्रती । विराधयति वा किंचिद-

भ्याख्यानं करोति वा ॥ ५८ ॥ पैशुन्यं परनिन्दां च भूमौ वा पुस्तकं क्षिपेत् । कक्षायां च स्थापयेद्वा गृह्णीयाद्दुष्करेण वा ॥ ५९ ॥ लेपयेदथ निष्पूतैः पुस्तकाशातनाकरः । एतेषु सर्वदोषेषु निःपापः पापनाशनः ॥ ६० ॥ शुभाशुभस्य शब्दस्य गन्धस्य च रसस्य च । स्पर्शस्य चैव रूप्यस्य रागे सजलमिष्यते ॥ ६१ ॥ प्रत्येकमेषां विद्वेषे चतुःपादः प्रकीर्तितः । उपविष्टावश्यके च सजलं पापनाशनम् ॥ ६२ ॥ सत्यां शक्तावुपविष्टप्रतिक्रमण एव च । आवश्यकस्याकरणे तमालच्छदनेषु च ॥ ६३ ॥ एलालवङ्गक्रमुकचन्द्रजातीफलेषु च । भुक्तेषु चैव ताम्बूलपञ्चसौगन्धिकाशने ॥ ६४ ॥ तथा च गुरुसंघट्टे दिवास्वापेप्यकारणात् । गन्त्र्या योजनयाने च पादुभिर्योजनक्रमे ॥ ६५ ॥ योजनोऽनक्षविषये साधूनां क्रान्त एव वा । अमाधुकरवृत्तौ च वन्दनेऽविधिना कृते ॥ ६६ ॥ योजनं गमनादेव नौभिः क्षुद्रप्लवैश्च वा । रजन्यां योजनं याने स्त्रीकथाकरणे तथा ॥ ६७ ॥ स्वाध्याये च चतुःकालमकृते च प्रमादतः । योजनं च नदीमध्यगमने चरणक्रमात् ॥ ६८ ॥ तटिनीदीर्घिकादीनां संचारादप्रतिक्रमे । मण्डलीवञ्चने चैव साधूनाम(भि)निमन्त्रणे ॥ ६९ ॥ एतेषु सर्वदोषेषु धर्मः पापविशुद्धिकृत् । प्राशुकानां च कायस्य भक्षणे लघु शोधनम् ॥ ७० ॥ अधिकां विकृतिं भुक्त्वा निर्मदेन विशुद्ध्यति । पञ्चेन्द्रियस्यैकस्यापि दर्पेण प्रतिघातने ॥ ७१ ॥ आदेय (?) न परं शुद्धिर्महापापादुदाहृता । पञ्चेन्द्रियाः पीडिता वा यावन्तः स्युः सजीविताः ॥ ७२ ॥ तेषु प्रत्येकमाधेयं भद्रं पापस्य हानये । पुरुषस्त्रीविघाते च प्रत्येकं शुद्धिरन्तिमात् ॥ ७३ ॥ मृषावादे तथा स्तेये तथा चैव परिग्रहे । भग्ने जघन्यतः कार्यं प्रत्येकं च सुभोजनम्

॥ ७४ ॥ मध्यभङ्गे तथैकान्नं मुक्तमुत्कृष्टभङ्गके । दर्पाद्भङ्गे त्रयाणां च शोधने ग्राह्यमिष्यते ॥ ७५ ॥ स्वप्ने भङ्गे
त्रयाणां च कायोत्सर्गा उदाहृताः । चतुःप्रमाणैः प्रत्येकं सचतुर्विंशतिस्तवैः ॥७६॥ मैथुनस्य काङ्क्षणे स्याच्छुद्धिः
स्यादुत्तमात्परा । कृते च करसंभोगे सुखं शोधनमुत्तमम् ॥ ७७ ॥ तस्मिंश्च बहुधा कृते कार्यमादेयमञ्जसा ।
स्त्रिया चैव तिरश्चा वा पण्ढेन पुरुषेण वा ॥ ७८ ॥ मैथुने भाषिते कृते प्रत्येकं मूलमिष्यते । स्त्रीणां स्तनादि-
स्पर्शे च विप्रेयं धातुरुत्परम् ॥ ७९ ॥ वस्त्रस्पर्शे च नारीणां यतिधर्ममुदाहरेत् । कैश्चिदष्टोत्तरशतं मन्त्रजाप
इह स्मृतः ॥ ८० ॥ दर्पेण ब्रह्मचर्यस्य भङ्गे ग्राह्यमुदाहृतम् । स्वप्नेऽपि व्रतभङ्गेऽत्र कायोत्सर्गं समाचरेत् ॥ ८१ ॥
समम्ययुक्तसंख्यातः सचतुर्विंशतिस्तवम् । लिप्तपात्रस्थापने च शुष्कसन्निधिभोजने ॥ ८२ ॥ प्रत्येकमुपवासेन
शुद्धिरस्मादुदाहृता । दोरके मुखवस्त्रे वा पात्रे तृप्तिकरादिके ॥ ८३ ॥ निशि लिप्तस्थिते कार्यमुपवासेन शोध-
नम् । वैकृते सन्निधौ भुक्ते पुण्यमाहुर्विशोधनम् ॥ ८४ ॥ दिवा स्थितं दिवा भुक्तमिति भङ्गचतुष्टयम् । आद्ये
भङ्गे मूलं प्रोक्तं शेषभङ्गत्रयेऽष्टमम् ॥ ८५ ॥ शुष्कसन्निधिरक्षायां मध्याह्नः स्याद्विशोधनम् । तस्मिन्नार्द्रे स्था-
पिते च निःपापात्स्यादपापता ॥ ८६ ॥ केचिदाहुः शुद्धयेऽत्र पूर्वाह्नं मुनिपुङ्गवाः । आधाकर्माशने मुक्तं शान्तं
पूत्यशने तथा ॥ ८७ ॥ आत्मक्रीतपरक्रीतभागे कामन्नमिष्यते । उद्देशिकाशने शीतं शेषेषु गुरुरिष्यते ॥ ८८ ॥
अग्निरस्थापनाभोगे निःस्नेहः शोधनं परम् । चिरस्थापनभोगे तु कालातिक्रम उच्यते ॥ ८९ ॥ सूक्ष्मप्राभृति-
काभोगे यतिकर्म विशोधनम् । बादरप्राभृते भुक्ते चतुःपादो विशोधनः ॥ ९० ॥ पृथिव्या रूपिते भुक्ते निर्मदं

प्राहुरादिमाः । हस्ते पादे पङ्कलिप्ते कालातिक्रम इष्यते ॥ ९१ ॥ अप्तेजोवायुसंमिश्रभुक्ते सजलमादिशेत्। एभिराम्रक्षिते चैव भुक्ते श्रेष्ठौघघातनः ॥ ९२ ॥ परग्रामाहृते भुक्ते स्वीयग्रामाहृते तथा । क्रमादाद्ये च सजलं द्वितीये लघु कीर्तितम् ॥ ९३ ॥ प्रत्येकवनवाय्वम्बुतेजःस्वप्राशुकेषु च । भुक्तेषु मुक्त आख्यातः प्रमादे पापशोधनः ॥ ९४ ॥ पश्चात्कार्ये च कामघ्नं शोधनं परमं मतम् । सचित्तैः पिहिते चापि संश्रिते वापि चाशने ॥ ९५ ॥ भुक्ते गुरुश्चाल्पतरे दायके लघुरिष्यते । दायकेन्धे च कामघ्नं परे स्याच्छुद्धये गुरुः ॥ ९६ ॥ कालान्यथो वाऽतीते च कृते निर्मद इष्यते । तस्यैव परिभोगे च चतुःपादो विशुद्धये ॥ ९७ ॥ शय्यातरीयपिण्डस्य खादने धर्ममादिशेत् । तथा वर्षति पर्जन्ये आनीतेऽन्नेऽम्लमादिशेत् ॥ ९८ ॥ रूक्षपारिष्ठापने च स्निग्धत्यागे तथैव च । क्रमाच्छोधनमाख्यातं पूर्वाह्णं धर्म एव च ॥ ९९ ॥ अन्नादिलिप्तपात्रस्य स्थापने शीतमिष्यते । अकाले च विड्उत्सर्गे विट्पात्रे कृमिसंभवे ॥ १०० ॥ सविट्कृमित्वे वान्तौ च प्रत्येकं कार्य उत्तमः । उपधौ पतिते प्राप्ते विस्मृतः प्रतिलेखने ॥ १०१ ॥ परैर्निवेदिते वापि जघन्ये विरसं विदुः । मध्यमे पितृकालश्च शान्तमुत्कृष्ट एव च ॥ १०२ ॥ सर्वोपधौ च पतिते लब्धे मन्त्रजपः स्मृतः । अश्वेन्दुवेद ४१२ संख्यातस्ततः शुद्धिः प्रजायते ॥१०३॥ जघन्ये चोपधौ किंचिद्विस्मृतः प्रतिलेखने । कामघ्नं शोधनं प्रोक्तं धर्मे धौते च हारिते ॥१०४॥ मध्यमे चोपधौ धौते हारिते शीतमादिशेत् । उत्कृष्टे हारिते धौते शोषणे धर्म एव च ॥ १०५ ॥ सर्वोपधौ हारिते च गुरोरग्रे निषेदिते । उच्छृङ्खले च शुद्धौ स्यात्पुण्यं मुनिभिराहृतम् ॥ १०६ ॥ उपधिस्तु जघन्यः

पात्रस्य स्थापनं चैव मुखवस्त्रं चतुर्थकम् ॥ १०७ ॥ मध्यमश्चोपधिः प्रोक्तः पटलाः पा-
स्त्राद्गुच्छकः पात्रकेसरी । पात्रस्य स्थापनं चैव मुखवस्त्रं चतुर्थकम् ॥ १०७ ॥ उत्कृष्टश्चोपधिः पात्रं द्वौ कल्पौ सूत्रसंभवौ ।
ग्रपन्धनम् । रजोहृतिश्चोलपट्टो रजस्त्राणं च मात्रकम् ॥ १०८ ॥ उत्कृष्टश्चोपधिः पात्रं द्वौ कल्पौ सूत्रसंभवौ ।
गक ऊर्णामयश्चैवमुपधेः कल्पनां विदुः ॥ १०९ ॥ सर्वोपधौ च वर्षासु धौते ग्राह्यं विशुद्धये । अदत्ते गुरुणा
मुक्ते दत्तोऽन्येभ्यः सुखं वदेत् ॥ ११० ॥ मुखवस्त्रेप्यसंघट्टे तथा धर्मध्वजेपि च । शुद्धये विरसः कैश्चिदनाहार
उदाहृतः ॥ १११ ॥ अलब्धेऽप्यथ लब्धे वा हारिते मुखवाससि । उपवासः परं शुद्ध्यै सूरिभिः समुदाहृतः
॥ ११२ ॥ धर्मध्वजे हारिते च न प्रासे सुखमिष्यते । धर्मध्वजाननसिचोरेवं तप उदीरितम् ॥ ११३ ॥ नष्ट-
योश्च द्वयोः प्रासौ निःपापः शुद्धिहेतवे । अप्रासौ च द्वयोः कार्यं पुण्यमेव मनीषिभिः ॥ ११४ ॥ मुखवस्त्राप्र-
तिलेखे यतिकर्म समाचरेत् । धर्मध्वजाप्रतिलेखे पितृकालो विशोधनम् ॥ ११५ ॥ अकृते घस्रचरमप्रत्याख्याने
च निर्मदम् । प्रत्याख्याने पानसत्के संख्यास्वाध्यायजेऽथवा ॥ ११६ ॥ प्रत्याख्यानेप्यरचिते सुभोजनमपाप-
कृत् । चतुर्विधाहारजे च प्रत्याख्यानेप्यनिर्मिते ॥ ११७ ॥ सन्ध्यायां च विभाते च प्रत्याख्यानाद्यनुद्यमे ।
कृतस्यापि हि भङ्गे च पितृकालो विशुद्धिकृत् ॥ ११८ ॥ स्थण्डिलाप्रतिलेखे च यतिकर्मविशुद्धये । स्थण्डिले-
ऽन्यप्रतिलेखिते मलोत्सर्गतो निशि ॥ ११९ ॥ गुरुः सर्वपात्रभङ्गे सजलं शोधनं परम् । सूचीनिर्गमने मुक्तं
प्राहुः केचित्तथान्तिमम् ॥ १२० ॥ कपाटं वा कटं वा प्रतिलिख्योद्घाटनाल्लघु । षट्पदीगाढसंघट्टे प्राणाधारो
विशोधनः ॥ १२१ ॥ कालस्याप्रतिक्रमणे गोचरस्याप्रतिक्रमे । नैषेधिक्याद्यकरणे यतिकर्म समादिशेत् ॥१२२॥

मिथ्यादृष्टिप्रशंसने ॥ ८ ॥ पार्श्वस्थादिषु वात्सल्ये देशादेकान्नमादिशेत् । सर्वतस्तेषु सुक्तं च तथाऽसंयमघोषणे ॥ ९ ॥ देशतः प्राहुरेकान्नं सर्वतो धर्म एव च । यतिप्रवचनश्लाघ्येषु [1]प्रशस्तोपबृंहणम् ॥ १० ॥ अकृते चैव वात्सल्ये सामर्थ्येऽप्यप्रभावने । प्रत्येकं देशतो ज्ञेयं शोधनं धातुहृत्परम् ॥ ११ ॥ सर्वतश्चाकृतेष्वेषु प्रत्येकं गुरुरिष्यते । अर्हद्बिम्बाशातनायाः सामान्यकरणे गुरुः ॥ १२ ॥ ततो विशेषाद्बिम्बस्य पादनिष्पूतमर्शने । धूपपात्रकुम्पिकादिवस्त्रादिलगने लघुः ॥ १३ ॥ अविधेर्मार्जने शान्तं विलम्बो बिम्बपातने । केचिदाहुः प्रतिमाया जघन्याशातने लघुम् ॥ १४ ॥ मध्यमाशातने शीतमेकान्नं बहुशातने । अथवा चरणाचारेष्वप्तेजोवायुभूरुहाम् ॥ १५ ॥ स्पर्शने कारणाभावाद्यतिकर्म समादिशेत् । आगाढतापने प्राहुः पितृकालं विशुद्धये ॥ १६ ॥ गाढसंतापने धर्मं सजलं तदुपद्रवे । तथा ह्यनन्तकायानां चतुर्द्वित्र्यक्षधारिणाम् ॥ १७ ॥ संघट्टे पितृकालः स्याच्चतुःपादउपद्रवे । एकस्यापि द्वीन्द्रियस्य विनाशे सुक्त इष्यते ॥ १८ ॥ द्वयोर्विनाशे द्विगुणस्त्रयाणां त्रिगुणः पुनः । यावद्वीन्द्रियघातः स्यात्तत्संख्या गुरवः स्मृताः ॥ १९ ॥ त्र्यक्षाणां चतुरक्षाणां विनाशेप्येवमादिशेत् । असंख्यानां द्वीन्द्रियाणां विनाशे स्यात्सुखद्वयम् ॥ २० ॥ सुखत्रयं त्रीन्द्रियाणां चतुरिन्द्रियदेहिनाम् । असंख्यानां विघाते स्याच्छुद्धिर्भद्रचतुष्टयात् ॥ २१ ॥ पञ्चेन्द्रियाणां संघट्टे शुद्धये स्यात्सुभोजनम् । अगाढतापने शीतं गाढसंतापने गुरु ॥ २२ ॥ प्रमादादेकपञ्चाक्षघाते पुण्यं समादिशेत् । एवं प्रमादात्पञ्चाक्षा यावन्तः

1 प्रशस्य इति पाठः ।

दर्पादेकं च पञ्चाक्षं हत्वा संशुद्धिरन्ति-
स्युर्विघातिताः ॥ २३ ॥ तावन्मात्राणि भद्राणि संभवन्ति विशुद्धये । देयास्तावन्त आदेयाः प्राणिनः शुद्धिहेतवे
मात् ॥ २४ ॥ एवं दर्पेण घतसंख्याः पञ्चाक्षाः स्युर्विघातिताः । निन्दायां विरसं शुद्ध्यै नियमे सति सर्वदा ॥ २६ ॥ प्रत्या-
॥ २५ ॥ तपोतिचारेऽथ तपः कुर्वतां विघ्ननिर्मितौ । अप्रत्याख्यानतः शुद्धिः श्राद्धस्य विरसं शुभम् ॥ २७ ॥ पौरुषीमन्त्र-
ख्यानाकृतौ धर्मौ नियमस्याप्यभावतः । आचाम्लपूतधर्माणां भङ्गे कार्यं च तत्पुनः ॥ २८ ॥ वमनादिवशाद्भङ्गे शान्तं वि-
युतयोः शान्तपूर्वार्धयोरपि । ग्रन्थिमुष्ट्याभिग्रहादिभङ्गे मध्याह्नमादिशेत् ॥ २९ ॥ दिने दिने लघुप्रत्याख्यानस्याकरणे लघु ।
रसमेव वा । कैश्चिदष्टोत्तरशतमन्त्रजापो निगद्यते । तथा वीर्यातिचारेऽपि
मन्त्रयुक्पौरुषीग्रन्थियुतादीनां च भङ्गतः ॥ ३० ॥ देवार्चनं च स्वाध्यायं तपोदानातिविक्रियाः । कायोत्सर्गावश्यकादेस्तोकत्वकरणे
सामर्थ्ये बहुले सति ॥ ३१ ॥ प्रत्येकं परमं प्राहुस्तपोज्ञानविभासनम् । मायया कुर्वतो धर्मौ द्रव्यात्क्षेत्राच्च कालतः ॥ ३३ ॥
सति ॥ ३२ ॥ भावतोऽभिग्रहं किंचित्सत्यां शक्तावगृह्णतः । तथा खण्डयतश्चापि पूर्वार्धं शुद्धिहेतवे ॥ ३४ ॥ नियमे सति
देवार्चावन्दनादेरनिर्मितौ । पूर्वार्धं गुरुपादानां ध्वान्ते पादादिघट्टने ॥ ३५ ॥ आशातने तथान्यस्मिञ्जघन्ये
लघुरिष्यते । मध्यमे परमं शीतमुत्कृष्टं च प्रदर्श्यते ॥ ३६ ॥ अस्थापितस्थापनायां पादस्पर्शे तु निर्मदः । स्था-
पितस्थापनाचार्यपादघट्टे विलम्बकः ॥ ३७ ॥ पातने स्थापनायस्य तस्य चैव प्रणाशने । तत्क्रियाया अकरणे
क्रमाच्छोध-
फनाच्छान्तो रसो लघुः ॥ ३८ ॥ व्रतिनामासनादाने मुखवस्त्रादिसंग्रहे । अम्बुपानेऽन्नाशने च

वीर्यातिचारप्रस्तावे तपःकर्म यथाविधि । पाक्षिकादौ विधेयं हि स्वशक्त्या क्षुल्लकादिभिः ॥ १२३ ॥ तेषामकरणे दोषः प्रायश्चित्तमिहोच्यते । पाक्षिके तपसि भ्रष्टे क्षुल्लकस्य तु निर्मदः ॥ १२४ ॥ यतेर्यतिस्वभावश्च स्थविरस्य विलम्बकः । उपाध्यायस्य कामघ्ना आचार्यस्य गुरुः पुनः ॥ १२५ ॥ चतुर्मासतपोभ्रंशे क्षुल्लकस्य विलम्बकः । प्राणाधारस्तु वृद्धस्य भिक्षोः सजलमिष्यते ॥ १२६ ॥ उपाध्यायस्य धर्मस्तु तथाचार्यस्य वै सुखम् । सांवत्सरतपोभ्रंशे क्षुल्लकस्य सुभोजनम् ॥ १२७ ॥ स्थविरस्य द्विपादं तु भिक्षोरुत्तम ईरितः । उपाध्यायस्य भद्रं तु तथाचार्यस्य सुन्दरम् ॥ १२८ ॥ ज्ञानातिचारप्रस्तावे प्रायश्चित्तमुदीर्यते । अनागाढेषु योगेषु योगोद्देशे च खण्डिते ॥ १२९ ॥ तथा चाध्ययनस्यापि श्रुतस्कन्धस्य चैव हि । अङ्गस्य चैव क्रमशः प्रायश्चित्तमथोच्यते ॥ १३० ॥ यतिकर्म च मध्याह्नं परमं धर्म एव च । अथागाढेषु योगेषु भग्न उद्देशकर्मणि ॥ १३१ ॥ तथाध्ययनकार्ये च श्रुतस्कन्धे तथाङ्गके । क्रमाद्विलम्बः परमं कामघ्नं सुखमेव च ॥ १३२ ॥ अपात्रस्य सूत्रदाने निर्मथस्य तथैव हि । क्रमात्सजलमुक्तौ च कथितौ शुद्धिहेतवे ॥ १३३ ॥ संप्राप्ते च तथा पात्रे सूत्रार्थानर्पणे गुरुः । तथा च तपआचारे ग्रन्थियुक्तस्य भञ्जने ॥ १३४ ॥ मन्त्रयुक्तस्य भङ्गे च पौरुषीभङ्ग एव च । अहश्चरमभङ्गे च भङ्गेऽन्यनियमस्य च ॥ १३५ ॥ पानाहारादिभङ्गे च कालस्याप्यप्रतिक्रमे । स्वाध्यायाप्रस्थापने च कायोत्सर्गाद्यनिर्मितौ ॥ १३६ ॥ इर्यापथादिस्थानेषु तत्पथिक्यप्रतिक्रमे । आवश्यके चैव कायोत्सर्गस्याकरणेऽपि च ॥१३७॥ एतेषु सर्वदोषेषु निर्मदः परिकीर्तितः । आवश्यके कायोत्सर्गावकृतौ लघुरिष्यते ॥ १३८॥ त्रयस्याकरणे शान्त

आवश्यकाकृतौ गुरुः । वन्दनेऽप्येवमेव स्यात्प्रायश्चित्तमभेदतः ॥ १३९ ॥ सजीवोदकपाने च सुखं पापविघातनम् । नैषेधिक्यादिकरणे उत्तरासङ्गवर्जने ॥ १४० ॥ दण्डस्याप्रतिलेखे चाप्रमार्जितविमोचने । ग्रहणे मार्जितस्यापि सर्वोपकरणस्य च ॥ १४१ ॥ उपाधेश्चाप्यसन्देशे शयनासनयोरपि । अमार्जने तथा पाण्योर्वसतेरप्रमार्जने ॥ १४२ ॥ तथा कटकपाटादेः पिधानाच्छादयोरपि । विनैव प्रतिलेखेन तथा चोभयकालयोः ॥१४३॥ भाण्डाद्यप्रतिलेखे च संपुटीपट्टयोरपि । नित्यमप्रतिलेखाच्च पादोनप्रहरे तथा ॥ १४४ ॥ पात्राद्यप्रतिलेखे च सर्वेष्वेतेषु निर्मदः । एवं च जीतकल्पस्य व्यवहारेण भाषितम् ॥ १४५ ॥ प्रायश्चित्तं यतेः सर्वं श्राद्धानामथ कथ्यते । पापप्रणाशनं सर्वं आलोचनसमुच्चयः ॥ १४६ ॥" इति लघुजीतकल्पविधिना यतिप्रायश्चित्तं संपूर्णं ॥

अथ व्यवहारजीतकल्पक्रमेण यतिश्रावकप्रायश्चित्तविधिः ॥ "ज्ञानाचारे श्रावकाणां प्रायश्चित्तमुदीर्यते । अकालाविनयाद्येषु ज्ञानभङ्गेषु चाष्टसु ॥ १ ॥ प्रत्येकं शुद्धये तेषु प्राणाधार उदीरितः । ज्ञानिनां प्रत्यनीकत्वे ज्ञानस्य च सुभोजनम् ॥ २ ॥ पाठव्याख्यानयोर्विघ्नकरणे पाद इष्यते । पातने पुस्तकादीनां कक्षाया धारणे तथा ॥ ३ ॥ दुर्गन्धहस्तोद्वहने पादनिष्पूतघट्टने । एषु प्रत्येकमाख्येयं शोधनं धातुहृत्परम् ॥ ४ ॥ जघन्याशातनायां तु ज्ञानस्यैव विलम्बकः । मध्यायां परमश्चैव प्रकृष्टायां द्विपादकम् ॥ ५ ॥ केचिदत्र गुरुं प्राहुर्विशेषादागमस्य च । आशातनायामाचाम्लं तत्सूत्रस्य पुनर्गुरुः ॥ ६ ॥ तथा च दर्शनाचारे शङ्कादिषु च पञ्चसु । देशाकान्तेषु प्रत्येकं कामघ्नं शुद्धये दिशेत् ॥ ७ ॥ कृतेषु सर्वतस्तेषु निःपापात्पापशोधनम् । असंयमस्थिरीकामे

मिथ्यादृष्टिप्रशंसने ॥ ८ ॥ पार्श्वस्थादिषु वात्सल्ये देशादेकान्नमादिशेत् । सर्वतस्तेषु मुक्तं च तथाऽसंयमघोषणे ॥ ९ ॥ देशतः प्राहुरेकान्नं सर्वतो धर्म एव च । यतिप्रवचनश्लाघ्येषु प्रशस्तोपबृंहणम् ॥ १० ॥ अकृते चैव वात्सल्ये सामर्थ्येऽप्यप्रभावने । प्रत्येकं देशतो ज्ञेयं शोधनं धातुहृत्परम् ॥ ११ ॥ सर्वतश्चाकृतेष्वेषु प्रत्येकं गुरुरिष्यते । अर्हद्बिम्बाशातनायाः सामान्यकरणे गुरुः ॥ १२ ॥ ततो विशेषाद्बिम्बस्य पादनिष्पूतमर्शने । धूपपात्रकुम्पिकादिवस्त्रादिलगने लघुः ॥ १३ ॥ अविधेर्मार्जने शान्तं विलम्बो बिम्बपातने । केचिदाहुः प्रतिमाया जघन्याशातने लघुम् ॥ १४ ॥ मध्यमाशातने शीतमेकान्नं बहुशातने । अथवा चरणाचारेष्वसेजोवायुभूरुहाम् ॥ १५ ॥ स्पर्शने कारणाभावाद्यतिकर्म समादिशेत् । आगाढतापने प्राहुः पितृकालं विशुद्धये ॥ १६ ॥ गाढसंतापने धर्मं सजलं तदुपद्रवे । तथा ह्यनन्तकायानां चतुर्द्वित्र्यक्षधारिणाम् ॥ १७ ॥ संघट्टे पितृकालः स्याच्चतुःपादउपद्रवे । एकस्यापि द्वीन्द्रियस्य विनाशे मुक्त इष्यते ॥ १८ ॥ द्वयोर्विनाशे द्विगुणस्त्रयाणां त्रिगुणः पुनः । यावद्वीन्द्रियघातः स्यात्तत्संख्या गुरवः स्मृताः ॥ १९ ॥ त्र्यक्षाणां चतुरक्षाणां विनाशेऽप्येवमादिशेत् । असंख्यानां द्वीन्द्रियाणां विनाशे स्यात्सुखद्वयम् ॥ २० ॥ सुखत्रयं त्रीन्द्रियाणां चतुरिन्द्रियदेहिनाम् । असंख्यानां विघाते स्याच्छुद्धिर्भद्रचतुष्टयात् ॥ २१ ॥ पञ्चेन्द्रियाणां संघट्टे शुद्धये स्यात्सुभोजनम् । अगाढतापने शीतं गाढसंतापने गुरु ॥ २२ ॥ प्रमादादेकपञ्चाक्षघाते पुण्यं समादिशेत् । एवं प्रमादात्पञ्चाक्षा यावन्तः

१ मशल्य इति पाठः ।

स्युर्विघातिनाः ॥ २३ ॥ तावन्मात्राणि भद्राणि संभवन्ति विशुद्धये । दर्पादेकं च पञ्चाक्षं हत्वा संशुद्धिरन्ति-
मात् ॥ २४ ॥ एवं दर्पेण यत्संख्याः पञ्चाक्षाः स्युर्विघातिताः । देयास्तावन्त आदेयाः प्राणिनः शुद्धिहेतवे
॥ २५ ॥ तपोतिचारेऽथ तपः कुर्वतां विघ्ननिर्मितौ । निन्दायां विरसं शुद्ध्यै नियमे सति सर्वदा ॥ २६ ॥ प्रत्या-
ख्यानाकृतौ धर्मो नियमस्याप्यभावतः । अप्रत्याख्यानतः शुद्धिः श्राद्धस्य विरसं शुभम् ॥ २७ ॥ पौरुषीमश्र-
युतयोः शान्तपूर्वार्धयोरपि । आचाम्लपूतधर्माणां भङ्गे कार्यं च तत्पुनः ॥ २८ ॥ वमनादिवशाद्भङ्गे शान्तं वि-
रसमेव वा । ग्रन्थिमुष्ट्याभिग्रहादिभङ्गे मध्याह्नमादिशेत् ॥ २९ ॥ दिने दिने लघुप्रत्याख्यानस्याकरणे लघु ।
मश्रयुक्पौरुषीग्रन्थियुतादीनां च भङ्गतः ॥ ३० ॥ कैश्चिदष्टोत्तरशतमन्त्रजापो निगद्यते । तथा वीर्यातिचारेऽपि
सामर्थ्ये बहुले सति ॥ ३१ ॥ देवार्चनं च स्वाध्यायं तपोदानातिविक्रियाः । कायोत्सर्गावश्यकादेस्तोकत्वकरणे
सति ॥ ३२ ॥ प्रत्येकं परमं प्राहुस्तपोज्ञानविभासनम् । मायया कुर्वतो धर्मो द्रव्यात्क्षेत्राच्च कालतः ॥ ३३ ॥
भावतोऽभिग्रहं किंचित्सत्यां शक्तावगृह्णतः । तथा खण्डयतश्चापि पूर्वार्धं शुद्धिहेतवे ॥ ३४ ॥ नियमे सति
देवार्चावन्दनादेरनिर्मितौ । पूर्वार्धं गुरुपादानां ध्वान्ते पादादिघट्टने ॥ ३५ ॥ आशातने तथान्यस्मिञ्जघन्ये
लघुरिष्यते । मध्यमे परमं शीतमुत्कृष्टं च प्रदर्श्यते ॥ ३६ ॥ अस्थापितस्थापनायां पादस्पर्शे तु निर्मदः । स्था-
पितस्थापनाचार्यपादघट्टे विलम्बकः ॥ ३७ ॥ पातने स्थापनार्यस्य तस्य चैव प्रणाशने । तत्क्रियाया अकरणे
क्रमाच्छान्तो रसो लघुः ॥ ३८ ॥ व्रतिनामासनादाने मुखवस्त्रादिसंग्रहे । अम्बुपानेऽन्नाशने च क्रमाच्छोध-

नमादिशेत् ॥ ३९ ॥ पूतं पूतमरोगं च सजलं मुनिसत्तमः । नियमे सति साधूनामप्रणामे विलम्बकः ॥ ४० ॥ गुरुद्रव्ये च वस्त्रे च द्रव्ये साधारणेपि च । उपभुक्ते तदधिकं देयं विनयपूर्वकम् ॥ ४१ ॥ देवद्रव्यजलाहारपरिभोगे कृते सति । देवकार्ये तदधिकं द्रविणं व्ययमानयेत् ॥ ४२ ॥ देवद्रव्यस्य भोगेऽन्ते मध्य उत्कृष्ट एव च । क्रमाद्विशोधनं शीतं धर्मो भद्रमुदाहरेत् ॥ ४३ ॥ जीवाम्बुशोषे ग्राह्यं स्यात्पीलिकामर्कटादिकान् । उपजिह्वादिकान्हत्वा बहून्प्रत्येकमाचरेत् ॥ ४४ ॥ आदेयं स्तोकघाते तु स्तोकं तप उदाहृतम् । एकवारमपूताम्बुपाने भद्रं विशोधनम् ॥ ४५ ॥ पात्रस्थिते पुनर्भक्तं स्थाने पानेऽप्यसंख्यके । सुन्दरं चापि भूयिष्ठं ग्राह्यं पापविशुद्धये ॥ ४६ ॥ मृषावादे जघन्ये तु मध्यमे परमे क्रमात् । पूर्वार्धं सजलं ग्राह्यमुत्कृष्टे सर्वदेहिनाम् ॥४७॥ प्रत्यक्षं निधिलाभादिदोषदाने गुरुस्ततः । विरसं लघु चाधाय शुध्यते श्रावकः परम् ॥ ४८ ॥ स्तेये जघन्ये पूर्वार्धं मध्यमे स्वगृहे कृते । अज्ञाते परमं कुर्याद्गृहे ज्ञाते गुरुं पुनः ॥ ४९ ॥ अन्तिमं ज्ञात उत्कृष्टे ज्ञाते कलहकर्मणि । ग्राह्यं विधाय लक्षं च मन्त्रं शुद्धमना जपेत् ॥ ५० ॥ दर्पेण सर्वचौर्येषु जघन्येष्वपि चान्तिमम् । तुर्यव्रते स्वदारेषु वेश्यासु नियमक्षयात् ॥ ५१ ॥ सुन्दरं परदारे च हीने ज्ञाते तथान्तिमम् । ज्ञाते लक्षं मन्त्रजापो ग्राह्ययुक्तो विधीयते ॥ ५२ ॥ उत्तमे परदारे च ज्ञाने ग्राह्यसमन्वितः । लक्षं साशीतिसाहस्रं मन्त्रजापो विधीयते ॥ ५३ ॥ ज्ञाते तत्रैव मूलं स्यादथ स्मरणतः पुनः । वेश्यासु पुण्यं भार्यायामुपवासो विशोधनम् ॥ ५४ ॥ जानतः स्वकलत्रेपि स्मरणादन्तिमं विदुः । आलापभेदतो नार्यां स्वस्त्रीभ्रान्तेस्तथान्तिमम् ॥५५॥

स्त्री चेद्गलं वितनुते तदा ग्राह्यं समादिशेत् । कियत्कालं गृहीतायां स्त्रियां भङ्गे सुखं वदेत् ॥ ५६ ॥ उत्तमे
तु कलत्रेऽपि भङ्गे मूले समागते । देयं प्रसिद्धपात्रस्य ग्राह्यं मूलं न कुत्रचित् ॥ ५७ ॥ परिग्रहे व्रते भग्ने हीने
मध्येऽधिकेऽथवा । क्रमादरोगकामन्नं धर्मश्चापि विशोधनम् ॥ ५८ ॥ दर्पाद्भग्ने व्रते तस्मिन्नन्तिमं प्राहुरन्यथा ।
लक्षं साशीतिसाहस्रं मन्त्रजापं समादिशेत् ॥ ५९ ॥ पञ्चाणुव्रतभङ्गेषु समतश्च कदाचन । कायोत्सर्गा वेद-
मर्त्यैः सचतुर्विंशतिस्तथैः ॥ ६० ॥ दिग्व्रतभ्रंशने चैव भोगव्रतविखण्डने । रात्रिभोजननिर्माणे निःपापः पाप-
मर्पणः ॥ ६१ ॥ नवनीतसुरामांसमधुभक्षणतो मदात् । प्रत्येकमन्तिमाच्छुद्धिर्नवनीते च भेषजे ॥ ६२ ॥ क्षौद्रं
च भुक्त्वा परममनाभोगात्सुरालये । अनन्तकायं भुक्त्वा च तथोदुम्बरपञ्चकम् ॥ ६३ ॥ भुक्त्वा निःपापतः
शुद्धिः प्रत्येकवनभोगतः । शुद्धिः सजलतो ज्ञेया प्रोक्तमेवं सुसाधुभिः ॥ ६४ ॥ सचित्तद्रव्यवस्त्रान्नशय्यादीनां
चतुर्दश । नियमाभङ्गतस्तेषां प्रत्येकमरसं लघु ॥ ६५ ॥ सचित्तवर्जकस्यापि प्रत्येकाम्रादिभक्षणे । सजलं पञ्च-
दशसु कर्मादानेषु सर्वथा ॥ ६६ ॥ प्रत्येकं पुण्यमादिष्टं पैशुन्ये परनिन्दने । अभ्याख्याने तथा रागे प्रत्येकं स-
जलं विदुः ॥ ६७ ॥ चतुर्विधेऽनर्थदण्डे गुरुर्गुरुभिरावृतः । पण्ढादीनां विवाहे च तथैवान्यविवाहने ॥ ६८ ॥
प्रत्येकमेतयोः शीतं पूर्वार्धमपरे पुनः । नियमे सति सामायिकस्याकरणभङ्गयोः ॥ ६९ ॥ उपवासोऽम्बुवह्वया-
दिस्पर्शे तत्संख्यया लघुः । राज्ञां धर्मश्च देशावकाशिभङ्गे विलम्बकः ॥७०॥ नियमे सति तत्काले पौषधाकरणे
पुनः । साधुदानाद्यकरणे शोधनाय गुरुः स्मृतः ॥७१॥ ॥अथ पौषधभङ्गानां प्रायश्चित्तमुदीर्यते। नैषेधिक्याद्यकरणे

स्थण्डिले वा प्रमार्जिते॥७२॥कफमूत्रविडुत्सर्गे पृथिव्या अप्रमार्जिते। अप्रमार्जितवस्तूनां ग्रहणक्षेपयोरपि॥७३॥ अमार्जितकपाटानामुद्धाटनपिधानयोः । अप्रमार्जितकायस्य क्वचित्कण्डूयने तथा ॥ ७४ ॥ अप्रमार्जितकुड्यादिस्तम्भावष्टम्भनेपि च। ईर्यापथाप्रतिक्रमे उपध्यप्रतिलेखने ॥ ७५ ॥ एतेषु सर्वेष्वाख्यातं विरसं दोषघातनम्। परगात्रस्य संघट्टे ज्योतिषः स्पर्शने लघु ॥ ७६ ॥ विनालोमपटीं विप्रुट्स्पर्शने लघु चेष्यते । पाते च मुखवस्त्रस्य चतुःपादो विशुद्धिकृत् ॥ ७७ ॥ अप्रतिलेखिते स्थाने कृते मूत्रविसर्जने । दिवास्वापे च विज्ञेयमेकान्नं शुद्धिहेतवे ॥ ७८ ॥ एवं सामायिकेपि स्यात्प्रायश्चित्तं यथोचितम् । अथ श्राद्धावश्यकस्य प्रायश्चित्तमुदीर्यते ॥७९॥ आचार्यपृष्ट एकस्मिन्दत्ते वन्दनकेऽरसः। द्वयोः पूर्वार्धमाख्यातं त्रिषु प्रोक्तं सुभोजनम् ॥ ८० ॥ चतुर्षु चोपवासश्च वन्दनस्याविधौ गुरुः । कायोत्सर्गस्य पश्चाच्च करणे निर्मदो मतः ॥ ८१ ॥ कृते विरुद्धे मध्याह्नमकृते च सुभोजनम्। परेभ्यः पारिते पूर्वमपूर्णे पारिते तथा ॥ ८२ ॥ कामघ्नं सर्वथा त्यक्ते प्रतिक्रमणके गुरुः। आलस्येनोपविष्टश्चेत्प्रतिक्रमति कर्हिचित् ॥ ८३ ॥ तदाम्लमावश्यके च प्रायश्चित्तं गृहैषिणाम्। मतान्तरे मृषावादे जघन्ये मध्यमेऽधिके ॥ ८४ ॥ क्रमाच्छीतमनाहार उपवासशतं तथा । स्तेये जघन्ये निःपापमज्ञाते मध्यमे हितम् ॥ ८५ ॥ ज्ञाते ग्राह्यं तथोत्कृष्टेऽज्ञाते ग्राह्यं सुखान्वितम् । मैथुने प्रव्रजितया गृहिणो मूलमादिशेत् ॥ ८६ ॥ परसंग्रहणीभोगे नीचान्यस्त्रीरतेपि च। गुप्ते परस्त्रीभोगे च मुक्तं भवति मुक्तये ॥८७॥ अज्ञाते द्वादश ग्राह्या ज्ञाते मूलं समादिशेत् । परिग्रहातिक्रमे चाज्ञानतो विदुरुत्तमम् ॥ ८८ ॥ दशादिक्षु

द्विशिरस्त्रिभञ्जनेऽप्येवमेव हि । जानन्नपि हि सर्वं यो व्रतं दर्पान्निकृन्तति ॥ ८९ ॥ तस्यैव शुद्धये प्रोक्ताः
प्रत्येकं द्वादशान्तिमाः । प्रायश्चित्तविधिश्चायं श्राद्धानामुपदर्शितः ॥ ९० ॥ यतिश्रावकवर्गस्य प्रायश्चित्तं विशु-
द्धिदम् । व्यवहारजीतकल्पं यथाशोधि पदादपि ॥ ९१ ॥ पट्टोयं लिखितो वीक्ष्य शिष्यैः स्वपरहेतवे । श्रीय-
शोभद्रसूरीणां श्रीपृथ्वीचन्द्रसूरिभिः ॥ ९२ ॥ इति व्यवहारजीतकल्पक्रमेण यतिश्रावकप्रायश्चित्तविधिः ॥

अथ प्रकीर्णप्रायश्चित्तं भावप्रायश्चित्तं च ॥ प्रायश्चित्तविधिं चान्ययुक्त्या ब्रूमोऽथ निर्मलम् । शोधना वि-
विधाः पापविधानस्यानुमानतः ॥ १ ॥ आवृत्त्या च प्रमादेन दर्पकल्पद्वयेन च । पापानुबन्धबद्धस्य परिणामा
अनेकधा ॥ २ ॥ एकादिषु दशान्तेषु हतेषु विकलेषु च । एकादिकदशान्तं स्यात्प्रायश्चित्तं ससंख्यकम् ॥ ३ ॥
ततः परं बहूनां च विघाते चानुमानतः । प्रायश्चित्तं पिण्डितं स्यादेकमेव न चापरम् ॥ ४ ॥ एवं दृढव्रतानां
च दृढदेहभृतामपि । प्रायश्चित्तं बहुतरं देयं शास्त्रानुसारतः ॥ ५ ॥ मध्येषु मध्यमं चैव जघन्येषु जघन्यकम् ।
आदरः शक्तियोगश्च विशेषश्चात्र कारणम् ॥ ६ ॥ गीतार्थानां तत्त्वविदां नित्यं तीव्रतपःकृताम् । प्रायश्चित्तं
दशांशेन कथितं जिनपुङ्गवैः ॥ ७ ॥ श्राद्धानां तादृशानां च जानीयात्तादृगेव हि । युक्तायुक्तविभागो हि
लोकेपि परिमीयते ॥८॥ किं पुनर्वीतरागस्य मते स्याद्वादसंकुले । पञ्चाचारप्रतिबद्धं प्रायश्चित्तमुदीरितम् ॥ ९ ॥
यतीनां श्रावकाणां च सूक्ष्मभेदे तदन्तरे । अथ प्रकीर्णकं किंचित्कथ्यते तद्द्वयोरपि ॥ १० ॥ मुनयो यदि लो-
चादौ पीडया स्युश्चलाशयाः । ततस्तेषां विशुद्ध्यर्थमुपवासं समादिशेत् ॥ ११ ॥ द्वाविंशतिगुणा येषु परीप-

हगुणेषु च। अनाध्यासनतः शुद्धौ उपवास उदाहृतः ॥ १२ ॥ शिक्षार्थं श्राद्धशिष्यादेस्ताडनाक्षेपयोरपि। प्रतिक्रमणतः शुद्धिर्द्वयोः कैश्चिदुदाहृता ॥ १३ ॥ अयुक्ता सद्गुरोराज्ञा लङ्घिता चेन्मुमुक्षुभिः। तस्य क्षामणतः शुद्धिर्विरसादपि जायते ॥ १४ ॥ गुरोरविधिसंस्थस्य वन्दनालापयोरपि। तच्चोदनायां व्याख्यातं ग्राह्यं चैव विशुद्धये ॥ १५ ॥ रोगादौ च चिकित्सान्ते शुद्धिः स्यात्परमादपि। चिकित्सा नैव सावद्या कार्या प्राणावनार्थिभिः ॥ १६ ॥ महाव्रतानां पञ्चानां भङ्गो यस्मात्प्रजायते। प्राणान्तेपि न तत्कार्यं साधुभिः कर्म कर्हिचित् ॥ १७ ॥ कामभावं विना स्त्रीभिः संलापे बहुशः कृते। राजद्वारादिगमने कृते वादेऽन्यतैर्थिकैः ॥ १८ ॥ कौतुकाद्यवलोके च मिथ्यादृक्शास्त्रदर्शने। इत्यादिषु मुनीनां स्याच्छुद्धये शीतमञ्जसा ॥ १९ ॥ पार्श्वस्थस्यावसन्नस्य सेवने चीर्ण एव च। साधूनां मूलतः शुद्धिः कैश्चिद्राह्यमुदीर्यते ॥ २० ॥ व्रतिनीसहवासे च तच्छुश्रूषाविधापने। तदानीताशनादाने स्यात्प्रायश्चित्तमन्तिमम् ॥ २१ ॥ श्रावकाणां तु लज्जादिकारणैर्दैवतं परम्। नत्वान्यव्रतिनं चैव शुद्धिः स्याज्जिनपूजने ॥ २२ ॥ बलात्कारकृते सर्वव्रतभङ्गे महात्मनाम्। गृहिणां शुद्धये ग्राह्यं शोधनं देयमुत्तमम् ॥ २३ ॥ श्राविकायाः प्रसूतौ च शुद्धयेऽन्तिममादिशेत्। सजीवेन्धननीरादितापने ग्राह्यमेव हि ॥ २४ ॥ साधुशुश्रूषणे चैव देहस्पर्शादिना कृते। विशुद्धये सुन्दरं स्याच्छुश्रूषान्तेऽपि योषिताम् ॥ २५ ॥ व्रतिनां व्रतिनीनां च प्रायश्चित्तं समं यथा। श्रावकाणां श्राविकाणां तथैव हि विनिर्दिशेत् ॥ २६ ॥ एवं महानिशीथं च निशीथं चरणोदधिम्। जीवकल्पद्वयं दृष्ट्वा प्रायश्चित्ते विधिः स्मृतः ॥ २७ ॥ अन्यान्यपि

ति शास्त्राणि प्रायश्चित्तानुगानि च। विलोक्य शुद्धये प्रोक्तः प्रायश्चित्तविधिः परः ॥ २८ ॥ व्रतभङ्गे तु सूक्ष्माणां पापानामतिचारजम्। विलोक्य शास्त्रं मुनयः प्रायश्चित्तं वितन्वते ॥ २९ ॥ जिना जानन्ति तत्त्वं च मोहात्स्वमतिगौरवात्। उक्तं हीनाधिकं तत्र मिथ्यादुःकृतमस्तु मे ॥ ३० ॥ इयत्ता नैव विहिता प्रायश्चित्तविधेः क्वचित्। यत्नोक्तमत्र तज्ज्ञेयं जिनागममहोदधेः ॥ ३१ ॥" इति प्रायश्चित्ताधिकारे प्रकीर्णप्रायश्चित्तं भावप्रायश्चित्तं च संपूर्णम् ॥

अथ स्नानार्हप्रायश्चित्तम् ॥ सर्वपातकशुद्ध्यर्थं भावशोधनमीरितम्। अधुना तु बहिर्लेपशुद्ध्यै द्रव्यत उच्यते ॥ १ ॥ पञ्चधा स्याद्बहिर्लेप आचारज्ञैरुदाहृतः। स्पर्शात् १ कृत्यात् २ भोजनाच्च ३ दुर्नयात् ४ ज्ञातिमिश्रणात् ५ ॥ २ ॥ स्पर्शाच्चण्डालशुन्यादेः कृत्याद्दुःकर्मचेष्टितात्। भोजनाद्दूषिताहाराद्दुर्नयान्निन्दनादिकात् ॥ ३ ॥ विमिश्रणादन्यज्ञात्या विवाहात्सहभोजनात्। एवं पञ्चविधस्यापि शोधनं कथ्यते परम् ॥ ४ ॥ यथा दशविधं भावदोषाणां शोधनं मतम्। तथा पञ्चविधं ब्रूमो द्रव्यदोषविशोधनम् ॥ ५ ॥ स्नानार्हं १ करणीयार्हं २ तपोर्हं ३ दानयोग्यकम् ४। विशोधनार्हं ५ पञ्चेत्थं प्रायश्चित्तानि बाह्यतः ॥ ६ ॥ सर्ववासांसि धावित्वा स्नात्वा नखशिखान्तकम्। आचम्य पञ्चगव्यादीन्देवस्नानोदकानि च ॥ ७ ॥ तथैव तीर्थनीराणि गुरुपादोदकानि च। यस्मात्संजायते शुद्धिस्तत्स्नानार्हमुदाहृतम् ॥ ८ ॥ इति स्नानार्हविधिः ॥ ॥ शान्तिकैः पौष्टिकैश्चैव तीर्थाभिगमनैरपि। गुरुदेवार्चनैश्चैव संघपूजादिकर्मभिः ॥ ९ ॥ मौनादिभिस्तथाचारैः शुद्धिर्यस्या-

त्प्रजायते । तदुक्तं करणीयार्हं प्रायश्चित्तं विचक्षणैः ॥ १० ॥ एकभक्तै रसत्यागैः फलैकान्नादिभोजनैः । यस्मात्त्च्छुद्धिस्तदाख्यातं तपोर्हं द्रव्यशोधनम् ॥ ११ ॥ देवादौ पुस्तकादौ च व्ययमाधाय साधुषु । यस्माच्छुद्धिस्तदाख्यातं दानार्हं बाह्यशोधनम् ॥ १२ ॥ विशोधनामथ ब्रूमो विस्तरेण निशम्यताम् । वमनं त्र्यहमाधाय विरेकं च त्र्यहं वदेत् ॥ १३ ॥ वमने लङ्घनं प्राहुर्विरेके यवचर्वणम् । ततश्चैव हि सप्ताहं भूमौ निक्षिप्य चोपरि ॥ १४ ॥ ज्वलनज्वालनं कुर्यात्काष्ठैरौदुम्बरैरपि । ततः पुनश्च सप्ताहं भूमौ निक्षिप्य चोपरि ॥ १५ ॥ गावं वृषं च संयोज्य कुर्वीत हलवाहनम् । ज्वलनज्वालने चैव तथा च हलवाहने ॥ १६ ॥ कुर्याच्चतुर्दशाहानि मुष्टिमात्रयवाशनम् । ततः शिरसि कूर्चं च कारयेदपि मुण्डनम् ॥ १७ ॥ सप्ताहं च ततः स्नात्रं पञ्चगव्येन चाचरेत् । तत्रापि गव्यक्षीरेण प्राणाधारो न चान्यथा ॥ १८ ॥ पश्चाहं पञ्चगव्यं च त्रिस्त्रिश्चुलुभिराचमेत् । विधाय मुण्डनं तस्मात्तीर्थोदकसमुच्चयैः ॥ १९ ॥ अष्टोत्तरशतेनैव घटानां स्नापयेच्च तम् । तथा शुद्धो देवगुरून्नमस्कुर्यात्समाहितः ॥ २० ॥ ततः साध्वर्चनं संघार्चनं कुर्याद्विशुद्धधीः । एवं विशोधनारूपं प्रायश्चित्तमुदीर्यते ॥ २१ ॥ चण्डालम्लेच्छभिल्लानां खराणां विड्भुजामपि । काकानां कुर्कुटानां च करभाणां शुनामपि ॥ २२ ॥ मार्जाराणां व्याघ्रसिंहतरक्षुफणिनामपि । परनीचकारुकाणां मांसास्थ्नां चर्मणामपि ॥ २३ ॥ रक्तमेदोमज्जसां च पुरीषमूत्रयोरपि । शुक्रस्य दन्तकेशानामज्ञातानां च देहिनाम् ॥ २४ ॥ मृतपञ्चेन्द्रियाणां च तथोच्छिष्टान्न-

पायसाम् । स्पर्शनाज्जायते शुद्धिर्गृहिणां स्नानमात्रतः ॥ २५ ॥ तस्माद्यतीनां मुक्तानामभ्युक्षणत एव च । एवं स्पर्शभवाद्दोषात्स्नानाच्छुद्धिः प्रजायते ॥ २६ ॥ इति स्नानार्हं प्रायश्चित्तं संपूर्णम् ॥

विरुद्धाचारजाद्दोषात्करणीयैर्विशुद्ध्यति । शूद्रात्प्रतिग्रहं कृत्वा ब्राह्मणे गोप्रदानतः ॥ २७ ॥ शुद्धिं भजेत्क्षत्रियस्तु शूद्रसेवी तथैव हि । अशास्त्रं व्यवहारं च ज्योतिषं कथयन्द्विजः ॥ २८ ॥ मासमात्रेण मौनेन शुद्धिं प्राप्नोति नान्यथा । अस्वाध्यायकरो विप्रो मौनी पक्षाद्विशुद्ध्यति ॥ २९ ॥ विप्रक्षत्रियवैश्यानां त्रुटिते कण्ठसूत्रके । पतिते वा प्रमादेन न वदेन्न क्रमं चरेत् ॥ ३० ॥ परिधायान्यसूत्रं तु चरेत्पादं वदेद्वचः । त्रिरात्रं यवभोजी च जपेन्मन्त्रमघापहम् ॥ ३१ ॥ दैन्यमर्थिनकारं च स्वस्तुतिं परगर्हणम् । विधाय क्षत्रियः कुर्यात्त्रिरात्रं जिनपूजनम् ॥ ३२ ॥ कृतोपवासः कनकं दत्त्वा तस्माद्विशुद्ध्यति । संग्रामाद्द्रोग्रहादन्ययुद्धस्थानादयुद्धकृत् ॥ ३३ ॥ निवृत्तः क्षत्रियः शान्तं कृत्वा दानाद्विशुद्ध्यति । युद्धे हत्वारिसैन्यं तु स्नानादेव विशुद्ध्यति ॥ ३४ ॥ इति करणीयार्हं द्रव्यप्रायश्चित्तं संपूर्णम् ॥ ॥ भेषजार्थं च गुर्वादिनिग्रहे परबन्धने । महत्तराभियोगे च तथा प्राणार्तिभञ्जने ॥ ३५ ॥ यद्यस्य गोत्रे नो भक्ष्यं न पेयं क्वापि जायते । तद्भक्षणे कृते शुद्धिरुपवासत्रयान्मता ॥ ३६ ॥ अन्यद्विजाशनं भुक्त्वा पूर्वाह्णाच्छुद्ध्यति द्विजः । शुद्ध्यत्येकान्नभोजी च भुक्त्वा च क्षत्रियाशनम् ॥ ३७ ॥ वैश्याशनं पुनर्भुक्त्वा शुद्धः स्यादुपवासकृत् । शूद्रान्नभोजनाच्छुद्धिस्तस्यानशनपञ्चकात् ॥ ३८ ॥

1 ज्योतिष्क इति पाठः ।

कारुभोजनतः शुद्धिर्दशानशनतो ध्रुवम् । क्षत्रियश्चैव शूद्रान्नं भुक्त्वा प्रायेण शुद्ध्यति ॥ ३९ ॥ वैश्यस्तु शू-
द्रकार्वन्नं भुक्त्वा चाम्लेन शुद्ध्यति । शूद्रश्च कारुकान्नादः शुद्धः पूर्वाह्नतो भवेत् ॥ ४० ॥ म्लेच्छस्पृष्टान्नभोगे
च शुद्धिः स्यादुपवासतः । अन्यगोत्रे सूतकान्नं भुक्त्वा शुद्धिस्तथैव हि ॥ ४१ ॥ ब्रह्मस्त्रीभ्रूणगोसाधुघाति-
नामन्नभोजनात् । दशोपवासतः शुद्धिं कथयन्ति पुरातनाः ॥ ४२ ॥ आहारमध्ये जीवाङ्गं दृष्ट्वान्नं तत्तदेव हि ।
भोक्तव्यमेकभक्तेन द्वितीयेहनि शुद्ध्यति ॥ ४३ ॥ एवं भोजनकाले च श्वमार्जाररजस्वलाः । स्पृष्ट्वा चर्मास्थ्य-
न्यजातीन् शुद्धिर्जीवाङ्गवद्भवेत् ॥ ४४ ॥ इति तपोर्हद्रव्यप्रायश्चित्तं संपूर्णम् ॥ ॥ यतिभिश्च विरोधाच सौहृ-
दात्पापकारिभिः । सम्बन्धिन्यादिसंभोगात्प्रमादात्साधुनिन्दनात् ॥ ४५ ॥ सत्यां विपुलशक्तौ च दीनाद्यप्र-
तिपालनात् । शरणागतजन्तूनां सत्यां शक्तावरक्षणात् ॥ ४६ ॥ निन्द्यकर्मकृतेश्चैव गुर्वाज्ञालङ्घनादपि । पितृ-
मातॄणां संतापात्तीर्थमार्गनिवर्तनात् ॥ ४७ ॥ शुद्धधर्मोपहासाच हास्यार्थं परकोपनात् । इत्यादिदोषात्संशु-
द्धिर्दानादेव हि जायते ॥ ४८ ॥ तत्संपत्त्यनुसारेण व्यलीकानुमतेरपि । गुरवो विप्रसाधुभ्यो दापयन्ति तदर्प-
येत् ॥ ४९ ॥ इति दानार्हद्रव्यप्रायश्चित्तं संपूर्णम् ॥ ॥ उषित्वा म्लेच्छदेशेषु म्लेच्छीभूय परिग्रहात् । म्लेच्छ-
बन्दिनिवासाच प्रमादाभक्ष्यभक्षणात् ॥ ५० ॥ अपेयपानतश्चैव म्लेच्छादिसहभोजनात् । परजातिप्रवेशाच
विवाहकरणादिभिः ॥ ५१ ॥ महाहत्याविरचनात्कुप्रतिग्राहिसंगमात् । कुप्रतिग्रहतः शुद्धिः स्यात्पूर्वोक्ताद्वि-
शोधनात् ॥ ५२ ॥ इति विशोधनार्हद्रव्यप्रायश्चित्तम् ॥ ॥ सर्वेभ्यो द्रव्यदोषेभ्यः शुद्धिमाहुर्मनीषिणः । नृपच्छ-

श्रनलम्नानात्पर्गाद्रर्मचरोरपि ॥ ५३ ॥ एतेभ्यो व्यतिरिक्तं च प्रायश्चित्तं तदान्तरम् । विज्ञेया पूर्वकथिता तच्छुद्धिर्भावशोधनात् ॥ ५४ ॥ द्रव्यभावभवे चैव प्रायश्चित्ते समस्तके । यावद्वेलं भवेद्दोषस्तावद्वेलं विशोधनम् ॥ ५५ ॥ बालस्य द्वादशाब्देभ्यः परं जरत एव च । देयं वर्षनवत्यर्वाक् प्रायश्चित्तं मुनीश्वरैः ॥५६॥ प्रायश्चित्ते च महति विचीर्णे तपआदिभिः । अन्यत्पुनस्तत्समासौ देयं भावविशेषतः ॥ ५७ ॥ उपवाससहस्राच्च न परालोचना क्वचित् । शतोपवासादूनं च प्रायश्चित्तं न पिण्डितम् ॥ ५८ ॥ ज्ञानाचारादिक्रमेण व्रतादीनां क्रमेण च । प्रष्टव्यं गुरुणा पापं साधुतः श्रावकादपि ॥ ५९ ॥ छउमत्थो मूढमणो कित्तियमित्तंपि संभरयि जीवो। जं च न सुमरामि अहं मित्था मे दुक्कडं तस्स ॥ ६० ॥ जं जं मणेणं बद्धं जं जं वायाए भासियं किंचि। जं जं काएण कयं मित्था मे दुक्कडं तस्स ॥ ६१ ॥ आउट्टिआउ विचा दप्पो पुण होइ वग्गणाईओ । कंदप्पो अप्पमाओ कप्पो पुण कारणे करणे ॥ ६२ ॥ ॥ तथा सूरिर्यदि एकाकी बहिर्भूमिं गच्छति तदा शिष्याणां उपवासः ४१ गुरुर्यदि भिक्षाटनं करोति तदा शिष्याणां उपवासः ४१ मुख्यसाधुः गुरून् भिक्षां गच्छतो न वारयति तदा मुख्यसाधोः उपवासः ४१ गीतार्थो न वारयति तदा तस्य पूर्वार्धं अगीतार्थो न वारयति तस्यापि पूर्वार्धं गुरुस्तद्वारितो न तिष्ठति तदा गुरोः उपवासः ४१ त्रिकालं गणालोकाकरणे सूरेर्मासलघुमार्गे ग्लाने दुर्भिक्षे बालवृद्धादिकार्ये दुर्लभद्रव्यनिमित्तं यथाचार्योऽहमित्यालम्बमालम्ब्यान्यैस्तस्मिन्नप्राप्यमाणे भिक्षां न भ्रमति तदा १ उपवासः । भिक्षुर्गुरोः पृथग्वसतिमालघु उपाश्रयबहिर्वासे ४१ एकोपाश्रये पृथगप-

| जीवप्रा-यश्चित्त | स्थूल | सूक्ष्म | सताप | आगाढ | अना० | सा | नि | सा | जीवप्रा-यश्चित्त | स्थूल | सूक्ष्म | सताप | आगाढ | अना | सा | नि | सा |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| पुढवीका | सताप | निविय | आगा | पुरिमढ | गाढ | एकासण | उद्द्वण | आंबिल | सवणसं | संताप | पुरिमढ | आगाढ | एकासण | गाढ | आंबिल | उद्द्वण | उपवास |
| आउका | सताप | निविय | आगा | पुरिमढ | गाढ | एकासण | उद्द्वण | आंबिल | बेंद्रिय | सताप | पुरिमढ | आगाढ | एकास | गाढ | आंबिल | उद्द्व० | उपवास |
| तेउकाय | संताप | निविय | आगा | पुरिमढ | गाढ | एकासण | उद्द्वण | आंबिल | तेंद्रिय | संताप | पुरिमढ | आगाढ | एकास | गाढ | आंबिल | उद्द्व० | उपवास |
| वाउका | संताप | निविय | आगा | पुरिमढ | गाढ | एकासण | उद्द्वण | आंबिल | चउरिंद्री | सताप | पुरिमढ | आगाढ | एकास | गाढ | आंबिल | उद्द्व० | उपवास |
| वणस्पति | सताप | निविय | आगा | पुरिमढ | गाढ | एकासण | उद्द्वण | आंबिल | पंचेद्रिय | संताप | पुरिमढ | आगाढ | एकास | गाढ | आंबिल | उद्द्व० | उपवास |

वरके वसतो गीतार्थस्य एकशतम् ॥ ॥ तथा आलोचनागाथाकथनानन्तरं ज्ञानाचारे पुस्तकाद्याशातना-प्रश्नः। दर्शनाचारे शङ्काकाङ्क्षादिमिथ्यात्वाङ्गप्रश्नः। चारित्राचारे पञ्चमहाव्रतद्वादशव्रतभङ्गादिप्रश्नः। तप-आचारे द्वादशविधः तपोभङ्गादिप्रश्नः। वीर्याचारे सत्यां शक्तौ तपआचारपालना अकरणप्रश्नः। तदनन्तरं क्रोधादिकषाय अष्टादशपापस्थानप्रश्नः। आलोचनायां पुरातनी तपःसंज्ञा। यथा—“लहुमास मासलहु भिन्नमास पुरिमढनाम नायव्वा। मासगुरू गुरुमासं एगासणगस्स नामाइं ॥ १ ॥ पणगं पुण नीवीरां चउलहू अंबिलं च नायवं। चउगुरुखवणं उववास नाम सिद्धन्तिणो विंति ॥ २ ॥ एगकल्लाणगं पुण छट्ठं झग्गुरु अ

अट्ठमं होइ । पंचकल्लाणगं पुण दसउववासा मुणे अवा ॥ ३ ॥" इत्याचार्यश्रीवर्धमानसूरिकृते आचारदिनकरे उभयधर्मस्तम्भे प्रायश्चित्तकीर्तनो नाम सप्तत्रिंशत्तम उदयः ॥ ३७ ॥ ग्रन्थाग्रं श्लो० ६६७

## अष्टत्रिंशत्तम उदयः ।

| | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ज्ञानाचार | पुदुग | आंवि | सर्व | उआस | जघन्य | अदत्ता | पखिय | मध्यम | जघन्य | एकासण | आंबिल | उत्कृष्ट | उआस | उआस |
| दर्शनाचार | देशे | आंवि | सर्वे | उआस | जघन्य | परिग्रह | चउमा. | मध्यम | जघन्य | एकासण | आंबिल | उत्कृष्ट | उआस | उआस |
| नत्रेंद्रिविषे | रागे | आंवि | दोस | उआस | जघन्य | मैथुन | सवरस | मध्यम | जघन्य | एकासण | आंबिल | उत्कृष्ट | उआस | ३ |
| घ्राणेद्रिविषे | रागे | आंवि | दोस | उआस | जघन्य | अमेच | ० | पुरिम | जघन्य | ० | उत्कृष्ट | आगमे | ० | ० |
| रसेंद्रिविषे | रागे | आंवि | दोस | उआस | जघन्य | ० | ० | पुरिम | निवि. | उआस | चाय | आंवि. | ० | उआस |
| स्पर्शेंद्रिविषे | रागे | आंवि | दोस | उआस | जघन्य | ० | ० | पुरिम | एका. | आंबिल | एकासन | जघन्य | ० | ३ |
| मृषावादेद्रि | रागे | आंवि | दोस | उआस | पुरिम | ० | ० | एकास | उआस | ० | आंबिल | ० | ० | ० |
| ० | मध्य. | जघन्य | एका० | आंवि | उत्कृष्ट | ० | ० | ० | | | | | | |

अथावश्यकविधिः ॥ आचारख्यापनार्थं च साधुश्राद्धहितेच्छया । आवश्यकविधिं रम्यं ब्रूमः संक्षेपतोऽधुना ॥ १ ॥ तत्रावश्यकं षड्विधं सामायिकं १ चतुर्विंशतिस्तवः २ वंदनं ३ प्रतिक्रमणं ४ कायोत्सर्गः ५ प्रत्याख्यानं

६ च। तत एतेषां क्रमेण व्याख्यानं व्याख्याय योजना कथ्यते यथा—पूर्वं सामायिकं समस्य मणिलोष्टुकाञ्चनतृणस्त्रैणसमलावण्यरूपस्य आयो लाभः समायः समायेन संस्पृष्टं सामायिकं। तच्च द्विधा सर्वविरतिर्देशविरतिश्च। तत्र सर्वविरतिरूपं सामायिकं पञ्चमहाव्रतनिशाभोजनात्यागषष्ठं पञ्चभावनायुक्तिर्निरतिचारपालनेन पञ्चसमितित्रिगुप्तिधारणेन सार्वसावद्ययोगत्यागेन धर्मवीरैर्यावज्जीवं धार्यमाणं भवति तदुच्चारदण्डकं यथा-करेमि भंते सामाइयं सव्वं सावज्जं जोगं पच्चक्खामि जावज्जीवाए तिविहं तिविहेणं वायाए कायेणं न करेमि न कारवेमि करन्तंपि अन्नं न समणुजाणामि तस्स भन्ते पडिक्कमामि निन्दामि गरिहामि अप्पाणं वोसिरामि १ देशविरतिरूपं तु श्रावकद्वादशव्रतमध्यगतं शिक्षाव्रतादिमं मुहूर्तमात्रं हृदि धारणीयं भवति। तदुच्चारणदण्डकं यथा—करेमि भंते सामाइयं सावज्जं जोगं पच्चक्खामि जावनियमं पज्जुवासामि दुविहं तिविहेणं मणेणं वायाए काएणं न करेमि न कारवेमि तस्स भंते पडिक्कमामि निंदामि गरिहामि अप्पाणं वोसिरामि २। तत्र सामाइकं तु महाफलं सर्वपापहरं ॥ यत उक्तमागमे—जो देइ कणयकोडिं अहवा कारेइ तुंगजिणभवणं। तस्स न तत्तिय पुण्ण जत्तिय सामाइए होइ ॥ तथाच—प्रणिहन्ति क्षणार्धेन साम्यमालम्ब्य कर्म तत्। यन्न हन्यान्नरस्तीव्रतपसा जन्मकोटिभिः ॥ १ ॥ कर्म जीवं च संश्लिष्टं परिज्ञातात्मनिश्चयः। विभिन्नीकुरुते साधुः सामायिकशलाकया ॥ २ ॥ रागादिध्वान्तविध्वंसे कृते सामायिकांशुना। स्वस्मिन्स्वरूपं पश्यन्ति योगिनः परमात्मनः ॥ ३ ॥ स्निह्यंति जन्तवो नित्यं वैरिणोपि परस्परम्। अपि स्वार्थकृते साम्यभाजः साधोः

गीतार्थं एतत्पुरुपविभागेन श्रुतव्यवहारेण जीतकल्पयंत्रं लिख्यते

| आरम्भ-कृतकरण | गीतार्थ स्थिरक | गीतार्थ अस्थिरक | अ० अ० कृतक० | अगीता-र्थस्थिर | अ.अस्थिर अ०क. | अगीतार्थअस्थिर | निर | आ | उ ४ | उ० | उ० | ० ० | गी० ० | गी ३५ | गी २५ | गी २० | अगी २० | अगी १५ | अगी १५ | १० |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| छेद | छेद | १७ | ६१ | ६ | ६ | ४१ |  | नि | आं | ४० | ४० | २५ | २५ | २० | २० | १५ | १५ | १० | १० | ५ |
| ६१ | ६१ | ६ | ६ | ४ | ४ | ४ |  | ० | ० | २५ | २५ | २० | २० | १५ | १५ | १० | १० | ५ |  |  |
| ६ | ६ | ६ | ४ | ० | ४ | ० |  | ० | २५ | २० | २० | १५ | १५ | १० | १० | ५ |  |  |  |  |
| ६ | ६ | ४ | ४ | ४ | ० | ० |  | २५ | २० | १५ | १५ | १० | १० |  |  |  |  |  |  |  |
| ४ | ४ | ४ | ४ | ४ | ० | ० |  | २० | १५ | १० | ५ |  |  |  |  |  |  |  |  |  |
| ४ | ० | ० | ० | ० | ० | २५ |  | १५ | १० | ५ |  |  |  |  |  |  |  |  |  |  |
| ० | ० | ० | ० | २५ | २५ | २० |  | १० | ५ | ० |  |  |  |  |  |  |  |  |  |  |
| ० | २५ | २५ | २५ | २० | २० | १५ |  | ५ |  |  |  |  |  |  |  |  |  |  |  |  |
| २५ | २० | २० | २० | १५ | १५ | १० |  |  |  |  |  |  |  |  |  |  |  |  |  |  |
| २० | १५ | १५ | १५ | १० | १० | ५ |  |  |  |  |  |  |  |  |  |  |  |  |  |  |
| १५ | १० | १० | १० | ५ | ० | ० |  |  |  |  |  |  |  |  |  |  |  |  |  |  |
| १० | ५ |  |  |  |  |  |  |  |  |  |  |  |  |  |  |  |  |  |  |  |
| ५ |  |  |  |  |  |  |  |  |  |  |  |  |  |  |  |  |  |  |  |  |

प्रभावतः ॥ ४ ॥ दण्डकव्याख्यानं यथा—करेमि भदंत सामायिकं । भदंतेति गुरोः पूज्यवाचकसंबोधनं । सर्वसावद्यं योगं प्रत्याख्यामि । सावद्यकथने सपापत्वेन कुत्सितं योगं कर्म प्रत्याख्यामि निराकरोमि त्यजामीत्यर्थः । यावज्जीवं आमरणमित्यर्थः । त्रिविधं त्रिविधेन मनसा वाचा कायेन न करोमि न कारयामि । कुर्वे-

कोष्ठकत्रयोदशक्रमेण निरपेक्षादीनां स्वबुद्ध्या ऊहनीयमिति ।

| निरपेक्ष | आचार्यकृ | आचार्यकृ | उपाकृत | गीतार्थकृ | गी अ. कृ. | गी. स्थि क | गी. स्थि.क | ऽगी. स्थि. | अ गी. स्थि | ऽगी. कृ. क. | ऽगी. स्थि. | ऽगी. स्थि. |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ० | अनवस्था | अनवस्था | अनवस्था | मूल | मूल | छेद | छेद | ६ | ६ | ६ | ६ | ४ |
| ० | मूल | मूल | मूल | छेद | छेद | ६ | ६ | ६ | ४ | ४ | ४ | ४ |
| मूल | छेद | छेद | छेद | ६ | ६ | ६ | ६ | ४ | ४ | ४ | ४ | ० |
| छेद | छेद | ६ | ६ | ६ | ६ | ४ | ४ | ४ | ४ | ० | ० | ० |
| ६ | ६ | ६ | ६ | ४ | ४ | ४ | ४ | ० | ० | ० | ० | २५ |
| ६ | ६ | ४ | ४ | ४ | ४ | ० | ० | ० | ० | २५ | २५ | २० |
| ४ | ४ | ४ | ४ | ० | ० | ० | ० | २५ | २५ | २० | २० | १५ |

न्तमन्यं न समनुजानामि । मनसा सावद्ययोगं न करोमि न कारयामि । कुर्वन्तमन्यं न समनुजानामि । तस्मान्मनोवाक्कायैः कृतकारितानुमतरूपाद्भदन्त प्रतिक्रमामि निन्दामि गर्हे । आत्मानं व्युत्सृजामि प्रतिक्रमामीति तस्मात्प्रतिक्रमामि निवर्तामि आत्मानं कर्मकारिणं जुगुप्सामि गर्हे पातकं कुत्सितं तथा नितरां

| निरपेक्षा | आचार्यकृत. | आचार्यकृत. | उपाध्याय. | उपाध्याय. | गीतार्थकृत. |
|---|---|---|---|---|---|
| ० | पराञ्चिक | अनवस्था | अनवस्था | मूल | मूल |
| ० | अनवस्थाप | मूल | मूल | छेद | छेद |
| मूल | मूल | छेद | छेद | ६ | ६ |
| ६ | ६ | ६ | ६ | ४ | ४ |
| ६ | ६ | ४ | ४ | ४ | ४ |
| ४ | ४ | ४ | ४ | ० | ० |
| ४ | ४ | ० | ० | ० | ० |
| ०क्ष | ०क्ष | ० | ० | २५ | २५ |
| ०गु | ०गु | २५ | २५ | २० | २० |
| २५ | २५ | २० | २० | १५ | १५ |
| २० | २० | १५ | १५ | १० | १० |
| १५ | १५ | १० | १० | ५ | ५ |
| १० | १० | ५ | ५ | ० | ० |
| ५ | | | | | |

जुगुप्सामि आत्मानं व्युत्सृजामि सावद्ययोगाद्दूरतः करोमीत्यर्थः ॥ देशविरतिदण्डकव्याख्या—करोमि भदन्त सामायिकं सावद्यं योगं प्रत्याख्यामि इति सर्वपदपरित्यागो गृहस्थापेक्षया देशविरतिनियमात् यावन्नियमं पर्युपासे इति साधवो यावज्जीवं सामायिकस्थाः सर्वविरतिभृतो भवन्ति । गृहस्थास्तु सदा सावद्यनिरता देशविरतिभाजो नियममात्रमेव निरवद्या भवन्ति । द्विविधं त्रिविधेनेति मनसा वाचा कायेन न करोमि न कारयामि । अनुज्ञानिवृत्तिस्तु गृहिणां न भवति । शेषं पूर्ववत् । तत्र सामायिकव्रते साधवो यावज्जीवं निरारम्भसंयमपालनपरा भवन्ति । श्रावकास्तु सामायिककालं प्रतिक्रमणस्वाध्यायपरमेष्ठिमन्त्रजपैर्नयन्ति । प्रतिक्रमणमनन्तरं कथयिष्यते ॥

अथ ऋतुपरत्वेन दानकोष्टकम् ।

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| वर्षादानयंत्र | ६।५ उत्कृष्टापत्तो गुरुउमं उ० उ० १२२७ उत्कृष्टापत्तो लघुउउ १५ उत्कृष्टापत्तोलघुक | गुरुतमउम १०३ लघु ८। लघुकरम ८ | गुरुतम ३८ लघु जघन्य उ६ लघु जघन्य उ४ | ४।३ मध्यमापत्तोगुरुतरं मध्यम उ १०२५ मध्यमापत्तोलघुतरं उ ८१०मध्यमापत्तो लघुतर ६ | गुरुतमम ३८ लघुतरमम उ६ लघुतरम म उ४ | गुरुतरज ६ लघुतरज ४ लघुतरमध्य जघ आ० | २।१ जघन्यापत्तो गुरुकंजघन्यउ ८२० जघन्यापत्तो लघुतमज २६ पजायलघु० ४ | गुरुजमउ ६ लघुतमजउ ४ लघुकतमं जम० आ० | गुरुकंजउ ५४ लघुतमज जआंवि० लघुतमज एकासणं वर्षादानयंत्र |
| शिशिरदानयंत्रं | ६।५ उत्कृष्टापत्तोउगुरु उत्तमउल ।१२। ७ उत्कृष्टापत्तो लघुउ उ ८१५ उत्कृष्टापत्तो लघुकउउ ६ | गुरुतमउ ८ लघुउम ०६ लघुकम ४ | गुरुतम तज ६ लघु उत्कृष्ट ४ लघुउज आंबिल | ४।३ मध्यमापत्तो गुरुतम मध्यमउ ।६।२।५ मध्यमापत्तोलघुतरमउ ६ मध्यमापत्तो लघुतम १ | गुरुतरमम ४ लघुतर मम आंबिल | गुरुतरमज ६ लघुतर मज आंबिल लघुतरमज एकासण | २।१ जघन्यपत्तो गुरुकजउ ६२० जघन्यापत्तो लघुतरमजउ० ज० आ० | गुरुकजघन्यलघु जघन्यम आंबिल लघुक जघन्य एकासणा | गुरुकज जआ० लघुजए० लघुकज पुरिम हेमंतदानयंत्रं |
| ग्रीष्मदानयंत्रं | ६।५ उत्कृष्टापत्तो गुरुतम उ०८।२१ उत्कृष्टापत्तो लघुउउ ६१५ उत्कृष्टापत्तो लघुकजउ १ | गुरुतमउउम ६ लघुउमर्द्धे लघुकम आंबिल | गुरुतमज आंविलघुक. उउ जएकासणा | ४।३ मध्यमापत्तो मउप० ६१२५ मध्यमापत्तोभ उ४ मध्यमापत्तो मउ आंबिल | गुरुतरमम ४ लघुतरममआं बिल लघुतर मम एकासणा | गुरुतरमजआं लघुतरमज एका. लघुतरम जपुरिमढ | २।१ जघन्यापत्तो गुरुकज ४२० जघन्यापत्तो लघुज उ आं. ५ ज०प० ल० ज०एकासणा | गुरुक जघन्य मध्यम आंबिल लघुतम जममएका. ०लघुतम ज०मपुरिमढ | गुरुकजज एकासण लघुतम जज पुरि लघुकजज नीवी ग्रीष्मदान यंत्रं |

स्याम्नायश्चतुर्विधः—वाचना १ प्रच्छना २ आम्नाय ३ आगम ४ रूपः । तत्र ससतत्त्वरूपस्य जिनाज्ञारूपस्य जिनागमस्य परिपाटीपाठो वाचना । गुरुबहुश्रुतेभ्य आगमार्थप्रश्नः श्रवणं च प्रच्छना । सूत्रार्थसहितोऽभ्यासो गुरुपरम्परापरिज्ञानमाम्नायः । सर्वरहस्यगर्भसूत्रपाठ आगमः । एवं चतुर्विधस्वाध्यायेन कालातिक्रमणं सामायिके । परमेष्ठिमन्त्रजापस्तु सर्वाघहरणः । स यथा—नमो अरिहंताणं नमो सिद्धाणं नमो आयरियाणं नमो उवज्झायाणं नमो लोए सव्वसाहूणं । एसो पंचनमुक्कारो सव्वपावप्पणासणो । मंगलाणं च सव्वेसिं पढमं हवइ मंगलं ॥ १ ॥ नमोऽर्हद्भ्य इति । अर्हन्ति समस्तसुरासुरेन्द्रकृतपूजामित्यर्हन्तः । यत उक्तमागमे—'अरिहंतवंदणनमंसणाइ अरिहंति पूयसक्कारं । अरिहंति सिद्धिगमणं अरिहंता तेण वुचंति ॥ १ ॥' अतएव अर्हन्तः चतुस्त्रिंशदतिशयपञ्चत्रिंशद्वचनगुणयुक्ता अष्टादशदोषरहिता भवन्ति । एतदार्हन्त्यलक्षणं तेभ्यो नामस्थापनाद्रव्यभावरूपेभ्योऽर्हद्भ्यो नमोस्तु मनोवाक्कायैः साष्टाङ्गप्रणामोस्तु ॥ नमः सिद्धेभ्य इति । सिध्यन्ति स्म मुक्तिशिलां गच्छन्ति स्मेति सिद्धाः । अथवा निरुक्तेन सितमस्तोककालेन बद्धं कर्म ध्मातं भस्मीकृतं यैस्ते सिद्धाः । यत उक्तं—'दीहकालरयं जं तु कम्मं सेसिय मट्ठहा । सिअं धंतंति सिद्धस्स सिद्धत्तमुवजायइ ॥ १ ॥' तेभ्यो नमः नामस्थापनाद्रव्यभावरूपेभ्यः सिद्धेभ्यो नमोस्तु मनोवाक्कायैः साष्टाङ्गप्रणामोस्तु ॥ नम आचार्येभ्य इति । आचारं ज्ञानदर्शनचारित्रतपोवीर्यरूपं स्वयमाचरणेन प्रकाशनेन चाचरन्तीत्याचार्याः । यत उक्तमागमे—'पंचविहं आयारं आयरमाणा तहा पयासंता । आयारं दंसंता आयरिया तेण वुचंति ॥ १ ॥'

तेभ्य आचार्येभ्यो नम इति पूर्ववत् ॥ नम उपाध्यायेभ्य इति । उप समीपे एत्य आगत्य द्वादशाङ्गी अधीयते पठ्यते येभ्य इति उपाध्यायाः । यत उक्तमागमे—'बारसविहो जिणेहिं कहिओ चउभंगएहिं सज्झाओ । तं उवइसंति जह्मा उवज्झाया तेण वुच्चंति ॥ १ ॥' तेभ्य उपाध्यायेभ्यो नमः पूर्ववत् ॥ नमो लोके सर्वसाधुभ्यः । अत्र लोकग्रहणं साधवो ह्याचार्योपाध्यायसाधुरूपा लोक एव सन्ति । अर्हत्सिद्धौ लोकान्तरस्थौ । अतएव लोकग्रहणं । सर्वग्रहणं केवलिच्छद्मस्थसंग्रहार्थं । साधयन्ति मोक्षमार्गमिति साधवः । यदुक्तं—'निव्वाणसाहए जो जह्मा साहुंति साहुणो । समायसव्वभूएसु तह्मा ते भाव साहुणो ॥ १ ॥' ततस्तेभ्यः साधुभ्यो नम इति पूर्ववत् ॥ एष पञ्चनमस्कारः सर्वपापप्रणाशनः । मङ्गलानां च सर्वेषां प्रथमं भवति मङ्गलं ॥ १ ॥ अत्र एतद्ग्रहणं पूर्वोक्तपदविद्योतनार्थं । पञ्चभ्योऽर्हत्सिद्धाचार्योपाध्यायसाधुभ्यो नमस्कारः प्रणामः सर्वपापप्रणाशनः स्मरणमात्रेण सर्वपापानि प्रणाशयतीत्यर्थः । यदुक्तं—'नवकारइक्कअक्खर पावं नासेइ सत्तअइराइं । पन्नासं तु पएणं पणसयसागरसमग्गेण ॥ १ ॥' अपिच—'एसो परमिट्ठीणं पंचण्हवि भावओ नमुक्कारो । सव्वस्स कीरमाणो पावस्स पणासणो होइ ॥ २ ॥ प्रणाशः पापदुःखादेः संभवो धर्मसंपदोः । स्वभावादेव जायेत महामन्त्रनिषेवणात् ॥ ३ ॥ कृत्वा पापसहस्राणि हत्वा जन्तुशतानि च । अमुं मन्त्रं समासाद्य तिर्यञ्चोऽपि दिवं गताः ॥ ४ ॥' अयं च मन्त्रः सर्वेषां मङ्गलानामाद्यं मङ्गलं भवति । यदुक्तं—'भुवणेवि मङ्गलाणं मणुआसुरअमरखयरमहिआणं । सव्वेसिमिमो पढमो होइ महामंगलं पढमं ॥ १ ॥' अस्य मन्त्रराजस्य प्रभावं वक्तुं कोऽधीशः

परं पञ्चार्हदाद्यधिकारियुक्तोऽयं मन्त्रः पञ्चहेतुभिः स्मृतिपथमानीयते। यथा—'मग्गेअविप्पणासो आयारे
विणयय्यासहाउत्ति । पंचविहनमुक्कारं करेमि एएहिं हेऊहिं ॥ १ ॥' पञ्च दृष्टान्ताश्चास्मिन्। यथा—'इहलो-
गंमि तिदंडी १ सादिव्वं २ मातुलिंगवणमेव ३। परलोइचंडपिंगल ४ हुंडिअजक्खो ५ अ दिट्ठंता ॥ १ ॥' अ-
त्राचारशास्त्रे विधिक्रम एव कथनीयः । कथानकानि महागमटीकाभ्योऽवसेयानि । अत्र विधिक्रम एव व-
क्तव्यः।—'पुण सामाइयदंडे सावज्जसामाइअस्स दंडंमि । परमिट्ठिनवपएसुं पए पए संपयानेआ ॥ १ ॥'
इत्यावश्यकविधौ सामायिककथनम् ॥

अथ चतुर्विंशतिस्तव उच्यते। चतुर्विंशतिस्तवकथने शक्रस्तवअर्हच्चैत्यस्तवचतुर्विंशतिस्तवश्रुतस्तवसिद्धस्त-
वसर्वचैत्यस्तवभगवत्प्रार्थनानां प्रक्रमाः। प्रथमं शक्रस्तवो यथा—नमोत्थु णं। णं इति वाक्यालंकारे । नमोस्तु
नमस्कारोस्तु। पञ्चाङ्गोऽष्टाङ्गो दण्डवत्प्रणामो वास्तु। केभ्य इत्याह। अर्हंताणं भगवंताणं। अर्हन्ति चतुष्षष्टिसुरा-
सुरेन्द्रकृतां पूजामित्यर्हन्तः तेभ्यः। केचित् अरुहद्भ्यः अरहद्भ्यः इति पठन्ति। न रुहन्ति संसारपङ्के इत्यरुहन्तः।
अथवा न रहन्ति न त्यजन्ति तत्वं इत्यरहन्तः। कथंभूतेभ्यः। भगवद्भ्यः ज्ञानमाहात्म्ययशोवैराग्यमुक्तिवीर्य-
श्रीधर्मैश्वर्यवद्भ्य इत्यर्थः। पुनः कथंभूतेभ्य इत्याह। आइगराणं तित्थगराणं सयंसंबुद्धाणं। आदिकरेभ्यः स्व-
स्वतीर्थेषु धर्मागमगणधरसंघादीनां प्रथमारम्भकारिभ्य इत्यर्थः। तीर्थकरेभ्यः तीर्थं चतुर्विधः संघः प्रथमगण-
धरो वा तत्कर्तृभ्यः। स्वयं संबुद्धेभ्यः अन्यस्माद्गुरोरुपदेशं विनापि स्वात्मावबोधप्रबुद्धेभ्यः । पुनः कथंभूतेभ्य

इत्याह । पुरिसुत्तमाणं पुरिससीहाणं पुरिसवरपुंडरियाणं पुरिसवरगंधहत्थीणं । पुरुषोत्तमेभ्यः पुरुषाणां मध्ये बलेन कान्त्या श्रुतेन ज्ञानेन प्रभावैरतिशयैश्च उत्तमाः प्रकृष्टाः पुरुषोत्तमास्तेभ्यः पुरुषोत्तमेभ्यः । पुरुषसिंहेभ्यः सिंहा इव तिर्यक्षु पुरुषेष्वसंख्यातबलभाजः पुरुषसिंहास्तेभ्यः पुरुषसिंहेभ्यः । पुरुषवरपुण्डरीकेभ्यः पुंडरीकं हि शुभ्रकमलं पङ्के संभूतं जलेन प्रवृद्धं तद्द्वयमपि विहायोपरि तिष्ठति तथा भगवन्तोपि संसारे समुत्पन्ना भोगैः प्रवृद्धाः तद्द्वयमपि विहाय लोकोत्तरं पदं प्रपन्नाः पुरुषवरपुण्डरीकाः तेभ्यः पुरिसवरपुण्डरीकेभ्यः । पुरुषवरगन्धहस्तिभ्यः पुरुषेषु वराः प्रधानाः बलेन महिमसमुच्चयेन सर्वोत्कृष्टतया परमभावगोपनेन परबलविनाशनेन गन्धहस्तिन इव तेभ्यः पुरुषवरगन्धहस्तिभ्यः । पुनः कथंभूतेभ्य इत्याह । लोगुत्तमाणं लोगनाहाणं लोगहियाणं लोगपइवाणं लोगपज्जोयगराणं । लोकोत्तमेभ्यः लोकेषु चतुर्दशरज्ज्वात्मकेषु सुरनरतिर्यग्दैत्यसंकुलेषु सर्वपूज्यत्वेन प्रभावातिशयेन उत्तमाः प्रकृष्टा लोकोत्तमास्तेभ्यः लोकोत्तमेभ्यः । लोकनाथेभ्यः लोकस्य चतुर्दशरज्ज्वात्मकस्य शासकत्वेन रक्षकत्वेन प्रीणकत्वेन मार्गनिवेशकत्वेन नाथाः स्वामिनः लोकनाथास्तेभ्यः लोकनाथेभ्यः । लोकहितेभ्यः लोकस्य रक्षकत्वेन सन्मार्गनिवेशकत्वेन हिता आप्ताः लोकहितास्तेभ्यः । लोकप्रदीपेभ्यः लोकस्य सदसद्वस्तुतत्त्वप्रकाशकत्वेन दीपाः लोकप्रदीपास्तेभ्यः । लोकप्रद्योतकरेभ्यः लोकस्य मोहान्धकारनिमग्नस्य भावप्रभावप्रकाशकत्वेन प्रद्योतं कुर्वन्तीति लोकप्रद्योतकरास्तेभ्यः । अत्र प्रदीपप्रद्योतकरयोः किंवान्तरमित्युच्यते । दीपाः प्रस्तुतमितवस्तुप्रकाशकाः । प्रद्योतकरास्तु दिनकरोदयवत्

भव्याभव्यसर्वपदार्थदर्शकाः । पुनः कथंभूतेभ्य इत्याह । अभयदयाणं चक्खुदयाणं मग्गदयाणं सरणदयाणं
बोहदयाणं । अभयदयेभ्यः दयाधर्मस्योपदेशाचरणाभ्यां सर्वजीवानामभयदानदातारः अभयदास्तेभ्यः । च-
क्षुर्देभ्यः मोहान्धानां ज्ञानात्मकं चक्षुर्ददतीति चक्षुर्दास्तेभ्यः । मार्गदेभ्यः मार्गं स्वर्गमोक्षसर्वसमीहितलाभार्थं
ददतीति मार्गदास्तेभ्यः । शरणदेभ्यः भवभीतप्राणिनां रागद्वेषादिशत्रुपराभूतानां शरणं ददतीति शरणदा-
स्तेभ्यः । बोधदेभ्यः बोधं ज्ञानं सम्यक्त्वप्राप्तिं वा ददतीति बोधदास्तेभ्यः । पुनः कथंभूतेभ्यः । धम्मदयाणं
धम्मदेसयाणं धम्मनायगाणं धम्मसारहीणं धम्मवरचाउरंतचक्कवट्टीणं । धर्मदेभ्यः उपदेशप्रभावदृष्टान्तैस्तद्बु-
द्धिदानेन च धर्मं ददतीति धर्मदास्तेभ्यः । धर्मदेशकेभ्यः धर्मं दशविधं दिशन्तीति धर्मदेशकास्तेभ्यः । धर्म-
नायकेभ्यः धर्मस्य स्थापकत्वाद्रक्षकत्वात् नायकाः स्वामिनस्तेभ्यः । धर्मसारथिभ्यः धर्मस्य मोक्षादिगमने रथ-
रूपस्य सुखसंचरणहेतोः सारथय इव धर्मसारथयस्तेभ्यः । धर्मवरचतुरन्तचक्रवर्तिभ्यः धर्मो यो वरः प्रधानः
चतुर्णां गतीनां अन्तरूपः तस्य चक्रवर्तिनः विश्वाधीशा धर्मवरचतुरन्तचक्रवर्तिनस्तेभ्यः । पुनः कथंभूतेभ्यः ।
अप्पडिहयवरनाणदंसणधराणं । अप्रतिहतवरज्ञानदर्शनधरेभ्यः अप्रतिहते ज्ञानावरणदर्शनावरणाभ्यामना-
च्छादिते वरे ज्ञानदर्शने धारयन्तीति अप्रतिहतवरज्ञानदर्शनधरास्तेभ्यः । ज्ञानं केवलसंज्ञं दर्शनं सम्यक्त्वं जग
दालोको वा । वियट्टछउमाणं व्यावृत्तछद्मभ्यः । व्यावृत्तं अपगतं छद्म कैतवं ज्ञानाद्याच्छादो येभ्यस्ते व्यावृत्त-
छद्मानस्तेभ्यः । पुनः कथंभूतेभ्यः । जिणाणं जावयाणं तिन्नाणं तारयाणं बुद्धाणं बोहयाणं मुत्ताणं मोयगाणं ।

जिनेभ्यः जयन्ति रागाद्यरीनिति जिनास्तेभ्यः । जापकेभ्यः भक्तान् रागाद्यरीन् जापयन्तीति जापकास्तेभ्यः । तीर्णेभ्यः तरन्ति स्म संसारोदधिमिति तीर्णास्तेभ्यः । तारकेभ्यः तारयन्ति संसाराद्भक्तानिति तारकास्तेभ्यः । बुद्धेभ्यः बुध्यन्ति स्म स्वयमेवेति बुद्धास्तेभ्यः । बोधकेभ्यः बोधयन्ति शुद्धोपदेशैर्विश्वमिति बोधकास्तेभ्यः । मुक्तेभ्यः मुच्यन्ते स्म कर्मबन्धनेभ्यश्चतुर्विधेभ्य इति मुक्तास्तेभ्यः । मोचकेभ्यः मोचयन्ति भक्तान्कर्मबन्धनेभ्य इति मोचकास्तेभ्यः। पुनः कथंभूतेभ्यः। सव्वन्नाणं सव्वदरसीणं सीवमयलमरुयमणंतमक्खयमव्वाबाहमपुणराविित्तिसिद्धिगइनामधेयं ठाणं संपत्ताणं नमो जिणाणं जियभयाणं । सर्वज्ञेभ्यः सर्वं सप्ततत्वात्मकं केवलज्ञानेन जानन्तीति सर्वज्ञास्तेभ्यः । सर्वदर्शिभ्यः सर्वं द्रष्टुं दर्शनावरणाभावेन शीलमेषां ते सर्वदर्शिनस्तेभ्यः सर्वदर्शिभ्यः। शिवमचलमरुजमनन्तमक्षयमव्याबाधमपुनरावृत्तिसिद्धिगतिनामधेयं स्थानं संप्राप्तेभ्यः । सर्वोपायापगमाच्छिवं, चलनरहितत्वादचलं, भंगरोगाख्यरुजानामभावादरुजं, कालाद्यावनन्तत्वादनन्तं, प्रलयेप्यनपगामित्वादक्षयं, सर्वसंकटवर्जितत्वादव्याबाधं, अपुनर्निवर्तनादपुनरावृत्ति, प्राणिनः सर्वकर्मक्षये समीहितप्राप्तौ प्राप्तत्वात् सिद्धिगतिनामधेयं स्थानं लोकान्तररूपं संप्राप्तेभ्यः नमो जिनेभ्यः । प्रथमार्हन्नामग्रहणात् पुनर्जिनग्रहणं प्रान्ते निर्धारणार्थं । नात्र पुनरुक्तदोषः । यदुक्तमागमे—'सज्झायज्झाणतवोसहेसु उवएसथुइपयाणेसु। संतगुणकित्तणेसु य न हुंति पुणरुत्तदोसाओ ॥ १ ॥' जितभयेभ्यः सप्तभयजेतृभ्यः । अयं तु शक्रस्तवः शक्रेणाभिहितः। अग्रतो गाथा च गीतार्थमुनिभिः प्रोक्ता कथ्यते—'जे य अईआ सिद्धा जे अ भविस्संति अ-

गागए काले। संपइअ वट्टमाणा सव्वे तिविहेण वंदामि ॥ १ ॥ ये च अतीताः अतीतासूत्सर्पिण्यवसर्पिणीषु तीर्थं
प्रवर्त्य सिद्धाः मुक्ताः ये च अनागते भविष्यति काले उत्सर्पिण्यवसर्पिणीरूपे भविष्यन्ति। संप्रति च वर्तमानाः
जनैराराध्यमानतीर्था विहरमाणा वा शाश्वतप्रतिमास्थिता वा तान् सर्वान् त्रिविधेन मनोवाक्काययोगेन वन्दे
नमस्करोमि। अत्र शक्रस्तवे दश विश्रामाः संपद इति कथ्यन्ते । यथा—अरिहं १ आइग २ पुरिसे ३
लोगो ४ भय ५ धम्म ६ अप्प ७ जिण ८ सव्वा ९। सकच्छयसंपयाणं पढमुल्लिंगणपया नेया ॥ १ ॥ इति शक्र-
स्तवव्याख्यार्थः ॥

अथ चतुर्विंशतिस्तवो यथा—लोगस्स उज्जोयगरे धम्मतित्थयरे जिणे । अरिहंते कित्तइस्सं चउवीसंपि
केवली ॥ १ ॥ चतुर्विंशतिमप्यर्हतः कीर्तयिष्ये कथयिष्ये। कथंभूतान् अर्हतः। लोकस्य चतुर्दशरज्ज्वात्मकस्य
परमज्ञानोपदेशसंशयच्छेदसर्वपदार्थप्रकटनकारित्वात् उद्योतकरास्तान् लोकस्योद्योतकरान्। पुनः कथंभूतान्।
धर्मतीर्थकरान् संसारोदधितारकत्वात् धर्माख्यं तीर्थं कुर्वन्तीति धर्मतीर्थकरास्तान्धर्मतीर्थकरान्। पुनः कथं-
भूतान्। जिनान् जयन्ति रागादीन् इति जिनास्तान्। केवलं ज्ञानं विद्यते येषां ते केवलिनस्तान्। तेषां कीर्त-
नमेवाह।—उसभमजियं च वंदे संभवमभिणंदणं च सुमइं च। पउमप्पहं सुपासं जिणं च चंदप्पहं वंदे ॥२॥
सुविहिं च पुप्फदंतं सीअल सिज्जंस वासुपुज्जं च। विमलमणंतं च जिणं धम्मं संतिं च वंदामि ॥ ३ ॥ कुंथुं
अरं च मल्लिं वंदे मुणिसुव्वयं नमिजिणं च। वंदामि रिट्ठनेमिं पासं तह वद्धमाणं च ॥४॥ ऋषति मोक्षमिति

ऋषभः सर्वेषां केवलिनां मोक्षगामित्वेपि तस्यावसर्पिण्यादौ मोक्षगामित्वे ऋषभत्वात् ऋषभं १ न जितो रागादिदोषैरिति अजितस्तमजितं २ संभवति मोक्षोपदेशाय सर्वेष्टदानाय च संभवस्तं ३ अभिनन्दयति विश्वमिति अभिनन्दनस्तं ४ शोभना मतिः सर्वजीवाभयदायिनी यस्य स सुमतिस्तं सुमतिं ५ पद्मस्येव शोणतया सुगन्धतया पङ्कपरित्यागतया प्रभा यस्यासौ पद्मप्रभस्तं ६ शोभनं गणधरसंघैः पार्श्वं समीपं यस्य स सुपार्श्वस्तं ७ जयतीति जिनस्तं जिनं चन्द्रस्येव प्रभा यस्यासौ चन्द्रप्रभस्तं ८ वन्दे नमस्करोमि । शोभनो विधिर्यस्यासौ सुविधिस्तं ९ । कथंभूतं । पुष्पदन्तं पुष्पवद्दन्ता यस्यासौ पुष्पदन्तस्तं । संसारतापतप्तानां शीतत्वकरणाच्छीतलस्तं १० प्रकृष्टत्वश्रेयोमयत्वाच्छ्रेयांसस्तं ११ वसुपूज्यस्यापत्यं वासुपूज्यस्तं १२ । अत्र त्रयाणां बहुवचनस्थाने आर्षत्वादेकवचनं । विगतानि कर्मचितानि मलानि यस्यासौ विमलस्तं १३ सर्वैर्गुणैरनन्तत्वादनन्तस्तं १४ जिनं जयतीति जिनस्तं । दुर्गतिं प्रपततो जन्तून्धारयतीति धर्मस्तं १५ जगत्रयस्य शान्तिकरत्वाच्छान्तिस्तं १६ कुं पृथ्वीं थुडति अभयदानेन रक्षतीति कुंथुस्तं १७ इयर्ति मोक्षमित्यरस्तं १८ मोहस्य प्रतिमल्लत्वात् मल्लिस्तं १९ वन्दे नमस्करोमि । मुनिश्चासौ शोभनव्रतश्च मुनिसुव्रतस्तं २० नमयति दुष्टान्तरारीनिति नमिः नमिश्चासौ जिनश्च नमिजिनस्तं २१ वन्दे नमस्करोमि । अरिष्टानामुपद्रवाणां छेदनाय नेमिः चक्रधारेवासौ अरिष्टनेमिस्तं २२ पश्यतीति पार्श्वस्तं २३ वर्धतेस्म सर्वैर्गुणैरिति वर्धमानस्तं २४ वन्देशब्दः सर्वत्राप्यन्वेति । एतेषां नाम्नां व्याख्यानं नानाविधव्युत्पत्तिभिर्नानाकथासंप्रदायैः सविस्तरं ज्ञातमपि ग्रन्थ-

विस्तरभयान्न प्रकाशितं । आचारग्रन्थो ह्ययं न व्याख्याग्रन्थः । अत्र कश्चिद्व्याख्या प्रबोधरूपैव ॥ एवं मए
अभिथुया विहुयरयमला पहीणजरमरणा । चउविसंपि जिणवरा तिच्छयरा मे पसीयंतु ॥ ५ ॥ एवं मया
अभिस्तुताः विधुतरजोमलाः प्रक्षीणजरामरणाः चतुर्विंशतिरपि जिनवरास्तीर्थंकरा मे प्रसीदन्तु ५ ॥ कित्तिय
वंदिय महिआ जे ते लोगस्स उत्तमा सिद्धा । आरुग्गबोहिलाभं समाहिवरमुत्तमं दिंतु ॥ ६ ॥ कीर्तिताः
स्तुताः वन्दिताः नमस्कृताः महिताः पूजितास्ते कीर्तितवन्दितमहिताः ये तीर्थंकराः लोकस्योत्तमाः सिद्धास्ते
तीर्थंकराः आरोग्यं बोधिलाभं समाधिवरं उत्तमं ददतु ६ । चंदेसुनिम्मलयरा आइचेसु अहिअं पयासयरा ।
सागरवरगम्भीरा सिद्धा सिद्धिं मम दिसंतु ॥ ७ ॥ अत्र सिद्धा इति जिनानां मुक्तिस्थानमेव नामकीर्तनं ।
सिद्धाः मम सिद्धिं दिशन्तु यच्छन्तु । कथंभूताः सिद्धाः । चन्द्रेभ्योपि निर्मलतराः आदित्येभ्योऽधिकं प्रकाश-
कराः सागरवरगम्भीराः । सप्तमी निर्धारणे इति प्राकृतसूत्रेण पञ्चमीस्थाने सप्तमी । केचित्सप्तमीमेव व्याख्या-
न्ति ७ ॥ चतुर्विंशतिस्तवे पदेपदे विश्रामसंपत् ॥

अथार्हच्चैत्यस्तवव्याख्या । अर्हंतचेइआणं करेमि काउसग्गं । अर्हच्चैत्यानां कायोत्सर्गं करोमि तेषामाराध-
नार्थमित्यर्थः । अत्र चैत्यकथने जिनानां चतुर्विंशतिवर्तमानानां कथनं । यत्र च सव्वलोए अरहंतचेइयाणं इति
कथनेन समस्तानां गतातीतवर्तमानविहरमाणप्रतिमारूपाणां जिनानां त्रैलोक्यमहितानां ग्रहणं । कथेत्याह ।
वंदणवत्तियाए वन्दनवृत्त्या नमस्कारयुक्त्या । पूयणवत्तियाए पूजनवृत्त्या अर्चनयुक्त्या । सक्कारवत्तियाए स-

त्कारवृत्त्या सत्करणं शोभोन्नतिकरं दानं तस्य वृत्तिः युक्तिस्तया सत्कारवृत्त्या । सम्माणवत्तिआए सन्मानवृत्त्या मनो वाक्कायोत्साहकरी लोकप्रत्यक्षं पूजा सन्माननं तस्य वृत्तिस्तया सन्मानवृत्त्या । बोहिलाभवत्तिआए बोधिलाभवृत्त्या बोधिलाभः सम्यक्त्वप्राप्तिः तेन पुरस्कृता या वृत्तिस्तया बोधिलाभवृत्त्या । निरुवसग्गवत्तिआए निरुपसर्गवृत्त्या निरुपद्रवयुक्त्या । सद्धाए श्रद्धया वासनया । मेहाए मेधया बुद्ध्या । धिइए धृत्या संतोषेण । धारणाए धारणया श्रुताधीतयोः स्थिरीभावो धारणा तया धारणया । अणुप्पेहाए अनुप्रेक्षया इष्टस्य वस्तुनः सर्वदा स्मरणमनुप्रेक्षा । वड्ढमाणिए वर्धमानया प्रतिक्षणं वृद्धिमुपगच्छन्त्या । वड्ढमाणिए इति शब्दः वंदणवत्तियाए इत्यादीनां अणुप्पेहाएपर्यन्तानां सर्वत्र विशेषणत्वमुपैति । ठामि काउसग्गं तिष्ठामि कायोत्सर्गं । शेषं कायोत्सर्गव्याख्यानं कायोत्सर्गव्याख्याने कथयिष्यते । अत्र विश्रामसंपदो यथा—अर्हं १ वंदण २ सद्धा ३ अन्नत्थ ४ सुहम ५ एव ६ जा ७ ताव ८ । अड संपइ तेआला पय वन्नादुसयतीस हिआ ॥ १ ॥ इति अर्हच्चैत्यस्तवव्याख्या ॥

अथ श्रुतस्तवव्याख्या । तत्र प्रथमं श्रुतस्योत्पत्तिभूतानां तीर्थंकराणां निर्विघ्नकार्यसिद्धये मङ्गलकृन्नमस्कारो यथा—पुक्खरवरदीवड्ढे धायइसंडे अ जंबुदीवे अ । भरहेरवइविदेहे धम्माइगरे नमंसामि ॥ १ ॥ पुष्करवरद्वीपार्धे धातकीखण्डे जम्बुद्वीपे च भरतैरावतविदेहेषु धर्मादिकरान् तीर्थंकरान् नमिष्यामि नमस्यामि वा ॥ १ ॥ तमतिमिरपडलविद्धंसणस्स सुरगणनरिंदमहियस्स । सीमाधरस्स वंदे पप्फोडिअमोहजालस्स ॥ २ ॥ श्रुता-

यनम इत्यध्याहारः। वन्देशब्दे नम इति विज्ञेयश्चतुर्थीसूचनाय। प्राकृते तु चतुर्थ्यां षष्ठीसिद्धिः सर्वत्र। क-
थंभूताय श्रुताय। तमस्तिमिरपटलविध्वंसनाय तमः पातकं तदेव तिमिरं अन्धकारं तस्य पटलं समूहः तस्य
विध्वंसनं छेदकरं तत्तमतिमिरपटलविध्वंसनं तस्मै। पुनः कथंभूताय। सुरगणनरिंदमहियस्स सुरगणनरे-
न्द्रमहिताय सुरगणा देवसमूहाः नरा मनुष्यास्तेषां इन्द्राः स्वामिनस्तैर्महितं पूजितं सुरगणमहेन्द्रमहितं
तस्मै सुरगणनरेन्द्रमहिताय। पुनः कथंभूताय। सीमाधरस्स वंदे सीमाधराय सर्वेषामुत्तमवस्तूनां सीमां म-
र्यादां भरतीति सीमाधरं तस्मै आगमादुत्तमं न किंचिदित्यर्थः। पुनः कथंभूताय श्रुताय। पप्फोडिअमोह-
जालस्स प्रस्फोटितमोहजालाय प्रस्फोटितं चूर्णीकृतं मोहजालं जडतासंचयो येन तत्प्रस्फोटितमोहजालं तस्मै
प्रस्फोटितमोहजालाय। अत्रच तमस्तिमिरपटलविध्वंसनं सुरगणनरेन्द्रमहितं सीमाधरं प्रस्फोटितमोहजालं
जिनागमं वन्दे इति गाथाद्वयं। अतो जिनश्रुतसारस्य स्तुतिसारस्य धर्मस्य स्तुतिव्याजेन वसन्ततिलकावृत्तेन
आगममेव स्तौति—जाईजरामरणसोगपणासणस्स कल्लाणपुक्खलविसालसुहावहस्स। कोदेवदाणवनरिंदग-
णच्चियस्स धम्मस्स सारमुवलब्भ करे पमायं॥ सारं उपलभ्य कः प्रमादं कुर्यात्। न कोपीत्यर्थः। कथंभूतस्य ध-
र्मस्य। जातिजरामरणशोकप्रणाशनस्य मोक्षदायित्वात् जातिर्जन्म शेषं सुगमं। पुनः कथंभूतस्य। कल्याण-
पुष्कलविशालसुखावहस्य कल्याणैर्मङ्गलैः पुष्कलं संख्यातीतं विशालं विस्तीर्णं सुखं आवहतीति कल्याणपु-
ष्कलविशालसुखावहस्तस्य कल्याणपुष्कलविशालसुखावहस्य। पुनः कथंभूतस्य। देवदानवनरेन्द्रगणार्चितस्य

देवानां दानवानां नराणां इन्द्राः स्वामिनः तेषामेव देवादीनां गणाः समूहास्तैरर्चितो देवदानवनरेन्द्रगणार्चितस्तस्य देवदानवनरेन्द्रगणार्चितस्य ॥ ३ ॥ पुनर्जिनागममेव शार्दूलविक्रीडितवृत्तेन स्तौति—सिद्धे भो पयओ नमो जिणमए नंदी सया संयमे देवंनागसुवन्नकिन्नरगणैस्सब्भूयभावच्चिए । लोगो जत्थ पइट्ठिओ जगमिणं तेलोक्कमच्चासुरं धम्मो वड्ढउ सासओ विजयओ धम्मुत्तरं वड्ढओ ॥ भो भविकलोकाः, जिनमताय नमः आर्षत्वात् चतुर्थीस्थाने सप्तमी । कथंभूताय जिनमताय । सिद्धाय । अथवा केचित् द्वितीयामाहुः । प्रयतो जिनमतं नमामि । यतो गामार्षं सर्ववेत्तृत्वादृषीणां । नंदीसयासंयमे सदा निरंतरं संयमे नन्दिः समृद्धिः । कथंभूते संयमे । देवनागसुवर्णकिन्नरगणैः सद्भूतभावार्चिते देवा वैमानिकाः नागोपलक्षणेन भुवनपतयः सुवर्णाः उज्ज्वलवर्णत्वेन ज्योतिष्काः किन्नराः किन्नरोपलक्षणेन व्यन्तरास्तेषां गणाः समूहाः तैर्देवनागसुवर्णकिन्नरगणैः सद्भूतभावेन स्वाभाविकविशिष्टपरिणामेन अर्चितः पूजितः देवनागसुवर्णकिन्नरगणैः सद्भूतभावार्चितः तस्मिन् देवनागसुवर्णकिन्नरगणैः सद्भूतभावार्चिते । यत्र जिनमते लोको ज्ञानं उपस्थितः स्थिरीभूतः सर्ववस्तुज्ञातृत्वात् यत्र च जगत्त्रैलोक्यं मर्त्यासुरं देवनारकमर्त्यसहितं उपस्थितं स शाश्वतो धर्मो वर्धतां विजयते धर्मोत्तरं धर्मप्रकृष्टत्वं वर्धतां । धर्मस्य च वृधिधातोः पुनरुक्तकथनं धर्मस्य दृढत्वकरणार्थं । सुअस्स भगवओ करेमि काउसग्गं । श्रुतस्य भगवतः कायोत्सर्गं करोमि । शेषं पूर्ववत् ॥ ॥ अथ सिद्धस्तवमाह । सर्वस्तवप्रान्ते सर्वसिद्धिदायकानां सिद्धानां स्तुतिरभिधीयते । परमार्थेन जगद्वन्द्या भगवन्तोऽर्हन्तोपि सिद्धा

एव ननु ते स्वकायेन सर्वदैव विहरन्ति अतएवोच्यन्ते—सिद्धाणं बुद्धाणं पारगयाणं परंपरगयाणं लोगग्गमुवगयाणं नमो सया सव्वसिद्धाणं। सिद्धेभ्यो नमः सिद्धव्याख्यानं परमेष्ठिवत । कथंभूतेभ्यः सिद्धेभ्यः । बुद्धेभ्यः बुध्यन्ते स्म परमालोकेनेति बुद्धास्तेभ्यो बुद्धेभ्यः । पुनः कथंभूतेभ्यः । पारगतेभ्यः संसारमहोदधेः पारं गच्छंतिस्मेति पारगतेभ्यः । पुनः कथंभूतेभ्यः । परंपरगतेभ्यः परंपरं चतुर्दशगुणस्थानान्यतिक्रम्य गताः परंपरगतास्तेभ्यः । पुनः कथंभूतेभ्यः । लोकाग्रं मोक्षं उपगतेभ्यः । पुनः सर्वसिद्धेभ्यो नम इति कथनं सर्वग्रहणेन पञ्चदशभेदसिद्धकथनार्थं । यथा—जिण १ अजिण २ तित्थ ३ अतित्थ ४ इत्थी ५ गिहि ६ अन्न ७ सलिङ्ग ८ नर ९ नपुंस १० पत्तेय ११ । संबुद्धा य १२ बुद्धबोहि १३ एक्क १४ अणेक्क १५ ॥ १ ॥ जिनसिद्धाः जिना भूत्वा सिद्धा जिनसिद्धाः १, जिनत्वं विनापि प्राप्तकेवला ये सिद्धा गणधरमुनिप्रभृतयः ते अजिनसिद्धाः २, तीर्थे प्रवर्तमाने ये सिद्धास्ते बहवोपि ३, अतीर्थसिद्धाः तीर्थे अप्रवृत्ते व्यवच्छिन्ने वा ये सिद्धास्ते अतीर्थसिद्धा मरुदेव्यादयः ४, स्त्रीलिङ्गसिद्धा ये स्त्रीरूपेण सिद्धा ब्राह्मीसुन्दरीप्रभृतयस्ते स्त्रीसिद्धाः ५, गृहिलिङ्गसिद्धा गृहे व्रतादानं विनापि गृहिण एव सिद्धाः भरत इलापुत्रप्रभृतयः ६, अन्यलिङ्गसिद्धा ये परिव्राजकादिलिङ्गैरुत्पन्नकेवला जातास्तेऽन्यलिङ्गसिद्धाः ७, सलिङ्गसिद्धाः ८, नरसिद्धाः ९, नपुंसकलिङ्गसिद्धाः ये पण्ढाः मुक्तिं गतास्ते नपुंसकलिङ्गसिद्धाः १०, प्रत्येकबुद्धसिद्धाः ये एकदृष्टान्तेन प्रबोधमाप्य सिद्धास्ते करकण्डुप्रभृतयः ११, स्वयंबुद्धसिद्धाः ये गुरुं विनापि स्वावधानादेवोत्पन्नकेवलाः मुक्तिं गतास्ते बहवः १२, बुद्धबोधितसिद्धाः ये

गुरोः प्रबोधमाप्य मुक्तिं गतास्ते बहवः १३, एकसिद्धाः ये एकाकिन एवाद्वितीयाः सिद्धास्ते बहवः १४, अनेकसिद्धाः ये समकालं मुक्तिं गता बहवः १५, इति पञ्चदशभेदख्यापनार्थं नमो सया सव्वसिद्धाणं इतिपदपुनर्भाषणं। इति प्रथमगाथार्थः ॥ ॥ अतःपरं वर्तमानतीर्थस्य सिद्धाग्रण्यः सिद्धस्तवगर्भे भगवतः श्रीमहावीरस्य स्तुतिं गाथाद्वयेनाह—जो देवाणवि देवो जं देवा पंजली नमस्संति। तं देवदेवमहियं सिरसा वंदे महावीरं ॥ १ ॥ इक्कोवि नमुक्कारो जिणवरवसहस्स वद्धमाणस्स । संसारसागराओ तारेइ नरं व नारिं वा ॥ २ ॥ यो भगवान् देवानामपि हरिहरविरंचादीनामपि देवः तेषां पूज्यतया देवाः शक्रादयः प्राञ्जलयो बद्धाञ्जलयो यं नमस्यन्ति। तं देवदेवमहितं देवाधिदेवशिवादिपूजितं महावीरं शिरसा वन्दे॥इक्कोवि न०। जिनवरवृषभस्य वर्धमानस्य एकोपि नमस्कारः संसारसागरात् नरं वा नारीं वा तारयति जिनश्चासौ वरः प्रधानो व्रतधुराया वृषभः, अथवा वृषभशब्दः प्रशंसार्थवाचको ज्ञेयः। नारिं वेति अत्र नारीग्रहणं नार्या अपि मुक्तिख्यापनार्थं ॥—उज्जिंतसेलसिहरे दिक्खा नाणं निसीहिया जस्स। तं धम्मचक्कवट्टिं अरिट्ठनेमिं नमंसामि ॥ १ ॥ तं अरिष्टनेमिं नमिष्यामि। यस्य अरिष्टनेमेः उर्ज्जयन्तशैलशिखरे दीक्षा ज्ञानं मोक्षश्च। नैषेधिकी सर्वव्यापारनिषेधान्मोक्ष उच्यते। कथंभूतमरिष्टनेमिं। धर्मचक्रवर्तिनं। इयं च गाथा कृताहारनियमे श्रीगोपालपुरेश्वरे आमाभिधाने सह गुरुणा रैवतकाचलं प्राप्ते दिगम्बरसंघे तीर्थयात्रानिषेधकारिणि सति श्रीबप्पभट्टसूरिगुरुणा आराधनानीतया भगवत्या श्रीअम्बिकया कन्यामुखेन निगदिता। ततश्च तत्स्तुतिहेतोः सिद्धस्तवान्तः पठ्यते—चत्तारि-

अट्ठदसद्दोअवंदिआ जिणवरा चउवीसं । परमट्ठनिट्ठिअट्ठा सिद्धा सिद्धिं मम दिसंतु ॥ १ ॥ अष्टापदस्तुतिविरियं । तत्र अष्टापदगिरौ भरतेनकारितं नानामणिमयं चतुर्मुखं चैत्यमस्ति तत्र पूर्वद्वारे चत्वारः स्थापनाजिनाः, दक्षिणद्वारे अष्टौ स्थापनाजिनाः, पश्चिमद्वारे दश स्थापनाजिनाः, उत्तरद्वारे द्वौ स्थापनाजिनौ, ततस्तत्राद्भुर्णमणिघटिताः निज २ देहमानधारिणश्चतुर्विंशतिजिनेश्वराः वन्दिताः परमार्थनिष्ठितार्थाः सिद्धाः मम सिद्धिं दिशन्तु । अयं सिद्धस्तवः ॥

अथ समस्तवैयावृत्त्यकराणां कायोत्सर्गो यथा—वेयावच्चगराणं संतिगराणं सम्मद्दिट्ठिसमाहिगराणं करेमि काउस्सग्गं । वैयावृत्यं च वसतिज्ञानं साधुसाध्वीप्रभृतीनां विघ्ननिवारणं शुश्रूषणं वांछितदानं कुर्वन्तीति वैयावृत्यकरास्तेषां शान्तिं सर्वदुष्टप्रणाशात्संकुर्वन्तीति शान्तिकरास्तेषां सम्यग्दृष्टीनां सम्यक्त्वधारिणीं समाधिं कुर्वन्तीति सम्यग्दृष्टिसमाधिकरास्तेषां आराधनार्थं कायोत्सर्गं करोमि । शेषमनन्तरं कथयिष्यते ॥

॥ अथ चैत्यस्मरणं साधुस्मरणं च यथा—जावंति चेइयाइं उड्ढे अअहे अ तिरियलोए अ । सव्वाइं ताइं वंदे इह संतो तत्थ संताइं ॥ १ ॥ यावन्ति चैत्यानि ऊर्ध्वं अधस्तिर्यग्लोके अथ इह सन्त्यपि तत्र सन्ति तानि सर्वाणि चैत्यानि वन्दे । ऊर्ध्वलोके कल्पग्रैवेयकानुत्तरेषु, अधोलोके भुवनपतिव्यन्तरभुवनेषु, तिर्यग्लोके द्वीपोदधिगिरिज्योतिष्कविमानादिषु इति सूचनं ।—जावंति केवि साहू भरहेरवए महाविदेहे अ । सव्वेसिं तेसिं पणओ तिविहेण तिदंडविरिआणं ॥ १ ॥ यावन्तः केपि साधवो भरतैरावतमहाविदेहेषु कर्मभूमिषु शेषव-

र्षाणि मिथुनवासात्फलभूमयः इति सूचनं। सर्वेभ्यस्तेभ्यः साधुभ्यः त्रिदण्डविरतेभ्यो मनोवाक्कायदण्डमुक्तेभ्यः अहं त्रिविधेन मनोवाक्काययोगेन प्रणतः ॥ ॥ भगवत्प्रार्थना यथा—जय वीयराय जगगुरु होउ ममं तुह यभावओ भयवं। भवनिव्वेओ मग्गाणुसारिआ इट्ठफलसिद्धी ॥ १ ॥ लोगविरुद्धच्चाओ गुरुजणपूआ परत्थकरणं च। सुहगुरुजोगो तव्वयणसेवणा आभवमखंडा ॥ २ ॥ इति गाथाद्वयं ॥ जय वीतराग जगद्गुरो वीतो गतो रागो यस्यासौ वीतरागः उपलक्षणत्वाद्वीतद्वेषोपि तस्य संबोधनं। जगतां स्वर्गमर्त्यपाताललक्षणानां पालकत्वाच्छिक्षादातृत्वाच गुरुः जगद्गुरुः तस्य संबोधनं। भगवन्, तव प्रभावतो ममैवं भवतु। किमित्याह। भवनिर्वेदः संसाराद्विरक्तत्वं मार्गानुसारिता सन्मार्गे पुरस्करणं इष्टफलसिद्धिः वांछितफलप्राप्तिः। लोकविरुद्धत्यागः जनविरुद्धानां कर्मणां परित्यागः। गुरुजनपूजा गुरुजनानां मातृपितृआचार्योपाध्यायपालकमहत्तराणां पूजनं। परार्थकरणं परकार्यसाधनं। शुभगुरुयोगः हेयोपादेयार्थोपलम्भकेन गुरुणा सह योगः। तवयणसेवणा त्वद्वचनसेवना त्वदीयोक्तवचनाचरणं। आभवं आसंसारभ्रमणमखण्डास्तु ॥ लोकविरुद्धान्युच्यन्ते —सव्वस्स चेव निंदा विसेसओ तह य गुणसमिद्धाणं। उजुधम्मकरणहसणं रीढा जणपूइणिज्जाणं ॥ १ ॥ बहुजणविरुद्धसंगो देसादायारलंघणं चेव। उल्लणभोगो य तहा दाणाइवपयडमन्नेउ ॥ २ ॥ साहुवसणंमि तोसो सइसामत्थम्मि अपडिआरो य। एमाइयाइ इत्थं लोगविरुद्धाइं नेयाइ ॥ ३ ॥ इत्यावश्यकाधिकारे चतुर्विंशतिस्तवः संपूर्णः ॥ २ ॥

अथ वन्दनक्रम् । तत्र वन्दनके अष्टनवत्युत्तरशतभङ्गानां यथा—मुहणतयदेहावस्सएसु पणवीस हुंति पत्तेयं । छट्ठाणं छगुरुवयणा छच्च गुणा हुंति नायव्वा ॥ १ ॥ अहियारिणो य पंचउ इयरे पंचेव पंचआहरणा । एगो वग्गह पंचाभिहाण पंचेव पडिसेहा ॥ २ ॥ आसायणा तित्तीसं दोसा बत्तीस कारणा अट्ठ । छद्दोसा अडनउअं ठाणसयं वंदणे होइ ॥ ३ ॥ तत्र मुखवस्त्रिकाप्रतिलेखनाः पञ्चविंशतिः २५, देहप्रतिलेखनाः पञ्चविंशतिः २५ एवं ५०, वन्दनकावश्यकयुक्तयः पञ्चविंशतिः २५ एवं ७५, षट् स्थानानि ६ एवं ८१, षट् गुरुवचनानि ६ एवं ८७, षट् गुणाः ६ एवं ९३, पञ्चाधिकारिणः ५ एवं ९८, पञ्च अनधिकारिणः ५ एवं १०३, पञ्च उदाहरणानि ५ एवं १०८, एको अवग्रहः १ एवं १०९, पञ्चाभिधानानि ५ एवं ११४, पञ्च प्रतिषेधाः ५ एवं ११९, त्रयस्त्रिंशदाशातनाः ३३ एवं १५२, द्वात्रिंशद्दोषाः ३२ एवं १८४, अष्टौ कारणानि ८ एवं १९२, अवन्दने षट् दोषाः ६ एवं १९८, अष्टनवत्युत्तरशतं स्थानानां वन्दनके मुखवस्त्रिका पञ्चविंशतिप्रतिलेखना यथा—दिट्ठिपडिलेहएगा अक्खोडा तिन्नि तिन्नि अंतरिआ । अक्खोडा पक्खोडा नवपुत्तीए अ पणवीसं ॥२५॥१॥ कायप्रतिलेखना पञ्चविंशतिर्यथा—पायाहिणेण चउचउ बाहुसु सीसे मुहे अ हिअए अ। पिट्ठी अहुंति चउरो छप्पाए देहपणवीसा ॥२५॥२॥ एतयोरर्थः सुखावसेयः। विधिस्त्वनुभवेन दृष्टान्तादवसेयः॥ पञ्चविंशतिरावश्यककर्माणि यथा—दुउणयं अहाजायं किइकम्मं बारसावायं । चउसिरंतिगुत्तं चदुपवेसं एगनिक्खमणं १।२५. कृतिकर्म वन्दनकं द्युन्नतं द्वे उन्नती उत्थाने यत्र तत् वन्दनककरणे द्विवेलमुत्थीयते यथाजात-

मुद्रा। जातो हि पुमान् मुखोपरि दत्तहस्तो भवति तथा वन्दनकेऽपि सैव मुद्रा। द्वादशावर्तवन्दनकद्वये षड्षडावर्ता हस्तयोः। यथा—अहो १ कायं २ काय ३ जत्ताभे ४ जवणि ५ ज्जचभे ६ चउशिरं चतुःशीर्षं वन्द्यवन्दकयोः द्विवेलं शिरोनामनाच्चतुःशीर्षं तिगुत्तं त्रिगुप्तं मनोवाक्कायगुप्त्या द्विप्रवेशं वन्दनकद्वये द्विवेलं गुरुपादांतिकगमनात् एका निःक्रमणं प्रथमवन्दनके पश्चाच्चरणं न द्वितीये ७५॥ षट् स्थानानि यथा—इच्छाय १ अणुन्नवणा २ अव्वाबाहं च ३ जुत्त ४ जवणाय ५। अवराहखामणाविय ६ छट्ठाणा हुंति वंदणए ॥१॥ इच्छामि खमा० इति इच्छा १ अणुजाणहमे० इति अनुज्ञापना २ खमणिज्जो० इति अव्याबाधं ३ जत्ताभे ४ इति यात्रा जवणिज्जंचभे ५ इति यापना। खामेमि खमासमणो ६ इति अपराधक्षमापणा एवं ८१॥ षट् गुरुवचनानि यथा—छंदेण १ अणुजाणामि २ तहत्ति ३ तुब्भंपि ४ वट्टई एवं ५। अहमवि खामेमि तुमे ६ वयणाइं वंदणरिहस्स १ वन्दनार्हस्य आचार्यादेरेतानि वचनानि एवं ८७॥ षड्गुणा यथा—विणउवयार १ माणस्स भंजणा २ पूअणा गुरुजणस्स ३। तिच्छयराण य आणा ४ सुअधम्मा राहणा ५ किरिया ६॥ १॥ विनयोपचारे विनयकरणं १, मानस्य भञ्जना चित्तगताऽहंकारनिरासः २, गुरुजनस्य पूजना वन्दनपूजा ३, तीर्थकराणामाज्ञा जिनोक्तगुरुभक्तिकरणं ४, श्रुतधर्म्माराधना श्रुतस्य आराधनं ५, क्रिया सदाचारनिर्वाहः ६, एवं ९३॥ पञ्चाधिकारिणो यथा—आयरिअ १ उवज्झाए २ पवत्ति ३ थेरे ४ तहेव रायणिए ५। एएसिं किइकम्मं कायव्वं निज्जरट्ठाए ॥ १॥ आचार्योपाध्यायौ प्रसिद्धौ प्रवर्तको गच्छे संघे च सर्वोपदेशदानैः पुण्यप्रवृत्तिनिर्वाहकर्ता।

'उट्टावणा पहावण खित्तो वहि मग्गणा सुयभिसाइ। सुत्तत्थ तदुभयविओ गणतत्तिल्लो पवत्तीओ १ ॥३॥' स्थविरः 'सर्वसंयमिनां स्थिरीकारकृत् थिरकरणा पुण थेरो पवत्ति वावारि एसु अत्थेसु। जो जत्थ सीअइज्जई संतबलो तं थिरं कुणइ १ ॥ ४ ॥' रत्नाधिको यो गुणरत्नैः सर्वेभ्योऽधिकः ५। एतेषां कृतिकर्म वन्दनककार्यं निर्जरार्थं कर्मक्षयार्थमित्यर्थः। एवं ९८ ॥ पञ्च अवन्दनीया यथा—'उवसन्नो १ पासत्थो २ होइ कुसीलो ३ तहेव संसत्तो ४। अहछंदोविअ ५ एए अवंदणिज्जा जिणमयम्मि ॥ १ ॥' अवसन्नः यः संयमपालनादवसादं खेदं प्राप्तः तस्मिन् शिथिलतां प्रपन्नः। अवसन्नस्य सर्वदेशभेदेन व्याख्या आवश्यकादवसेया १, पार्श्वस्थो यः ज्ञानदर्शनचारित्राणां मध्यं विहाय तेषां पार्श्वे एव स्थितः। एतस्य च सर्वदेशव्याख्या आवश्यकात् २, कुशीलः यः कुत्सिताचारसावद्यनिरतः ३, संसक्तो यः कुसङ्गो दग्धचारित्रः ४, यथाच्छन्दः त्यक्तगणसंघो यथेच्छचारी ५, एतेषां विस्तरव्याख्या आवश्यकोपदेशमालादितः। अयं आचारग्रन्थः। छायार्थ एवात्र जिनमते। एते अवन्दनीयाः। यदुक्तं—'पासच्छाइवंदमाणस्स नेअकित्ती न निज्जरा होइ। कायकिलेसं एमेव कुणई तह कम्मबंधं च ॥ १ ॥' एवं १०३ ॥ पञ्चोदाहरणानि यथा—'दव्वे भावे वंदण १ रयहरणा २ वत्त ३ नमण ४ विणएहिं। सीअल १ खुड्डय २ कण्हे ३ सेवय ४ पालय ५ उदाहरणा ॥ १ ॥' द्रव्यभाववन्दने शीतलाचार्यदृष्टान्तः १, रजोहरणे क्षुल्लकाचार्यदृष्टान्तः २, आवर्तेषु कृष्णदृष्टान्तः ३, नमने सेवकदृष्टान्तः ४, विनये पालकदृष्टान्तः ५, एतेषां कथानकानि आवश्यकवृत्तेरवसेयानि। एवं १०८ ॥ एकोऽवग्रहो यथा—'देविंद १

राय २ गिहवइ ३ सागरि ४ साहम्मि ५ उग्गहे पंच । गुरुउग्गहो पुणो इह आउपमाणे चउदिसंपि ॥ १ ॥' अत्रावग्रहेऽनुज्ञाग्रहणं दक्षिणार्धस्वामिनो देवेन्द्रस्य विहारे वचसा अवग्रहो ग्राह्यः १, स्थितौ च राजावग्रहो विहारे स्थितौ च पृथ्वीपतिदेशपतिनगरग्रामपतीनामनुज्ञा २, गृहपत्यवग्रहः गृहपतिसार्थपतिपुराध्यक्षादीनामनुज्ञा ३, सागार्यनुज्ञायां प्रातिवेश्मिकहितप्रकृष्टानां श्राद्धानामनुज्ञा ४, साधर्मिकावग्रहः तत्काले पार्श्वस्थितानां ज्येष्ठकनिष्ठसाधूनां विहारस्थित्यादावनुज्ञा ५, गुर्ववग्रहः पुनरिह वन्दनादौ सर्वकार्येषु च आयुःप्रमाणः चतुर्दिशमपि वन्दनादौ चतुर्दिक्ष्वपि आत्मप्रमाणः निजाङ्गदैर्घ्यं यावत् गुरोर्दूरतः स्थेयं। एवं १०९ ॥ पञ्चाभिधानानि यथा—'वंदण १ चिइ २ किइकम्मं ३ पूयाकम्मं च ४ विणयकम्मं च ५ । वंदणगस्स इमाइं नामाइं हवंति पंचेव ॥ १ ॥' वन्दनं वन्द्यते अनेनेति वन्दनं १, चितिः सुकृतसंचयः तस्येदं कर्म चितिकर्म २, कृतिः पुण्यक्रिया तस्या इदं कर्म कृतिकर्म ३, पूजायाः कर्म पूजाकर्म ४, विनयस्य कर्म विनयकर्म ५, वन्दनकस्य इमानि पञ्चैव नामानि भवन्ति । एवं ११४ ॥ पञ्चप्रतिषेधा यथा—'विक्खित्त १ पराहुत्ते २ पम्मत्ते ३ मा कया हु वंदिज्जा । आहारं च करंतो ४ नीहारं वा जइ करेइ ॥ १ ॥' व्याक्षिप्तं पठनपाठनप्रतिक्रमणोपधिग्रथनपरालापलिखनपरमेष्ठिजापध्यानप्रभृतिव्याक्षेपयुक्तं व्याक्षिप्तं १, पराभूतं मिथ्यादृष्टिदेवदानवमानवैर्दुर्वाक्योपसर्गादिभिः पराभूतं, मतान्तरे पराङ्मुखं वा २, प्रमत्तं निद्राहास्यकलहतृष्णादिप्रमादयुक्तं ३, आहारं कुर्वाणं पानान्नौषधादिभुञ्जानं ४, नीहारं कुर्वाणं विष्ठामूत्रोत्सर्गपादशौचवस्त्रक्षालना-

द्रिकारिणं ५ न कदाचिद्वन्देत । एवं ११९ ॥ त्रयस्त्रिंशदाशातना यथा—'पुरओ पक्खासन्ने गंता चिट्ठण
निसीयणा यमणे १० । आलोअण ११ पडिसुणणे १२ पुव्वालवणे १३ अ आलोए १४ ॥ १ ॥ तह उवदंस
१५ निमंतण १६ खद्धा १७ णयणे १८ तहा य पडिसुणणे १९ । खद्धत्ति २० अ तत्थ गए २१ किं २२ तुमम
२३ ज्ञाय २४ नो सुणणे २५ ॥ २ ॥ नो सरसि २६ कहंछित्ता २७ परसुंभित्ता २८ अणुट्ठिआ य कहे २९ ।
संथारपायघट्टण ३० चिट्ठु ३१ च ३२ समासणे ३३ आवि ॥ ३ ॥' व्याख्यानं यथा—गुरोः पुरतः पार्श्वयोः
पृष्ठे च आसन्ने गमनं एवं स्थानं एवं निषीदनं च । एवं त्रिकत्रिकेण नवाशातनाः ९, गुरोः पूर्वं बहिर्गतेनाच-
मनं १०, पूर्वं गमनागमनालोचनं ११, रात्रौ कः स्वपिति को जागर्तीति पृच्छति गुरौ जाग्रतोप्यनुत्तरदानं
१२, साधुश्राद्धादेरागतस्य गुरोः प्रथममालपनं १३, भिक्षा शिष्यस्य कस्यचिदालोच्य पश्चाद्गुरोः पुर आलो-
चनं १४, एवं वस्तु अन्यस्योपदर्श्य पश्चाद्गुरोरुपदर्शनं १५, गुरोः पूर्वमप्येषां भिक्षाशनाय निमन्त्रणं १६, गुरु-
मपृष्ट्वा परेभ्यः साधुभ्यो खादतेत्युक्त्वा प्रचुरान्नपानदानं १७, गुरोर्यत्किंचिद्रूक्षादि दत्वा स्वयं स्निग्धमधुरा-
द्युपभोगोऽदनं १८, अप्रतिश्रवणं गुरौ कुड्यान्तरिते कोप्यस्त्यत्र भणति जानतोप्यनुत्तरदानं १९, खद्धत्ति
खादिना अनेनेति गुरुं प्रति निष्ठुरवाक्यं २०, तत्थगयत्ति गुरौ आमन्त्रयति स्वस्थानस्थ एव प्रतिवचनदानं
२१, गुरुं प्रति किमयमिति वचनं २२, त्वंकारश्च २३, गुरुणेदं कुरु इति उक्तो यूयमेव किं न कुरुध्वमिति
तज्जातवचनं २४, गुरौ कथां कथयति उपहतमनास्त्वमिति वाक्यं २५, न सरसि नायमर्थोऽस्येति २६, स्वयं

कथनेन गुरुकथाच्छेदनं २७, अधुना भिक्षावेला इत्यादिमिषैर्गुरोरग्रतः पर्षदुत्थापनं २८, गुरोर्व्याख्यानानन्तरं पर्षदग्रे सविशेषं तद्व्याख्यानं २९, गुरुशय्यासनादेः पादेन घट्टनं ३०, चिट्ठत्ति गुरुशय्यासननिषदनं ३१, एवमुच्चासने निषदनं ३२, समासनेपि ३३ एवं १५२ ॥ द्वात्रिंशद्दोषा यथा—'अणाढियं च १ थद्धं च २ पविद्धं ३ परिपिंडियं ४। टोलगय ५ अकुंसं चेव ६ तहा कच्छवरंगियं ७ ॥ १ ॥ मत्सुवत्तं ८ मणसाविपउट्ठं ९ तहय वेइआबद्धं १०। भयसा चेव ११ भयंतं १२ मित्ती १३ गारेव १४ कारणा १५ ॥ २ ॥ तेणियं १६ पडिणीअं च १७ रुट्ठं १८ तज्जिअमेव य १९। सट्ठं च २० हीलियं २१ चेव तहा विप्पलिउंचियं २२ ॥ ३ ॥ दिट्ठमदिट्ठं च २३ तहा सिंगं च २४ कर २५ मोयणं २६। आलिद्धयमणालिद्धं २७ ऊणं २८ उत्तरचूलियं २९ ॥ ४ ॥ मूयं ३० च ढढ्ढरं चेव ३१ चुडुलिअं च ३२ अपच्छिमं। बत्तीसदोसपरिसुद्धं किइकम्मं पउज्जए ॥ ५ ॥' अथ व्याख्या—अनादृतं आदररहितं वन्दनं तत्सदोषमिति द्वात्रिंशत्स्थानेषु योज्यं १, स्तब्धं देहमनसोरनम्रतया कृतं २, प्रवृद्धं वन्दमानस्य इतस्ततः पर्यटनं ३, परिपिण्डितं प्रभूतवन्द्यानां एकस्य वन्दनदानेन तोषणं, अथवा परिपिण्डितहस्तपादस्य कुर्वतः ४, टोलगतिः लोष्टवत् उत्प्लुत्य वन्दनं ५, अङ्कुशं हस्तेनाकृष्य निवेश्य वन्दनदानं ६, कच्छपरंगितं कच्छपवदग्रे पश्चाद्गमनं ७, मत्स्योद्वृत्तं मत्स्यवत्पुनः पुनः परावर्तसहितं ८, मनसाप्रद्विष्टं गुरोरुपरि द्वेषं दधतः ९, वेदिकाबद्धं पञ्चधा—'जान्वोरुपरि हस्तौ निवेश्य १ अधो वा २ उत्सङ्गे वा ३ जान्वञ्चने वा ४ द्विकरद्वयान्तर्वा ५' कृत्वा १०, भयेन गच्छसंघादिभ्यो बिभ्यतः ११, भजमानं

भजते कुपितो भक्षयति वा इति बुद्ध्या भदन्तो लोकानां पूज्यो वायमिति १२, मैत्री गुरुर्मे मित्रमस्त्विल्या- कांक्ष्या १३, गौरवं सामाचारीकुशलोऽहमिति ख्यापनाय १४, कारणात् गुरोर्विद्यावस्त्रादिलाभहेतोः १५, स्तैनिकं लाघवभयात्प्रच्छन्नं १६, प्रत्यनीकं आहारादिग्रहणे कार्यव्याक्षेपे वा तद्भङ्गकरं वन्दनं १७, रुष्टं क्रुद्धेनात्मना क्रुद्धस्य गुरोर्वा १८, तर्जितं न कुप्यसि न प्रसीदसि किं त्वया वन्दितेनेति तर्जनापूर्वं १९, शठं विश्रम्भार्थं ग्लानत्वमिषेण वा २०, हीलितं गणिवाचकवृद्धेत्यादिहासपूर्वं २१, विपरिकुञ्चितं वन्दनकमध्ये देशादिकथाकथनं २२, दृष्टादृष्टं तमसि आसीनस्यैव आवर्तादीनां अकरणे २३, शृङ्गं आवर्तशिरसो वामदक्षिणभागे स्पृशतः २४, कर इति वन्दनं राजकरवन्मन्यमानस्य २५, मोचनं मुच्येऽहमस्मात्कदेति चिन्तयतः २६, आश्लिष्टानाश्लिष्टं रजोहरणशिरोभ्यामाश्लेपोऽनाश्लेपोऽनाश्लेपश्चतुर्धा २७, ऊनं स्वरव्यञ्जनाद्युच्चारासंपूर्णं २८, उत्तरचूलिकं वन्दनानन्तरं मस्तकेन वन्द इत्यादिभणनं वा २९, मूकं अव्यक्तस्वरं ३०, ढड्डरं महाशब्दं ३१, चुडुलीकं उल्मुकवत् रजोहरणं बिभ्रतः हस्तं भ्रामयित्वा सर्वान्वन्दे इति वचनं वा ३२ इति द्वात्रिंशद्दोषशुद्धं कृतिकर्म प्रयुञ्जीत ॥ यदुक्तमागमे—'किइकम्मंपि कुणन्तो न होइ किइकम्मनिज्जराभागी । बत्तीसामन्नयरं साहू ठाणं विराहंतो ॥ १ ॥ बत्तीसदोसपरिसुद्धं किइकम्मं जो पउंजइ गुरूणं । सो पावइ निव्वाणं अचिरेण विमाणवासं वा ॥ २ ॥' एवं १८४ ॥ अष्टौ करणानि यथा—'पडिकमणे १ सज्झाए २ काउस्सग्गा ३ वराह ४ पाहुणए ५ । आलोयण ६ संवरणे ७ उत्तमट्ठे अ वंदणयं ॥ १ ॥' इति प्रतिक्रमणे चत्वारि वन्द-

नकानि १, स्वाध्यायकरणे स्वाध्यायप्रस्थापने वा २, कायोत्सर्गे विकृत्याद्यनुज्ञारूपे ३, अपराधक्षामणे च ४,
प्राघूर्णे समागते ५, आलोचनायां प्रायश्चित्तविधौ ६, संवरणे दिवसचरिमादिप्रत्याख्याने करणेन उपवासप्र-
त्याख्याने च ७, उत्तमार्थे आराधनादिकर्मणि ८, एवं १९२ ॥ षट् दोषा यथा—'माणे १ अविणय २ खिंसा
३ नीयागोयं ४ अबोहि ५ भववुड्ढी ६ । अनमंते षद्दोसा एवं अडनउअहिाणसयं ॥ १ ॥' मानोऽहंकारः १,
अविनयः विनयस्य भङ्गः २, खिंसा गुरुहीला निन्दा च ३, नीचैर्गोत्रं नीचकुलावासिः ४, अबोधिर्बोधिला-
भस्य अभावः ५, भववृद्धिः संसारभ्रमणं ६, अनमतां वन्दनकमकुर्वतां अमी षट् दोषाः एवं अष्टनवत्युत्त-
रशतं १९८ वन्दनकस्थानानि ॥ अथ वन्दनकस्य व्याख्यानमुच्यते—शिष्यः श्राद्धो वा विधिवन्मुखवस्त्रिकां
स्वाङ्गं च प्रतिलिख्य करद्वयगृहीतमुखवस्त्रिकारजोहरणः केवलमुखवस्त्रिकाधरो वा ईषन्नतो वन्दनसूत्रमित्थं
वदति । यथा—'इच्छामि खमासमणो वंदिउं जावणिज्जाए निसीहिआए मत्थेणं वंदामि' । इच्छामि अभि-
लिखामि हे क्षमाश्रमण श्राम्यति मोक्षार्थं दशविधधर्माचरणेनेति श्रमणः क्षमया उपलक्षितः श्रमणः क्षमा-
श्रमणः तस्य संबोधनं । वन्दितुं नमस्कर्तुं यापनीयया याप्यते कालः क्षिप्यते यया सा यापनीयता तया
शक्तिसमन्वितयेत्यर्थः । नैषेधिक्या निषेधः प्राणातिपातादिनिवृत्तिरूपः प्रयोजनं यस्याः सा नैषेधिकी तया
नैषेधिक्या इति इच्छामि निवेदनं प्रथमं स्थापनं । अत्रान्तरे यदि व्याक्षिप्तो गुरुस्तदा भणति प्रतीक्षस्वेति
त्रिविधेन मनोवाक्कायैः संक्षेपेण वन्दस्वेति । तदा शिष्यः संक्षिप्तवन्दनेन मत्थेण वन्दामि इति कथयित्वा

मस्तकेन वन्दे इत्युक्त्वा शिष्यः कार्यान्तरं साधयति । यद्यनाक्षिप्तो गुरुर्भवति तदा कथयति । छन्देण । अस्यार्थः ममापि निराबाधमेतदिति । ततः शिष्यो ब्रूते अणुजाणह मे मिउग्गहं निस्सीही । अनुजानीत अनुमन्यध्वं मे मम मितावग्रहं गुर्ववग्रहरूपं नैषेधिकी सर्वपापव्यापारनिषेधः । इति द्वितीयस्थानं ॥ अवग्रहव्याख्यानं पूर्वं कृतं तत्र गुरुर्वदति । अणुजाणामि । अवग्रहमनुजानामीत्यर्थः । ततः शिष्यो नैषेधिकीकथनं निषिद्धान्यव्यापारः अवग्रहे प्रविश्य । अत्रावग्रहो गुरुशरीराच्चतुर्दिक्षु पुरुषप्रमाणभूमेर्बहिःस्थानं । तत्रानुज्ञया गुरुपादनिकटागमनं गुर्वग्रे उपविश्य गुरुपादौ स्वललाटं च कराभ्यां स्पृशन् इदं वदति । अहो कायं कायसंफासं । अधःकायं गुरुपादलक्षणं कायेन मदीयहस्तललाटलक्षणेन संस्पर्शस्तमनुजानीध्वमिति पूर्वपदे योजना । अ इति गुरुपादोपरि हस्तद्वयस्थापनं । हो इति स्वललाटे एवं कायं काया इति त्रय आवर्ताः । संफासं इति गुरुपादोपरि मूर्धन्यासः । तत उन्नम्योपविष्ट एव ललाटे अञ्जलिं बध्वा गुरुमुखनिविष्टदृष्टिरिदं वदेत् । खमणिज्जो मे किलामो अप्पकिलं ताणं बहुसुभेण भे दिवसो वइक्कंतो । क्षन्तव्यः सोढव्यो भो भवद्भिः क्लमः संस्पर्शे सति देहखेदः अप्रक्लान्तानां निर्बाधानां बहुशुभेन भे भवतां दिवसो व्यतिक्रान्तः । दिवसग्रहणं रात्रिपाक्षिकचातुर्मासिकसांवत्सरिकादिसूचनं । दिवसो हि प्रधानः । इति तृतीयं स्थानं ॥ अत्र गुरुवचनं । एवं तहत्ति । तथेति यथा त्वं ब्रूषे तथैवेत्यर्थः । पुनरपि शिष्यो गुरुपादौ अन्तराकाशं स्वललाटं क्रमेण स्पृशन् ब्रूते । जत्ता भे । यात्रा संयमयात्रादिरूपा भेदवतां वर्तते । इति चतुर्थं स्थानं ॥ अत्र गुरुवचनं ।

एवं योपनीयमस्ति ममेत्यर्थः । ज इति गुरुपादयोः ता इति मध्ये भे इति ललाटे एवं जावाणिज्जं च भे इति त्रय आवर्ताः । मीलने षडावर्ताः । वन्दनकद्वयोच्चारणे द्वादशे द्वादशावर्तं वन्दनकं भवति ॥ पुनः शिष्यो ब्रूते । खामेमि खमासमणो देवसियं वइक्कम्मं । क्षमयामि क्षमाश्रमणो दैवसिकं व्यतिक्रमं स्वापराधमिति । इति षष्ठं स्थानं ॥ अत्र च गुरुवचनं अहमवि खामेमि तुभे । अहमपि क्षमयामि त्वां बहुषु वन्दमानेषु । तुभे इति । युष्मान् स्वापराधमिति । इत्युक्त्वा शिष्य उत्थाय । आवसिआए पडिक्कमामि खमासमणाणं देवसिआए आसायणाए तित्तीसन्नयिराए जं किंचि मिच्छाए मणदुक्कडाए वयदुक्कडाए कायदुक्कडाए कोहाए माणाए मायाए लोभाए सव्वकालियाए सव्वमित्थोवयाराए सव्वधम्माए कमणाए आसायणाए जो मे अइयारो कओ तस्स खमासमणो पडिक्कमामि निंदामि गरिहामि अप्पाणं वोसिरामि ॥ प्रतिक्रमणार्हेण प्रायश्चित्तेनात्मानं शोधयितुकामोऽवग्रहान्निःसृत्येति भणति । अवश्यं कार्येषु चरणकरणेषु भवा क्रिया आवश्यकी तया हेतुभूतया आसेवनाद्वारेण यदशुभं कृतं तस्याः क्षमाश्रमणानां दैवसिक्या आशातनायाः प्रतिक्रमामि निवर्ते । कथंभूताया आशातनायाः । त्रयस्त्रिंशदन्यतरायाः पूर्वोक्तत्रयस्त्रिंशदाशातनैकतमायाः यत्किंचिन्मिथ्या तथा मिथ्याभावेन मनोदुःकृतया दुश्चिन्तितद्वेषरूपया वाक्दुःकृतया परुषासत्यरूपया कायदुःकृतया आसन्नस्थित्यादिकया क्रोधया मानया मायया लोभया विशेषणादित्वात् स्त्रियामादौ सर्वकालिक्या कालत्रयभूतया सर्वमिथ्योपचारया सर्वधर्मातिक्रमणया ईदृश्या आशातनया यो मया अतीचारः कृतः त-

...मि निन्दामि गर्हे आत्मानं व्युत्सृजामि पूर्ववत् । द्वितीयवन्दनकमप्येवं । नवरं
म्मात् हे क्षमाश्रमण प्रतिक्रमामि निन्दामि गर्हे आत्मानं व्युत्सृजामि पूर्ववत् ॥ ३ ॥
नत्र आवसियाए बहिर्निःक्रमणवर्जितं । इत्यावश्यके वन्दनकव्याख्यानं संपूर्णं ॥ ३ ॥

अथ प्रतिक्रमणं ॥ प्रतिक्रमणे ऐर्यापथिकी अतीचारालोचनं क्षामणं प्रतिक्रमणसूत्रं ॥ पूर्वं ऐर्यापथिकी
यथा—इच्छाकारेण संदिस्सह भगवन् इरिआवहिअं पडिक्कमामि इच्छामि पडिक्कमिउं इरियावहिआए वि-
राहणाए भगवन् इच्छाकारेण वांछोल्लासेन संदिशत अनुजानीत ऐर्यापथिकीं प्रतिक्रमामि ऐर्यापथिक्या
विराधनायाः प्रतिक्रमितुं निवर्तितुं इच्छामि अभिलषामि ईरणं ईर्यागमनं तेन युक्तः पन्था ईर्यापथः तत्र
भवा ऐर्यापथिकी विराधना व्रतखण्डना तस्या ऐर्यापथिक्या विराधनायाः । गमणागमणे गमनं कार्यार्थं
आगमनं तत्समासौ निवर्तनं तस्मिन् गमनागमने समाहारद्वन्द्वः पाणक्कमणे बीयक्कमणे हरियक्कमणे । प्राणा
द्वीन्द्रियास्तेषां क्रमणं, बीजानि वनस्पत्युत्पत्तिहेतूनि बीजाग्रमूलपर्वस्कन्धसंमूर्च्छनरूपाणि तेषां क्रमणं ह-
रितानि नवोत्पन्नसर्ववनस्पतयः तेषां क्रमणं तस्मिन् । क्रमणमत्रोल्लङ्घनं पीडनमाक्रमणं च ज्ञेयं। उसा उत्तिंग
पणग दगमट्टी मक्कडासंताणा । संक्रमणे अवश्यायः निशि पतितं जलरूपं हिमं सूर्यकरैरशोषितं । उत्तिङ्गा
भूम्यां वृत्तविवरकारिणो गर्दभाकारा जीवाः । पनकस्तद्वर्णरूपं फुल्लिसंज्ञकं सेवालं पञ्चवर्णं । दकेन जलेन मि-
श्रिताः मृत्तिका दकमृत्तिका पादाद्यनाहता । मर्कटसंतानानि लूताजालानि । संक्रमणे चलने । जे मे जीवा
विराहिआ । संक्रमणे ये मया जीवा विराधिता अपराद्धाः । क इत्याह । एगिंदिया बेंदिया तेंदिया चउरिं-

दिया पंचिंदिया। एकेन्द्रियाः पृथिव्यप्तेजोवायुवनस्पतिरूपाः । द्वीन्द्रियाः क्रिमिशङ्खजलौकःकपर्दिकाभूलता-शुक्तिप्रभृतयः। त्रीन्द्रियाः पिपीलिकायूकालिक्षागर्दभमत्कुणात्कणेन्द्रगोपप्रभृतयः । चतुरिन्द्रिया लूताशलभदंशभ्रमरमक्षिकादयः। पञ्चेन्द्रिया जलचरस्थलचररूपास्तिर्यञ्चो मनुष्या देवा नारका अपि। एकं स्पर्शनलक्षणं इन्द्रियं येषां ते एकेन्द्रियाः। द्वे स्पर्शनरसनलक्षणे इन्द्रिये येषां ते द्वीन्द्रियाः । त्रीणि स्पर्शनरसनघ्राणलक्षणानि इन्द्रियाणि येषां ते त्रीन्द्रियाः। चत्वारि स्पर्शनरसनघ्राणचक्षुर्लक्षणानि इन्द्रियाणि येषां ते चतुरिन्द्रियाः। पञ्च स्पर्शनरसनघ्राणचक्षुःश्रोत्रलक्षणानि इन्द्रियाणि येषां ते पञ्चेन्द्रियाः । असंज्ञिसंज्ञिभेदाः संपूर्णगर्भजाः। कथं विराधिता इत्याह—अभिहया वत्तिया लेसिया संघाइया संघट्टिया परियाविया किलामिया उद्दविया ठाणाओठ्ठाणसंकामिया । जीविआओ ववरोविआ तस्स मिच्छामि दुक्कडं ॥ अभिमुखमागच्छन्तः पादेन ताडिता उत्क्षिप्य क्षिप्ता वावर्तिताः पुञ्जीकृताः रजसा वाच्छादिताः श्लेषिताः भूम्यादौ लगिता ईषत्स्पृष्टाः संघातिता मिथो गात्रैः पिण्डिताः संघट्टिताः मनाक् स्पृष्टाः परितापिताः सर्वतः पीडिताः क्लमिता म्लानिं प्रापिता जीवितशेषाः कृता इत्यर्थः। अवद्राविताः उत्त्रासिताः स्थानादन्यस्थानं संक्रामिताः स्वस्थानादन्यस्थानं प्रापिताः जीविताद्व्यवरोपिताः मारिता इत्यर्थः। तस्य मिथ्या मे दुःकृतं तत्कृतं दुःकृतं मिथ्या भूयात् अलीकमस्तु ॥ निरुक्तं यथा—मित्ति मिउमद्दवत्थे छत्तिय दोसाण छायणे होइ। मित्ति य मेराइठ्ठिउ दुत्ति दुगंछामि अप्पाण ॥ १ ॥ कत्ति कडम्मे पावं डत्ति य डेवेमि तं उवसमेणं। एसो मि छादुक्कड पइक्ख-

रत्थो समासेणं ॥ २ ॥ तस्सुत्तरीकरणेणं पायच्छित्तकरणेणं विसोहीकरणेणं विसल्लीकरणेणं पावाणं कम्माणं निग्घायणट्ठाए ठामि काउस्सग्गं' ॥ तस्यातिचारस्य उत्तरीकरणेन विशुद्ध्या प्रकृष्टत्वकरणेन प्रायश्चित्तकरणेन प्रायो बाहुल्येन चित्तं जीवं मनो वा शोधयति पापं वा छिनत्ति इति प्रायश्चित्तं तस्य करणेन विशोधिकरणेन सर्वातिचारापगमादात्मनो नैर्मल्यकरणेन विशल्यीकरणेन मायादिशल्योद्धारणेन पापानां पापकारिणां कर्मणां निर्घातनार्थं तिष्ठामि कायोत्सर्गं । 'इत्थ १ गम २ पाण ३ ओसा ४ जेमे ५ एगिंदिया ६ अभिहया ७ तस्स ८। अडसंपइ तेयाला पय वन्ना दुसयतासहिया ॥ १ ॥' कायोत्सर्गव्याख्यानं पुरतः कथयिष्यते ॥ ॥ अथातीचारालोचनं ॥ इच्छाकारेण संदिसह भगवन् देवसियं आलोएमि जो मे देवसिओ अइयारो कओ काइओ वाइओ माणसिओ उस्सुत्तो उमग्गो अकप्पो अकरणिज्जो दुज्झाओ दुव्विंतिओ अणायारो अणच्छियव्वो । असमणपाउग्गो नाणे दंसणे चरित्ताचरित्ते सुए सामाइए तिहंगुत्तीणं चउण्हं कसायाणं पंचण्हमणुव्वयाणं छण्हं जीवनिकायाणं सत्तण्हं पिंडेसणाणं सतण्हं पाणेसणाणं अट्ठण्हं पवयणमायाणं नवण्हं बंभचेरगुत्तीणं दसविहे समणधम्मे सावणाणं जोगाणं जं खंडियं जं विराहियं तस्स मिच्छामि दुक्कडं ॥ भगवन् इच्छाकारेण संदिशत अनुजानीत पूर्ववत् भगवन् दैवसिकमपराधं संयमविराधनं आलोचयामि । लोकृ दर्शने अस्य धातोः प्रयोगात् । गुरोः पुरः सर्वमपराधं प्रकटयामि । दैवसिकग्रहणेन सर्वत्रापि रात्रिकपाक्षिकचातुर्मासिकसांवत्सरिकग्रहणं । यो मे मया दैवसिको दिवसमध्यगतोऽतिचार आचारातिक्रमः कृतः । क

इत्याह । कायिको वाचिको मानसिकः । कायेन कृतः कायिकः । वाचा कृतो वाचिकः । मनसा कृतो मानसिकः । कथंभूतः । उत्सूत्रः सिद्धान्तविरुद्धः । उन्मार्गः क्षायोपशमिकभावरूपं मार्गमतिक्रम्य उदयिकभावेन कृतः । अकल्प्यः कल्पनायामप्यनुचितः अकरणीयः कर्तुमयोग्यः दुर्ध्यातः एकाग्रचित्ततया आर्तरौद्रलक्षणः दुर्श्चिंतितश्चलचित्ततयाऽशुभः अनाचार आचाररहितः अनुनेष्टव्यः मनसापि न वाञ्छनीयः अश्रमणप्रायोग्यः श्रमणानां मुनीनामनुचितः । सोऽतिचारः कुत्रेत्याह । ज्ञाने ज्ञानाचारे दर्शने दर्शनाचारे चारित्रे चारित्राचारे श्रुते आगमे सामायिके सर्वविरतिरूपे तेषां विराधनामित्याह । तिसृणां गुप्तीनां मनोवाक्कायगुप्तिरूपाणां चतुर्णां कषायाणां क्रोधमानमायालोभरूपाणां पंचानां महाव्रतानां प्राणातिपातमृषावादअदत्तादानमैथुनपरिग्रहनिवृत्तिरूपाणां षण्णां जीवनिकायानां पृथ्व्यप्तेजोवायुवनस्पतित्रसरूपाणां सप्तानां पिण्डैषणानां संसृष्टा १ असंसृष्टा २ उद्धृटा ३ अप्रलेपिता ४ अवग्रहिका ५ प्रग्रहिका ६ उज्झितधर्मा ७ सप्तानां पानैषणानां पिण्डैषणारूपाणां नवरमप्रलेपितायां । धान्याम्लादिग्रहणे विशेषः । आसां विस्तरव्याख्या सिद्धान्तादवसेया । अष्टानां प्रवचनमातॄणां पञ्चसमितित्रिगुप्तिरूपाणां । नवानां ब्रह्मचर्यगुप्तीनां स्त्रीषण्ढपशुसहवासत्याग १ तद्युक्तासनत्याग २ तद्भित्त्यन्तरत्याग ३ स्त्रीगोष्ठीत्याग ४ प्राक्संभोगस्मृतित्याग ५ स्त्रीकमनीयाङ्गदर्शनत्याग ६ स्वाङ्गसंस्कारत्याग ७ स्निग्धाशनत्याग ८ बह्वशनत्याग ९ रूपाणां । दशविधे श्रमणधर्मे संयम १ सत्य २ शौच ३ ब्रह्मचर्य ४ संतोष ५ तपः ६ क्षमा ७ मार्दव ८ आर्जव ९ मुक्ति १० रूपे । ए-

तेषु मर्येषु गुप्त्यादिषु श्रमणधर्मपर्यन्तेषु तद्भावनात्यागैस्तदतिचारैस्तत्प्रसादैः श्रामणानां यतिसंबन्धिनां यो-
गानां आचाराणां यद्व्रतादि खण्डितं भग्नं विराधितमपराद्धं तस्य मिथ्या मे दुःकृतं पूर्ववत् । श्राद्धालोचने
तु असमणपाउग्गोस्थाने असावगपाउग्गो इति पाठः अश्रावकाप्रयोग्यः श्रावकस्य अयोग्यः तदनन्तरं शेषं
पूर्ववत् । चउण्हं कसायाणं अनन्तरं पंचण्हं अणुव्वयाणं तिण्हं गुणव्वयाणं चउण्हं सिक्खावयाणं बारसविहस्स
सावगधम्मस्स जं खंडिअं जं० । पञ्चानामणुव्रतानां स्थूलप्राणातिपातमृषावादअदत्तादानमैथुनपरिग्रहवर्जन-
रूपाणां, त्रयाणां गुणव्रतानां दिग्विरत्यनर्थदण्डत्यागभोगोपभोगमानरूपाणां, चतुर्णां शिक्षाव्रतानां सामा-
यिकदेशावकाशिकपौषधातिथिसंविभागरूपाणां, एवं द्वादशविधस्य श्रावकधर्मस्य यत् खण्डितमित्यादि पूर्व-
वत् । इत्यालोचने । ठाणे कमणे चंकमणे आउत्ते अणाउत्ते हरियकायसंघट्टे बीयकायसंघट्टे थावरकायसंघट्टे
छप्पईयासंघट्टणाए ठाणाओ ठाणं संकामिआ सव्वस्सवि देवसिय दुच्चिंतिय दुब्भासिय दुचिट्ठिय इच्छाका-
रेण संदिसह इत्थं तस्स मिच्छामि दुक्कडं ॥ स्थाने स्थितोर्ध्वीभावोपवेशसंवेशादौ । क्रमणे चंक्रमणे चलने
दूरगमने । आयुक्ते ईर्यासमित्यादिभिः सयत्ने । अनायुक्ते तद्विपरीते । हरितकायसंघट्टे बीजकायसंघट्टे स्थाव-
रकायसंघट्टे । अत्र कायः प्राणिशरीरं समूहो वा । संघट्टः संस्पर्शो विमर्दो वा । स्थावरादिपृथिव्यम्बुवनस्प-
तयः । षट्पदीसंघट्टे षट्पदीग्रहणेन यूकामत्कुणोत्कुणपिपीलिकादयः स्थानात्स्थानान्तरं संक्रामिता जीवाः
सर्वस्यापि दैवसिकस्य मनसि दुश्चिन्तितस्य वचसा दुर्भाषितस्य कायेन दुश्चेष्टितस्य इच्छाकारेण संदिसह

इच्छामि० तस्य मिथ्या मे दुःकृतं पूर्ववत् ॥ यतीनां रात्र्यालोचने । संथारा उवत्तणाए परियत्तणाए आउंटणपसारणाए छप्पईयासंघट्टणाए सव्वस्सवि राईय दुचिंतिय दु० । संस्तारके मुनिशय्यारूपे उद्वर्तनायां शरीरोपघर्षणरूपायां परिवर्तनायां पार्श्वान्तरपरावर्तरूपायां आकुञ्चनप्रसारणायां करपादसंवरणविस्तारणरूपायां । षट्पदीसंघट्टनायां सर्वस्यापि रात्रौ दुश्चिन्तितस्य पूर्ववत् ॥ श्राद्धालोचने तु दिवा रात्रौ च । सव्वस्सवि देवसिय राईय दुचिंतिय दु० । यावन्मिथ्या मे दुःकृतं । अस्य व्याख्या पूर्ववत् । श्राद्धालोचनं यतीनां गोचरचर्यालोचने बृहद्दण्डकं सूत्रेण व्याख्यास्यते । लघुदण्डकम्—'कालो गोयरचरिआ थंडिल्लावत्थपत्तपडिलेहा । संभरउ सहई साहू जस्सव जं किंचि अणाउत्तं ॥ १ ॥' कालो व्याघातिकार्धरात्रिकवैरात्रिकप्राभातिकरूपस्वाध्यायभिक्षाटनप्रतिलेखना । एतेषु वस्तुषु स साधुः इह स्मरतु यस्य वा यत्किंचिदनायुक्तमिति कालगोचरचर्याप्रतिलेखनादिव्याक्षेपप्रमादाभ्यां विस्मृतमविधिकृतं वा भवति । प्रतिक्रमणमध्ये यतीनामतिचारालोचनं—'सयणासणन्नपाणे चेइय जे सिज्ज कायउच्चारे । समिईभावणगुत्ती वितहाकरणे अ अइआरा ॥ १ ॥' शयने वितथकरणे संस्तारकसंदंशकाद्यप्रतिलेखने सुखशय्यादिषु अतीचाराः । आसने अप्रतिलेखिते यत्यनुचिते गुरुसमोच्चासने वितथकरणे अतिचारः । अन्ने सप्तचत्वारिंशद्दोषयुक्ते पाने च तथाविधे चैत्यवन्दने अयुक्तिकृतेऽयतनासु सर्वासु शय्यायां शय्यादिकरचने कायस्य पात्राद्युपकरणादीनां कुःप्रतिलेखनादौ उच्चारे मलोत्सर्गे समितिषु ईर्या १ भाषा २ एषणा ३ आदान ४ निक्षेपोत्सर्ग ५ रूपासु भावनासु

पञ्चमहाव्रतेषु प्रत्येकं पञ्चरूपासु गुप्तिषु मनोवाक्कायगुप्तिरूपासु एतेषु सर्वेषु वस्तुषु वितथीकरणे सातिचार-
करणे अकरणे वा अतिचारा ज्ञेयाः । ते च नित्यमालोचनीया इत्यर्थः । श्राद्धानां चतुर्विंशत्युत्तरशतमतिचा-
राणां यथा—'पणसंलेहणपनरसकम्मन्नाणाइ अट्ठपत्तेयं। बारस तव विरियतिगं पणसम्मवयाइयाएसि ॥१२॥'
वीर्ये त्रयं त्रयं पञ्च सम्यक्त्वे ५ द्वादशव्रतेषु प्रत्येकं पञ्चपञ्चातिचाराः ६० एवं १२४ सम्यक्त्वसंलेखनाव्रताति-
चाराः सकर्मादानाः प्रतिक्रमणसूत्रे आलोच्याः । ज्ञानदर्शनचारित्रतपोवीर्येषु अतिचाराः । कायोत्सर्गे अ-
तिचारगाथाभिरालोच्या यथा—'नाणंमि दंसणंमि अ चरणंमि तवम्मि तहय विरयम्मि । आयरणं आयारो
इय एसो पंचहा भणिओ ॥ १ ॥' ज्ञाने दर्शने चरणे तपसि वीर्ये च आचरणं तद्युक्तिकरणं इत्येष आचारः
पञ्चधा भणितः ॥ ज्ञानाचारो यथा—'काले १ विणए २ बहुमाण ३ उवहाणे तहय निह्नवणे ५ । वंजण ६
अत्थ ७ तदुभए ८ अट्ठविहो नाणमायारे ॥ १ ॥' ज्ञानाचारोऽष्टविधो यथा—कालः कालवेलावर्जितः पाठः,
कालग्रहणादियुक्तिसहितो वा । विनयो गुरूणामौचित्यकरणं । बहुमान आदरः । उपधानं आगमोचितं तपःकर्म ।
निह्नवणं संशयच्छेदः । व्यञ्जनं सूत्रपाठः तत्त्वार्थप्रकटनं वा । अर्थष्टीकावृत्तिवार्तिकभाष्यादिकथितः सूत्रार्थ-
रूपः तदुभयं सूत्रार्थमिश्रं सूत्रार्थयोः परस्परसंवादः इत्यष्टविधो ज्ञानाचारः । एतेषां कालविनयबहुमानोप-
धाननिह्नवव्यञ्जनार्थं तदुभयानां वैपरीत्यकरणे अश्रद्धाने अतिचाराः । यदुक्तं—'पडिसिद्धाणं करणे किच्चाणं
मकरणे अ पडिक्कमणं । असद्दहणे अ तहा विवरीअपरूवणाएअ ॥ १ ॥' दर्शनाचारे यथा—'निस्संकिय १

निक्कंखिय २ निव्वितिगिच्छा ३ अमूढदिट्ठीअ ४। उअवूढ ५ थिरीकरणे ६ वच्छिल्ल ७ पभावणे ८ अट्ठ ॥ १ ॥' दर्शने अष्टभेदा यथा—निश्शङ्कितं शङ्कादोषरहितत्वं । निःकाङ्क्षितं काङ्क्षादोषरहितत्वं । शङ्काकाङ्क्षयोर्व्याख्यानं प्रतिक्रमणसूत्राद्वसेयं । निर्विचिकित्सा जिनोक्ततत्वेषु निःसंशयत्वं । अमूढदृष्टिस्तत्वातत्वापरामर्शिनी बुद्धिः । उपबृंहणं अर्हन्मतस्य स्वशक्त्या स्थापनं पोषणं च । स्थिरीकरणं अर्हन्मते स्वपरयोः कारणान्तरसहस्रेपि निश्चलत्वकरणं । वात्सल्यं अर्हन्मताश्रिततत्त्वसाधुश्राद्धादिषु स्निग्धत्वं । प्रभावनं जिनशासनस्योद्भावनं ॥ यतीनां अष्टप्रकारं यथा—'पावयणी १ धम्मकही २ वाई ३ नेमित्तिओ ४ तवस्सीय ५। विज्जा ६ सिद्धोअ ७ कवी ८ अट्ठेव पभावणा भणिया ॥ १ ॥' श्राद्धानां तु प्रभावनं सप्तक्षेत्रैर्विपुलद्रव्यव्ययैरर्हन्मतप्रत्यनीकच्छेदैः स्वमताश्रितपोषणैः ॥ चारित्राचारो यथा—'पणिहाणजोगजुत्तो पंचहि समिईहिं तीहि गुत्तीहिं । एस चरित्तायारो अट्ठविहो होइ नायव्वो ॥ १ ॥' पञ्चभिः समितिभिस्तिसृभिर्गुप्तिभिः पूर्वोक्ताभिः प्रणिधानयोगयुक्तः समाधानयुक्तिसहितः एष चारित्राचारः अष्टविधो भवति ज्ञातव्यः । पञ्चभिः समितिभिस्तिसृभिर्गुप्तिभिरष्टकं परं समाधानयोगयुक्तिसहितः एष चारित्राचारः योगयुक्त्यैव न कदाचिदसमाधिभाजां चारित्रं ॥ अथ तपआचारो यथा—'बारसविहम्मिवि तवे सब्भिंतरबाहिरे कुसलदिट्ठी । अगिलाइ अणाजीवी नायव्वो सो तवायारो ॥ १ ॥' द्वादशविधेपि तपसि साभ्यन्तरबाह्ये कुशलदृष्टिः सुपरीक्षिणी बुद्धिः स तपआचारो ज्ञातव्यः ॥ अभ्यन्तरं षड्विधं तपो यथा—'प्रायश्चित्तं १ विणओ २ वेयावच्चं ३ तहेव

सज्झाओ ४। झाणं ५ उस्सग्गो ६ विय अब्भिन्तरओ तवो होइ ॥ १ ॥' प्रायश्चित्तं दशविधं सर्वदैव तत्सं-
स्मरणपालनं। विनयो गुरुषु नम्रता। वैयावृत्यं साधुदेवताज्ञानोपकरणगुर्वादीनां शुश्रूषणारूपं। तथैव स्वा-
ध्यायः वाचनाप्रच्छनाम्नायआगमलक्षणः ४। ध्यानं धर्मशुक्लरूपं ५। एतयोर्विचार आगमादवसेयः ग्रन्थविस्त-
रभयान्नोक्तः। उत्सर्गः कायोत्सर्गः ६ स चाग्रे कथयिष्यते। इदमाभ्यन्तरं तपो भवति ॥ बाह्यं तपो यथा—
'अणसण १ मूणोयरिआ २ वित्तीसंखेवणं ३ रसचाओ ४। कायकिलेसो ५ संलीणया य ६ बज्झो तवो होइ
॥ १ ॥' अनशनमुपवासस्तद्ग्रहणेन चतुर्विधाहारपरित्यागादि विजानीयात् १, अनोदर्यं स्वक्षुधोऽल्पाहारः।
तत्रैकासिक्थाष्टकवलाद्यन्तर्भवति २, वृत्तेः संक्षेपणं बहुवेलं भोजनत्यागः तत्रैकभक्ताद्यन्तर्भवति ३, रस-
त्यागः विकृत्यादिवर्जनं, अत्र निर्विकृतिकाचाम्लादि ज्ञेयं ४, कायक्लेशः लोचकरणनिरावरणताजपनादिप-
रीषहसहनं च ५, संलीनता हस्तपादाद्यवयवगुप्तिरभ्रमणता च ६, इति बाह्यं तपो भवति ॥ वीर्याचारो यथा
—'अणिगूहियबलविरिओ १ पडिक्कमे जो अ जस्स आयारो २। जुंजइ य जहाठाणं ३ नायव्वो वीरिया-
यारो ॥ १ ॥' अनिगूढबलवीर्यः अगोपितस्वशक्तिस्तपोवैयावृत्यकरणादौ १, यो यस्यातिचारस्तं प्रतिक्रमेत्
२, यत् यथास्थानं तत्तथास्थानं युनक्ति ३, अत्र यत्पातकं यथा कृतं तत्प्रायश्चित्तविशुद्ध्या तपो मूलपारं-
चिकादिभिः शोधयतीत्यर्थः। इति वीर्याचारो ज्ञातव्यः ॥ एवं पञ्चस्वप्याचारेषु विपरीतकरणात् मनोवाक्का-
यैस्तद्रूपणात् अकरणात् प्रतिपन्नत्यागात् अतिचारा भवन्ति ते चालोच्या हेयाश्च। इति प्रतिक्रमण आलो-

चनं संपूर्णं ॥ ॥ अथ क्षामणं यथा—इच्छाकारेण संदिसह भगवन् देवसियं खामेमि इत्थं खामेमि देवसियं जं किंचि अपत्तियं परपत्तियं भत्ते पाणे विणेए वेयावच्चे आलावे संलावे उच्चासणे समासणे अंतरभासाए उवरिभासाए जं किंचि मज्झ विणयपरिहीणं सुहुमं वा बायरं वा तुब्भे जाणह। अहं न जाणामि तस्स मिच्छामि दुक्कडं ॥ इच्छाकारेण संदिशतु भगवन् दैवसिकमपराधं क्षमयामि। इच्छया क्षमयामि । दैवसिकं यत्किंचिदप्रत्ययं अप्रतीतिजनकं परप्रत्ययं परानुषंग्यविनयं परोपदेशाद्वा अपराद्धं । क इत्याह। भक्ते अशने पाने जले विनये प्रसिद्धे वैयावृत्ये प्रसिद्धे आलापे संभाषणे संलापे प्रत्युत्तरे उच्चासने समासने गुरोरुच्चसमानयोरित्यर्थः। अन्तर्भाषायां गुरौ कथयत्यन्तः कथाक्षेपे उपरिभाषायां गुरोः कथितं विषयं विखण्ड्य स्वभाषास्थापने यत्किंचिन्मम विनयपरिहीनं कर्म आशातनारूपं सूक्ष्मं वा बादरं वा यूयं जानीध्वे अहं न जाने तस्य मिथ्या मे दुःकृतं। अशने पाने आशातनाः त्रयस्त्रिंशदाशातनासु कथिताः। अत्र गुरुज्येष्ठादिवचनं खामेह अहमवि खामेमि तुब्भे जं किंचि अप० पर० अविणया सारिया वारिया चोइया पडिचोइया तस्स मिच्छामि०। क्षमयस्व क्षमयथ क्षमयध्वं यत्किंचि० पूर्ववत् । अविनयात् अविनयकरणात् ग्रहणात् मूलगुणोत्तरगुणलङ्घनादपि यूयं स्मारिताः कर्तव्यविस्मृतौ तत्कर्तव्यं चित्त आनीताः वारिता अकार्ये निषिद्धाः चोदिताः प्रेरिताः प्रतिचोदिताः प्रत्येकं कार्येपि शिक्षिताः तस्य मिथ्या मे दुःकृतं ॥ संघादिक्षामणं यथा—'आयरिय उवज्झाए सीसे साहम्मिए कुलगणेय। जे मे कया कसाया सव्वे तिविहेण खामेमि ॥ १॥'

आचार्ये उपाध्याये शिष्ये साधर्मिके कुलगणे च ये मया कृताः कषायास्तान्सर्वानाचार्यादीन् त्रिविधेन मनोवाक्काययोगेन क्षमयामि ॥ १ ॥ 'सव्वस्स समणसंघस्स भगवओ अंजलिं करिय सीसे। सव्वं खमावइत्ता खमामि सव्वस्स अहयंपि ॥ २ ॥' सर्वस्य भगवतः श्रमणसंघस्य पुरतः शीर्षे अञ्जलिं करोमि सर्वं तस्य संघस्य स्वापराद्धं क्षमयित्वा सर्वस्याप्यपराधमहमपि क्षमामि । 'सव्वस्स जीवराशिस्स भावओ धम्मनिहियनियचित्तो। सव्वं खमावइत्ता खमामि सव्वस्स अहयंपि ॥ ३ ॥' सर्वस्य जीवराशेः षड्विधजीवनिकायस्य भावतः सर्वमपराधं क्षमयित्वा अहमपि सर्वस्यापराधं क्षमामि। कथंभूतोऽहं । धर्मनिहितनिजचित्तः ॥ सर्वक्षामणं यथा—'खामेमि सव्वजीवेय सव्वे जीवा खमंतु मे। मित्ती मे सव्वभूएसु वेरं मज्झ न केणइ ॥ १ ॥' अहं सर्वजीवान् निजापराधं क्षमयामि। सर्वे जीवा ममापराधं क्षमन्तु । मैत्री मे सर्वभूतेषु वैरं मम न केनचित् ॥ पाक्षिकादिक्षामणं यथा—पीअं च मे जं भे हिट्ठाणं तुट्ठाणं अप्पाणं कायं अभग्गजोगाणं सुसीलाणं सुव्वयाणं सायरियोवज्झायाणं नाणेणं दंसणेणं चरित्तेणं तवसा अप्पाणं भावयमाणाणं वहुसुभेण दिवसो पोसहो पक्खो वइक्कंतो अन्नो भे कल्लाणेणं पज्जुवट्ठिओ तिकट्टु सिरसा मणसा मत्थेण वंदामि। हे भगवन्, यद्भवतां मया प्रीतं आनन्दितं युष्माकं प्रमोद उत्पादितः। कथंभूतानां भवतां। हृष्टानां आरोग्यानां तुष्टानां प्रमुदितानां। पुनः कथंभूतानां। आत्मनः कायं संयमादिभिर्भावयमानानां । पुनः कथंभूतानां । अभग्नयोगानां अकलंकितमनोवाक्कायानां। पुनः क०। सुशीलानां सदाचाराणां। पुनः क०। सुव्रतानां सुसंयमानां

साचार्योपाध्यायानां । पुनः क० । ज्ञानेन दर्शनेन चारित्रेण तपसा आत्मानं भावयमानानां बहुशुभेन भवतां दिवसः पौषधः पक्षो व्यतिक्रान्तः । अन्यो दिवसः पौषधः पक्षो भवतां कल्याणेन पर्युपस्थितः समागतः । त्रिःकृत्वा त्रिवेलं कृत्वा शिरसा मनसा मस्तकेन वन्दे । अत्र मस्तकेन वन्देकथने शिरसा इति पदं पुनरुक्तभूतं परं च आर्षत्वात् शिरसापदं वचसा चेति व्याख्येयं त्रिकरणवन्दनाकरणार्थं ॥ अत्र गुरुवाक्यं- साहूहि समं साधुभिः सार्धं मे कल्याणेन पक्षो व्यतिक्रान्त इत्यर्थः ॥ अथ पुव्विं चेइयाइं वंदित्ता नमंसित्ता तुज्झहं पायमूले विहरमाणेणं जे केइ बहुदेसिया साहुणो दिट्ठा समणा वा असमणा वा गामाणुगामं दुइज्जमाणा वा राइणियाओ संपुच्छंति उमराइणियाओ वंदंति अय्यथाओ(?) वंदंति अज्जियाओ वंदंति सावयाओ वंदंति सावियाओ वंदंति अहंपि निस्सल्लो निक्कसाओ तिकट्टु सिर० ॥ व्याख्या—मया पूर्वं युष्माकं पादमूले विहरमाणेन चैत्यानि वन्दित्वा नमस्यित्वा ये केपि बहुदेशिकाः साधवो दृष्टाः श्रमणा वा आकाशचारिणः अश्रमणा वा भूचारिणः ग्रामानुग्रामं दूयमाना वा द्रुवन्तो वा अनुगम्यमाना वा अनुगच्छंतो वा इत्यर्थः । रत्नाधिका वक्ष्यन्ते परमरत्नाधिका वक्ष्यन्ते । तत्र च आर्या वन्दन्ते आर्यिका वन्दन्ते श्रावका वन्दन्ते श्राविका वन्दन्ते । अहमपि निःशल्यो निःकषायः त्रिःकृत्वा० पूर्ववत् । अत्र चैत्यवन्दनक्षामणे गुरुवाक्यं— अहमवि चेइयाइं वंदावेमि अहमपि चैत्यानि वन्दयामि इनन्तपदम् ॥ अथ उवट्ठिओमि तुज्झहं संतिअं अहा कप्पं वा वच्छं वा पडिग्गहं वा कंबलं वा पायपुच्छणं वा रयहरणं वा अक्खरं वा पयं वा गाहं वा

सिलोगं वा अद्धसिलोगं वा हेउं वा पसिणं वा वागरणं वा । तुब्भेहिं चियत्तेण दिन्नं मए अविणएण पडि-
च्छियं तस्स मिच्छामि दुक्कडं ॥ व्याख्या—उपस्थितोस्मि आगत्य स्थिरीभूतोस्मि युष्माकमन्तिके यथा कल्पो वा
वस्त्रं वा प्रतिग्रहो वा । पात्रमित्यर्थः । कम्बलं वा पादप्रोंछनं वा रजोहरणं वा अक्षरं वा पदं वा गाथा वा
श्लोको वा अर्धश्लोको वा हेतुर्वा प्रश्नो वा व्याकरणं वा युष्माभिस्त्यागित्वेन दत्तं मया अविनयेन प्रतीष्टं
तस्य मिथ्या मे दुःकृतम् । अत्र गुरुवाक्यं—गच्छस्स संतियं गच्छस्य शान्तिकं ॥ अथ कयाइंवि मेये किइ-
कम्माइं आगारमंतरेण विणयमंतरेण सेहिओ सेहाविओ संगहिओ वग्गहिओ सारिओ वारिओ चोइओ
पडिचोइओ चियत्ता मे पडिचोयणा उवट्ठिओहं सामणस्स तुज्झण्हं तवतेयसिरी इमाओ चाउरंतसंसारकं-
ताराओ साहट्टु नित्थरित्थामित्तिकट्टु० ॥ व्याख्या—कृतानि कानिचिन्मया कृतिकर्माणि वन्दनकादीनि
आगारमन्तरेण विनयमन्तरेण । अन्तरेणशब्दो विनाभूतार्थः । तदा भवद्भिरहं शिक्षितः स्वयं सुपथमापितः
शिक्षयितः अन्यैः शासितः संगृहीतः शास्त्रविधिना योधितः अवगृहीतः आज्ञां लम्भितः विस्मृतं करणीयं
स्मारितः वारितः चोदितः प्रतिचोदितः पूर्ववत् । त्यक्ता मया प्रतिचोदना उपस्थितोहं निकटीभूतः श्राम-
ण्यस्य यतिधर्मस्य युष्माभिस्तपोभिस्तपस्तेजस्मृतैः अस्माच्चतुर्गतिसंसारकान्तारात् संहृत्य निर्गमिष्यामि
त्रिःकृत्वा इत्यादि पूर्ववत् ॥ अत्र गुरुवाक्यं—नित्थारगपारगा होह निस्तारकपारगा भवत ॥ इति क्षामणम् ॥

अथ प्रतिक्रमणम् । तच्च सूत्रेण कथयिष्यते । पूर्वं नमस्कारं पठित्वा पश्चाच्चत्तारिमङ्गलम् इत्यारभ्य यावत्
केवलिपन्नत्तं धम्मं सरणं पवज्जामि इति सर्वत्रापि पठ्यते प्रसिद्धार्थं । तत आलोचनपठनं—इच्छामि पडि-
क्कमिउं जो मे देवसिओ इत्याद्यारभ्य यावत्समणाणं जोगाणं जं खंडियं जं विराहियं तस्स मिच्छामि दु-
क्कडं । इति पूर्वमेव व्याख्यातं—इच्छामि पडिक्कमिउं इरिया इत्यादि यावत् तस्स मिच्छामि दुक्कडं । एतदपि
पूर्वमेव व्याख्यातम् ॥ ॥ अथ पूर्वं शयनातिचारप्रतिक्रमणमाह—इच्छामि पडिक्कमिउं पगामसिज्जाए नि-
ग्गामसिज्जाए संथारा उवत्तणाए परिवत्तणाए आउंटणपसारणाए छप्पइयासंघट्टणाए । कुइए कक्कराइए
छीए जंभाइए आमोसे सरक्खामोसे आउलमाउल्लाए सोयणवत्तियाए इच्छाविप्परियासियाए दिट्ठिवि-
प्परियासियाए मणविप्परिआसिआए पाणभोअणविप्परिआसिआए जो मे देवसिओ अइआरो कओ
तस्स मिच्छामि दुक्कडं ॥ व्याख्या—इच्छामि पडिक्कमिउं अभिलिखामि प्रतिक्रमितुं निवर्तितुं प्रकामश-
य्यायाः प्रकामं अत्यर्थं शय्या शयनं चातुःप्राहरिकं प्रकामशय्या । अथवा यत्यनुचितशयनादिसंस्तारणं । अ-
थवा यत्युचितमपि संख्यातीतं कल्पसंख्यापरिग्रहसंख्यातिक्रान्तं संस्तरणं प्रकामशय्या तया निकामशय्यया
अप्रतिलेखितकंबलादिपरस्पर्शादि गुरुशय्यातिक्रमादिदूषिता शय्या निकामशय्या तया० संस्तारकोद्वर्तनया
यत्युचितं शयनीयं संस्तारकमुच्यते तस्योद्वर्तना संमर्दः तया० संस्तारकोऽनुवर्तते परिवर्तना पार्श्वादिपरा-
वर्तः तया० एतासु अप्रतिलेखितपरावर्तादौ अतिचारः । आकुञ्चनप्रसारणया आकुञ्चनं करपादादिसंकोचः

प्रमारणा तेषामेव प्रसारणं तया अप्रतिलेखितया अतिचारः । षट्पदिकासंघट्टनया षट्पदिका यूकाः तासां अविधिना संस्पर्शः संघट्टना तया० कूजिते काशादौ कृते तत्रापि मुखवस्त्रिकया अपिहितवदनस्य करणे अतिचारः । कर्करायितं स्थपुटमिदं स्थानं दुःशय्येयं शीतोष्णदंशमत्कुणादिबाधात्र इत्यादिसोद्वेगं भाषणं कर्करायितं तस्मिन् । क्षुते जृम्भिते प्रसिद्धे तयोरप्यपिहितवदनस्य कुर्वतोऽतिचारः । आमर्शे अप्रतिलेखित-वस्तुनः संस्पर्शे सरजस्कामर्शे पृथिव्यादिसचित्तसहितसंस्तारकस्पर्शे इति शय्यायां जाग्रतोऽतिचाराः । ॥ अथ सुप्तस्यातिचाराः। आकुलव्याकुलया स्वप्नवृत्त्या स्त्रीसंयोगविवाहयुद्धमहारम्भकरणहेतुभूतया स्वप्नवृत्त्या स्त्रीवैपर्यासिक्या विपर्यासो विपर्ययः तत्र भवा स्वप्नवृत्तिर्वैपर्यासिकी स्त्रीवैपर्यासिकीणां समागमसम्भोग-प्रियालापयुक्तितया दृष्टिवैपर्यासिक्या दृष्टेर्दुष्कर्महेतुभूतया मनोवैपर्यासिक्या मनसो नानाविकारयुक्त्या पानभोजनवैपर्यासिक्या पानान्नभक्षणकाङ्क्षारूपया यो मया दैवसिकोऽतिचारः कृतः तस्य मिथ्या मे दुष्कृतं ॥ ॥ अथ शयनदोषाणां प्रतिक्रम्य भिक्षादोषान्प्रतिक्रामति यथा—पडिक्कमामि गोयरचरियाए भिक्खा-यरियाए उग्घाडिदकवाडुग्घाडणाए साणावच्छादारासंघट्टणाए मंडीपाहुडियाए बलिपाहुडियाए ठावणापाहुडियाए संकिए सहसागारे अण्णेसणाए पाणेसणाए पाणभोयणाए बीयभोयणाए हरियभोयणाए पच्छेकम्मिआए पुरेकम्मियाए अदिट्ठहडाए दगसंसट्ठहडाए रयसंसट्ठहडाए पारिसाडणियाए पारिट्ठावणियाए उद्दासणभिक्खाए जं उग्गमेणं उप्पायणेसणाए अपरिसुद्धं पडिगाहियं परिभुत्तं वा जन्न परिट्ठवियं तस्स

मिच्छामि दुक्कडं ॥ प्रतिक्रमामि गोचरचर्यायां गोवत् उत्तममध्यमजघन्यकुलानपेक्षतया अहीनतया अलुब्धतया अनार्ततया शुद्धभिक्षार्थं चरणं गोचरः तस्य चर्या क्रियाविधिस्तस्यां । किमर्थं गोचरचर्यायामित्यत-आह । भिक्षाचर्यायां शुद्धान्नपानग्रहणहेतुभूतायां नतु वृथाटाट्यायां कौतुकार्थायां वा । तत्र काभिर्युक्तिभिरतिचार इत्यत आह । उद्घाटितकपाटोद्घाटनया उद्घाटितः परिघशृङ्खलतालकादिभिरपिहितो यः कपाटस्तस्योद्घाटना प्रेरणं तया । तत्र अप्रतिलेखितकपाटोद्घाटनादतिचारः । श्वानवत्सदारकसंघट्टनया तेषां संघट्टने तत्पीडनोच्छिष्टादिदोषा भवन्ति । मण्डीप्राभृतक्या पिधानिकास्थापिताग्रपिण्डग्रहणेन बलिप्राभृतक्या देवनैवेद्यार्थहोमार्थस्थापितान्नग्रहणेन। स्थापनाप्राभृतक्या यस्यकस्यचिद्भिक्षुकस्यार्थं पृथक्स्थापितान्नस्य ग्रहणेन शङ्किते आधाकर्मादिशङ्कासहितान्नग्रहणे । सहसाकारे सहसैव दुष्टादुष्टाज्ञातपिण्डग्रहणे । अन्नेषणया निर्दोषपिण्डगवेषणया पानैषणया प्राशुकजलग्रहणेन सातिचारेण प्राणभोजनया सूक्ष्मतरद्वीन्द्रियादिभक्तसंमिश्रभोजनेन बीजभोजनया अन्नमध्यगतसूक्ष्मबीजाहारेण हरितभोजनया सूक्ष्महरितभोजनेन पश्चात्कर्मतया भिक्षानन्तरं संचितजलादिभिः हस्तक्षालनतया पुरःकर्मतया भिक्षादानात्पूर्वं संचितजलादिहस्तसंसर्जनेन । अदृष्टहृतया मुनेरप्रत्यक्षं समानीतया भिक्षया भित्तिपरिच्छदाद्यन्तराहृतयेत्यर्थः । दकसंसृष्टहृतया जलार्द्रसमानीतया रजःसंसृष्टहृतया पृथ्वीकायादिचूर्णयुक्तानीतया पारिसाटनिकया भिक्षाग्रहणे इतस्ततो भोज्यादिपतनरूपया पारिस्थापनिकया दोषदुष्टानामन्नादीनां विधिना यतिभिर्यः परित्यागो विधीयते सा

पारिष्ठापनिकोच्यते। उद्भासनभिक्षया भिक्षाग्रहणमध्ये यत्कमनीयतरस्यान्नादेर्याचनं सा सिद्धान्तभाषया उद्भासनभिक्षोच्यते तया० यत् उद्गमने आधाकर्मिकादिषोडशदोषमयेन उत्पादनेन धात्र्यादिषोडशदोषमयेन एपणया शङ्कितादिदशदोषमय्या अपरिशुद्धं सदोषं यत्प्रतिगृहीतं समानीतं परिभुक्तं प्राणाधारे नियोजितं यत्र परिष्ठापितं सदोषं सम्यक् परित्यक्तं तस्य मिथ्या मे दुष्कृतम् ॥ शयनातिचारभिक्षातिचारान्प्रतिक्रम्य प्रतिलेखनाद्यतिचारान्प्रतिक्रामति यथा—पडिक्कमामि चाउक्कालं सज्झायस्स अकरणयाए उभओ कालं भंडोवगरणस्स अप्पडिलेहणाए दुप्पडिलेहणाए अप्पमज्जणाए दुप्पमज्जणाए अइक्कम्मे वइक्कम्मे अइगारे अणायारे जो मे देवसिओ अइयारो कओ तस्स मिच्छामि दुक्कडं ॥ प्रतिक्रमामि चतुःकालं निशादिवसगोः पूर्वपश्चिमयामौ सर्वेषां धर्मानुष्ठानकालः अतएव चतुःकालमित्युच्यते स्वाध्यायस्य प्रतिक्रमणप्रतिलेखनारूपस्य अकरणतया उभयकालं दिवसप्रथमचरमप्रहरयोर्भाण्डोपकरणस्य पात्रवस्त्रसंस्ताररूपस्य अप्रतिलेखनया अदर्शनेन दुःप्रतिलेखनया अयुक्त्या दर्शनेन अप्रमार्जनया अप्रतिलेखनया दुःप्रमार्जनया अयुक्तया कृतया प्रमार्जनया अतिक्रमे व्यतिक्रमे अतिचारे अनाचारे आधाकर्मिकामन्त्रणाप्रतिक्रमणयोरतिक्रमः आधाकर्मिकग्रहणापगमने व्यतिक्रमे तद्ग्रहणे अतिचारः तद्भक्षणे अनाचारः तस्मिन्निति सर्वत्रानुवर्तते। जो मे पूर्ववत् ॥ अथैकादिद्वारेणातिचाराणां प्रतिक्रमणमाह यथा—पडिक्कमामि एगविहे असंजमे पडिक्कमामि दोहिं बंधणेहिं रागबंधणेणं दोसबंधणेणं पडिक्कमामि तिहिं दंडेहिं मणदंडेणं वयदंडेणं कायदंडेणं पडिक्क-

मामि तिहिं गुत्तीहिं मणगुत्तीए वयगुत्तीए कायगुत्तीए पडिक्कमामि तिहिं सल्लेहिं मायासल्लेहिं नियाणसल्लेहिं मिच्छादंसणसल्लेणं पडि० तिहिंगारवेणं इड्ढीगारवेणं रसंगारवेणं सायागारवेणं पडि० चउहिं कसायाहिं कोहकसायाणं मानकसायाणं मायाकसायाणं लोभकसायाणं पडि० चउहिं सन्नाणं आहारसन्नाए भयसन्नाए, मेहुणसन्नाए परिग्गहसन्नाए पडि० चउहिं विगहाणं इत्थीकहाए भत्तकहाए देसकहाए राजकहाए पडि० चउहिं झाणेणं अट्टेणं झाणेणं रुद्देणं झाणेणं धम्मेणं झाणेणं सुक्केणं झाणेणं पडि० पंचहिं किरियाणं काइयाए अहिगरणियाए पाउसियाए पारियावणियाए पाणाइवायकिरियाए पडि० पंचहिं कामगुणेहिं सद्देणं रूवेणं रसेणं गंधेणं फासेणं पडि० पंचेहिं महव्वएहिं पाणाइवायाओ वेरमणं मुसाउवायाओ वेरमणं अदिन्नादाणाओ वेरमणं मेहुणाओ वेरमणं परिग्गहाओ वेरमणं पडि० पंचहिं समिईहिं इरियासमियाए भासासमियाए एसणासमियाए आयाणभंडमत्तनिक्खेवणाए० उच्चारपासवणखेलजल्लसिंघाणपारिट्ठावणियास० पडि० छहिं जीवनिकाएणं पुढवीकाएणं आउकाएणं तेउकाएणं वाउकाएणं वणस्सइकाएणं तसका० पडि० छहिं लेसाहिं किह्ले० नीलले० काउले० तेउले० पम्हलेसाए सुक्कलेसाए । प्रतिक्रमामि एकविधे असंयमे चारित्रविराधनारूपे एकस्यामेव चारित्रविराधनायां सर्वेऽतिचाराः संघटन्ते अतएव तस्मिन् संयमे रतोऽतिचारान्प्रतिक्रमामि। अत्र च प्रतिक्रमामि इति कथने आदिपर्यंतं यावदेतेषु कथ्यमानेषु हेयोपादेयेषु यो योऽतिचारः तस्य मिथ्या मे दुःकृतमिति ज्ञेयं । सर्वत्रापि प्रतिक्रमामि अनुवर्तते एकोक्त्यैव ज्ञेयं । द्वाभ्यां

बन्धनाभ्यां अग्रतः। हेत्वर्थे तृतीया सर्वत्र। काभ्यामित्याह। रागबन्धनेन दोषबन्धनेन इष्टभावेषु जीवादिषु सर्वेषु स्नेहसंबन्धो रागः तेष्वेवानिष्टेषु कारणाद्द्वेषमागतेषु जुगुप्सा अभावविनाशनबुद्ध्योः द्वेषः तौ च बन्धनभूतौ। यतः सर्वोपि कर्मसंबन्धोऽष्टभेदभिन्नो रागद्वेषाभ्यामेव प्रतिबध्यते। त्रिभिर्दण्डैर्दण्डयन्ति आत्मानं पुनर्बन्धनं गृहीत्वा निःसत्वं कुर्वन्ति दण्डास्तैर्दण्डैः। कैरित्याह। मनोदण्डेन मनसो दुश्चिन्तितादिभेदेन कर्मबन्धस्याहार्येण। वचोदण्डेन वचसोऽसत्यविप्रियस्यावद्यादिसन्निधानेन। कायदण्डेन कायस्य सावद्यचेष्टाकरणेन तिसृभिर्गुप्तिभिर्गोपनं समाधानेन रक्षणं गुप्तिः ताः ताभिः। काभिरित्याह। मनोगुप्त्या मनसा दुश्चिन्तानिवारणेन धर्मशुक्लावध्यानेन। वचोगुप्त्या वचसा मौनेन निरवद्यालपभाषणेन वा। कायगुप्त्या दुश्चेष्टात्यागेन संलीनताभिर्वा परीषहसहत्वेन वा। आसामकरणे अतीचारः। त्रिभिः शल्यैः शलयन्ते प्राणिनं कम्पयन्ते बाधन्ते वा शल्यानि तैः। कैरित्याह। मायाशल्येन माया शुभाशुभैः कर्मभिः परिवञ्चनविप्रतारणमेव शल्यं तेन निदानशल्येन सर्वेषां बन्धनहेतुमनोवाक्कायैश्चेष्टा तपःप्रभृतिभिः स्वर्गराज्यमोक्षादिकाङ्क्षा वा तदेव शल्यं तेन। मिथ्यादर्शनशल्येन अतत्वे तत्वभावो मिथ्यादर्शनं पञ्चप्रकारभिन्नं तदेव शल्यं तेन। त्रिभिर्गौरवैः कर्मोपचयेन आत्मनो गुरुत्वकरणं गौरवं तैः। कैरित्याह। ऋद्धिगौरवेण आचार्यपदप्राप्तिराजसन्मानार्थादिलाभतृष्णागर्वोद्भवेन रसगौरवेण इष्टरसषट्प्रकारलाभानन्देन सातगौरवेण सातं सुखं तस्य लोभप्रमोदाभ्यां त्रिभिर्विराधनाभिः सावद्यासंयमभेदादिना कर्मबन्धकरी क्रिया विराधनेत्युच्यते ताभिः। का-

भिरित्याह । ज्ञानविराधनया । ज्ञानविराधना यथा—'नाण पडणीय निन्हव अच्चासायण तयंतरायं च । कुणमाणस्स इआरो नाणविसंवायजोगं च ॥ १ ॥' विस्तारो महाग्रन्थेभ्यो ज्ञेयः । दर्शनविराधनया सम्यक्त्वछेदेन शङ्कादिभिः । चारित्रविराधनया सर्वविरतिचारित्रखण्डनेन । चतुर्भिः कषायैः कष्यते निरन्तरं बध्यते आत्मा अनेनेति कषायः तस्य आयाः लाभरूपाः कषायास्तैः । कैरित्याह । क्रोधकषायेण परद्रोहचिन्तनरूपेण रौद्ररसात्मकेन मानकषायेण परमाहंकृतिरूपेण मायाकषायेण परवञ्चनारूपेण लोभकषायेण अनन्ततृष्णामूर्च्छारूपेण । कषायाणामनन्तानुबन्धिप्रभृतिविस्तारव्याख्या श्रुतोदधौ ज्ञेया । चतुर्भिः संज्ञाभिः संज्ञानं आत्मनः काङ्क्षया वस्त्वन्तरपरिज्ञानं संज्ञा तया ताभिः । काभिरित्याह । आहारसंज्ञया चतुर्विधाहारषड्रसेच्छारूपया । भयसंज्ञया सप्तभयात्मिकया । मैथुनसंज्ञया स्त्रीसंभोगादिकाङ्क्षया । परिग्रहसंज्ञया सर्वभावेषु मूर्छारूपया । चतसृभिर्विकथाभिः विरुद्धा जनापवादपरापराधकार्यभङ्गकादिन्यः कथाः ताभिः । काभिरित्याह—स्त्रीकथया स्त्रीजातिदेशगुणादिव्याख्यानरूपया । भक्तकथया षड्रसचतुर्विधाहारश्लाघानिन्दारूपया । देशकथया नानादेशाचारवस्तुश्लाघानिन्दारूपया । राजकथया नृपप्रतापापयशःप्रभृतिश्लाघानिन्दारूपया । चतुर्भिर्ध्यानैः ध्यायते स्वसतत्वमध्यगतं किंचियैः तानि ध्यानानि तैः । कैरित्याह । आर्तेन ध्यानेन दुःखाशादैन्यपरार्थनादिदुःखासिकारूपेण । रौद्रेण ध्यानेन परद्रोहचिन्तनादिक्रोधात्मकेन । धर्मेण ध्यानेन आज्ञापायविपाकसंस्थानचिन्तनरूपेण । शुक्लेन ध्यानेन चतुर्विधेन तत्वार्थशास्त्रोपयुक्तेन । पञ्चभिः क्रियाभिः

करणं क्रिया कर्मानुबन्धी कायव्यापारः ताभिः । काभिरित्याह । कायिक्या कायेन कर्मवि(धान)पाकरूपेण
निर्वृत्तया देहव्यापाररूपया । आधिकरण्या अनेकदुष्टव्यापाराधिकरणकारिण्या । प्राद्वेषिक्या महादुष्टत्व-
चिन्तनात्मिकया । प्राणातिपातक्रियया प्रसिद्धया । पञ्चभिः कामगुणैः कामोऽभिलाषः तत्कारिणो गुणाः
कामगुणास्तैः । कैरित्याह । शब्देन आहतानाहतरूपेण । रूपेण निर्माणचित्रादिकृतेन । रसेन षड्रसात्मकेन ।
गन्धेन दुःसहगन्धरूपेण । स्पर्शेन दुःसहस्पर्शरूपेण । पञ्चभिर्महाव्रतैः गृहिणामणुव्रतापेक्षया महाव्रतानि कथ्यन्ते ।
कैरित्याह । प्राणातिपातात् षड्विधजीवनिकायहिंसनाद्विरमणेन । मृषावादात् अप्रियाहितासत्यवचनाद्विरम-
णेन । अदत्तादानात् दन्तशोधनमात्रपरादत्तवस्तुनो ग्रहणाद्विरमणेन । मैथुनात् शब्दरूपरसगन्धस्पर्शदेव-
तिर्यग्मनुष्यसुरतादिरूपाद्विरमणेन । परिग्रहात् सर्वभावेषु मूर्च्छाकरणाद्विरमणेन । पञ्चभिः समितिभिः सं
सम्यगितिः संयमस्य गतिः, अथवा समितिः चारित्रयोगानां मीलनं ताभिः । काभिरित्याह । ईर्यासमित्या-
गमने जन्तुरक्षार्थमालोकनरूपया । भाषासमित्या संज्ञादिपरिहारेण मौनावलम्बनरूपया । एषणासमित्या
द्विचत्वारिंशद्दोषविशुद्धभिक्षाग्रहणगवेषणारूपया । आदानभाण्डमात्रनिक्षेपणासमित्या भाण्डमात्रोपकर-
णानां यत्नेन प्रतिलिख्य निक्षेपादानरूपया । उच्चारप्रस्रवणखेलजल्लसिंघाणपारिष्ठापनिकासमित्या विण्मूत्रक-
फदेहमलनासामलोत्सर्गाणां निर्जन्तुप्रतिलेखितपृथ्वीतलरूपया । षड्भिर्जीवनिकायैर्जीवानां प्राणिनां सध-
र्मिणां समूहो निकायस्तैः । कैरित्याह । पृथ्वीकायेन काठिन्यलक्षणेन मृल्लोष्टप्रभृतिरूपेण । अप्कायेन जला-

त्मकेन हिममिहिकाकरकशुद्धोदकरूपेण । तेजस्कायेन अग्निविद्युदलातप्रभृतिरूपेण । वायुकायेन व्यजनमुखाद्युदीरितेन प्राणापानादिरूपेण वा । वनस्पतिकायेन प्रत्येकानन्तरूपेण । त्रसकायेन द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियसंज्ञिपञ्चेन्द्रियअसंज्ञिपञ्चेन्द्रियरूपेण । षड्भिर्लेश्याभिः लेशोऽशीत्यधिकैकसहस्रनिमेषकालरूपः तत्रभवा तीव्रध्यानरूपा युक्तिर्लेश्या ताभिः । काभिरित्याह । कृष्णलेश्यया महातीव्रपापानुध्यानरूपया । नीललेश्यया किंचित्तदूनतरया । कापोतलेश्यया किंचित्ततोऽप्यल्पप्रदोषया । तेजोलेश्यया किंचिच्छुभभावभिन्नया । पद्मलेश्यया शुभभावसंमिश्रया । शुक्ललेश्यया नितरां निर्मलया कर्मानुबन्धच्छेदिन्या । एतासां लेश्यानां व्याख्यानं ग्रामवधकजम्बूखादकपरिणामदृष्टान्तैः तदुपयोग्यवर्णान्तरैश्च सिद्धान्तादवसेयं । विराधनाकषायसंज्ञाविकथाध्यानक्रियाकामगुणमहाव्रतसमितिजीवनिकायलेश्यादीनां व्याख्यानं अत्र ग्रन्थविस्तरभयान्न कृतं । नामग्रहणमेव व्याख्यानं शास्त्रान्तरादवसेयं । एतन्मध्ये धर्मशुक्लादीनां ध्यानानां महाव्रतानां समितीनां गुप्तीनां शुभात्मकानां सर्वेषां यत्प्रतिक्रमामीति कथनं तत्र तद्गतानामतिचाराणां भङ्गदूषणादिकृतानां प्रतिक्रमणार्थं ॥ अथैकवेलकथनेन प्रतिक्रमणयुक्तिमाह । पडिक्कमामि सत्तहिं भयट्ठाणेहिं अट्ठहिं भयट्ठाणेहिं णवहिं बंभचेरगुत्तीहिं दसविहे समणधम्मे एकारसहिं उवासगपडिमाहिं बारसहिं भिक्खुपडिमाहिं तेरसहिं किरियाणेहिं चउद्दसहिं भूयगामेहिं पनरस्सहिं परमाहम्मियेहिं सोलसहिं गाहासोलसएहिं सत्तरसविहे असंयमे अट्ठारसविहे अबम्भे एगुणवीसाए नायज्झायणेहिं वीसाए असमाहिट्ठा-

गेहिं एगवीसाए सवलेहिं बावीसाए परीसहेहिं तेवीसाए सूयगडज्झायणेहिं चउवीसाए अरहंतेहिं पंचवी-
साए भावणाहिं छवीसाए दसाकप्पववहाराणं उद्देसणकालेणं सत्तावीसाए अणगारगुणेहिं अट्ठवीसाए आ-
यारपकप्पेहिं एगुणतीसाए पावसुयपसंगेहिं तीसाए मोहणिट्ठाणेहिं एकतीसाए सिद्धायगुणेहिं वत्तीसाए
जोगसंगहेहिं तित्तीसाए आसायणाए ॥ सप्तभिर्भयस्थानैः भयोत्पादजनकैः इहलोक १ परलोक २ आदान
३ अकस्मात् ४ आजीविका ५ मरण ६ अकीर्ति ७ रूपैः । अष्टभिर्मदस्थानैः जाति १ लाभ २ कुल ३ ऐश्वर्य
४ बल ५ रूप ६ तपः ७ श्रुत ८ रूपैः । नवभिर्ब्रह्मचर्यगुप्तिभिः स्त्रीपण्ढपशुयुक्तगृहत्याग १ तादृशासनत्याग
२ तादृगकुड्यान्तरत्याग ३ सरागस्त्रीकथाकरणत्याग ४ पूर्वरतिस्मरणत्याग ५ स्त्रीरम्याङ्गेक्षणत्याग ६ स्वाङ्ग-
भूषात्याग ७ स्निग्धाशनत्याग ८ अत्यशनत्याग ९ रूपाभिः । दशविधे श्रमणधर्मे संयम १ सूनृत २ शौच ३
ब्रह्म ४ आकिंचन्य ५ तपः ६ क्षान्ति ७ मार्दव ८ आर्जव ९ मुक्ति १० रूपे । अत्र सप्तमी धर्मेतिचार इत्यर्थः ।
एकादशभिरुपासकप्रतिमाभिः दर्शन १ व्रत २ सामायिक ३ पौषध ४ ब्रह्मचर्य ५ अचित्त ६ आरम्भ ७
प्रेक्षा ८ उद्दिष्ट ९ वर्ज्य १० श्रमणभूत ११ रूपाभिः । द्वादशभिर्भिक्षुप्रतिमाभिः एकमासिकी १ द्वैमासिकी
२ त्रैमासिकी ३ चतुर्मा० ४ पञ्चमा० ५ षण्मा० ६ सप्तमा० ७ सप्तरात्रिकी ८ सप्तरात्रिकी ९ सप्तरात्रिकी
१० अहोरात्रिकी ११ एकरात्रिकी १२ रूपाभिः । त्रयोदशभिः क्रियास्थानैः अर्थायिक्रिया १ अनर्थायिक्रिया
२ हिंसादिक्रिया ३ अकस्मात्क्रिया ४ दृष्टिविपर्यासक्रिया ५ अदत्तादानक्रिया ६ आध्यात्मक्रिया ७ मान-

क्रिया ८ मिश्रक्रिया ९ मायाक्रिया १० लोभक्रिया ११ इर्यापथक्रिया १२ मृषाक्रिया १३ स्थानरूपाभिः।
चतुर्दशभिर्भूतग्रामैर्जीवसमूहैः एकेन्द्रिय १ सूक्ष्म २ बादर ३ पञ्चेन्द्रिय ४ संज्ञि ५ असंज्ञि ६ द्वित्रिचतुरि-
न्द्रिय ७ पर्याप्तापर्याप्तत्वेन द्विगुणीकृतैः १४। पञ्चदशभिः परमाधार्मिकैः महापापकारिनैरयिकसंतापकदैवतैः।
अम्ल १ अम्लर्ष २ श्याम ३ शबल ४ रूद्र ५ उपरुद्र ६ काल ७ महाकाल ८ असिपत्र ९ धनुः १० कुम्भ
११ वालुका १२ वैतरणी १३ खरस्वर १४ महाघोष १५ रूपैः । षोडशभिर्गाथाषोडशकैः सूत्रकृताङ्गश्रुतस्क-
न्धाध्ययनैः समय १ वैकालिक २ उपसर्गपरिज्ञा ३ स्त्रीपरिज्ञा ४ निरयविधि ५ वीरस्तव ६ शीलपरिभाषा
७ वीर्य ८ धर्म ९ समाधि १० मार्ग ११ समवसरण १२ अवितथ १३ ग्रन्थ १४ यमक १५ गाथाध्ययन १६
रूपैः। सप्तदशविधे असंयमे पञ्चाश्रव ५ पञ्चेन्द्रियव्यापार १० कषाय १४ योगत्रयदुःसंस्थान १७ रूपैः। अत्र
सप्तमीकथनं सर्वेतिचारा असंयमे इत्यर्थः। अष्टादशविधे अब्रह्मणि—'दिव्यौदारिककामानां कृतानुमतका-
रितैः। मनोवाक्कायतस्त्यागो ब्रह्माष्टादशधा मतम् ॥ १ ॥' एतद्विपरीतं अब्रह्म तस्मिन्नतिचारा इति भावः।
एकोनविंशताध्ययनैः अज्ञाताध्ययनैरपीत्यर्थः। उत्कीर्तना १ संघाटा २ अण्ड ३ कूर्म ४ शैलिक ५ तुम्बर ६
रोहिणी ७ मल्ली ८ माकन्दी ९ चन्द्रम १० दावद्व ११ उदकज्ञात १२ मण्डूक १३ तैतिल १४ नन्दीफल १५
अमरकंका १६ आकीर्ण १७ श्मश्रु १८ पुण्डरीक १९ रूपैः। विंशत्या असमाधिस्थानैः द्रुतद्रुतचारि १ अप्रमा-
र्जितस्थान २ दुःप्रमार्जितस्थान ३ अतिरिक्तशय्या ४ अतिरिक्ताशन ५ रत्नाधिकपराभव ६ स्थविर ७ अप-

घात ८ संज्वलनकोप ९ सदीर्घकोप १० पराङ्मुखावर्णवाद ११ प्रत्यक्षचोरादिभापण १२ अधिकरण १३
अकालस्वाध्याय १४ सरजस्कपाणि १५ शब्दकर १६ कलहकर १७ झंझागणभेद १८ सूरप्रमाणभोजन १९
अनेपणासमिति २० रूपैः स्वपरासमाधिकरैः ॥ एकविंशत्या शबलैः चित्तमालिन्यहेतुभिः । हस्तकर्मकरण १
मैथुनोपसेवन २ निशाभोजन ३ आधाकर्मभोजन ४ राजपिंडभोजन ५ क्रीतभोजन ६ प्रामित्यभोजन ७
अभिहृतभोजन ८ अच्छेद्यभोजन ९ प्रत्यक्षभिक्षाभोजन १० पण्मासाभ्यन्तरगणान्यगणप्रवेश ११ मासाभ्य-
न्तरदकलेपत्रय १२ मासाभ्यन्तरमायास्थानत्रयकरण १३ प्राणातिपात १४ मृपावाद १५ अदत्तादान १६
अस्थानशय्यासनानैपेधिकीकरण १७ स्थावरजंगमसंकुलभूमिनिवास १८ कन्दमूलफलसबीजापरिणतभो-
जन १९ वर्षान्तर्दशकलेपदशमायास्थानकरण २० सोदकसरजस्कहस्तदर्वीभिक्षाग्रहण २१ रूपैः ॥ द्वाविं-
शत्या परीपहैः । क्षुत् १ पिपासा २ शीत ३ उष्ण ४ दंशमशक ५ अचेलत्व ६ अरति ७ स्त्री ८ चर्या ९ निपद्या
१० शय्या ११ आक्रोश १२ वध १३ याञ्चा १४ अलाभ १५ रोग १६ तृणस्पर्श १७ मल १८ सत्कारपुरस्कार
१९ प्रज्ञा २० अज्ञान २१ सम्यक्त्व २२ रूपैः ॥ त्रयोविंशत्या सूत्रकृताध्ययनैः । द्वितीयाङ्गाध्ययनैरित्यर्थः ।
पुण्डरीक १ क्रियास्थान २ आहारपरिज्ञा ३ प्रत्याख्यान ४ अनगार ५ आर्द्र ६ नालिंद ७ पोडशादिषोडश
१६ युक्तैः २३ ॥ चतुर्विंशत्यार्हद्भिः—'भुवणवणजोइयवेमाणिया य दसअट्ठपंचएगविहा । इय चउवीसं देवा
केई पुण विंति अरिहंता ॥ १ ॥' पञ्चविंशत्या भावनाभिः महाव्रताश्रिताभिः प्रत्येकं पञ्चभिः मनोगुप्ति १ एष-

णासमिति २ आदानसमिति ३ ईर्यास० ४ इष्टान्नपानग्रहण ५ रूपाभिः । पञ्चभिः प्राणातिपाताश्रिताभिः हास्य १ लोभ २ भय ३ क्रोध ४ भाषितविवर्जनआलोच्यभाषण ५ रूपाभिः । मृषावादव्रताश्रिताभिः पञ्चभिः १० आलोचितावग्रहयाचन १ अभीक्ष्णावग्रहयाचन २ अवग्रहप्रमाणचिन्तन ३ साधर्मिकावग्रहनिरन्तरयाचन ४ अनुज्ञापितपानान्नाशन ५ रूपाभिः पञ्चभिरदत्तादानव्रताश्रिताभिः १५ स्त्रीषण्ढपशुमध्येशयासनकुड्यान्तरोज्झन १ सरागस्त्रीकथात्याग २ प्राग्रतस्मृतिवर्जन ३ स्त्रीरम्याङ्गेक्षणस्वाङ्गसंस्कारवर्जन ४ प्रणीतात्यशनत्याग ५ रूपाभिः पञ्चभिर्मैथुनव्रताश्रिताभिः २० शब्द १ रूप २ रस ३ गन्ध ४ स्पर्शेषु ५ मनोज्ञेषु सरागतावर्जन अशुभेषु द्वेषवर्जनरूपाभिः पञ्चभिः परिग्रहव्रताश्रिताभिः २५ । षड्विंशत्या श्रुतस्कन्धकल्पव्यवहारोद्देशनकालैस्ते चामी—'दशउद्देसणकाला दसासु कप्पस्स हुंति छच्चेव । दस चेव य ववहारेसु हुंति सव्वेवि छव्वीसं ॥ १ ॥' ॥ सप्तविंशत्याऽनगारगुणैः प्राणातिपात १ मृषावाद २ अदत्तादान ३ मैथुन ४ परिग्रह ५ रात्रिभोजनवेरमण ६ स्पर्शन ७ रसन ८ घ्राण ९ चक्षु १० श्रोत्रनिग्रह ११ भावशुद्धि १२ प्रत्युपेक्षणादिकरणशुद्धि १३ क्षमा १४ लोभव्यग्र १५ अकुशलमन १६ वाक् १७ कायनिरोध १८ पृथिवी १९ जल २० तेजो २१ वायु २२ वनस्पति २३ त्रसरक्षा २४ संयमयोग २५ शीतादिसहन २६ मरणान्तिकोपसर्गसहन २७ रूपेण ॥ अष्टाविंशत्या आचारप्रकल्पैः आचारस्थिरीकरणरूपैः शस्त्रपरीक्षा १ लोकविजय २ शीतोषणीय ३ सम्यक्त्व ४ आवंति ५ धुव ६ विमोह ७ उपधानश्रुत ८ महापरिज्ञा ९ पिंडेषणा १० शय्या

११ ईर्या १२ भाषार्या १३ वस्त्रपात्रैषणा १४ अवग्र १५ प्रतिमा १६ सप्तसप्तक २३ भावना २४ विमुक्ति २५
उद्घात २६ अनुद्धात २७ अर्हणा २८ नामकैः ॥ एकोनत्रिंशता पापश्रुतप्रसङ्गैः अङ्ग १ स्वप्न २ स्वर ३ उत्पात
४ अन्तरिक्ष ५ भौम ६ व्यञ्जन ७ लक्षण ८ मष्टाङ्गनिमित्तं सूत्रवृत्तिवार्तिकैस्त्रिविधभेदभिन्नैश्चतुर्विंशतिविधं
२४ गान्धर्व २५ नाट्य २६ वास्तु २७ आयुर्वेद २८ धनुर्वेदरूपैः २९ ॥ त्रिंशतामोहनीयकर्मभेदैः त्रिंशता
मोहनीयस्थानैश्चतुर्थी कर्मप्रकृतिः मोहनीयं तस्य स्थानानि भेदाः मोहनीयस्थानानि। तानि च—'चत्तारि
मज्झे विगाहित्ता तसे पाणे विहिंसई १। गयइ मुहं हत्थेणं तोनायंगलेरवं २। सीसावेढेण वेढिता संकिले-
सेण मारइ ३। सीसंमि जो अ आहंतु दुहमारेण मारई ४। बहुजणस्स नेआरं ५ दीवतारं च पाणिणं ६।
साहारणे गिलाणंमि ७ पहुकिच्चं न कुवई। साहुं अकम्मधम्माउ जो संभंति उवट्ठिअं। निआउस्स मग्गस्स
अवगारम्मि च दृहइ ८। जिणाणं णंतणाणीणं अवन्नं जो पभासई ९। आयरिय उवज्झाए खिंसई मंदबु-
द्धिए १०। तेसि मे चय नाणीणं सम्मं न परितप्पई ११। पुणो पुणोऽहिगरणं उप्पाए १२ तित्थभेअए १३।
जाणं आहम्मिए जोए १४ पउंजइ पुणो पुणो। कामे वमित्ता पच्छेइ ईअ वन्नभवे अवा १५। अभिक्खं बहु-
सुपअ हंति जो भासंति बहुस्सुए। तहा य अतवस्सीउ जे तवस्सित्ति हंगए १६। जायतेएण बहुजणं अंतो
धम्मेण हिंसई १७। अकिच मप्पणा काउं कय मेएण भासइ १८। निअउवहिप्पणिहिए पलिउंजे १९ असु-
हजोगजुत्तो अवयइ। सव्वं मुसं सयसि २० अज्झीणे झंडयाए सया २१ । अट्ठाणम्मि पविसित्ता जो धणं

हरइ पाणिणं २२। वीसंभित्ता उवाएणं दारं तस्स च लुब्भई २३। अभिक्खमा कुमारे अकुमारे अ हुंति भासई २४। एवमब्रह्मचारित्वेपि ब्रह्मचारिताप्रकाशनं २५। येनैश्वर्यं प्रापितः तस्यैव सत्के द्रव्ये लोभकरणं २६। तप्पभावुट्ठिएवावि अंतरायं करेइ से २७। सेणावईयसत्थारं भत्तारं वावि हिंसइ। रट्ठस्स वावि निगमस्स नायगम्मिसिट्ठिमेव वा २८। अप्पस्समाणो पासामि अहं चेवत्ति वावए २९। अवन्नेणं च देवाणं महामोहं पकुव्वई ३०।' एतानि कुर्वाणोऽतिसंक्लिष्टत्वान्महामोहनीयं कर्म बध्नाति ॥ एकत्रिंशता सिद्धादिगुणैः सिद्धानां प्रथमगुणरूपैः। ते चामी—संस्थान १ वर्ण २ गन्ध ३ रस ४ स्पर्श ५ वेदाः ६ क्रमात् पञ्च १ पञ्च २ द्वि ३ पंच ४ अष्ट ५ त्रि ६ भेदाः १० एषामभावः। अतीचारत्व २९ सङ्गवर्जितत्व ३० जन्मित्व ३१ रूपैः॥ द्वात्रिंशता योगसंग्रहैः। शिष्याचार्यसम्यगालोचनादान १ आलोचनानिरपलायित्व २ आपत्सु दृढधर्मता ३ ऐहिकादिफलानपेक्षोपधानकारिता ४ द्विविधशिक्षासेविता ५ निःप्रतिकर्मशरीरता ६ तपसिपरजनाज्ञापिता ७ अलोभता ८ परीषहादिविजय ९ आर्जव १० संयमव्रतविषयशुचिता ११ सम्यक्त्वशुद्धि १२ चित्तसमाधि १३ आचारोपगम १४ विनयरतता १५ धृतिप्रधानता १६ संवेगपरता १७ निर्मायिता १८ सुविधिकारिता १९ संवरकारिता २० आत्मदोषोपसंहारिता २१ सर्वकामविरक्तत्वभावना २२ मूलगुणविषयप्रत्याख्यानकारिता २३ उत्तरगुणविषयप्रत्याख्यानकारिता २४ द्रव्यभावविषयव्युत्सर्ग २५ अप्रमाद २६ प्रतिक्षणसामाचार्यनुष्ठान २७ ध्यानसंवृत्तता २८ मारणान्तिकवेदनोदयेप्यक्षोभता २९ सङ्गानाङ्गपरिज्ञायाप्रत्या-

स्थानपरिज्ञा ३० प्रायश्चित्तकारिता ३१ मरणान्ताराधना ३२ रूपैः ॥ त्रयस्त्रिंशता आशातनाभिः पूर्वोक्ता-
भिरनन्तरोक्ताभिः । तत्र यः सम्यग्दर्शनाद्यवाप्तिलक्षणस्तस्याशातना खण्डनाः आशातनास्ताश्चैताः—शि-
क्षको निःकारणं स्वाधिकपुरतोऽतिनिकटागन्ता आशातनां कुरुते विनयभङ्गादिदोषात् १ पार्श्वाभ्यामेव गन्ता
पूर्ववदोषात् २ पृष्ठतोऽप्यासन्नं गन्ता एवमेव तत्र निःश्वासक्षुतकासकरणपातादयो दोषाः ३ एवं पुरःस्थाता ४
पार्श्वस्थाता ५ पृष्ठस्थाता ६ तथा पुरतो निषीदन् ७ पार्श्वतो निषीदन् ८ पृष्ठतो निषीदन् ९ तथा बहिर्विहा-
रभूमौ गतः पुरतः पूर्णमाचामन् १० पूर्वमालोचयन् ११ व्याहरतो गुरोर्जाग्रदप्यप्रतिश्रोता १२ गुरोः संलाप्यं
कंचित्पूर्वमेव संलापयति १३ अन्नादि गृहीत्वा गतः प्रथमं शिष्यस्यालोचयन् १४ प्रतिगृहीताशनादि प्रथमं
शिष्यस्योपदर्शयन् १५ अशनादिना प्रथमं शिष्यं निमन्त्रयिता १६ गुरुमनापृच्छ्याशनादिनाऽपरसंविभाग-
कर्ता १७ भोजनं कुर्वन् बृहत्कवलैः सपत्रशाकस्निग्धमनोज्ञाद्यभ्यवहर्ता १८ गुरुणा व्याहृतोऽप्यप्रतिश्रोता ।
प्रतिश्रवणं पूर्वं रात्रावुक्तमिदं तु दिवस इति विशेषः १९ बृहच्छब्देन खरनिष्ठुरवक्ता २० गुरुणा व्याहृतो
यत्रस्थः शृणोति तत्रस्थ एवालापं ददाति २१ आहूतः सन् किमिति वक्ता । यतो मस्तकेन वन्दे इति तत्र
वाच्यम् २२ त्वमिति एकवचनवक्ता २३ प्रेरणायां गुरुणा क्रियमाणायां ग्लानस्य किं न करोषीति अभि-
हितस्त्वं किं न करोषीति, अथवा अलसस्त्वमित्युक्ते त्वमेवालस इति प्रतिवक्ता २४ गुरौ कथां कथयति
उपहतमनास्त्वमिति वक्ता २५ न स्मरसि नायमर्थोऽस्येति वक्ता २६ अहं कथां कथयामि तिष्ठ त्वं तावदिति

वक्ता २७ तथा भिक्षावेला वर्तत इत्यादि भणित्वा धर्मकथायां पर्षद्भेत्ता २८ अनुत्थितायामेव गुरुधर्मकथा-
पर्षदि द्वितीयतृतीयवारं स्वयं कथयिता तथैव तस्य सूत्रस्यायमर्थोऽयमप्यर्थ इति गुरुकथितान्विकल्पयिता
२९ गुरोः शय्यासंस्तारकादेः पादेन संघट्टयिता ३० गुरुशय्यासंस्तारकादौ स्थाननिषीदनशयनादिकर्ता ३१
उच्चासने निषदनशयनकर्ता ३२ समानासने चैतत्कर्ता ३३ एतास्त्रयस्त्रिंशदाशातनाः ॥

अथाशातनाप्रतिक्रमणं। एतत्सातिचारं निरूप्य प्रत्येकमर्हदादीनामाशातनाप्रतिक्रमणमाह—अरिहंताणं
आसायणाए सिद्धाणं आसायणाए आयरियाणं आसायणाए उवज्झायाणं आसायणाए साहूणं आसाय-
णाए साहूणीणं आसायणाए सावगाणं आसायणाए सावियाणं आसायणाए देवाणं आ० देवीणं आ०
इहलोगस्स आ० परलोगस्स आ० केवलीणं आ० केवलिपन्नत्तस्स धम्मस्स आ० सदेवमणुयासुरस्स
लोगस्स आ० सव्वपाणभूयजीवसत्ताणं आ० कालस्स आ० सुयस्स आ० सुयदेवयाए आ० वायणाय-
रियस्स आसायणाए जं वाइद्धं विच्चामेलियं हीणक्खरियं अच्चक्खरियं पणयहीणं विणयहीणं घोसहीणं जोग-
हीणं सुट्ठुपडिच्छियं दुट्ठुपडिच्छियं। अकालेकओ सज्झाओ काले न कओ सज्झाओ असज्झाए सज्झाइयं
सज्झाए न सज्झाइयं तस्स मिच्छामि दुक्कडं ॥ आर्हतानामाशातनया तन्निन्दाकर्मविचारणा स्वरूपविरूप-
भाषणरूपया सिद्धानामाशातनया तेषां नास्तित्वख्यापनादिकया। आचार्याणां आशातनया त्रयस्त्रिंशद्रू-
पया। उपाध्यायानां आशातनया त्रयस्त्रिंशद्रूपया। साधूनां आशातनया तज्जुगुप्सारूपया। साध्वीनां

आशातनया तादृश्यैव । श्रावकाणां आशा० तन्निन्दानिर्भर्त्सनादिरूपया । श्राविकाणां आशातनया ताद-
श्यैव । देवानां आशा० तदनुज्ञातभूमिवस्तुग्रहणरूपया । देवीनां आशा० तादृश्यैव । इहलोकस्य आशा०
परलोकस्य आशा० तद्वितथप्ररूपणारूपया । केवलिनां आशा० तन्नास्तित्वशून्यप्ररूपणया । केवलिप्रज्ञप्तस्य
धर्मस्य आशा० तत्प्राकृतादिकथनरूपया सर्वप्राणभूतजीवसत्वानां आशा० तेषां पीडया वितथप्ररूपणया ।
प्राणा द्वीन्द्रियादयः भूताः पृथिव्यादयः जीवाः सर्वेपि सत्वाः सांसारिकभेदः सदेवमनुजासुरस्य लोकस्य
आशा० तदपलापनिन्दारूपया । देवकथनेन ऊर्ध्वलोकग्रहणं । मनुजकथनेन मध्यलोकग्रहणं । असुरकथनेन
पातालग्रहणं । कालस्याशा० तन्नास्तित्वख्यापनया । श्रुतस्याशा० तद्वितथख्यापनया । यदा विद्धं विपर्यस्तं
कृतं मृत्याम्रेडितं तुच्छहीनाधिकयुक्त्या प्रलपितं कोलिकपायसवत् । हीनाक्षरं ऊनवर्णं । अत्यक्षरं अधिक-
वर्णं । पदहीनं विभक्त्यन्तपदाद्यविच्छिन्नं विनयहीनं दुर्विनयगृहीतं योगहीनं योगोद्वहनवर्जितं घोषहीनं
उदात्तानुदात्तानुच्चारं । सुष्ठु गुरुणा दत्तं दुष्टं प्रतीष्टं दुर्युक्त्या गृहीतं अकाले कृतः स्वाध्यायः काले न कृतः
स्वाध्यायः अस्वाध्याये रक्तादिसंसक्ते योगोद्वहनकालग्रहणवर्जनीये काले स्वाध्यापितं स्वाध्यायः कृतः स्वा-
ध्याये स्वाध्याययोग्ये काले न स्वाध्यायितं तस्य मिथ्या मे दुःकृतं ॥ नमो चउवीसाए तित्थयराणं उसभाइ-
महावीरपज्जवसाणाणं इणमेव निग्गंथं पवयणं सच्चं अणुत्तरं केवलिअं पडिपुन्नं नेयाउयं संसुद्धं सल्लगत्ताणं
सिद्धिमग्गं मुत्तिमग्गं निव्वाणमग्गं निज्जाणमग्गं अवितहमविसंधि सव्वदुःखपहीणमग्गं इत्थं ट्ठिया जीवा

सिज्झंति बुज्झंति मुचंति परिनिव्वुडंति सव्वदुक्खाणमंतं करंति तं धम्मं सद्दहामि पत्तियामि रोएमि फासेमि पालेमि अणुपालेमि तं धम्मं सद्दहंतो पत्तियंतो रोययंतो फासंतो पालंतो अणुपालंतो ॥ नमश्चतुर्विंशतितीर्थंकरेभ्यः ऋषभादिमहावीरपर्यवसानेभ्यः । तेभ्यो नमस्कारं कृत्वा प्रस्तुतव्याख्यानमाह—इदमेव निर्ग्रन्थं बाह्यान्तःकर्मग्रन्थिरहितं प्रवचनं प्रकृष्टवाक्यं सत्यं अवितथं केवलं अद्वितीयं परिपूर्णं सकलगुणैरलंकृतं नैत्र्यकं स्वामित्वात् सामर्थ्याच्च मोक्षपथनायकं संशुद्धं निर्दूषणं । शल्यकर्तनं मायादिशल्यव्यवच्छेदनं सिद्धिमार्गं मुक्तिमार्गं निर्वाणमार्गं निर्याणमार्गं । अत्र सिद्धिमुक्तिनिर्वाणनिर्याणानामेकपर्यायित्वात् एकव्याख्यानेनैवावान्तरसिद्धिः सर्वहितसाधनत्वात् मुक्तिः सर्वदोषविमोक्षत्वात् निर्वाणं सर्वसुखप्राप्तित्वात् निर्याणं संसारोदधिनिर्गमात् तस्य मार्गः पन्था आगम इत्यर्थः । अवितथं अविसंवादि । अविसन्धि द्रव्यक्षेत्रकालभावैरपूर्वापरविरुद्धं ईदृशं सर्वदुःखप्रतीक्षणमार्गं जिनोक्ततत्त्वलक्षणं । अत्रार्हदागमे स्थिता जीवाः सिध्यन्ति अणिमादिसिद्धीर्लभन्ते बुध्यन्ते केवलिनो भवन्ति मुच्यन्तेऽष्टकर्मभिर्मुक्ता भवन्ति । परिनिर्वियन्ते परमसुखिनो भवन्ति । सर्वदुःखानामन्तं कुर्वन्ति सिद्धा भवन्तीत्यर्थः । तं धर्मं श्रद्दधामि परमवासनया अभिलषामि । प्रतीये तत्र निःसंशयो भवामि रोचये आत्मनः तेन वाल्लभ्यं कारयामि स्पृशामि कर्तव्येन पालयाम्याचरणेन अनुपालयामि पौनःपुन्यकरणेन पुनस्तं धर्मं श्रद्दधानः प्रतीयानः रोचयमानः स्पृशन् पालयन् अनुपालयन् अहमित्यर्थः । किं करोमीत्याह ॥ अथाभ्युत्थानपूर्वकं—तस्स धम्मस्स केवलिप-

मत्तस्स अब्भुट्ठिओमि आराहणाए विरओमि विराहणाए असंयमं परियाणामि संयमं उवसंपज्जामि अ-
बंभं परियाणामि बंभं उवसंपज्जामि अकप्पं परियाणामि कप्पं उवसंपज्जामि अनाणं परि० नाणं उव० मि-
च्छत्तं परि० संमत्तं उव० अबोहिं परि० बोहियं उव० अमग्गं परि० मग्गं उव० जं संभरामि जं च न संभ-
रामि जं च पडिक्कमामि जं च न पडिक्कमामि तस्स सव्वस्स देवसियस्स अइयारस्स पडिक्कमामि समणोहं
संजयविरयपडिहयपच्चक्खायपावकम्मे अनियाणो दिट्ठिसंपन्नो मायामोसोसविवज्जिओ ॥ तस्य धर्मस्य
केवलिप्रज्ञप्तस्य उपस्थितोस्मि आराधनायां सेवायामित्यर्थः । विरतोस्मि विराधनायां खण्डनायामि-
त्यर्थः । असंयमं अनिन्द्रियनिग्रहं प्रतिजानामि प्रत्याख्यामि निराकरोमीत्यर्थः । संयमं इन्द्रियदमरूपं
उपसंपद्ये अङ्गीकरोमीत्यर्थः । प्रतिजानामि उपसंपद्ये । व्याख्या सर्वत्रैकैव । अकल्पं अयत्नाचारं प्रति०
कल्पं यत्नाचारं उपसंपद्ये अतत्वं तत्वयाथ्यं प्रतिजानामि तत्वं ससपदार्थरूपं उप० अमार्गं मिथ्या-
चारं प्रति० मार्गं सदाचारं उप० अबोधिकं बोधिबीजरहितं प्रति० बोधिकं बोधिबीजं उप० अब्रह्म
ब्रह्मचर्यरहितं प्रति० ब्रह्म अमैथुनं उप० अज्ञानं ज्ञानरहितं प्रति० ज्ञानं पञ्चविधं उप० मिथ्यात्वं प्रति०
सम्यक्त्वं उप० यत् स्मरामि यच्च न स्मरामि यत्प्रतिक्रमामि यच्च न प्रतिक्रमामि तस्य सर्वस्य देव-
सिकस्यातिचारस्य प्रतिक्रमामि श्रमणोहं । अत्र स्मृतास्मृतप्रतिक्रान्ताप्रतिक्रान्तकथने पुनः प्रतिक्रमामीति
कथनं मोहादिविशुद्धिहेतोः । श्रमणोऽहमिति असंमतत्वे प्रतिक्रमणं निःफलं इति । संयमे निष्ठितः श्रमणोहं ।

कथंभूतोऽहमित्याह । अनिदानः इहपरलोकफलाकाङ्क्षारहितः । दृष्टिसंपन्नः तत्त्वालोकयुक्तः मायामृषाविवर्जितः ॥ एवमतिचारप्रतिक्रमणं विधाय सर्वपापनिरासार्थं यतिभ्यो नमस्कारमाह—अड्ढाइज्जेसु दीवसमुद्देसु पन्नरससु कम्मभूमीसु जावंति केवि साहू रयहरणगुच्छपडिग्गहधारा पंचमहव्वयधारा अट्ठारससहस्सीलाङ्गधारा अक्खोहाआरचरित्ता ते सव्वे सिरसा मणसा मत्थेण वंदामि । अर्धतृतीयेषु द्वीपसमुद्रेषु जम्बूद्वीपलवणोदधिधातकीखण्डकालोदधिपुष्करवरद्वीपार्धरूपेषु । पञ्चदशसु कर्मभूमिषु पञ्चभरतपञ्चैरावतकुरुवर्जितपञ्चविदेहरूपासु । अत्र समुद्रग्रहणं अन्तर्द्वीपस्थमुनिनमस्कारार्थं । यावन्तः केपि साधवः । पूर्वं स्थविरकल्पानाह—रजोहरणगुच्छपतद्ग्रहधारिणः पञ्चमहाव्रतधारिणः अष्टादशसहस्रशीलाङ्गधारिणः अक्षोभ्याचारचारित्राः जिनकल्पा इत्यर्थः । तान्सर्वान् शिरसा मस्तकेन वन्दे पूर्ववत् ॥ अथ सर्वजीवक्षामणं क्षमिती आह—'खामेमि सव्वजीवेय सव्वे जीवा खमंतु मे[1] । मित्ती मे सव्वभूएसु वेरं मज्झ न केणइ ॥ १ ॥' एतद्व्याख्यानं पूर्वमेवोक्तं । अथ आत्मशुद्धिं विधाय प्रतिक्रमणप्रान्ते सर्वपापहरान् जिनान्नमस्करोमि । 'एवमहं आलोइय निंदय गरिहय दुगंछिओ सम्मं । तिविहेणं पडिक्कंतो वंदामि जिणे चउव्वीसं ॥ १ ॥' एवमहं यतिः आलोच्य सर्वातिचारालोचनां कृत्वा निन्दित्वा गर्हित्वा जुगुप्सित्वा सम्यक् त्रिविधेन मनोवाक्काययोगेन प्रतिक्रान्तः चतुर्विंशतिजिनान् वन्दे । निन्दागर्हाजुगुप्सानामेकपर्यायाणां पुनःपुनः कथनं अत्यन्तप्रतिक्रम-

1 मे ममापराधं क्षमन्तु ।

णार्थम् । अत्र च सूत्रे सन्ध्यादैवसिकप्रतिक्रमणकाले—पगामसिज्जाए निगामसिज्जाए इति कथनं दिवास्वा-
पवर्जनत्वाद्यर्थं, परंतु कदाचिद्ग्रीष्मकाले प्रमादात् खेदात् दिवास्वापे कृते अथवा रात्रिप्रतिक्रमणे शय्याति-
चारे विस्मृताप्रतिक्रान्ते शय्यादण्डककथनम् । प्रभाते रात्रिप्रतिक्रमणे—पडिक्कमामि गोयरचरियाए पडिक्क-
मामि चाउक्कालं इति कथनं । निशि भिक्षाप्रतिलेखनयोरभावतो व्यर्थं, परंतु दिवसे अनालोचितातिचा-
राणां स्वप्नकृतानां वा प्रतिक्रमणाय कथनं ॥ इति यतिप्रतिक्रमणसूत्रव्याख्या ॥

अथ यतिपाक्षिकसूत्रव्याख्या यथा—'तित्थंकरे अ तित्थे अतित्थसिद्धे अ तित्थसिद्धे अ । सिद्धे जिणे
रिसी महारिसीअ णाणं च वंदामि ॥ १ ॥' इत्यादिपाक्षिकसूत्रप्रतिक्रमणस्यादौ मङ्गलसिद्ध्यर्थं अर्हत्सिद्धभे-
दानां प्रणतिमाह । अहं वन्दे इति क्रियापदं सर्वत्र । कान् । तीर्थंकरान् वीतरागान् । तीर्थान् प्रथमगणधर-
संघादीन् अतीर्थसिद्धान् तीर्थसिद्धांश्च । सिद्धप्रकारद्वयव्याख्या सिद्धस्तवादवसेया । जिनान् सामान्यकेव-
लिनः ऋषीन् मूलगुणोत्तरगुणयुतान् यतीन् महर्षीन् तादृग्विधानेवाणिमादिलब्धियुतान्मुनीन् । ज्ञानं पञ्च-
विधं वन्दे इति सर्वत्र योज्यम् । 'जे य इमं गुणरयणसायरमविराहिऊण तिन्नसंसारा । ते मंगलं करित्ता
अहमवि आराहणाभिमुहो ॥ १ ॥' ये मुनयः इमं गुणरत्नसागरं अविराध्य सम्यक्पालयित्वा तीर्णसंसारा
निस्तीर्णभवाः ते मङ्गलं क्रियासुः । अहमपि आराधनाभिमुखः गुणरत्नसागरस्य मुनीनां चाराधनायामेक-
चित्त इत्यर्थः । पुनरपि स्वस्य मङ्गलार्थं अर्हद्धर्मयोराशिषमाह—'मे मंगलमरिहंता सिद्धा साहू सुयं च

धम्मो य । खंती गुत्ती मुत्ती अज्जवया मद्दवं चेव ॥ १ ॥' अर्हन्तो जिनाः सिद्धाः पञ्चदशभेदाः साधवो मुनयः श्रुतमागमः धर्मो यतिश्राद्धाचारलक्षणः क्षान्तिस्तितिक्षा गुप्तिर्मनोवाक्कायलक्षणा मुक्तिर्निर्लोभता आर्जवं निर्मायिता मार्दवं निर्मदता मे मम मङ्गलं क्रियासुः । क्रियासुरित्यनुवर्तते । महाव्रतोच्चारसूचनमाह—'लोगम्मि संजया जं करंति परमरिसिदेसियमुयारं । अहमपि उवट्ठिओ तं महव्वयउच्चारणं काउं ॥ १ ॥' लोके कर्मभूमिरूपे संयता मुनयो यत्कुर्वन्ति आचरन्ति । किं तत् परमर्षिदेशितं पूर्वमुनिकथितं उदारं बलवत्तरं महाव्रतोच्चारणं कर्तुं उपस्थितः उपक्रान्तः। से किं तं महव्वयउच्चारणं। महव्वयउच्चारणा पञ्चविहा पन्नत्ता। राइभोयणवेरमणं छट्ठा ॥ तंजहा । सव्वाओ पाणाइवायाओ वेरमणं सव्वाओ मुसावायाओ वेरमणं सव्वाओ अदिन्नादाणाओ वेरमणं सव्वाओ मेहुणाओ वेरमणं सव्वाओ परिग्गहाओ वेरमणं सव्वाओ राइभोयणाओ वेरमणं ॥ किं तत् महाव्रतोच्चारणं महाव्रतोच्चारणा पञ्चविधा प्रज्ञप्ता रात्रिभोजनविरमणा षोढा । तद्यथा । सर्वस्मात् स्थावरसूक्ष्मविराधनारूपात् प्राणातिपातात् जीवहिंसनात् विरमणं सर्वस्मात् हास्यलोभादिभवात् मृषावादात् असत्यवचनाद्विरमणं सर्वस्मात् अदत्तादानात् विरमणं सर्वस्मात् रूपरूपसहगतात् मैथुनाद्विरमणं सर्वस्मात् मूर्छामात्ररूपात् परिग्रहाद्विरमणं सर्वस्मात् पवनमात्रग्रहणात् रात्रिभोजनाद्विरमणं । इत्युक्त्वा प्रथमव्रतस्योच्चारमाह—तत्थ खलु पढमे भंते महव्वए पाणाइवायाओ वेरमणं सव्वं भंते पाणाइवायं पच्चक्खामि । से सुहुमं वा बायरं वा तसं वा थावरं वा णेव सयं पाणे अइवाए घाणेवणेहिं पाणे अइवाया-

भिन्ना पाणे अइवायंतेवि अणेण समणुजाणामि जावज्जीवाए तिविहं तिविहेणं मणेणं वायाए काएणं न
करेमि न कारवेमि करंतंपि अण्णं न समणुजाणामि तस्स भंते पडिक्कमामि निंदामि गरिहामि अप्पाणं वो-
सिरामि ॥ तत्र महाव्रतोच्चारणे खलु निश्चयेन भंते भदंत इति गुर्वग्रे प्रतिक्रमणार्थं पूज्यसंबोधनं । प्रथमे
महाव्रते प्राणातिपाताद्विरमणं। विरमणं सर्वथा निवृत्तिरिति सर्वत्र व्याख्येयं। कैश्चिदत्र सप्तमीस्थाने प्रथमा
कथ्यते। प्रथमं महाव्रतं इति सर्वत्रापि प्रथमां कथयंति। सर्वं भदन्त प्राणातिपातं प्रत्याख्यामि परित्य(जा)-
म्यामि। केषां प्राणिनामतिपातमित्याह। से तत् इति व्रतवाचकं सूक्ष्मं वा पञ्चेन्द्रियान्तरूपं। स्थावरं वा
पृथिव्यम्बुवनस्पतिरूपं। अमी प्राणा जीवाः तानित्याह। नैव स्वयं प्राणान् अतिपातयेत् हन्यात्। नैव अन्यैः
प्राणान् अतिपातयेत् विघातयेत्। प्राणान् अतिपातयतोऽन्यान् न समनुजानामि जावज्जीवाए इति पूर्ववत्।
पुनरपि द्रव्यादिभेदैः प्राणातिपातव्याख्यानमाह—से पाणाइवाए चउव्विहे पन्नत्ते। तंजहा। दव्वओ खित्तओ
कालओ भावओ दव्वओणं पाणाइवाए छसु जीवनिकाएसु खित्तओणं पाणाइवाए उड्ढलोए वा अहोलोए
वा तिरियलोए वा कालओणं पाणाइवाए दिया वा राओ वा भावओणं पाणाइवाए रागेण वा दोसेण वा
जंपिय मए इमस्स धम्मस्स केवलिपन्नत्तस्स अहिंसालक्खणस्स सच्चाहिट्ठियस्स विणयमूलस्स खंतिपहाणस्स
अहिरण्णसुवण्णियस्स उवसमपभवस्स णवबंभचेरगुत्तस्स अप्पयमाणस्स भिक्खावित्तियस्स कुक्खीसंब-
लस्स णिरग्गिसरणस्स संपक्खालियस्स चत्तदोसस्स गुणग्गाहियस्स निव्वियारस्स निवित्तीलक्खणस्स पंच-

महव्वयजुत्तस्स असणिहिसंचयस्स अविसंवाइयस्स संसारपारगामियस्स णिव्वाणगमण पय्यवसाणफलस्स पुव्विं अणाणयाए असवणयाए अबोहियाए अभिगमेणं अणभिगमेणं वा पमाएणं रागदोसपडिबद्धयाए बालयाए मोहयाए मंदयाए किड्डयाए तिगारवरुयाए चउक्कसाउवगएणं पंचिंदियवसट्टेणं पडिपुणभारियाए सायासुक्खमणुपालयंतेणं इहं वा भवे अण्णेसु वा भवगहणेसु पाणाइवाओ कओ वा काराविओ वा कीरंतो वा। परेहिं समणुण्णाओ तं निंदामि गरिहामि तिविहं तिविहेणं मणेणं वायाए कएणं अईयं निंदामि। पडिपुण्णं संवरेमि अणागयं पचक्खामि। सव्वं पाणाइवायं जावज्जीवाए अणिस्सिओहं नेव सयं पाणे अइवाएज्जा नेवण्णेहिं पाणे अइवा याविज्जा पाणे अइवायंतेवि अन्नेण समणुजाणिज्जा। तं जहा। अरिहंतसक्खियं सिद्धसक्खियं साहुसक्खियं देवसक्खियं (धम्मसक्खियं) अप्पसक्खियं एवं भवइ भिक्खू वा भिक्खुणी वा। संजयविरयपडिहयपच्चक्खायपावकम्मे दिया वा राओ वा एगओ वा परिसागओ वा सुत्ते वा जागरमाणे वा। एस खलु पाणाइवायस्स वेरमणे हिए सुए खमे निस्सेसिए आणुगामिए पारगामिए सव्वेसिं पाणाणं सव्वेसिं भूयाणं सव्वेसिं जीवाणं सव्वेसिं सत्ताणं अदुक्खणयाए असोयणयाए अजूरयणाए अतिप्पणयाए अपीडणयाए अपरियावणियाए अणुद्दवणयाए महत्थे महागुणे महाणुभावे महापुरिसाणचिन्ने। परमरिसिदेसिए पसत्थे तं दुक्खक्खयाए कम्मक्खयाए वोहिलाभाए संसारदुत्तारणाए त्तिकट्टु उवसंपज्जित्ताणं विहरामि पढमे भंते महव्वए उवट्ठिओम्मि सव्वाओ पाणाइवायाओ वेरमणं ॥ १ ॥ स प्राणातिपातश्चतुर्विधः प्रज्ञप्तः

कथितः । तद्यथा । स यथा वा । द्रव्यतः १ क्षेत्रतः २ कालतः ३ भावतः ४। द्रव्यतो णं इति वाक्यालंकारे ।
प्राणातिपातः षट्सु जीवनिकायेषु पूर्वोक्तेषु क्षेत्रतः प्राणातिपातः सर्वलोके चतुर्दशरज्ज्वात्मके कालतः प्राणा-
तिपातो दिवा वा रात्रौ वा । भावतः प्राणातिपातो रागेण वा दोसेण वा । रागद्वेषभावाः सर्वेऽपाया इति ॥

अथ यतिधर्मस्य अज्ञानतादिभिर्विराधनात् यो व्रतभङ्गस्तं ख्यापयति यथा—यदपि च मया अस्य धर्मस्य
सत्याचारस्य केवलिप्रज्ञप्तस्य अहिंसालक्षणस्य दयामूलचिह्नस्य सत्यावस्थितस्य सूनृतस्थितस्य विनयमूलस्य
प्रणत्युत्पन्नस्य क्षान्तिप्रधानस्य क्षमाश्रेष्ठस्य अहिरण्यसुवर्णस्य द्रव्यकाञ्चनरहितस्य उपशमप्रभवस्य कषायच्छे-
द्योत्पन्नस्य नवविधब्रह्मचर्यगुप्तस्य नवब्रह्मगुप्तियुक्तस्य अप्रथितमानस्य अथवा अप्रमाणस्य मानरहितस्य द्वि-
धापि भिक्षावृत्तिकस्य भैक्षमात्रोपजीवनस्य कुक्षिसंबलस्य भुक्तमात्रपाथेयस्य न सन्निधिकरणस्य निरग्नि-
शरणस्य अग्न्यागारविहितस्य संप्रक्षालितस्य क्षालितसर्वपापमलस्य त्यक्तदोषस्य परिहृतरागादेः गुणग्राहिणो
गुणानुरक्तस्य निर्विकारस्य इन्द्रियमनोविकारत्यक्तस्य निर्वृत्तिलक्षणस्य सर्वव्यापारनिवृत्तिचिह्नस्य पञ्चमहा-
व्रतयुक्तस्य असन्नसंयतस्य संयमेऽश्रान्तयतेः औपसंवादिकस्य । पूर्वापरयोर्वचनयोरेकार्थता उपसंवादः उप-
संवादेन युक्त औपसंवादिकः तस्य संसारपारगामिनः भवतारकस्येत्यर्थः । निर्वाणगमनपर्यवसानबलस्य
निर्वाणगमनं मोक्षगमनमेव पर्यवसानं परमार्थरूपं बलं यस्य स तस्य ईदृशस्य धर्मस्य पूर्वं अज्ञानतया अश्र-
वणतया जनाकर्णनेन अबोधितः अभिगमेन प्रवाहप्राप्त्या अनभिगमेन अप्राप्त्या प्रमादेन रागद्वेषप्रतिबद्ध-

तया बालतया मूढत्वेन शिशुत्वेन वा मोहतया मिथ्यात्वादिमोहेन भण्डतया रागपरादिपारवश्येन क्लिष्टतया क्लेशकर्मत्वेन त्रिगौरवगुरुतया ऋद्धिरससातगौरवेण एतैः प्रकारैः अस्य धर्मस्य अतीचारैरिति योजना। कथंभूतेन मयेत्याह—चतुःकषायोपगतेन पञ्चेन्द्रियवशार्तेन परिपूर्णतया सातासौख्यमनुपालयता तथा मया अस्य धर्मस्य अज्ञानतया अस्मिन्वा भवे वर्तमानजन्मनि अन्येषु वा भवग्रहणेषु अतीतानागतेषु प्राणातिपातः कृतो वा कारितो वा क्रियमाणो वा परैः समनुज्ञातः तं निन्दामि गर्हे त्रिविधं त्रिविधेन मनसा वाचा कायेन अतीतं निन्दामि प्रत्युत्पन्नं वर्तमानं संवृणोमि अनागतं प्रत्याख्यामि सर्वं प्राणातिपातं यावज्जीवमनिःश्रितोऽहं निश्रारहितो विप्रमुक्त इत्यर्थः। नैव स्वयं प्राणान् अतिपातयेत् नैव अन्यैः प्राणान् अतिपातयेत् प्राणानतिपातयतोऽन्यान्न समनुजानीयात्। तद्यथा। अर्हत्साक्षिकं सिद्धसाक्षिकं साधुसाक्षिकं देवसाक्षिकं गुरुसाक्षिकं। केचिदाहुः आत्मसाक्ष्यकं। अत्र अर्हत्सिद्धसाधुदेवात्मसाक्ष्यत्वे यन्निषिद्धं तदकरणीयमेवेत्यर्थः। केवलावधिज्ञानेन्द्रियादीनां सर्वप्रत्यक्षत्वात् एवं भवति। अहमितिकथने कः पालक इत्याह। भिक्षुर्वा भिक्षुकी वा साधुर्वा साध्वी वा संयतविरतप्रतिहतप्रत्याख्यातपापकर्मासंयतं नियमितं विरतं निवृत्तं प्रतिहतं शुभकर्मभिर्घातितं प्रत्याख्यातं निराकृतं। कदा कर्मेत्याह। दिवा वा रात्रौ वा। कीदृशो भिक्षुर्भिक्षुकी च। एकको वा पर्षदि गतो वा स्वप्तो वा जाग्रद्वा एतत्खलु प्राणातिपातस्य विरमणं हितं श्रुतं क्षमं तारणसमर्थं निःशेषितं संपूर्णं पालितं आत्मानुगामि आत्मसेवनीयं परानुगामि परप्रतिपादनीयं। पुनः क-

सर्वेषां प्राणानां सर्वेषां भूतानां पूर्वोक्तानां सर्वेषां
र्थभूतम् । एताभिर्युक्तिभिर्महार्थम् । काभिरित्याह । सर्वेषां प्राणानां सर्वेषां भूतानां पूर्वोक्तानां सर्वेषां
जीवानां पूर्वोक्तानां सर्वेषां सत्वानां पूर्वोक्तानां अदुःखकरणतया अशपनया अजीर्णनया अखण्डनेन अती-
व्रतया संतोषकरणेन अपीडनया अपरितापनया अनुपद्रवनया महार्थं महागुणं महानुभावं महापुरुषानुचीर्णं
परमर्षिदेशितं प्रशस्तं तत्प्राणातिपातात् विरमणं । दुःखक्षयाय कर्मक्षयाय बोधिलाभाय संसारोत्तारणाय
त्रिःकृत्वा त्रिःकरणशुद्ध्या त्रिवेलं वा उपसंयुज्य उपसंपद्य वा व्रतेन संघटित्वा । णं इति वाक्यालंकारे ।
विहरामि तिष्ठामि प्रथमे भदन्त महाव्रते उपस्थितोस्मि सर्वस्मात्प्राणातिपाताद्विरमणं ॥ १ ॥ अहावरे दुचे
भंते महव्वए मुसावायाओ वेरमणं सव्वं भंते मुसावायं पच्चक्खामि । से कोहा वा लोहा वा भया वा हासा
वा नेव सयं मुसं वइज्जा । नेवन्नेहिं मुसं वयाविज्जा मुसंवयंतेवि अन्ने न समणुजाणामि जाव० शेषं पूर्ववत् ।
से मुसावाए चउव्विहे पन्नत्ते । तं जहा । दव्वओ खित्तओ कालओ भावओ दव्वओणं मुसावाए सव्वदव्वेसु
खित्तओणं मुसावाए लोए वा अलोए वा कालओणं मुसावाए दिया वा राओ वा भावओणं मुसा-
वाए रागेण वा दोसेण वा जं पि० शेषं० मुसावाओ भासिओ वा भासाविओ वा भासिज्जंतो वा परेहिं
समणुन्नाओ तं नि० गरिहामि शेषं पूर्ववत् । सव्वं मुसावायं जाव० शेषं० । नेव सयं मुसं वाइज्जा नेवन्नेहिं
मुसं वायाविज्जा मुसं वयंतेवि अन्ने न समणुजाणिज्जा । तंजहा । शेषं० । एस खलु मुसावायस्स वेरमणे
शेषं० । दुच्चे भंते महव्वए उवट्ठिओमि सव्वाओ मुसावायाओ वेरमणं ॥२॥ अथ अपरस्मिन् द्वितीये भदन्त महा-

व्रते । अथापरं द्वितीयं महाव्रतं वा मृषावादात् विरमणं सर्वं भदन्त मृषावादं प्रत्याख्यामि । स कस्माद्भवतीत्याह । क्रोधाद्वा लोभाद्वा भयाद्वा हासाद्वा नैव स्वयं मृषा वदेत् नैवान्यैर्मृषा वादयेत् मृषा वदन्तमन्यं सम्यगनुजानामि । शेषं पूर्ववत् । स मृषावादश्चतुर्विधः प्रज्ञप्तः । स यथा । द्रव्यतः १ क्षेत्रतः २ कालतः ३ भावतः ४ । द्रव्यतः सर्वद्रव्येषु जीवाजीवात्मकेषु । क्षेत्रतः सर्वलोके चतुर्दशरज्ज्वात्मके । अलोके तद्बाह्ये शेषं० । मृषावादो भाषितो वा भाषयितो वा भाष्यमाणो वा परैः समनुज्ञातः शेषं० । सर्वं मृषावादं शेषं० । द्वितीये भदन्त महाव्रते उपस्थितोस्मि। सर्वस्मान्मृषावादात् विरमणं ॥ २ ॥ अहावरे तच्चे भंते महव्वए अदिन्नादाणाओ वेरमणं सव्वं भंते अदिन्नादाणं पच्चक्खामि से गामे वा नयरे वा रणे वा अप्पं वा बहु वा अणु वा थूलं वा चित्तमंतं वा अचित्तमंतं वा णेव सयं अदिण्णं गिह्लिज्जा नेवन्नेहिं अदिन्नं गिह्लाविज्जा अदिन्नं गिह्लंतेवि अन्ने न समणुजाणामि शेषं० से अदिन्नादाणे चउव्विहे पन्नत्ते तंजहा शेषं० । दव्वओणं अदिन्नादाणे गहणधारिणिज्जेसु दव्वेसु खित्तओणं अदिन्नादाणे गामे वा नयरे वा शेषं० अदिण्णादाणं गहियं वा गाहावियं वा घिप्पंतो वा परेहिं समणुज्ञायं शेषं० सव्वं अदिन्नादाणं शेषं० नेव सयं अदिन्नादाणं गिह्लिज्जा नेवन्नेहिं । अदिन्नादाणं गिह्लाविज्जा । अदिन्नं गिह्लंतेवि अन्ने न समणुजाणिज्जा शेषं० । एस खलु अदिन्नादाणस्स वेरमणे शेषं० । तच्चे भंते महव्वए उवट्ठिओमि सव्वाओ अदिन्नादाणाओ वेरमणं । अदिन्नादाणं संपूर्णं ॥ ३ ॥ अथापरे तृतीये भदन्त महाव्रते प्रथमान्तपदानि वा । अदत्तादानाद्विरमणं सर्वं भदन्त अदत्तादानं प्रत्या-

ख्यामि तद्ग्रामे वा नगरे वा अरण्ये वा अल्पं वा बहु वा अणुं वा स्थूलं वा चित्तमद्वा अचित्तमद्वा नैव स्वयं
अदत्तं गृह्णीयात् नैवान्यैरदत्तं ग्राहयेत् अदत्तं गृह्णन्तमन्यं न समनुजानामि शेषं० तददत्तादानं चतुर्विधं
मज० शेषं० । द्रव्यतो ग्रहणीयधारणीयेषु द्रव्येषु क्षेत्रतो ग्रामे वा नगरे वा अरण्ये वा शेषं० । अदत्तादानं
गृहीतं वा ग्राहितं वा गृह्यमाणं वा परैः समनुज्ञातं० शेषं० । सर्वं अदत्तादानं शेषं० नैव स्वयमदत्तं गृह्णी-
यात् नैवान्यैरदत्तं ग्राहयेत् अदत्तं गृह्णन्तमन्यं न समनुजानीयात् शेषं० । एतत्खलु अदत्तादानस्य विरमणं
शेषं० तृतीये शेषं० । अदत्तादानाद्विरमणं ॥ ३ ॥ अहावरे चउत्थे भंते महव्वए मेहुणाओ वेरमणं सव्वं भंते मे-
हुणं पच्चक्खामि से दिव्वं वा माणुसं वा तिरिक्खजोणियं वा णेवं सयं मेहुणं सेविज्जा णेवण्णेहिं मेहुणं सेवा-
विज्जा मेहुणं सेवंतेवि अन्ने न समणुजाणामि शेषं० । से मेहुणे चउ० शेषं० । दव्वओणं मेहुणे रूवेसु वा
रूवसहगएसु वा खित्तओणं मेहुणे उड्ढलोए वा अहोलोए वा तिरियलोए वा शेषं० । मेहुणं सेवियं वा
सेवावियं वा सेविज्जंतं वा परेहिं समणुन्नायं शेषं० सव्वं मेहुणं शेषं० । नेव सयं मेहुणं सेविज्जा नेवन्नेहिं मे-
हुणं सेविज्जा मेहुणं सेवंतेवि अन्ने न समणुजाणिज्जा शेषं० । एस खलु मेहुणस्स वेरमणे शेषं० । चउत्थे
भंते महव्वए उ० शेषं० । मेहुणाओ वेरमणं ॥ ४ ॥ अथापरे चतुर्थे भदन्त महाव्रते प्रथमान्तपदानि वा । मैथु-
नाद्विरमणं सर्वं भदन्त मैथुनं प्रत्याख्यामि तद्दिव्यं वा देवदेवीसक्तं मानुषं वा स्त्रीपुरुषसक्तं तिर्यग्योनिजं
वा वडवाश्वादिसक्तं नैव स्वयं मैथुनं सेवेत नैवान्यैर्मैथुनं सेवयेत् मैथुनं सेवमानमन्यं न समनुजानामि

शेषं० । तन्मैथुनं चतुर्विधं प्रज्ञप्तं शेषं० । द्रव्यतो रूपेषु वा आकृतिमयेषु रूपसुभगेषु वा रूपलावण्यादियुक्तेषु क्षेत्रतः ऊर्ध्वलोके वा अधोलोके वा तिर्यग्लोके वा शेषं० । मैथुनं सेवितं वा सेवयितं वा सेव्यमानं वा परैः न समनुजानीयात् शेषं० । एतत् खलु मैथुनस्य विरमणं शेषं० चतुर्थे शेषं० । मैथुनाद्विरमणं ॥ ४ ॥ अहावरे पंचमे भंते महव्वए परिग्गहाओ वेरमणं सव्वं भंते परिग्रहं पच्चक्खामि से अप्पं वा बहुं वा अणुं वा थूलं वा चित्तमंतं वा अचित्तमंतं वा णेव सयं परिग्रहं परिगिह्लिज्जा णेवणेहिं परिग्गहं परिगिह्लाविज्जा परिग्गहं परिगिह्लंतेवि अन्ने न समणुजाणामि० शेषं० । से परिग्गहे च० शेषं० । दव्वओणं परिग्रहे सचित्ताचित्तमिस्सेसु दव्वेसु खित्तओणं परिग्गहे गामे वा नयरे वा अरण्णे वा० शेषं० । परिग्गहो गहिओ वा गाहाविओ वा घिप्पंतो वा परेहिं समणुन्नाओ० शेषं० । सव्वं परिग्गहं शेषं० । नेव सयं परिग्गहं परिगिह्लिज्जा नेवण्णेहिं परिग्गहं परिगिह्लाविज्जा परिग्गहं परिगिह्लंतेवि अन्ने न समणुजाणिज्जा० शेषं० । एस खलु परिग्गहस्स विरमणं शेषं० पंचमे भंते० शेषं० परिग्गहाओ वेरमणं ॥ ५ ॥ अथापरे पंचमे भदन्त महाव्रते प्रथमान्तपदानि वा । परिग्रहाद्विरमणं सर्वं भदन्त परिग्रहं प्रत्याख्यामि तत् अल्पं वा बहुं वा अणुं वा स्थूलं वा चित्तमद्वा अचित्तमद्वा नैव स्वयं परिग्रहं परिगृह्णीयात् नैवान्यैः परिग्रहं परिग्राहयेत् परिग्रहं परिगृह्णन्तमन्यं न समनुजानामि शेषं० स परिग्रहः शेषं० । द्रव्यतः सचित्ताचित्तमिश्रितेषु द्रव्येषु क्षेत्रतो ग्रामे वा नगरे वा अरण्ये वा शेषं० परिग्रहो गृहीतो वा ग्राहितो वा गृह्यमाणो वा परैः समनुज्ञातः शेषं० सर्वं

परिग्रहं शेषं० । नैव स्वयं परिग्रहं परिगृह्णीयात् नैवान्यैः परिग्रहं परिग्राहयेत् परिग्रहं परिगृह्णन्तमन्यं न सम-
नुजानीयात् शेषं० एतत् खलु परिग्रहाद्विरमणं शेषं० पञ्चमे भदन्त० शेषं० परिग्रहाद्विरमणं ॥ ५ ॥ अहा-
वरं छट्ठे भंते वए राइभोयणाओ वेरमणं सव्वं भंते राइभोयणं पच्चक्खामि से असणं वा पाणं वा खाइमं
वा साइमं वा णेव सयं राइं भुंजिज्जा णेवण्णेहिं राइं भुंजाइज्जा राइं यं भुंजंतेवि अन्ने न समणुजाणामि
शेषं० । से राइभोयणे चउव्विहे० शेषं० दव्वओणं राइभोयणे असणे वा पाणे वा खाइमे वा साइमे वा खित्त-
ओणं राइभोयणे समयखित्तेसु कालओणं दिवा वा राइभोयणे रत्तिं । भावओणं राइभोयणे तित्ते वा क-
डुए वा कसाइले वा अंबिले वा महुरे वा लवणे वा जंपि० शेषं० । राइभोयणं भुंजियं वा भुंजावियं वा
भुंजिज्जंतं वा परेहिं समणुन्नायं शेषं० सव्वं राइभोयणं० शेषं० । नेव सयं राइयं भुंजिज्जा नेवन्नेहिं राइं भुंजा-
विज्जा । राइं भुंजंतेवि अन्ने न समणुजाणिज्जा० शेषं० । एस खलु राइभोयणस्स वेरमणे शेषं० छट्ठे भंते०
शेषं० राइभोयणाओ वेरमणं ॥ ६ ॥ अथापरे षष्ठे भदन्त व्रते प्रथमान्तपदानि वा । रात्रिभोजनाद्विरमणं सर्वं
भदन्त रात्रिभोजनं प्रत्याख्यामि तत् अशनं वा पानं वा खादिमं वा स्वादिमं वा नैव स्वयं रात्रौ भुञ्जीत
नैवान्यै रात्रौ भोजयेत् रात्रौ भुञ्जानमन्यं न समनुजानामि शेषं० । तद्रात्रिभोजनं चतुर्विधं प्रज्ञप्तं० शेषं० ।
द्रव्यतः अशनं वा पानं वा खादिमं वा स्वादिमं वा क्षेत्रतः समयक्षेत्रेषु कालोचितभूमिषु कालतः रात्रौ भा-
वतः तिक्तं वा कटु वा कषायं वा अम्लं वा लवणं वा मधुरं वा० शेषं पू० । रात्रिभोजनं भुक्तं वा भोजितं वा

भुज्यमानं वा परैः समनुज्ञातं शेषं० सर्वं रात्रिभोजनं शेषं० नैव स्वयं रात्रौ भुञ्जीत नैवान्यै रात्रौ भोजयेत्
रात्रौ भुञ्जानानन्यान्न समनुजानीयात् शेषं० एतत्खलु रात्रिभोजनाद्विरमणं शेषं० षष्ठे भदन्त व्रते उपस्थि-
तोस्मि शेषं० रात्रिभोजनाद्विरमणं ॥ ६ ॥ अथ सर्वेषां व्रतानां समकालोच्चारमाह । इच्चेइयाइं पञ्चमहव्वयाइं
राइभोयणवेरमणछट्ठाइं अहिअयाए उवसंपज्जित्ताणं विहरामि । इत्येतानि पञ्च महाव्रतानि रात्रिभोजन-
विरमणषष्ठानि आत्महितार्थं उपसंपद्य सम्यक् प्रतिपद्य विचरामि ॥

अथ प्रकारान्तरेण महाव्रतव्युत्पत्तिमाह—'अप्पसत्था य जे जोगा परिणामा य दारुणा । माणावायस्स
वेरमणे एस वुत्ते अइक्कमे ॥ १ ॥ तिव्वरागा य जा भासा तिव्वदोसा तहेव य । मुसावायस्स वेरमणे एस वुत्ते
अइक्कमे ॥ २ ॥ उग्गहं च अजाइत्ता अवदिले य उग्गहे । अदिण्णादाणस्स वे० ॥ ३ ॥ सद्दा रूवा रसा गंधा
फासाणं ववियारणे । मेहुणस्स० ॥ ४ ॥ इच्छा मुच्छा य गेहे य कंखपओय दारुणे । परिग्गहस्स वे० ॥ ५ ॥
अइमित्ते अ आहारे सूरे खित्ते य संकिए । राइभत्तस्स वे० ॥ ६ ॥' अप्रशस्ता द्रोहपैशुन्यादिकराः परिणा-
माश्च दारुणाः हिंसाव्यवच्छेदादिकरा ये योगा मनोवाक्कायाः कर्मविशेषा वा प्राणातिपातस्य विरमणे एषो-
ऽतिक्रमोऽतिचार उक्तः ॥ १ ॥ तीव्ररागाय प्रचुरानुरागबन्धना या भाषा तथैव च तीव्रद्वेषा या भाषा मृषा-
वादस्य विरमणे एषोऽतिक्रमोऽतिचार उक्तः ॥ २ ॥ अवग्रहे गुर्वाद्याज्ञाविशेषे दत्तेपि पूर्वं व्रतयोगेन गृही-
तोपि कार्यकाले तस्य गुरोरवग्रहं अयाचित्वा कार्यकरणमिति शेषः । अदत्तादानस्य वि० ॥ ३ ॥ शब्दरूप-

रसगन्धस्पर्शानां प्रविचारणं शुभाशुभादिचिन्तनं मैथुनस्य वि० ॥ ४ ॥ इच्छा वांछा मूर्छा नितरां लोभः
प्राप्तिता सर्वसंग्रहबुद्धिः काङ्क्षा परधनग्रहणबुद्धिः प्रदोषश्च दारुणः इदं ग्रहीष्यामीति हठः परिग्रहस्य वि०
॥ ५ ॥ अतिमात्र आहारः निशि क्षुद्भयेन दिवैव बहुभोजनं सूर्यास्तक्षिप्तं शङ्कितं सूर्योऽस्ति नवेति चिन्ता
रात्रिभोजनस्य वि० ॥ ६ ॥ ॥ अथालापद्वादशकेन महाव्रतोच्चारणं द्विराह—'दंसणनाणचरित्ते अविरा-
हित्ता ठिओ समणधम्मे । पढमं वयमणुरक्खे विरियामो पाणाइवायाओ ॥ १ ॥ दंसणनाणचरित्ते० । बीयं
वयमणुरक्खे विरियामो मुसावायाओ ॥ २॥ दंसण० तइयं० विरियामो अदिन्नादाणाओ ॥ ३॥ दंसण० च-
उत्थं वयमणुरक्खे विरियामो मेहुणाओ ॥ ४ ॥ दंसण० पंचमवयमणुरक्खे विरियामो परिग्गहाओ ॥ ५ ॥
दंसण० छट्ठं० राइभोयणाओ ॥ ६ ॥' दर्शनज्ञानचारित्राण्यविराध्योपस्थितः स्थिरीभूतः श्रमणधर्मे प्रथमं
व्रतमनुरक्षामि विरतोऽस्मि विरमामि वा प्राणातिपातात् ॥ १ ॥ दर्शनज्ञानचारित्राण्यविराध्य उपस्थितः श्रम-
णधर्मे द्वितीयं व्रतमनुरक्षामि विरमामि मृषावादात् शेषं पू० ॥ २ ॥ तृतीयं व्रतमनुरक्षामि विरमाम्यदत्तादा-
नात् शेषं० ॥ ३ ॥ चतुर्थव्रतमनुरक्षामि विरमामि मैथुनात् शेषं० ॥ ४ ॥ पञ्चमं व्रतमनुरक्षामि विरमामि
परिग्रहात् शेषं० ॥ ५ ॥ षष्ठं व्रतमनुरक्षामि विरमामि रात्रिभोजनात् शेषं० ॥ ६ ॥ पुनरप्याह—'आलय-
विहारसमिओ जुत्तो गुत्तो ठिओ समणधम्मे । पढमं वयमणुरक्खे विरयामो पाणाइवायाओ ॥ १ ॥ आल०
बीयं० वय० मुसावायाओ ॥ २ ॥ आल० तइअं वयं० अदिन्नादाणाओ ॥ ३ ॥ आल० चउत्थं वय० मेहु-

णाओ ॥ ४ ॥ आल० पंचमं वय० परिग्गहाओ ॥ ५ ॥ आल० छट्ठं वयमणुरक्खे विरमामो राइभोयणाओ ॥ ६ ॥' प्रथमं व्रतमनुरक्षामि विरमामि प्राणातिपातात् आलयविहारसमितः आलयः स्थितिः विहारो गमनं तत्र समितः पञ्चसमितियुक्तः युक्तः संयमयोगभृत् गुप्तस्त्रिगुप्तिगुप्तः उपस्थितः श्रमणधर्मे ॥ १ ॥ द्वितीयं व्रतम० मृषावादात् शेषं० ॥ २ ॥ तृतीयं व्रतम० अदत्तादानात् शेषं० ॥ ३ ॥ चतुर्थं व्रतम० मैथुनात् शेषं० ॥ ४ ॥ पंचमं व्रतम० परिग्रहात् शेषं० ॥ ५ ॥ षष्ठं व्रतमनुरक्षामि विरमामि रात्रिभोजनात् शेषं० ॥ ६ ॥ ॥

अथैकाद्येकादशान्तहेयोपादेयत्यागग्रहणद्वारेण पौनःपुन्येन महाव्रतरक्षणमाह—'तिविहेण अप्पमत्तो रक्खामि महव्वए पंच । सावज्जजोगमेगं मिच्छत्तं एगमेव अन्नाणं । परिवज्जंतो गुत्तो रक्खामि महव्वए पंच ॥ १ ॥ अणवज्जजोगमेगं संमत्तं एगमेव नाणंओ । उवसंपन्नो जुत्तो रक्खामि महव्वए पंच ॥ २ ॥ दो चेव रागदोसे दोण्णिय झाणाइं अट्टरुद्दाइं । परि० ॥ ३ ॥ दुविहं चरित्तधम्मं दोण्णिय झाणाइ धम्मशुक्काइं । उव० ॥ ४ ॥ किह्ना नीला काऊ तिण्णियलेसाउ अप्पसत्थाओ । परि० ५ ॥ तेओ पह्मासुक्का तिण्णिय लेसाउ सुप्पसत्थाओ । उव० ६ ॥ ३ ॥ मणसा मणसव्वविओ वायासच्चेण करणसच्चेण । तिविहेणवि सच्चविर । उव० ७ ॥३॥ चत्तारि य दुहसिज्जा चउरो सन्ना तहा कसायाउ । परि० ८ । चत्तारि य सुहसिज्जा चउविहं संवरं समाहिं च । उव० ९ ॥ ४ ॥ पंचेव य कामगुणे पंचेव य निह्नवे महादोसे १० । पंचिंदिय संवरणं तत्तो पंचविहमेव सज्झायं । उव० ११ ॥ ५ ॥ छज्जीवनिकायविहं छविहभासाउ अप्पसत्थाओ । परि० १२ । छविह मज्झित-

यं यत्र भंपि य छविहं तवोकम्मं उव० १३ ॥ ६ ॥ सत्त भयट्ठाणाइं सत्तविहं चेव नाणविब्भंगं । परि० १४ ॥ पिण्डेसण पाणेसण उग्गहसत्तकिया महज्झयणा । उव० १५ ॥७॥ अट्ठ भयट्ठाणाइं अट्ठय कम्माइं तेसिं बंधं न । परि० १६ । अट्ठय पवयणमाया दिट्ठा अट्ठविहणिट्ठिअट्ठेहिं । उव० १७ ॥ ८ ॥ नवविहदंसणवरणं नवइ नियाणाइ अप्पसत्थाइ । परि० १८ । नवबंभचेरगुत्तो दुनवविहं बंभचेरपरिसुद्धं । उव० १९ ॥ ९ ॥ उवघायं न दसविहं असंवरं तहय संकिलेसं च । परि० २० ॥ दस चित्तसमाहिठाणा दस चेव दसाउ समणधम्मं न । उव० २१ ॥ १० ॥ आसायणं च सव्वं तिगुणएगारसविहं विवज्जंतो । परि० २२ । एवं तिदंडविरओ तिगुत्तिगुत्तो निसल्लनिसल्लो । तिविहेण पडिकंतो रक्खामि० २३ ॥ ११ ॥' व्याख्या—त्रिविधेन मनोवाक्का-ययोगेन अप्रमत्तः प्रमादरहितः पञ्चमहाव्रतानि रक्षामि परिपालयामि । एकं सावद्ययोगं एकं मिथ्यात्वं एकं अज्ञानं परिवर्जयन् गुप्तः त्रिगुप्तिगुप्तः पञ्चमहाव्रतानि रक्षामि । एकं अनवद्ययोगं एकं सम्यक्त्वं एकं ज्ञानं उपसंपन्नः संप्राप्तः युक्तः संयमयोगयुक्तः पञ्चमहाव्रतानि रक्षामि १ । द्वौ चैव रागद्वेषौ द्वे ध्याने आर्तरौद्रे च परिवर्जयन्० शेषं० । द्विविधं चारित्रधर्मं यतित्वगार्हस्थ्यरूपं द्वे धर्मशुक्ले ध्याने उपसंपन्नः० शेषं० २ । कृष्णां नीलां कापोतां तिस्रो लेश्या अप्रशस्ताः परि० शेषं० । तेजःपद्मशुक्लास्तिस्रो लेश्याः सुप्रशस्ताः उप० शेषं० ३ । मनसा मनःसत्येन सत्यापितः वाचा वचःसत्येन कायेन करणसत्येन त्रिविधेनापि सत्यापितः पंचमहाव्रतानि र-क्षामि ३ । चतस्रो दुःखशय्याः चतुरः कषायान् क्रोधमानमायालोभरूपान् चतस्रः संज्ञा आहारभयमैथुनपरिग्र ह-

रूपाः अतएव दुःशय्या दुःखासिकाहेतुः परि० चतस्रः सुखशय्याः सुखासिकाहेतुः। चतुर्विधं संवरं क्षमा १ मार्दवा २ ऽऽर्जव ३ निर्लोभता ४ रूपं। समाधिं चतुर्विधं विनय १ श्रुत २ तप ३ आचार ४ रूपं। उप शेषं० ४। पञ्चैव कामगुणान् शब्द १ रूप २ रस ३ गन्ध ४ स्पर्श ५ रूपान्, पञ्चैव निह्नवान् देव १ गुरु २ धर्म ३ क्रिया ४ सन्मार्गोपलाप ५ रूपान् महादोषान् परि० शेषं० । पञ्चेन्द्रियसंवरणं स्पर्शनादिबुद्धीन्द्रियनिवर्तनं। ततः पञ्चविधमेव स्वाध्यायं वाचना १ प्रच्छना २ आम्नाय ३ आगम ४ बुद्धिगुणाष्ट ५ रूपं। उप० शेषं० ५॥ षड्जीवनिकायवधं षट्जीवनिकायहिंसा। षड्विधभाषा अप्रशस्ताः हीलिता १ खिंसिता २ परुषा ३ अलीका ४ गार्हस्थी ५ उपशान्ता ६ रूपाः हीलिताः। अवज्ञागर्भा १ खिंसिता सनिन्दा २ परुषा गाल्यादिसहिता ३ अलीका असत्या ४ गार्हस्थी पितृपुत्रादिसम्बन्धयुक्ता ५ उपशान्ता अधिकरणयुक्तादिमयी ६ परि० शेषं०। षड्विधं आभ्यन्तरं तपःकर्म। प्रायश्चित्त १ वैयावृत्य २ स्वाध्याय ३ विनय ४ व्युत्सर्ग ५ शुभध्यान ६ रूपं। बाह्यमपि षड्विधं तपःकर्म। अनशन १ ऊनोदर्य २ वृत्तिसंक्षेप ३ रसत्याग ४ कायक्लेश ५ लीनता ६ रूपं उप० शेषं० ६॥ सप्त भयस्थानानि प्रसिद्धानि। सप्तविधं ज्ञानविभङ्गं जडता १ अविनय २ गुरुद्वेष ३ अनास्तिक्य ४ अनादर ५ विस्मरण ६ अनर्थचिन्ता ७ रूपं परि० शेषं० ७॥ अष्ट भयस्थानानि। सप्त प्रसिद्धानि अष्टमं मनोवैकल्यरूपं। अष्ट कर्माणि ज्ञानावरण १ दर्शनावरण २ वेदनीय ३ मोहनीय ४ आयु ५ नाम ६ गोत्र ७ अन्तराय ८ रूपाणि तेषां बंधं च परि० शेषं०। अष्ट प्रवचनमातृः प्रसिद्धाः पूर्वोक्ताः । ताश्च निष्ठा-

पिताष्टकर्मभिः क्षिप्तकर्माष्टकैः द्विष्टाः कथिताः उप० शेषं० ८ ॥ नवविधं दर्शनावरणं चक्षुर्दर्शनावरण १ अ-चक्षुर्द० २ अवधिद० ३ केवलद० ४ निद्राद० ५ निद्रानिद्राद० ६ प्रचलाद० ७ प्रचलाप्रचलाद० ८ स्त्यान-र्द्धिदर्शन ९ रूपं । नव निदानानि अप्रशस्तानि पापहेतूनि । हिंसा १ वितथ २ स्तेय ३ मैथुन ४ परपरिवाद ५ अवज्ञा ६ दुर्विनय ७ प्रमाद ८ कषाय ९ रूपाणि परि० शेषं० । नवविधब्रह्मचर्यगुप्तः । अहमिति शेषः । द्विर्नवविधां अष्टादशभेदां ब्रह्मचर्यपरिशुद्धिं पूर्वोक्तां उप० शेषं० ९ । दशविधं उपघातं धर्मोपघातरूपं । दशविधधर्मविपरीतं । लोलुपत्व १ असत्य २ लोभ ३ मैथुन ४ असन्तोष ५ नास्तिकत्व ६ क्रोध ७ मान ८ माया ९ परद्रव्यापहार १० रूपं । दशविधं असंवरं पञ्चेन्द्रियप्रसर ५ मनःप्रसर—चतुःकषाय १० रूपं । दश-विधं संक्लेशं पञ्चेन्द्रियक्लेश ५ रागद्वेषक्लेशमनोवाक्कायक्लेश १० रूपं परि० शेषं० । दश चित्तसमाधिस्थानानि पञ्चेन्द्रियसंवरण ५ पञ्चमहाव्रतपालन १० रूपाणि । दश दशाश्रुतस्कन्धाध्ययनानि । दशविधं श्रमणधर्मं पूर्वोक्तं उप० शेषं० १० ॥ आशातनाद्वारेण एकादशसंख्यामाह । आशातनां च सम्यक् त्रिगुणैकादशविधां त्रयस्त्रिंशद्विधां विवर्जयन्नहं परि० शेषं० । अत्र विवर्जयन् द्विःकथनं अखण्डसूत्रपाठार्थं । उपसंहरन्नाह । एवं त्रिदण्डविरतः पूर्वोक्तदण्डत्रयोपरतः त्रिगुप्तिगुप्तः त्रिशल्यनिःशल्यः पूर्वोक्तः शल्यत्रयरहितः त्रिविधेन मनोवाक्कायगुप्तेन अप्रमत्तः पञ्चमहाव्रतानि रक्षामि ११ ॥ अत्र परिवर्जयन्नग्रे गुप्ता उपसंपन्नाग्रे युक्तः ॥

अथ महाव्रतोच्चारोपसंहारेण तत्प्रभावकीर्तनेन जिनमुनिनमस्कारेण सूत्रकीर्तनारम्भमाह—इच्चेसा खलु

महव्वयउच्चारणा कया। कायथिरत्तं सल्लुद्धरणं धिइबलं ववसाओ। पडागाहरणं णिज्जूहणाराहणा गुणाणं संवरजोगो पसत्थज्झाणोवगतता जुत्ततावन्नाणे परमट्ठे उत्तमट्ठे अ। एस खलु तित्थंकरेहिं रयरागदेसमहणेहिं देसिओ पवयणस्स सारो छज्जीवनिकायसंजमो उवइसिओ तिलुक्कस्स कयं ठाणं। अब्भुवगया नमुत्थु ते सिद्धबुद्धमुत्तनीरयनिस्संगनिस्सल्लमाणमूरण गुणरयणसायरमणं तमहप्पमेय नमुत्थुते समणस्स भगवओ महइ महावीरवद्धमाणसामिस्स नमुत्थुते अरहओ नमुत्थुते भगवओ त्तिकट्टु एसा खलु महव्वयउच्चारणा कया इच्छामो सुतकित्तणं काउं॥ व्याख्या—इत्येषा खलु महाव्रतोच्चारणा कृता कः प्रभावो महाव्रतानामित्याह। कायस्थिरत्वं धर्मशरीरस्य स्थैर्यं, शल्योद्धरणं मायामिथ्यात्वनिदानशल्यापगमः, धृतिबलं धीबलं वा, व्यवसायो विगतविषादान्तःसंयमोपक्रमो वा, पताकाहरणं संयमयशसोरुद्भावनास्थापनाराधनागुणानां संवरयोगः प्रसिद्धः प्रशस्तध्यानोपगतताशुभध्यानस्थितिरूपसंपच्च प्रसिद्धा, युक्ततावज्ञाने परमार्थ उत्तमार्थश्च प्रसिद्धपर्यायाः। एतत् खलु तीर्थकरैः रजोरागद्वेषमथनैः देशितं प्रवचनस्य सारं षड्जीवनिकायसंयम उपदिष्टः। पञ्चमहाव्रतपालनेपि परमार्थतः षड्जीवनिकायरक्षैवेत्यर्थः। त्रैलोक्यस्य कृतं स्थानं सुखं स्थितिहितहेतुत्वात्। अतएव तान् जिनान् नमस्करोति। तत्रापि वर्तमानतीर्थत्वात् भगवंतं श्रीवर्धमानस्वामिनं नमस्करोति। यथा नमोस्तु तुभ्यं अरहन्त भगवन्त संसारतीर्ण सिद्धबुद्धमुक्तनीरजोनिस्सङ्गनिःशल्यमानहरण गुणरत्नसागर अनन्ताप्रमेय। एतेषां पर्यायाः प्रसिद्धाः। नमोस्तु तुभ्यं श्रमणाय भगवते महते महावी-

रवर्धमानस्वामिने नमोस्तु तुभ्यमर्हते । नमोस्तु तुभ्यं भगवते । एवं भगवन्तं नमस्कृत्य तदग्रत एव कथितव-
क्ष्यमाणख्यापनमाह । त्रिःकृत्वस्त्रिवेलं खलु महाव्रतोच्चारणा कृता । महव्वयउच्चारणा पंचविहा पन्नत्ता इत्या-
रभ्य इच्चेइयाइं पंचमहव्वयाइं इतिपर्यन्तं एकवेलं अप्पसत्थाय जे जोगा इत्यारभ्य आलयविहारसमिओ
जुत्तो गुत्तो उवट्ठिओ समणधम्मे इतिपर्यन्तं द्विवेलं । तिविहेणं अप्पमत्तो इत्यारभ्य एवं तिदण्डविरओ
इतिपर्यन्तं त्रिवेलं ॥ अथ इच्छामः सूत्रकीर्तनं कर्तुं श्रुताधाराणां मुनीनां नमस्कारद्वारेण श्रुतनामकीर्तनमाह ॥
नमो तेसिं खमासमणाणं जेहिं इमं वाइयं छव्विहमावस्सयं भगवन्तं । तंजहा । सामाइयं चउवीसच्छओ
वंदणं पडिक्कमणं काउसग्गो पच्चक्खाणं सव्वेसिंपि एयंमि । छव्विहे आवस्सए भगवंते समुत्ते सअत्थे सग्गंथे
सणिज्जुत्तिए ससंगहणिए जे गुणा वा भावा वा अरहंतेहिं भगवंतेहिं पन्नत्ता वा परूविया वा ते भावे सद्द-
हामो पत्तियामो रोएमो फासेमो पालेमो अनुपालेमो ते भावे सद्दहंतेणं पत्तियंतेणं रोयंतेणं फासि० तेणं पा-
लितेणं अणुपालितेणं अंतोपक्खस्स जं वाइयं पढियं परियट्टियं पुच्छियं अणुपेहियं अणुपालियं तं दुक्खक्ख-
याए कम्मक्खयाए बोहिलाभाए संसारुत्तारणाए तिकट्टु उवसंपज्जित्ताणं विहरामि अंतोपक्खस्स जं न वा-
इयं न पढियं न पुच्छियं न परियट्टियं नाणुपालियं नाणुपेहियं संते बले संते वीरिए संते पुरिसक्कारपडिक्कमे ।
तस्स आलोएमो पडिक्कमामो निंदामो गरिहामो विउट्टेमो विसोहेमो अकरणयाए अब्भुट्ठेमो । अहारिहं
तवोकम्मं पायच्छित्तं पडिवज्जामो तस्स मिच्छामि दुक्कडं ॥ नमो तेसिं खमासमणाणं जिहिं इमं वायाइं ( वा-

इयं) अंगबाहिरं उक्कालियं भगवंतं । तंजहा । दसवेयालियं कप्पाकप्पियं चुल्लकप्पसुयं महाकप्पसुओ उववाइयं रायपसेणियं जीवाभिगमओ पण्णवणा महापन्नवणा नंदी अणुओगदाराइं देविंदत्थओ तंदुलवेयालियं चंदाविज्झयं पमायप्पमायं पोरिसिमंडलं मंडलिपवेसो गणिविज्जा वरणविणिच्छिओ आयविसोही मरणविसोही ज्झाणविभत्ती मरणविभत्ती संलेहणासुयं वीयरागसुयं विहारकप्पो चरणविही आउरपच्चक्खाणं महापच्चक्खाणं सव्वेसिंपि एयंमि अंगबाहिरे उक्कालिए भगवंते० शेषं पूर्ववत् ॥ नमो तेसिं खमासमणाणं जेहिं इमं वाइयं अंगबाहिरं कालियं भगवंतं । तंजहा । उत्तरज्झयणाइं दसाकप्पो ववहारो इसिभासियाइं निसीहं महानिसीहं जंबूद्दीवपण्णत्ती चंदपण्णत्ती सूरपण्णत्ती दीवसागरपण्णत्ती खुड्डियाविमाणपण्णत्ती महल्लियाविमाणपन्नत्ती अंगचूलियाए वंगचूलियाए विवाहचूलियाए अरुणोववाए वरुणोदावाए गरुलोववाए धरणोववाए वेलंधरोववाए वेसमणोववाए देविंदोववाए उट्ठाणसुए समुट्ठाणसुए नागपरियावलियाणं निरयावलियाणं कप्पियाणं कप्पवडिंसियाणं पुप्फियाणं पुप्फचूलियाणं वएहीदसाणं आसीविसभावणाणं दिट्ठीविसभावणाणं चारणसमणभावणाणं महासमणभावणाणं तेयग्गिनिसग्गाणं सव्वेसिंपि एयंमि अंगबाहिरे कालिए भगवंते० शेषं० ॥ नमो तेसिं खमासमणाणं जेहिं इमं वाइयं दुवालसंगं गणिपिडगं भगवंतं । तंजहा । आयारो सूयगडो ठाणं समवाओ विवाहपण्णत्ती णाया धम्मकहाओ उवासगदसाओ अंतगडदसाओ अणुत्तरोववाइयदसाओ पह्णावागरणं विवागसुयं दिट्ठिवाओ सव्वेसिंपि एयंमि । दुवालसंगे गणिपिडगे भग-

वंते० शेषं० । नमो तेसिं खमासमणाणं जेहिं इमं वाइयं दुवालसंगं गणिपिडगं भगवंतं सम्मं काएणं
फासंति पालंति पूरंति किट्टंति तीरंति सम्मं आणाए आराहंति अहं च नाराहेमि तस्स मिच्छामि दुक्कडं ॥
नमस्तेभ्यः क्षमाश्रमणेभ्यो यैरिदं वाचितं षड्विधमावश्यकं । षडध्ययनमावश्यकप्रवचनमित्यर्थः । भगवन्
तद्यथा । सामायिकं चतुर्विंशतिस्तवो वंदनं प्रतिक्रमणं कायोत्सर्गः प्रत्याख्यानं । सर्वस्मिन्नप्येतस्मिन् षड्विधे
आवश्यके भगवति ससूत्रे सार्थे सग्रन्थे सनिर्युक्तिके ससंग्रहणीके वस्तुनः सूचनामात्रकृत् बीजस्वरूपं सूत्र-
वृत्तिटीकाभाष्यवार्तिकचूर्णिव्याख्यातो अर्थः अखण्डितः सूत्रार्थादिसमूहपाठो ग्रन्थः विविधानुक्रमणिका-
पाठो विस्तरसहितो निर्युक्तिः शास्त्रान्तः । कथितस्य वस्तुनोऽन्ते सूचनं संग्रहणी एभिः पदैः सह बहुव्रीहिस-
मासः । तस्मिन्ये गुणाः प्रयोगाचरणप्रचारणाध्ययनफलानि स्वर्गमोक्षवांछितार्थप्रदानि । भावा जीवाजीवा-
दयः अर्हद्भिः भगवद्भिः प्रज्ञसा वा प्ररूपिता वा प्रज्ञसाः कथिताः प्ररूपिता विस्तरेण व्याख्याताः तान् भा-
वान् श्रद्दधामः श्रद्धयेच्छामः प्रतीमः असंदेहतया प्रतिपद्यामहे रोचयामः तेषु वाल्लभ्यं वहाम इत्यर्थः । स्पृ-
शामः क्रियामात्रेण कुर्मः पालयामः आचरामः अनुपालयामः स्वपराचरणोपदेशैः ख्यापयामः इत्यादिबहुव-
चनान्तपदैर्वाच्यमिति संयोजयेत् । अथ मयेत्येकवचनं संबुद्ध्यन्तं । तान् भावान् श्रद्दधता प्रत्ययता रोचयता
स्पर्शयता पालयता अनुपालयता अन्तर्मध्ये पक्षस्य चातुर्मासिकस्य सांवत्सरिकस्य वा यद्वाचितं परिपा-
ल्योक्तं पठितं अधीतं परिष्ठितं साध्वनुष्ठितं पृष्टं प्रेक्षितं मतिज्ञानेनावलोकितं अनुपालितं कष्टानुष्ठानैर्धारितं

अनुप्रेक्षितं उक्तानुक्तदुरुक्तचिन्तनैः शोधितं उक्तसिद्धान्तमध्यादित्यर्थः । तत् दुःखक्षयाय कर्मक्षयाय बोधिलाभाय संसारोत्तारणाय त्रिःकृत्वः उपसंयुज्य संधार्य उपसंपद्य वा । णं इति वाक्यालंकारे । विचरामि अंतपक्षस्य चातुर्मासिकस्य सांवत्सरिकस्य यन्न वाचितं न पठितं न परिनिष्ठितं न पृष्टं न प्रेक्षितं नानुपालितं नानुप्रेक्षितं सति बले सति वीर्ये सति पुरुषाकारपराक्रमे बलं देहसंभवं वीर्यमुत्साहसंभवं पुरुषाकारपराक्रमो धैर्यगाम्भीर्यरूपः तस्य अवाचनादिरूपस्य पापस्य आलोचयामः प्रतिक्रमामः आलोचनाप्रतिक्रमार्हप्रायश्चित्तात् निन्दामो गर्हामहे पूर्ववत् वर्तयामः पुण्येन पापं हन्मः विशोधयामः तच्छुद्धिं कुर्मः अकरणतया अकारित्वेन अभ्युत्तिष्ठामः तदुपक्रमं कुर्मः यथार्हत्तपःकर्मप्रायश्चित्तं तद्योग्यतपोवृत्तिशोधनार्हं प्रायश्चित्तं प्रतिपद्यामहे । तस्य मिथ्या मे दुष्कृतं पूर्ववत् । पुनर्नमस्तेभ्यः क्षमाश्रमणेभ्यो यैरिदं वाचितं अङ्गबाह्यं । उत्कालिकं भगवता अङ्गबाह्यं द्वादशाङ्ग्या अतिरिक्तं उत्कालिकं योगेषु कालग्रहणसंघट्टादिवर्जितं भगवत इति पूर्ववत् । तद्यथा । दशवैकालिकं १ कल्पाकल्पिकं २ क्षुल्लककल्पश्रुतं ३ महाकल्पश्रुतं ४ उपपातिकं ५ राजप्रश्रेणिकं ६ जीवाभिगमः ७ प्रज्ञापना ८ महाप्रज्ञापना ९ नन्दी १० अनुयोगद्वाराणि ११ देवेन्द्रस्तवः १२ तन्दुलवैकल्पिकं १३ चन्द्रविध्वंजः १४ प्रमादप्रमाथः १५ पौरुषीमण्डलं १६ मण्डलीप्रवेशः १७ गणिविद्या १८ विद्याचरणविनिश्चयः १९ आत्मविशुद्धिः २० मरणविशुद्धिः ध्यानविशुद्धिः २१ मरणविशुद्धिः २२ संलेखनाश्रुतं २३ वीतरागश्रुतं २४ विहारकल्पः २५ चरणविधिः २६ आतुरप्रत्याख्यानं २७ महाप्रत्या-

स्यामं २८ सर्वस्मिन् अङ्गबाह्ये उत्कालिके शेषं० ॥ पुनर्नमस्तेभ्यः क्षमाश्रमणेभ्यो यैरिदं वाचितं अङ्गबाह्यं कालिकं कालग्रहणसंघट्टयोगसहितं भगवन् ज्ञानमाहात्म्यमयं । तद्यथा । उत्तराध्ययनानि दशाः कल्पः व्यवहारः ऋषिभाषितानि निशीथो महानिशीथः जम्बूद्वीपप्रज्ञप्तिः चन्द्रप्रज्ञप्तिः सूर्यप्रज्ञप्तिः द्वीपसागरप्रज्ञप्तिः क्षुल्लकीविमानप्रज्ञप्तिः महतीविमानप्रज्ञप्तिः अङ्गचूलिकाः व्यङ्गचूलिकाः व्यवहारचूलिकाः अरुणोपपातः गरुडोपपातः वरुणोपपातः धरणोपपातः वेलंधरोपपातः देवेन्द्रोपपातः वैश्रमणोपपातः उत्थानश्रुतं समुत्थानश्रुतं नागपर्यावलिकाः निरयावलिकाः कालिपकाः कल्पावतंसिकाः पुष्पिकाः पुष्पचूलिकाः वह्निदशाः आशीविषभावनाः दृष्टिविषभावनाः चारणभावनाः महाश्रमणभावनाः तेजोग्निविसर्गाः सर्वस्मिन्नप्येतस्मिन्नङ्गबाह्ये कालिके भगवति । शेषं० ॥ पुनर्नमस्तेभ्यः क्षमाश्रमणेभ्यो यैरिदं वाचितं । कालिकमित्यनुवर्तते । द्वादशाङ्गं गणिपिटकं भगवन् । तद्यथा । आचारः सूत्रकृतं स्थानं समवायः विवाहप्रज्ञप्तिः ज्ञाताधर्मकथाः उपासकदशाः अन्तकृद्दशाः अनुत्तरोपपातिकदशाः प्रश्नव्याकरणं विपाकश्रुतं दृष्टिवादः सर्वस्मिन्नप्येतस्मिन्द्वादशाङ्गे गणिपिटके भगवति । शेषं० । एतेषां सर्वेषां सिद्धान्तानां अन्तः कथितं नामग्रहणमेव कथितं । एतेषां भेदाः शास्त्राध्ययनोद्देशप्रमाणानि ग्रन्थविस्तरभयान्नोदितानि महाशास्त्रेभ्योऽवसेयानि ॥ पुनरपि सिद्धान्तप्रधानस्यात् प्रान्ते द्वादशाङ्गीनमस्कारमाह । नमस्तेभ्यः क्षमाश्रमणेभ्यो यैरिदं वाचितं द्वादशाङ्गं गणिपिटकं भगवन् ।

१ भगवतीसूत्र ।

एतद्द्वादशाङ्गकथितं कालिकोत्कालिकावश्यककथितं साधवः इत्यध्याहारः सम्यक्कायेन स्पृशन्ति पालयन्ति पूरयन्ति कृतार्थीकुर्वन्ति तरन्ति सम्यक् आराधयन्ति । अहं च नाराधयामि तस्य मिथ्या मे दुष्कृतं ॥

॥ अथ प्रतिश्रुतदेवतास्तवमाह । सुयदेवया भगवई नाणावरणीयकम्मसंघायं । तेसिं खवेउ सययं जेसिं सुयसायरे भत्ती ॥ १ ॥ श्रुतदेवता भगवती सरस्वती ज्ञानावरणीयकर्मसंघातं । तेसिं तेषां सततं क्षपयन्तु येषां श्रुतसागरे भक्तिः ॥ पुनरपि नमस्कारपाठः । इति पाक्षिकसूत्रविवरणम् ॥ ॥ अथ श्राद्धप्रतिक्रमणसूत्रसंक्षेपव्याख्या । पूर्वं नमस्कारपाठः पश्चात् श्राद्धसामायिकदण्डकं । पश्चादालोचनादण्डकपाठः । एतत्पूर्वमेव व्याख्यातम् ॥ वंदेतु सव्वसिद्धे धम्मायरिए य सव्वसाहू य । इच्छामि पडिक्कमिउं सावगधम्माइयारस्स ॥ १ ॥ श्रावकधर्मातिचारात् प्रतिक्रमितुं निवर्तितुं इच्छामि । किं कृत्वा । वन्दित्वा नमस्कृत्य । कान् । सर्वसिद्धान् । अत्र सिद्धग्रहणेन जिनाजिनादिपञ्चदशभेदकथने अर्हत्सिद्धयोः प्रणामः धर्माचार्यान् पूर्वोक्तान् । अत्रोपाध्यायानामप्यन्तर्भावः । सर्वसाधूंश्च वन्दित्वेति शेषः ॥ १ ॥ 'जो मे वयाइयारो नाणे तह दंसणे चरित्ते य । सुहुमो य बायरो वा तं निंदे तं च गरिहामि ॥ २ ॥' अतिचारः केत्याह । यो मे मम व्रतातिचारो व्रतातिक्रमः ज्ञाने दर्शने चारित्रे च पूर्वोक्ते । एतदतिचारकथनं तद्गाथासु पूर्वमेवोक्तं । सूक्ष्मः केवलिगम्यः बादरश्रुतावसेयः । वा इति समुच्चये । तं निन्दामि तं च गर्हे । द्विवेलं तद्ग्रहणं विशेषप्रतिक्रमणार्थं ॥ २ ॥ 'दुविहे परिग्गहम्मी सावज्जे बहुविहे य आरंभे । कारावणे य करणे पडिक्कमे देवसियं सव्वं ॥३॥'

द्विविधे परिग्रहे बाह्याभ्यन्तरसंग्रहे मूर्च्छारूपे । बहुविधे च सावद्ये आरम्भे एतयोः कारणे च करणे च अनु-
मतिनिवर्तनाभावात् । प्रतिक्रमामि निराकरोमि । अतिआचारमित्यर्थः । दैवसिकं दिवसकृतं सर्वं पापात्मकं
केश्चिदाहुः । देसियं दैशिकं देशविरतिमध्यगं ॥ ३ ॥ 'जं बद्धमिंदिएहिं चउहिं कसाएहिं अप्पसत्थेहिं ।
रागेण व दोसेण व तं निन्दे तं च गरिहामि ॥ ४ ॥' कर्मबंधस्य अतिचारस्य कारणमाह । यत् अप्रशस्तैर्गो-
चरलोलुपैर्दुष्टक्रियासक्तैरिन्द्रियैः स्पर्शनादिभिः अप्रशस्तैः गाढाविर्भूतैः चतुर्भिः कषायैः क्रोधादिभिः यत्कर्म-
बद्धं रागेण वा द्वेषेण वा सर्वकर्मबन्धसहचारिणा तं निन्दामि तच्च गर्हे ॥ ४ ॥ 'आगमणे निग्गमणे ठाणे
चंकमणे अणाभोगे । अभिओगे य निओगे पडिक्कमे देवसियं सव्वं ॥ ५ ॥' आगमने कार्यसमाप्तिनिवर्तने
निर्गमने कार्यार्थयाने स्थाने स्थितौ शयनोपवेशादौ चंक्रमणे गमने सर्वे अनाभोगो विस्मृत्या अयत्नतया
कृते अभियोगे स्वयं रचने नियोगे अन्यस्मात्कारणे प्रतिक्रमामि दैवसिकं सर्वं ॥ ५ ॥ ॥ सर्वातिचारोपा-
गानाख्याय सम्यक्त्वातिचारानाह । 'संका कंक्ख विगिच्छा पसंस तह संथवो कुलिंगीसु । सम्मत्तस्स
इयारे पडिक्कमे देवसियं सव्वं ॥ ६ ॥' शङ्का अर्हद्धर्मोऽस्ति नवेति काङ्क्षा, परसमयागमेष्वपि वांछा, जुगुप्सा
मलधारिसाध्ववलोकनात्, अर्हद्धर्मस्य निन्दा तथा कुलिङ्गिषु मिथ्यादृष्टियतिषु प्रशंसा श्लाघनं, तैरेव सह
संस्तवः परिचयः इति सम्यक्त्वस्यातिचारान् पञ्च दैवसिकं सर्वं प्रतिक्रमामि ॥ ६ ॥ पुनर्व्रतखण्डनहेतूनाह-
'छक्कायसमारंभे पयणे पयावणे य जे दोसा । अत्तट्ठा य परट्ठा उभयट्ठा चेय तं निंदे ॥ ७ ॥' षट्-

कायसमारम्भे षड्विधजीवनिकायघातिन्यारम्भे तेषां षट्कायानां पचने पाचने वा पतने पातने वा आत्मार्थं वा उभयार्थं वा ये दोषाः तान्निन्दामि ॥ ७ ॥ 'पंचहअणुव्वयाणं गुणव्वयाणं च तिह्न मइयारे । सिक्खाणं च चउह्नं पडिक्कमे देवसियं सव्वं ॥ ८ ॥' पञ्चानां अणुव्रतानां त्रयाणां गुणव्रतानां चतुर्णां शिक्षाव्रतानां च अतिचारान्प्रतिक्रमामि ॥ ८ ॥ तानेवाह । 'पढमे अणुव्वयंमी थूलगपाणाइवायविरईओ । आयरिउमप्पसत्थे इत्थ पमायप्पसंगेणं ॥ ९ ॥' वहबंधछविच्छेए अइयारे भत्तपाणवुच्छेए । पढमवयस्स अइयारे पडिक्कमे देवसियं सव्वं ॥ १० ॥' गाथाद्वयेन संबन्धः । प्रथमे अणुव्रते स्थूलप्राणातिपातविरतौ आचीर्णं अप्रशस्ते । अत्र प्रमादप्रसंगेन अणुव्रतमिति यत्युचितमहाव्रतापेक्षया स्थूलप्राणातिपातविरतिरिति । स्थूलप्राणानां द्वीन्द्रियादीनां हिंसननिवृत्तिः । अथवा वधबन्धविच्छेदादिरूपाणां स्थूलप्राणातिपातानां विरतिः अतिचरितमिति अतिचारो नियमातिक्रमकृतः । अप्रशस्ते क्रोधादिकषायवैषम्ये पञ्चेन्द्रियार्तौ वा । अत्र व्रते प्रमादप्रसङ्गेन मद्यादिप्रमादोपनयेन अतिचारानाह । वधो द्विपदचतुःपदादीनां निर्दयताडनं, बन्धो द्विपदादीनां रज्ज्वादिभिः, छविच्छेदः चर्मनाशादि कर्णादिकर्तनं, अतिभारः प्राणिनां शक्त्यनपेक्षया बहुभारदानं भक्तपानव्यवच्छेदः प्राणिनामाहारजलादिनिषेधः । प्रथमव्रतस्यातिचारे प्रतिक्रमामि शेषं० ॥ १० ॥ 'बीए अणुव्वयंमी परिथूलगअलियवयणविरईओ । आयरियमप्पसत्थे इत्थ पमायप्पसंगेण ॥ ११ ॥ सहसा रहस्स दारे मोसुवएसे अ कूटलेहे अ । वीयवयस्स इयारे पडि० ॥ १२ ॥' गाथाद्वयेन संबन्धः । द्वितीये अणुव्रते परिस्थूला-

लीकवचनविरतेः कन्यागोभूम्यलीकन्यासापहारकूटसाक्ष्यविरतिरूपायाः अतिचरितं शेषं० । सहसाभ्याख्यानं अश्रुनादृष्टपरविरूपकथनं । रहस्स इति परगुह्यभाषणं । दारेति परस्य विश्वासेन निवेदितस्य प्रकाशनं । मृषोपदेशः ज्ञात्वाऽज्ञात्वा वा भेषजमन्त्रादीनां कूटकथनं । कूटलेखोऽसत्यवार्तालिखनं द्वितीयव्रतस्यातिचारे शेषं० ॥ १२ ॥ 'तइए अणुव्वयंमी थूलगपरदव्वहरणविरईओ । आयरियमप्पसत्थे इत्थपमायप्पसंगेण ॥ १३ ॥ तेनाहडप्पओगे तप्पडिरूवे य विरुद्धगमणे य । कूडतुलकूडमाणे पडि० ॥ १४ ॥' तृतीये अणुव्रते स्थूलपरद्रव्यहरणविरतेः राजनिग्रहकरचौरनामकरादत्तादानवर्जनात् अतिचरितं शेषं० । तेनाहृतवस्तुग्रहणं मूल्येनापि । प्रयोगः चौर्यार्थं परप्रेरणं तत्प्रतिरूपं वस्तुसदृशवस्तुमीलनं विरुद्धगमनं नृपतिनिषिद्धदेशगमनं । कूटतुलकूटमानं प्रसिद्धं प्रतिक्रमामि शेषं० ॥ १४ ॥ 'चउत्थे अणुव्वयंमी णिच्चं परदारगमणविरईओ । आयरियमप्प० ॥ १५ ॥ अपरिग्गहिया इत्तर अणंगवीवाह तिव्वअणुरागे । चउत्थवयस्स अइयारे पडि० ॥ १६ ॥' गाथाद्वयेन संबन्धः । चतुर्थे अणुव्रते नित्यं परदारगमनविरतेः अतिचरितं शेषं पू० । अत्र परदारगमनविरतौ वेश्याविधवोपेक्षितागमने निर्दोषता तथाप्यतिचारमाह । अपरिगृहीतागमनं वेश्याविधवादेरस्वीकृताया अभिगमः । इत्वरा केनापि या स्तोककालं द्रव्यादिना वेश्याविधवा स्वीकृता तस्याभिगमः । अनङ्गक्रीडा पुरुषस्य गुह्यादिसंगो हस्तकर्मादि वा । विवाहोऽन्यकन्यापुत्रविवाहकारिता । तीव्रानुरागः कामक्रीडादिकामशास्त्रोचितं कर्म चतुर्थस्य व्रतस्यातिचारान् शेषं० ॥ १६ ॥ 'इत्तो अणुव्वये पंचमंमि आयरिय-

मप्पसत्थंमि । परिमाणपरिच्छेए इत्थ प्पमायप्पसंगेणं ॥ १७ ॥ धणधन्नखित्तवत्थू रूप्पसुवण्णे य कुवियप-
रिमाणे । दुप्पय चउप्पयंमी पडि० ॥ १८ ॥' गाथाद्वयेन संबन्धः । इतोऽनन्तरं पञ्चमे अणुव्रते मितपरिग्रहो
नास्ति । अप्रशस्ते अतृप्तिरूपे । अत्र प्रमादप्रसङ्गेन अतिचरितं । किं परिमाणपरिच्छेदं अङ्गीकृतप्रमाणाति-
क्रमः । तदेवाह । धनं द्रव्यं धान्यं अन्नं क्षेत्रं केदारभूमिः वास्तु गृहादिभूमिः रूप्यं तारं सुवर्णं काञ्चनं कुप्यं
कांस्यताम्रादि द्विपदा दासदास्यादयः चतुष्पदा गोमहिषीवृषभाश्वादयः एतेषां परिमाणे कृते अतिक्रमः
अतिचारः शेषं० ॥ १८ ॥ 'गमणस्स उ परिमाणे दिसासु उड्ढं अहे य तिरियं च । वुड्ढि सइअंतरद्धा पढमंमि
गुणव्वए निंदे ॥ १९ ॥' गमनस्य परिमाणे दिग्विरतौ दिक्षु अष्टासु । ऊर्ध्वं अधः तिर्यक्च । वृद्धिः क्षेत्रवृद्धिः ।
यथा दिगष्टके योजनशतं अभिग्रहे कृते एकस्यां दिशि सार्धयोजनशतं गमनं । अन्यस्यां पञ्चाशद्योजनीयं ।
अत्रातिचारः स्मृत्यन्तर्धानं मार्गविस्मृतिः पढमे गुणव्रते पञ्चातिचारान्निन्दामि ॥ १९ ॥ द्वितीयगुणव्रतमाह ।
गाथाद्वयेन संबन्धः । 'मज्जंमि य मंसंमि य पुप्फे य फले य गंधमल्ले य । उवभोगे परिभोगे बीयंमि गुणव्वए
निंदे ॥ २० ॥ सच्चित्ते पडिबद्धे अपोलदुप्पोलिए य आहारे । तुच्छोसहि भक्खणया पडि० ॥ २१ ॥ मद्ये
मांसे पुष्पे फले गन्धे माल्ये एतेषु उपभोगपरिभोगे अयोग्ये अपरिमिते द्वितीये गुणव्रते निंदामि । अति-
चारमाह । सचित्तं अप्रासुकीकृतं प्रतिबद्धं सचित्तयुक्तं अनिर्बीजीकृतं बदिरराजादनादि अपक्कं दुःपक्कं पृथु-
कादि आहारे भोजने संधानादि तुच्छौषधीतुच्छवनस्पतिखादनं प्रतिक्रमामि शेषं ॥ २१ ॥ अत्र द्वाविंश-

राईभोयण
तिवस्तुवर्जनं यथा—'पंचुंबरि ५ चउविगई ९ हिम १० विस ११ करमे य १२ सवमट्टीय १३। राईभोयणगंनिय १४ बहुबीय १५ अणंत १६ संधाणा १७ ॥ १॥ घोलवडा १८ वायंगण १९ अमुणियनामाइं पुप्फफलाइं २०। तुच्छफलं २१ चलियरसं २२ वज्जह वज्जाणि बावीसं ॥ २ ॥' भोगोपभोगव्रते भोजनातिचाराख्याय कर्मातिचारभूतानि पञ्चदशकर्मादानान्याह । गाथाद्वयेन संबन्धः । 'इंगाली वण साडी भाडी फोडी सुवज्जए कम्मं । वाणिज्जं चेव दंत लक्खरसकेसविसविसयं ॥ १ ॥ एवं खुजंतपीलणकम्मं निल्लंछणं च दवदाणं । सरदहतलावसोसं असईपोसं च वज्जिज्जा ॥ २ ॥' अंगारजीविका अंगारकरणभ्राष्ट्री पाचनकुम्भकारस्वर्णकारलोहकारकांस्यकारकर्मैष्टिपाकादिकरणरूपा १ नवजीविका पुष्पपत्रफलस्वच्छिन्नपरच्छिन्नविक्रयधान्यदलनपेषणरूपा २, शकटजीविका शकटयन्त्रादिघटनविक्रयरूपा ३, भाटकजीविका मूल्येन करभाश्वतरवृषभादीनां भारवाहनरूपा ४, स्फोटकजीविका सरःकूपखननशिलापाटनकर्मरूपा ५, एतत्कर्म वर्जयेत् । वाणिज्यं दन्तवाणिज्यं तदुत्पत्तिस्थाने दन्तकेशनखचर्मरोमग्रहणरूपं ६, लाक्षावाणिज्यं लाक्षानीलीमनःशिलाटङ्कणधातुकीक्रयविक्रयरूपं ७, रसवाणिज्यं माक्षिकनवनीतमद्यप्रभृतिविक्रयरूपं ८, केशवाणिज्यं द्विपदचतुःपदविक्रयरूपं ९, विषवाणिज्यं विषशस्त्रहलयन्त्रहरिताललोहादिविक्रयरूपं १०, विषयं तत्प्रकारमित्यर्थः । एवं तु यन्त्रपीडनकर्म अरघट्टादिजलयन्त्र-एरण्डसर्षपेक्षुपीडनदलनतैलादानरूपं ११, निर्लांछनं हयगजादीनां मुष्ककर्णकम्बलादिच्छेदरूपं १२, दवदानं व्यसनात्पुण्यबुद्ध्या वा वह्निना वनदहनरूपं १३, सरःशोषं तडा-

गकेदारद्रहादिशोषणं १४, असतीपोषः वित्तनिमित्तं दास्यादिपोषणं सारिकाशुकमार्जारकुक्कुटमयूरश्वानपालनरूपं १५, एतत्कर्मादानपञ्चदशकं द्वितीयान्तं कृत्वा वर्जयेदिति शेषः ॥ २३ ॥ ॥ अथानर्थदण्डं गाथात्रयेणाह । "सत्थग्गि मुसल जंतग तणकंठे मंतमूलभेसज्जे । दिन्ने दवाविये वा पडिक्कमे देवसियं सव्वं ॥ २४॥ न्हाणुवट्टण वन्नग विलेवणे सद्दरूवरसगन्धे । वत्थासण आभरणे पडि० ॥ २५ ॥ कंदप्पे कुकुइए मोहरिअहिगरिणभोग अइरित्ते । दंडंमि अणट्ठाए तइयंमि गुणव्वए निंदे ॥ २६ ॥' शस्त्रे अग्नौ मुसले यन्त्रे तृणे काष्ठे मन्त्रे मूले भेषजे दत्ते दापिते वा प्रतिक्रमामि शेषं० । इति हिंसोपकारिदानहिंसोपदेशदानविरमणेनानर्थदण्डविरमणमुक्त्वा प्रमादविरमणेन तद्विरमणमाह । स्नानोद्वर्तनवर्णकविलेपनादौ अतिमात्रे कृते अन्यस्मात्कारिते वा अनर्थदण्डः । शब्दे रूपे रसे गन्धे अतिमात्रे अविधिकृते व्यसनरूपे वस्त्रे आसने आभरणे अतिमात्रे प्रतिक्रमामि शेषं० ॥ अतिचारानाह । कंदर्पः परोपहासः, कौत्कुच्यं कुटिलालापसव्याहतार्थवचनं, मौखर्यमतिवावदूकतया परस्तुतिनिन्दे, अधिकरणातिरेकः उत्खलमुसलादिपापोपकरणाधिक्यं संयुक्तता वा, भोगातिरेकः कामशास्त्रश्रवणदोलान्दोलनमहामैथुनरूपः, अनर्थदण्डे तृतीयगुणव्रते अतिचारान्निन्दामि ॥ २६ ॥ ॥ अथ सामायिकातिचारानाह । 'तिविहे दुप्पणिहाणे अणवट्ठाणे तहासयविहीणे । सामाइए वितहकहे पढमे सिक्खावए निन्दे ॥ २७ ॥' त्रिविधे दुःप्रणिधाने मनोवाक्कायानां दुष्टस्थितिरूपे अनवस्थाने स्मृतिभ्रंशे तथा आशयविहीने अनादरकृते सामायिके वितथकृते सातिचारनिर्मितौ प्रथमशिष्या-

व्रते अतिचारान्निन्दामि ॥ २७ ॥ 'आणवणे पेसवणे सद्दे रूवे य पुग्गलक्खेवे । देसावगासियम्मी बीए सि-
क्खावए निंदे ॥ २८ ॥' देशावकाशिकनियमे गृहीते अवग्रहबहिर्भागात् वस्तुनो जीवादेर्वा आनयनं प्रेषणं
तथैव मनुष्यादेः प्रेषणं शब्दस्तद्बहिर्गतस्याकारणरूपं तद्बहिर्गतस्य स्वरूपं दर्शयित्वा संज्ञादिकरणं पुद्गल-
क्षेपः तद्बहिर्मृत्खण्डादिक्षेपः देशावकाशिके नियमे द्वितीये शिक्षाव्रते अतिचारान्निन्दामि ॥ २८ ॥ ॥ पौ-
षधातिचारमाह 'संथारुच्चारविही पमाय तह चेव भोयणाभोए । पोसहविहिविवरीए तइए सिक्खावए निंदे
॥ २९ ॥' संस्तारकविधिः उच्चारविधिद्वये अप्यविधिना कृते प्रमादः प्रसिद्धः । तथा चैव भवत्यनाभोगो वि-
स्मरणं पौषधविधिविपरीतान्पौषधभङ्गकारिणः तृतीये शिक्षाव्रते अतिचारान्निन्दामि ॥ २९ ॥ ॥ अतिथि-
संविभागव्रतातिचारानाह । 'सच्चित्ते निक्खिवणे पिहणे ववएस मच्छरे चेव । कालाइक्कमदाणे चउत्थे सि-
क्खावए निंदे ॥ ३० ॥' सचित्ते निक्षेपः सचित्तेन पिधानं व्यपदेशोऽपरकीयवस्तुख्यापनं । मत्सरोऽन्यदाना-
सूयया दानं कालातिक्रमदानं चतुर्थशिक्षाव्रते अतिचारान्निन्दामि ॥ ३० ॥ ॥ अथ मिथ्यात्वप्रतिक्रमणं
प्रकारान्तरेणाह । 'सुहिएसु य दुहिएसु य जा मे असंजएसु अणुकंपा । रागेण व दोसेण व तं निंदे तं च
गरिहामि ॥ ३१ ॥' सुखितेषु वा दुःखितेषु वा गृहिलिङ्गि-कुलिङ्गि-द्रव्यलिङ्गिषु रागेण वा दोषेण वा या मे
अनुकम्पा तां च निन्दामि तां च गर्हे ॥ ३१ ॥ ॥ सम्यक्त्वभङ्गप्रतिक्रमणं प्रकारान्तरेणाह । 'साहूसु संवि-
भागो न कओ तवचरणकरणजुत्तेसु । संते फासुयदाणे तं निंदे तं च गरिहामि ॥ ३२ ॥' यन्मया सत्यपि

प्राशुकदाने तपश्चरणकरणयुक्तेषु साधुषु संविभागो न कृतः तं निं० || ३२ || संलेखनायां प्रतिक्रमणमाह । 'इहलोए परलोए जीविय मरणे य आससपयोगे । पंचविहो अइयारो मा मज्जं हुज्ज मरणंते || ३३ ||' इहलोके आशंसा जीवितव्योत्सवादिकाङ्क्षा, परलोके आशंसा स्वर्गमोक्षादिवांछा, जीविते आशंसा जीवितेच्छा, मरणे आशंसा मरणेच्छा, प्रयोगो निदानादिबन्धेन राज्यदेवत्वादिकाङ्क्षा । अयं पञ्चविधोऽतिचारः मम मरणान्ते माभूत् || ३३ || || अथ योगत्रयसमस्तातिचारप्रतिक्रमणमाह । 'काएण काइयस्स पडिक्कमे वाइयस्स वायाए । मणसा माणसियस्स सव्वस्स वयाइयारस्स || ३४ ||' कायिकस्य कायेन कृतस्य वधबन्धादिरूपस्य व्रतातिचारस्य कायेन तपःकर्मादिकरणेन प्रतिक्रमामि, वाचिकस्य असत्यादिवचनोपार्जितस्य व्रतातिचारस्य वाचा मिथ्यादुःकृतं तन्निन्दापुरस्कृतया प्रतिक्रमामि, मानसिकस्य दुश्चिन्तार्जितस्य व्रतातिचारस्य सर्वस्य मनसा शुभध्यानयुतेन प्रतिक्रमामि || ३४ || || अथ सर्वानतिचारानाह । 'वंदणवयसिक्खागारवेसु सन्नाकसायदंडेसु । गुत्तीसु य समईसु य जो अइयारो अ तं निंदे || ३५ ||' वन्दनव्रतशिक्षागौरवेषु संज्ञाकषायदण्डेषु गुप्तिषु च समितिषु च योऽतिचारस्तं निन्दामि । वन्दनचैत्यवन्दने अनादराद्यतिचारः, गुरुवन्दने अनादृतादिद्वात्रिंशद्भेदः व्रतेषु द्वादशस्वपि पञ्चपञ्चातिचारपञ्चदशकर्मादानरूपः, शिक्षायां श्रुतादानादिरूपायां अविनयादिरूपः, गौरवेषु ऋद्धिरसातरूपेषु तत्तल्लोभरूपः, संज्ञासु आहारभयमैथुनपरिग्रहरूपासु तत्तदाधिक्यरूपः, कषायेषु क्रोधमानमायालोभेषु तत्तदाधिक्यरूपः, दण्डेषु मनोवाक्कायेषु तत्त-

दुःप्रणिधानरूपः, गुप्तिषु मनोवाक्कायरूपासु तदकरणरूपः, समितिषु ईर्याभाषैषणादाननिक्षेपोत्सर्गरूपासु
तत्प्रमादरूपः, एवं पूर्वोक्तेषु योऽतिचारस्तं निन्दामि ॥ ३५ ॥ ॥ अथ सम्यग्दृष्टेरल्पं कर्मबन्धमाह । 'सम्म-
दिट्ठी जीवो जइवि हु पावं समायरइ किंचि । अप्पोसि होइ बंधो जेण न निद्धंधसं कुणई ॥ ३६ ॥' सम्य-
ग्दृष्टिर्जीवः यद्यपि किंचित्पापं कर्म बलात्कारेण समाचरेत् तस्याल्पो बन्धो भवति येन स निद्धंधसं निः-
शङ्कं न करोति शङ्कमानस्य कर्मादिबलात्कारेण पापं कुर्वतो न दृढः कर्मबन्धः ॥ ३६ ॥ तस्याप्यल्पकर्मब-
न्धस्य विनाशमाह । 'तं पि हु सपडिक्कमणं सप्परियावं सउत्तरगुणं च । खिप्पं उवसामेई वाहिव्व सुसि-
क्खिओ विज्जो ॥ ३७ ॥' सम्यग्दृष्टिर्जीवः तमपि कर्मबन्धं सप्रतिक्रमणं सपरितापं सचित्तात्मनिन्दं सोत्तर-
गुणं सपुण्यप्रतिबन्धं क्षिप्रमुपशमयति । यथा सुशिक्षितो वैद्यो व्याधिं क्षिप्रमुपशमयति ॥ ३८ ॥ ॥ अथ
कर्मोपशमं दृष्टान्तद्वारेण गाथाद्वयेनाह । 'जहा विसं कुट्ठगयं मंतमूलविसारिया । विज्जा हणंति मंतेहिं तो
तं हवइ निव्विसं ॥ एवं अट्ठविहं कम्मं रागदोससमज्जियं । आलोयंतो य निंदंतो खिप्पं हणइ सुसावओ
॥ ३९ ॥' ॥ यथा मूलमन्त्रविशारदा वैद्याः कोष्ठगतं देहमध्यगतं विषं मन्त्रैर्घ्नन्ति ततस्तत्कोष्टं निर्विषं भ-
वति एवं सुश्रावकः आलोचयन् निन्दन् रागद्वेषसमर्जितं अष्टविधं कर्म क्षिप्रं हन्ति ॥ ३९ ॥ ॥ अथ वि-
शुद्धिमाह । 'कयपावोवि मणुस्सो आलोइय निंदिओ गुरुसगासे । होइ अइरेगलहुओ ओहरियभरुव्व भार-
वहो ॥ ४० ॥' कृतपापोपि मनुष्यः गुरुसकाशे आलोच्य निन्दित्वा अतिरेकलघुर्विगतपापभारो भवति ।

यथा भारवाहः अपहृतभरः सन् अतिरेकलघुर्भवति इति शेषं० ॥ ४० ॥ ॥ अथावश्यकफलमाह । 'आवस्सएण एएण सावओ जइवि बहुरओ होइ । दुक्खाणमंतकिरियं काही अचिरेण कालेण ॥ ४१ ॥' श्रावको यद्यपि बहुरजा बहुपापमलो भवति तथापि एतेनावश्यकेन षड्विधेन अचिरेण कालेन दुःखानामन्तक्रियाकर्ता ॥ ४१ ॥ ॥ विस्मृतातिचारप्रतिक्रमणमाह । 'आलोयणा बहुविहा नय संभरिया पडिक्कमणकाले । मूलगुणउत्तरगुणे तं निंदे तं च गरिहामि ॥ ४२ ॥' मूलगुणे पञ्चाणुव्रतरूपे उत्तरगुणे गुणव्रतशिक्षाव्रतरूपे बहुविधा आलोचना प्रतिक्रमणकाले न संस्मृता तां निन्दामि तां च गर्हे ॥ ४२ ॥ ॥ अथोर्ध्वीभूय धर्मनिश्चयकथनं ॥ 'तस्स धम्मस्स केवलिपन्नत्तस्स अब्भुट्ठिओमि आराहणाए विरओमि विराहणाए य । तिविहेण पडिक्कंतो वंदामि जिणे चउवीसं ॥ ४३ ॥' तस्य धर्मस्य केवलिप्रज्ञप्तस्य अभ्युद्यतोस्मि आराधनायां विरतोऽस्मि विराधनायां त्रिविधेन प्रतिक्रान्तश्चतुर्विंशतिजिनान्वन्दे ॥ ४३ ॥ ॥ अथ चैत्यवन्दनं साधुवन्दनं । 'जावंति चेइआइं० जावंति के०' इति गाथाद्वयव्याख्यानं पूर्ववत् ॥४४॥४५॥ ॥ अथ कर्मक्षयहेतुं मनोरथमाह । 'चिरसंचियपावपणासणीए भवसयसहस्समहणीए । चउवीसजिणविणिग्गय कहाए वोलंतु मे दियहा ॥४६॥' चिरसंचितपापप्रणाशिन्या भवशतसहस्रमाथिन्या संसारतारिण्येत्यर्थः । चतुर्विंशतिजिनविनिर्गतकथया मम दिवसा व्यपलीयन्तां अतिक्रमन्तु ॥ ४६ ॥ ॥ अथ प्रतिक्रमणानन्तरं स्वस्येहामुत्र च मङ्गलयाचनमाह । 'मम मंगलमरिहंता सिद्धा साहू सुयं च धम्मो य । सम्मदिट्ठी देवा दिंतु समाहिं च बोहिं च ॥ ४७ ॥' अ-

रिहन्ताः सिद्धाः साधवः श्रुतं च धर्मश्च सम्यग्दृष्टयो देवाः मम मङ्गलं समाधिं बोधिं च ददतु ॥ ४७ ॥ ॥
प्रतिक्रमणकारणमाह । 'पडिसिद्धाणं करणे किचाणं अकरणे पडिक्कमणं । असद्दहणे य तहा विवरीयपरू-
वणाए य ॥ ४८ ॥ प्रतिषिद्धानां हिंसादीनां करणे कृत्यानां यतनावश्यकानां अकरणे प्रतिक्रमणं । अत्र
किल प्रायश्चित्तविधौ यत्प्रतिक्रमणशोधनीयं पापं तत्र प्रतिक्रमणमित्यर्थः ॥ ४८ ॥ ॥ अथ क्षामणमाह ।
'खामेमि सव्व० एवमहमालो०' इत्यादिगाथाद्वयं यतिप्रतिक्रमणसूत्रवद्व्याख्येयम् ॥ इति श्राद्धप्रतिक्रमणसूत्र-
च्छायार्थः ॥ अत्र सर्वत्र यतिश्राद्धप्रतिक्रमणच्छायार्थ उक्तः । चालनादिव्याख्या न कृता ग्रन्थविस्तरभयात् ।
इत्यावश्यके प्रतिक्रमणम् ॥

अथ कायोत्सर्गः । कायस्य निश्चेष्टत्वादिना उत्सर्जनं कायोत्सर्गः । तस्येयं व्याख्या । तत्र पूर्वं पापकर्म-
निर्घातनार्थं पापविशुद्ध्यर्थं वा विघ्नोपशमार्थं वा कस्यचिदपि देवादेराराधनार्थं वा कायोत्सर्गकरणं । तत्र
करेमि काउस्सग्गं अथवा ठामि काउस्सग्गं अन्नत्थ ऊससिएणं नीससिएणं खासिएणं छीएणं जंभाइएणं
उड्डुएणं वायनिसग्गेणं भमलिए पित्तमुच्छाए सुहुमेहिं अंगसंचालेहिं सुहुमेहिं खेलसंचालेहिं सुहुमेहिं दि-
ट्ठिसंचालेहिं एवमाइएहिं आगारेहिं अभग्गो अविराहिओ हुज्ज मे काउस्सग्गो जाव अरिहंताणं भगवंताणं
नमुक्कारेणं न पारेमि ताव कायं ठाणेणं मोणेणं झाणेणं अप्पाणं वोसिरामि । व्याख्या । करोमि कायोत्सर्गं
तिष्ठामि वा अन्यत्र अनन्तरोक्तचेष्टासमागमे अभग्नत्वे सतीत्यर्थः । अन्यत्रशब्दः सर्वत्र योज्यः । उच्छ्वसि-

तात् श्वासोत्सर्गात् कासितात् कासोदयात् क्षुतात् जृम्भितात्प्रसिद्धात् उद्गारात्प्रसिद्धाद्वातनिसर्गात् अधोवातनिर्गमात् भ्रमेः प्रसिद्धायाः पित्तमूर्च्छाया ईषत्पित्तमूर्च्छायाः क्षुतादीनां मूर्च्छादीनामुदये मुखवस्त्रिकया मुखपिधाने पाते सत्युपवेशो वा अभग्नः कायोत्सर्गः। अन्यथा तु उद्घाटितमुखस्य कासजृम्भादिकरणे मूर्च्छादौ पतने संयमात्मविराधना स्यात्। तथा सूक्ष्मेभ्योऽङ्गसंचयेभ्यः रोमोत्कम्पादिरूपेभ्यः सूक्ष्मेभ्यः खेलसंचालेभ्योऽन्तःश्लेष्मादिचलनरूपेभ्यः सूक्ष्मेभ्यो दृष्टिसंचालेभ्यः निमेषादिभ्यः। मतान्तरेत्वङ्गसंचालादीनि तृतीयाबहुवचनान्तानि तत्रापादानेन करणेन वा न दोषः। एवमादिभिराकारैः अभग्नः अखण्डितः अविराधितः अनपराद्धः भूयान्मे कायोत्सर्गः। कियन्तं कालमित्याह। यावत् अर्हतां भगवतां नमस्कारेण नमोअरिहंताणं इति वचनेन पारयामि तावत्कालं कायं देहं स्थानेन ऊर्ध्वस्थानादिना मौनेन अभाषणेन ध्यानेन प्रस्तुतशुभध्यानेन आत्मनेन कायं व्युत्सृजामि अनपेक्षं करोमीत्यर्थः॥ ॥ अथ भङ्गकरान्तराणि कायोत्सर्गस्योच्यंते। 'अगणी १ उच्छंदिज्जाय २ बोही ३ खोहाओ ४ दीह ५ डक्को वा ६। आगारेहिं अभग्गो उस्सग्गो एवमाईहिं॥ १॥' अग्निर्वसतौ तत्समीपे वा यद्युपद्रवः १ अवच्छेदः स्थापनाचार्यधार्मिकयोरन्तराले यदि कश्चित्पञ्चेन्द्रियः प्रयाति २। बोधिश्चौराद्युपद्रवः ३ क्षोभो मलश्लेष्मवातादेः ४ दीर्घ इति सर्पसिंहादिसंकटः ५ दष्टः कस्मिंश्चिदपि यतिश्रावकादौ यदि सर्पादिवृश्चिकादिदंशो भवति एवमादिभिराकारैः उत्सर्गः अभग्नो भवति आदिशब्दात् एतेषूक्तेषु विद्युन्मेघसंपाते स्वचक्रपरचक्रभये राजादिभये उपसर्गो-

दृष्टे न कायोत्सर्गं पारयतां न दोषः । कायोत्सर्गदोषा उच्यन्ते । 'घोडग १ लयाय २ खंभे ३ कुड्डे ४ मालेय ५ सबरि ६ वहु ७ निलये ८ । लंबुत्तरे ९ थणउद्धी १० संजय ११ खलिए य १२ वायस्स १३ कविठे १४ ॥ १ ॥ सीसोकंपिय १५ मूई १६ अंगुलिभमुहा य १७ वारुणी १८ पेहा १९ । नाहीकरयलकुप्पर उस्सारिय पारियंमि सुद्धे ॥ २ ॥' घोटकवत् विषमपादः १ वाताहतलतावत् कम्पमानः २ स्तम्भे ३ कुड्ये अवष्टब्धः ४ माले न्यस्तशिराः ५ शबरीवत् गुह्याग्रे कृतकरः ६ वधूवन्नम्राननः ७ निगडबद्धवत् संकोचितविस्तारितपदः ८ नाभेरुपरि जान्वोरधश्च प्रसारितवस्त्रो लम्बोत्तरीयः ९ स्तनबद्धः दंशादिरक्षणार्थं हृदयन्यस्तवस्त्रः १० शकटोद्धिवत् (संयतौ) पादद्वयाङ्गुष्ठौ पार्ष्णी वा मीलयन्, संयतीवत् प्रावृतदेहः ११ खलीनवत् रजोहरणमग्रतः कृत्वा धारयन् १२ वायसवचक्षुषी भ्रमयन् १३ कपित्थवत्परिधानं पिण्डयन् १४ यक्षाविष्ट इव शिरः कम्पयन् १५ मूकवत् हूहूकरणं १६ अङ्गुलीभ्रुवौ नमस्कारादिगणनार्थं चालयन् १७ वारुणीवत् बुब्बुदायमानः १८ अनुपेक्षमाणो वानर इव ओष्ठपुटौ चालयन् १९ कायोत्सर्गं करोतीत्येकोनविंशतिः कायोत्सर्गदोषाः तथा सर्वमप्यनुष्ठानं साधूचितमिति विशेष उच्यते । नाहित्ति नाभेरधश्चत्वार्यङ्गुलानि चोलपट्टः ।

१ षट्पदिकाभयेन कपित्थवद्वृत्ताकारत्वेन संवृत्य जङ्घादिमध्ये कृत्वा तिष्ठत्युत्सर्गे इति कपित्थदोषः । २ एवमेव मुष्टिं बद्ध्वा(?) इत्यनेनाविष्टस्य च शीर्षं कम्पयतः कायोत्सर्गकरणं शीर्षोत्कम्पितदोषः । ३ तथा छिद्यमानेषु केनचि(?) हस्तायादिना कायोत्सर्गव्यवस्थितप्रत्यासन्नप्रदेशवर्तिषु हरितादिषु तन्निवारणार्थं मूक इव हूं हुं इत्युच्चं शब्दं कुर्वन् तिष्ठति उत्सर्गे इति मूकदोषः ।

करयलत्ति दक्षिणोत्तरपाणिभ्यां मुखवस्त्रिकारजोहरणः । कुप्परत्ति कूर्पराभ्यां चोलपट्टश्च धारणीयः । उस्सारिय पारियंमि थुइत्ति उत्सारिते पूरिते कायोत्सर्गे नमस्कारेण पारिते जिनस्तुतिर्भणनीया पाठान्तरं च । गाथोत्तरार्धे एगूणवीसदोसा काउस्सग्गे विवज्जिज्जा सर्वत्र कायोत्सर्गे चतुर्विंशतिस्तवचिन्तने चन्दे सुनिम्मलयरापर्यन्तं चिन्तनं । नमस्कारचिन्तने नवपदपरिपूर्णचिन्तनं सर्वत्र कायोत्सर्गपारणे नमो अरिहंताणं इति पदं ततः स्तुतिपाठादि यथायोग्यं । इत्यावश्यके कायोत्सर्गः ॥

अथ प्रत्याख्यानम् । तच्च द्विधा । मूलगुणप्रत्याख्यानं उत्तरगुणप्रत्याख्यानं च । मूलगुणप्रत्याख्यानं द्विधा । देशसर्वभेदात्सर्वमूलगुणप्रत्याख्यानं साधूनां पञ्चमहाव्रतानि देशमूलगुणप्रत्याख्यानं श्राद्धानां पञ्चाणुव्रतानि । उत्तरगुणप्रत्याख्यानमपि द्विधा । देशसर्वभेदात् । साधूनां सर्वोत्तरगुणप्रत्याख्यानमनेकधा । यथा । 'पिंडस्स जा विसोही समिईओ भावणा तओ दुविहा । पडिमा अभिग्गहावि य उत्तरगुणमो वियाणाहि ॥ १ ॥' श्राद्धानां देशोत्तरगुणप्रत्याख्यानं त्रीणि गुणव्रतानि चत्वारि शिक्षाव्रतानि । उभयोरपि सर्वोत्तरगुणप्रत्याख्यानमनागतादिभेदाद्दशविधं । यथा । 'अणागय १ मइक्कंतं २ कोडीसहियं ३ नियंटियं चेव ४ । सागार ५ मणागारं ६ परिमाणकडं ७ निरवसेसं ८ ॥ १ ॥ संकिय ९ मविअद्धाए १० पच्चक्खाणं तु दसविधं होइ । सयमेव अणुपालणीयं दाणुवएसे जहसमाही ॥ २ ॥' व्याख्या । तत्र पर्युषणादौ ग्लानत्ववैयावृत्त्यकरणव्यग्रत्वेन पूर्वमपि यदष्टमाद्यालोचनतपः क्रियते तदनागतं १, पर्युषणचतुर्मासकादिषु अशक्तौ वैयावृत्त्ये

अनतिक्रान्ते पर्वणि यदालोचनादितपः क्रियते तदतिक्रान्तं २, एकस्य तपसः समाप्तौ द्वितीयतपस आरम्भे तस्मिन एव प्रत्याख्यानेन कोटिद्वयमीलनं कोटिसहितं ३, मासे मासे इयन्ति दिनानि अष्टमादिविधेयमेव ग्लानत्वेपि सति तन्नियन्त्रितं ४, एतच्च प्रथमसंघननेन सह व्यवच्छिन्नं सहसाकारैर्महत्तरादेर्वचस इति साकारं ५, आकारैर्वर्जितमनाकारं ६, यत्र दत्तिकवलसंख्यादि तत्परिमाणकृतं ७, सर्वचतुर्विधाहारकृतपरित्यागान्निरवशेषं ८, अङ्गुष्ठमुष्टिग्रन्थ्यादिचिह्नोपलक्षितं संकेतनं ९, अद्धा कालस्तदुपलक्षितं अद्धाप्रत्याख्यानं १०,॥ एतद्गाथा यथा । 'नवकार १ पोरिसीए २ पुरिमड्ढ ३ इक्कासणे ४ गट्ठाणेअ ५ । आयंबिल ६ अभत्तट्ठे ७ चरमेय ८ अभिग्गहे ९ विगइ १० ॥ १ ॥ नमस्कारसहितं दिनोदये घटीद्वयपर्यन्तं १, पौरुषी पुरुषप्रमाणच्छायया प्रहरमात्रादिनोदये २, पूर्वार्धमध्याह्नपर्यन्तं ३ एकासनं एकेनासनेन एकवेलं भोजनं ४, एकस्थानं आकुञ्चनप्रसारितादिवर्जितमेकासनं ५, आचाम्लं एकवेलमेकान्नजलभोजनं ६, अभक्तार्थं उपवासः त्रिविधाहाररहितो वा ७, चरमं दिवसचरम भवचरमपर्यन्तं प्रत्याख्यानं ८, अभिग्रहो ग्रन्थिमुष्टिपर्यन्तं प्रत्याख्यानं ९, विकृतिः विकृतीनां सर्वथा त्यागः संख्या वा १० ॥ अथैषामागारसंख्या । 'दो चेव नमुक्कारे आगारा छच्च पोरसीए उ । सत्तेव य पुरिमड्ढे एगासणम्मि अट्ठेव ॥ १ ॥ सत्तेगट्ठाणस्स उ अट्ठेव य अंबिलम्मि आगारा । पंचेव य अभत्तट्ठे छप्पाणे चरमचत्तारि ॥ २ ॥ पंच चउरो अभिग्गहो निव्वीए अट्ठनवय आगारा । अप्पावरणे पंचउ हवंति सेसेसु चत्तारि ॥ ३ ॥' नमस्कारसहिते द्वावेवाकारौ यथा । 'उग्गए सूरे नवकार-

सहियं पच्चक्खाहि चउव्विहंपि आहारं असणं पाणं खाइमं साइमं अन्नत्थणाभोगेणं सहस्सागारेणं। पौरुष्यां यथा। षडाकाराः पोरसियं पच्चक्खाहि उग्गए सूरे चउव्विहंपि आहारं असणं पाणं खाइमं साइमं अन्नत्थणाभोगेणं सहसागारेणं पच्छन्नकालेणं दिसामोहेणं साहुवयणेणं सव्वसमाहिवत्तियागारेणं। ससाकाराः पूर्वार्धे यथा। सूरेउग्गए पुरिमड्ढं पच्च० चउ० अस० ४ अन्न० सहसा० पच्छ० दिसा० साहु० महत्तरागारेणं सव्व०। एकासने अष्टैव यथा। एकासणं पच्च० दुविहं तिविहं चउव्विहंपि वा आहारं अस० ४ अन्न० सह० सागारियागारेणं आउंटणपसारणेणं गुरुअब्भुट्ठाणेणं पारिट्ठावणियागारेणं मह० सव्व०। ससैकस्थानके यथा। एकलट्ठाणं एकासणं पच्चक्खामि चउ० असणं ४ अन्न० सहसागारेणं सा० गुरु० परि० मह० सव्व०। अष्टैवाचाम्ले आकारा यथा। आयंबिलं पच्चक्खामि अन्न० सह० लेवालेवेणं गिहत्थसंसट्ठेणं उक्खित्तविवेगेणं पारि० मह० सव्व०। अभक्तार्थे पञ्चैवाकारा यथा। सूरे उग्गे अब्भतट्ठं पच्चक्खामि तिविहं चउव्विहं० अ। क्खा। सा। अ। पा। क्खा। सा। अन्न० सह। पारि० मह० सव्व०। पानप्रत्याख्याने षडाकारा यथा। पाणस्स लेवेण वा १ अलेवेण वा २ अच्छेण वा ३ बहुलेण वा ४ ससित्थेण वा ५ असित्थेण वा ६ वोसिरामि। चरमे द्विधाभूते। दिवसचरिमे भवचरिमे वा। चत्वारः आगारा यथा। दिवसचरिमं भवचरिमं वा पच्च० तिविहं० चउ० अ। पा। खा। अस० ४ अन्न० सह० मह० सव्व०। अभिग्रहे ग्रन्थिमुष्टिग्रहोच्छ्वासअङ्गुष्ठप्रभृत्यभिग्रहप्रत्याख्याने पञ्चचत्वारश्च आकारा यथा। गंठिसहियं पच्च० चउ० अन्न० सह० मह० सव्व०।

अथवा अन्न० सह० पारि० मह० सव्व० । निर्विकृतिके अष्ट नव चाकारा यथा । निविगइयं । पच्च० अन्न० सह० लेवालेवेणं गिह० उक्खि० पडुचमक्खिएणं पारि० मह० सव्व० । अमीएव पडुचमक्खिएणं वर्जिता अष्टौ । अप्रावरणे पञ्चाकारा यथा । यतयः एकान्तमवलोक्य मूलधर्मत्वादप्रावरणा भवन्ति । तत्राकारा यथा । अप्पावरणं पच्च० चउ० ४ अन्न० सह० सागा० मह० सव्व० । शेषेष्वभिग्रहप्रत्याख्यानेषु साधुवन्दनाचैत्यवन्दनाद्यभिग्रहयुक्तेषु चत्वार आगारा यथा । अन्न० सह० मह० सव्व० । 'यद्यदेव परित्यक्तं प्रत्याख्याने पुरस्कृते । तस्यैवाचरणाद्भङ्गः सोऽशुद्धः स्यात्स्वयं कृतः ॥ १ ॥' उग्गए सूरे नवकारसहियं पच्चक्खाहि अथ व्याख्या । उद्गते सूर्ये सूर्योदये नमस्कारसहितं मुहूर्तमात्रेऽपि गते नमस्कारपाठेन पारणीयमिति नमस्कारसहितं । गुरुः कथयति । पच्चक्खाहि । अथवा बहूनां संगमे गुरुः कथयति । पच्चक्खाह प्रत्याख्याहि प्रत्याख्यात वा । उक्तं वस्तुपरित्यजेत्यर्थः । शिष्यः कथयति । पच्चक्खामि प्रत्याख्यामि चउव्विहंपि आहारं चतुर्विधमप्याहारं असणं पाणं खाइमं साइमं अशनं पानं खादिमं स्वादिमं । असणं अशनं । यथा । 'असणं ओअण सत्तुग मुग्ग जगारा य खज्जगविही य । खीराइ सूरणाई मंडगपभिईइ विन्नेयं ॥ १ ॥' अश्यते भुज्यते मलक्षुधानाशार्थिभिरित्यशनं । तत्किमित्याह । ओअणं ओदनं भक्तं तच्च शालिकङ्गुचीनककोद्रवप्रभृतिमयं सत्तुग सक्तवः धानाचूर्णमयाः ते च यवमसूरकुलत्थव्रीहिचणकादिमयाः मुग्ग मुद्गाः तद्ग्रहणेन मुकुष्टमसूरतुवरीमाषकुलत्थप्रभृति द्विदलान्नं ज्ञेयं । जगारा य जगारा तक्रमिश्रितान्नपक्वा रब्बा । खज्जगविही य

खाद्यकविधिर्नानापक्वान्नानि । खीराइ क्षीरादि क्षीरदधितक्रघृतादि । सूरणाई सूरणादिसर्वोऽप्यार्द्रो कन्दजातिः । मंडगपभिईइ मण्डकप्रभृतिग्रहणात् पूपपोलिकाकृसराप्रभृति विज्ञेयं विज्ञेयं । पाणं यथा । 'पाणं सोवीर जवोदगाइ चित्तं सुराइयं चेव । आउक्काओ सव्वो कक्कडिगजलाइयं च तहा ॥ १ ॥' पीयते तृषणार्तैर्दाहार्तैर्वा इति पानं । तत्किमित्याह । सोवीर सौवीरं काञ्जिकं जवोदगाइ यवोदकादि यवोदकतिलोदकतुषोदकप्रभृति । चित्तं चित्रं नानाप्रकारं । सुराइयं चेव सुरादिकं चैव । सुराग्रहणेन काष्टपिष्टपुष्पफलरसक्षौद्रनिष्पन्नं मद्यं यदपुष्टिकरमतृप्तिकरं । ततः सर्वपानं आउक्काओ सव्वो । सर्वोऽप्यप्कायः हिमकरकशुद्धोदकप्रभृतिः कक्कडिगजलाइयं च तहा कर्कटिकाजलादिकं तथा । कर्कटिकाजलग्रहणेन इक्षुरसवर्जितः पुष्टिकरणरहितः सर्वोऽपि पुष्पफलरसः । खाइमं खादिमं यथा । 'भत्तोसं दंताई खज्जूरं नालिकेर दक्खाई । कक्कडिअंबगफणसाइ बहुविहं खाइमं होइ ॥ १ ॥' भत्तोसं भक्तोषं येन भुक्तेन भक्तभोजनवत् तृप्तिर्भवति तद्भक्तोषं गुडक्षौद्रविकारादि । दंताई दन्त्यादि दन्तसरिप्रभृतिवृक्षनिर्यासाः सर्वेऽपि आराद्धाः शाकाश्च । खज्जूरं नालिकेरदक्खाइ खर्जूरनारिकेलद्राक्षाः प्रसिद्धाः आदिशब्दात् वातामप्रभृतयः । कक्कडिअंबफणसाइ कर्कट्यादि कर्कटीग्रहणेन बिम्बीफलादिसुखादमबलकरं फलं । आमग्रहणेन नारिङ्गजम्बीरबीजपूरादिषड्रसफलं । पनसग्रहणेन कदलीफलबोदिकादिप्रभृति बृंहणं मधुररसफलं । बहुविहं खाइमं होइ इत्यादि । बहुविधं खादिमं भवति खाद्यते पुष्टिसुखस्वादार्थिभिरिति खादिमं । साइमं स्वादिमं यथा । 'दंतवणं तंबोलं चित्तं तुलसी

कुहेडगाईयं । महुत्तापिप्पलि सुंठाई अणेगहा साइमं होई ॥ १ ॥ दन्तवणं दन्तधावनं प्रसिद्धं । तंयोलं ताम्बूलं पञ्चसौगन्धिकं । चित्तं चित्रं नानाप्रकारं । तुलसीकुहेडकादि तुलसीग्रहणेन सर्वाण्यपि सुरभिकषायद्रुमपत्राणि । कुहेडकग्रहणे भर्भेयांयकादि । मधु मधुयष्टी । पिप्पली पिंपली । सुंठाई शुण्ठ्यादि प्रसिद्धं । आदिशब्दात् त्रिफलाधिकटुपूगलवङ्गैलाजातीफलप्रभृति सर्वमपि अपुष्टिकरं शुष्कं पुष्पपत्रफलादि । अणेगहा साइमं होइ अनेकधा स्वादिमं भवति स्वाद्यते वक्त्रसौरभप्रमोदार्थिभिरिति स्वादिमं । अन्नत्थणाभोगेणं सहसागारेणं । अत्र आकारग्रहणं नियमभङ्गेपि अदोषार्थं । अनाभोगात् अन्यत्र सहसाकारात् अन्यत्र प्रत्याख्यामीति शेषः । आभोगः सचित्तावधानेन कर्तव्यकरणं । अनाभोगो वैपरीत्येन विस्मृत्यान्यकार्यव्याक्षेपेण कार्यकरणं तस्मात् । सहसाकार इति सहसौत्सुक्येन कार्यकरणं, अथवा स्वयमेव कार्योत्पत्तिः यथा पतनागाहतं किंचिन्मुखे निपतति इति सहकारस्तस्मात् । पोरसियं पचक्खाहि पौरुषीं यावत्प्रत्याख्याहि प्रहरं यावदित्यर्थः । प्रत्याख्यामि उद्गतेसूर्ये सूर्योदयादारभ्येत्यर्थः । चतुर्विधमप्याहारं अशनं ४ पूर्ववत् अन्न० सह० पूर्ववत् । प्रच्छन्नकालेणं प्रच्छन्नकालात् अभ्ररजश्छन्नसूर्यसंयोगे प्रच्छन्नकालः तत्र दिनप्रमाणं न ज्ञायते तस्मात् । दिसामोहेणं दिङ्मोहात् पूर्वदक्षिणपश्चिमादिदिशामज्ञाने रविस्थितावज्ञातायां न कालपरिमाणज्ञानं । साहुवयणेणं साधुवचनात् यथा साधवः पादोनेपि प्रहरे अतिक्रान्ते 'भयवं बहुपडिपुन्ना पोरिसी साहसो उग्घसा होह' इति वचनात् । सव्वसमाहिवत्तियागारेणं सर्वसमाधिवर्तिताकारेण सर्वेषां साधुसाध्वीश्रा-

वकश्राविकाणां गणस्य च समाधिवर्तनताच्छील्यस्य भावः सर्वसमाधिवर्तिता स एवाकारस्तस्मात्। स-र्वेषां समाधिकरणे व्रतभङ्गेपि न दोषः। सूरे उग्गए पुरिमढं पच्च० सूर्ये उद्गते पूर्वार्धं दिनपूर्वप्रहरद्वयं प्रत्याख्यामि। चतुर्विधमप्याहारं अशनं ४ पूर्ववत् अन्न० सह० पच्छ० दिसा० पूर्ववत्। साहुवयणेणं साधुवचनादिति ज्ञाते अज्ञातेपि काले गीतार्थसाध्वादेशात्। महत्तरागारेणं महत्तराकारादिति गच्छमुख्यश्राद्धमुख्यपुरमुख्यविद्यागुणज्येष्ठनृपाद्यवग्रहात्। सव्व० पूर्ववत्। एकासणं पच्च० एकाशनं प्रत्याख्याहि। द्विविधं त्रिविधं चतुर्विधं वा आहारं अशनं १ खादिमं २ खादिमं ३ अशनं पानं खादिमं खादिमं ४ पूर्ववत् अन्न० सह० पूर्ववत्। सागारियागारेणं सागारिकास्सहवासिनः प्रातिवेश्मिकाः शय्यातरा वा तेषां प्रार्थनारूप आकारस्तस्मात्। आउंटणपसारणेणं आकुञ्चनप्रसारणात् आकुञ्चनं गात्राणां संकोचः प्रसारणं विस्तारणं समाहारद्वन्द्वस्तस्मात्। गुरुअब्भुट्ठाणेणं गुर्वभ्युत्थानात् गुरौ दृष्टे भुञ्जानस्याप्यासनत्यागात्। पारिट्ठावणियागारेणं पारिस्थापनिकाकारात्। अन्नादिपरित्यागः पारिष्ठापनिका तस्या आकारः अनुरोधस्तस्मात्। अन्नादिपारिष्ठापनिकायां प्राणिवधादिदोषाः तन्निवारणार्थं भुञ्जानस्यापि न प्रत्याख्यानभङ्गः। मह० सव्व० पूर्ववत्। एकलट्ठाणं पच्च० एकस्थानं एकाशनं प्रत्याख्याहि चतुर्विध० अशनं० पूर्ववत्। आकरव्याख्यानं पूर्वतत्। अन्न० सह० सागा० गुरु० पारि० मह० सव्व० पूर्ववत्। अत्र आकुञ्चनप्रसारणं न विधेयं। आयंबिलं पच्च० आचाम्लं प्रत्याख्याहि अन्न० सह० पूर्ववत्। लेवालेवेणं लेपालेपात् लेपो दधिघृततैलादिनाभ्यङ्गः तेन सह आलेपः तल्लग्नस्यापितवस्तुनः स्निग्धी-

मायः आलेपस्तस्माच्च दोष इति । गिहत्थसंसट्ठेणं गृहस्थसंसृष्टात् गृहस्थेन संसृष्टात् अभ्यक्तात् विकृतिग-
तकृताद्वा ग्रहणे साधूनां न दोषः । एतदाकारपठनं श्राद्धानां प्रत्याख्याने अखण्डितसूत्रपाठार्थं । उक्खित्त-
विवेगेणं उत्क्षिप्तविवेकात् कस्मिंश्चिदपि विकृतिवर्जिते वस्तुनि विकृतिं वस्तु संस्थाप्य तदपनयने उत्क्षिप्त-
विवेकः । यदुक्तं । 'नवणीओगाहिमए अद्दव महिपिसियघयगुडे चेव । नव आगारा एसिं अट्ठेव य सेसद्द-
वाणं ॥ १ ॥' नवनीतं उत्क्वथितं पक्वान्नं द्रवमप्यद्रवं पिण्डरूपं तथा दधि पिशितं मांसं घृतं गुडश्च एते सर्वे-
ऽप्यद्रवा यदि भवन्ति वस्तुन उपरि तदा तानपनीय निर्विकृतिवस्तुग्रहणे न दोषः । अमी च सद्रवाश्चेद्भ-
वन्ति तदापनयने तल्लेशस्थितौ विकृतिदोषः । तेषां निर्विकृतिकप्रत्याख्याने नवाकाराः शेषाणां द्रव्याणाम-
संसक्तानामष्टैवाकाराः उत्क्षिप्तविवेकवर्जनात् । परमखण्डितसूत्रतया पठनीयमेव । तस्मात् पारि० मह०
सव्व० पूर्ववत् ॥ सूरे उग्गए अब्भत्तट्ठं पच्च० सूर्ये उद्गते अभक्तार्थं उपवासं प्रत्याख्यामि त्रिविधं चतुर्विधं वा
आहारं अशनं १ खादिमं २ स्वादिमं ३ अशनं पानं ४ पूर्ववत् अन्न० सह० पारि० मह० सव्व० पूर्ववत् ॥
पाणस्स इत्यादि । लेवालेवेण वा अलेवालेवेण वा अच्छेण वा बहुलेण वा ससित्थेण वा असित्थेण वा ले-
पालेपात् अन्नादिलेपसहितात् अलेपालेपात् निर्लेपात् अच्छात् निर्मलात् बहुलात् कलुषात् ससित्थात्
सान्नकणात् असित्थात् निरन्नकणात् । एतत्प्रत्याख्यानं केवलं साध्वर्थमेव नानाविधस्वभावप्राशुकजलपा-
नात् गच्छान्तरेषु श्राद्धेष्वपि निर्दिश्यते । दिवसचरिमं भवचरिमं पच्च० दिवसचरिमं प्रत्याख्याहि दिवसो-

द्यान्तमित्यर्थः। भवचरिमं आयुःपूर्णतापर्यन्तं प्रत्याख्याहि । त्रिविधं चतुर्विधं वा आहारं अशनं खादिमं स्वादिमं ३ अशनं ४ अन्न० सह० मह० सव्व० पूर्ववत्। गंठिसहितं मुष्टिसहितं अङ्गुष्ठसहितं इत्यादि प्रत्याख्याहि चतुर्वि० अशनं पानं ४ अन्न० सह० पारि० मह० सव्व० पूर्ववत्॥ निविगइयं विगईयो सेसिआओ वा पच्च० निर्विकृतिकं गृहीतशेषा वा विकृतीः प्रत्याख्याहि अन्न० सह० लेवा० गिह० उक्खि० पूर्ववत्। पडुच्चमक्खिएणं प्रत्युतपुरस्कारेण म्रक्षितात् घृततैलादिनाभ्यक्तात् परि० मह० सव्व० पूर्ववत् । यत्रोक्तं अष्ट नव च आकारा अत्र च नवणीओगाहिमए इति वचनात् अद्रवविकृतिस्पर्शात् उक्खित्तविवेगेणं कथनं द्रवविकृतिस्पर्शात् न इत्यष्ट नव चाकाराः । अत्र विकृतय इति मनोवाक्कायानां कामाद्याश्लेषकारकत्वात् विकारिसद्भावात् विकृतय उच्यन्ते। ताश्च सूत्रोक्ताश्च दशधा। यथा । 'दुद्धं १ दहि २ घय ३ तिल्लं ४ गुडं ५ तहोगाहिमं ६ छ भक्खाओ। महु ७ मज्ज ८ मंस ९ मक्खण १० चत्तारि अभक्खविगईओ ॥ १ ॥' दुग्धं गोमहिषीछागीमेष्युष्ट्रिकाभवं दधि नवनीतं घृतं तासामेव। उष्ट्रीणां दध्याद्यभावात् । तैलं तिलातसीलट्वासर्षपोद्भवं चतुर्धा। गुडः पिण्डद्रवभेदो द्विधा । उत्कथितं अवगाहितं वा घृततैलाभ्यां केवलाभ्यां पक्कं। पक्कान्नं षट् भक्ष्या विकृतयः। चतस्रोऽभक्ष्याः मधुमद्यमांसनवनीतरूपाः । अथ कटाहिकायां घृततैलादिपूर्णायां चलाचलं खाद्यकादि पच्यते तेनैव स्नेहेन द्वितीयं तृतीयं च तद्विकृतिः। ततः परं पक्कं योगवाहिनां निर्विकृतिकप्रत्याख्यानेपि आगाढकारणे कल्पते । एवं शेषाण्यपि विकृतिगतानि निर्विकृतिकप्रत्या-

यानि कल्पन्ते । तानि कथ्यन्ते यथा । 'अह पेआ १ दुद्धट्टी २ दुद्धवलेही य ३ दुद्धसाडी य ४ । पंच य विगयगयाइं दुद्धम्मि य खीरसहियाइं ५ ॥ १ ॥' क्षीरेयीपेये प्रसिद्धे । त्रयं च व्याख्यायते । 'अंचिललेयम्मि दुद्धे दुद्धट्टी दक्खमीसदुद्धंमि । पइसाडी तह तंदुल चुन्नय सिद्धम्मि अवलेही ॥ १ ॥ इति दुग्धविकृतिगतानि ॥ अथ दधिविकृतिगतानि यथा । 'दहिए विगयगयाइं घोलवडा १ घोल २ सिहिरिणि ३ करंबो ४ । लवणकणदहियमहियं ५ संगरिगायम्मि अप्पडिए ॥ १ ॥' घृतविकृतिगतानि यथा । 'पक्कघिअं १ घयकिट्टी २ पक्कोसहितरितरियसप्पि च ३ । निज्झंजण ४ वीसंदण ५ गाईघिअ विगइ विगइगया ॥ १ ॥' तैलविकृतिगतानि यथा । 'तिल्लमली १ तिलकुट्टी २ दद्धतिल्लं ३ तहो सहुचरियं ४ । लक्खाइदवपक्कं तिल्लंतिल्लंमि पंचेव ॥ १ ॥ गुडविकृतिगतानि यथा । अद्धकडिइक्खुरसो १ गुलवाणीयं व २ सक्करा ३ खंडं ४ । पायगुलं ५ गुलविगई ६ विगयगया हुंति पंचेव ॥ १ ॥' अथ अवगाहितविकृतिगतानि यथा । 'एगं एगं सुवरिं १ निव्वरि बीयगं च जं पक्कं । तुप्पेणं तेणं चिय २ तइयं गुलहाणिआ पभिई ३ ॥ १ ॥ चउत्थं जलेण सिद्धा लप्पसिआ ४ पंचमं तु पूयलिया । चुपडियतावियाए परिपक्का ५ तीसमिलिएसु ॥ २ ॥' एवं पद्दसु भक्ष्यविकृतिषु त्रिंशत् विकृतिगतानि निर्विकृतिकेषु भक्ष्याणि । अभक्ष्यविकृतयस्तु मधु पौतिकमाक्षिकभ्रामरभेदात्त्रिविधं । मद्यं काष्ठपिष्टभेदात् द्विधा । मांसं जलचरस्थलचरखचरभेदात्त्रिधा । नवनीतं चतुर्धा पूर्वमे-

1 तिण्णि पचेव विगइगया।

वोक्तं । गृहस्थसंसृष्टादिति गृहस्थेन स्वनिमित्तं दुग्धादिना ओदनं संसृष्टं तदुपरि ओदने अधःकृते चत्वा-
र्यङ्गुलानि गम्भीरक्षीरं निर्विकृतिकं । एवमन्यान्यपि वस्तूनि यथा । 'क्षीरदहीविडयाणं चत्तारिअ अंगुलानि
संसिट्ठं । फाणियतिल्लघयाणं अंगुलमेगं तु संसिट्ठं ॥ १ ॥ महुपुग्गलरसयाणं अद्धंगुलयं तु होइ संसट्ठं । गु-
लपुग्गलनवणीए अद्दामलगं तु संसट्ठं ॥ २ ॥' इति विकृतौ विकृतिप्रत्याख्याने गृहस्थसंसृष्टविशेषव्याख्या ॥
अप्पावरणं पच्चक्खामि । अप्रावरणं प्रत्याख्यामि चतुर्विं० अशनं ४ अन्न० सह० सागा० मह० सव्व० पूर्व-
वत् । शेषेषु भोगपरिभोगदेशावकाशिकादिषु चत्वार आकारा यथा । देशावकाशिकं भोगपरिभोगं प्रत्या-
ख्यामि अन्न० सह० मह० सव्व० पूर्ववत् । इति प्रत्याख्यानव्याख्या ॥

अथ प्रत्याख्यानशुद्धिः षड्विधा यथा । 'सा पुण सद्दहणा १ जाणणाय २ विणय ३ अणुभासणा चेव ४ । अणुपालणावि सोही ५ भावविसोही ६ भवे छट्ठा ॥ १ ॥' एतासां व्याख्या यथा । 'पच्चक्खाणं सव्वदेसियं जहिंजहिं जयाकाले । तं जो सद्दहइ नरो तं जाणसु सद्दहणसुद्धं ॥ १ ॥ पच्चक्खाणं जाणइ कप्पे जं जम्मि होइ कायव्वं । मूलगुणउत्तरगुणे तं जाणसु जाणणासुद्धं ॥ २ ॥ किइकम्मस्स विसुद्धिं पउंजए जो अहाण मयरित्तं । मणवयणकायगुत्तो तं जाणसु विणयपरिसुद्धं ॥ ३ ॥ अणुभासइ गुरुवयणं अक्खरपयवंजणेहिं परिसुद्धं । पंजलिउडो अभिमुहो तं जाणसु भावणासुद्धं ॥ ४ ॥ कंतारे दुब्भिक्खे आयंके वा महासमुप्पन्ने । जं पालियं न भग्गं तं जाणसु पालणासुद्धं ॥५॥ रागेण व दोसेण व परिणामेण व य दूसियं

जं तु । तं खलु पचक्खाणं भावविसुद्धं मुणेयव्वं ॥ ६ ॥' अन्यथा षड्विधा शुद्धिर्यथा । 'फासियं १ पालियं
चेव २ सोहियं ३ तीरियं ४ तहा । किट्टियं ५ माराहियं ६ चेव पडियरियंमी पएयव्वं ॥ १ ॥' एतेषां व्याख्या।
'उचिए काले विहिणा पत्तं जं फासियं तयं भणियं १ । तह पालियं च अ सम्मं उवओगपडियरिअं २ ॥१॥
गुरुदत्तसेसभोयण सोहणयाएय सेवियं जेण ३ । पुण्णेवि थेवकाला वत्थाणा तीरियं होइ ४ ॥ २ ॥ भोय-
णकालो अमुगं पचक्खाणं तु सरइ किट्टिययं ५ । आराहियं पयारेहि सम्ममएहिं पडिअरियं ६ ॥ ३ ॥'
प्रत्याख्यानफलं यथा । 'पचक्खाणस्स फलं इहपरलोगे अ होइ दुविहं तु । इहलोइ धम्मिलाई दामंतगमाइ
परलोए ॥ १ ॥ पचक्खाणंमि कए आसवदाराइं हुंति पिहिआई । आसवपुच्छेएण य तहावुच्छेअयं होइ
॥ २ ॥ तन्हावुच्छेएणं अयलोवसमो भवे मणुस्साणं । अयलोवसमेण पुणो पचक्खाणं हवइ सुद्धं ॥ ३ ॥
तत्तो चरित्तधम्मो कम्मविवेगो य पुव्वकरणं च । तत्तो केवलनाणं तत्तो मुक्खं सयासुक्खो ॥ ४ ॥' अथ
च देशविरतिसर्वविरतिप्रभृतिव्रतोचारः सर्वोपि प्रत्याख्यानं कथ्यते । तत्र सप्तचत्वारिंशदधिकं भङ्गशतं
यथा । 'तिन्नि तिया तिन्नि दुया तिन्नि एकिका य हुंति जोगेसु । तिदुइक्कं तिदुइक्कं ………… चेव करणाइं
॥ १ ॥ पढमे लब्भइ इक्को सेसेसु पएसु तियतियतियंति । दोनवतिय दोनवगातिगुणियसीयालभं
गसयं ॥ २ ॥ सीयालं भंगसयं पचक्खाणंमि जस्स उवलद्धं । सो खलु पचक्खाणे कुसलो सेसा अकु-

१ [illegible] समानः ।

सलत्ति ॥ ३ ॥' प्रथमकोष्टकत्रये मनसा वचसा कायेन न करोमि न कारयामि नतु जानामि १ इति एको भङ्गः । द्वितीयकोष्टकत्रये भङ्गत्रयं यथा । मनसा वचसा कायेन न करोमि न कारयामि १, मनसा वचसा कायेन न करोमि नानुजानामि २, मनसा वचसा कायेन न कारयामि नानुजानामि ३, एवं ४ ॥ अथ तृतीयकोष्टके भङ्गत्रयं मनसा वचसा कायेन न करोमि १, मनसा वचसा कायेन न कारयामि २, मनसा वचसा कायेन नानुजानामि ३, एवं ७ ॥ अथ चतुर्थकोष्टकत्रये भङ्गत्रयं यथा । म० व० नक० नका० नानु० १, मन० व० का० नक० नानु० २, व० का० नक० नका० नानु० ३ एवं १० । अथ पञ्चमकोष्टत्रये भङ्गनवकं यथा । म० व० करोमि० कारयामि १ । म० व० करोमि अनुजानामि २ । म० व० कारयामि अनु० ३ । म० काये० करो० कार० ४ म० का० करो० अनु० ५ । म० का० कार० अनु० ६ । व० का० करो० कार० ७ । व० का० करो० अनु० ८ । व० का० कार० अनु० ९ एवं १९ ॥ अथ षष्ठकोष्टकत्रयस्य भङ्गा यथा । म० नक० १ । म० का० नक० २ । व० का० नक० ३ । म० व० नका ४ । म० का० नका० ५ । व० का० नका० ६ । म० व० नानु० ७ । म० का० नानु० ८ व० का० नानु० ९ एवं २८ ॥ अथ सप्तमकोष्टकत्रयस्य भङ्गत्रयं यथा । म० नक० नका० नानु० १ । व० नक० नका० नानु० २ । का० नक० नका० नअ० ३ एवं ॥ ३१ ॥ अष्टमकोष्टत्रयस्य भङ्गनवकं यथा । म० करो० कार० १ । म० करो० अनु० २ । म० कार० अनु० ३ । वच० करो० कार० ४ । व० करो० अनु० ५ । व० कार० अनु० ६ । का० करो० कार० ७ । का० करो० अनु० ८ ।

काम्० कार० अनु० ९, एवं ४० ॥ नवमकोष्टकत्रयस्य भङ्गा नव यथा । म० क० १ । म० कार० २ । म० अनु० ३ । व० करो० ४ । व० कार० ५ । व० अनु० ६ । का० करो० ७ । का० कार० ८ । क० अनु० ९ एवं सर्व-
मीलने भङ्गका० ४९ । एवं सर्वमीलने एकत्रित्रित्रिनवनवत्रिनवनवभङ्गोत्पादने एकोनपञ्चाशद्भङ्गाः । एते च
नाकार्षं न करोमि न कारयिष्यामीति कालत्रयमाने त्रिगुणीकृते सप्तचत्वारिंशदधिकं शतं भङ्गानां भवति ।
इत्यावश्यके प्रत्याख्यानं संपूर्णं ॥ इत्युक्तं षड्विधमावश्यकं क्रमेण सामायिक १ चतुर्विंशतिस्तव २ वन्दन ३

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| ३ | २ | ३ | [illegible] | २ | २ | १ | १ | १ |
| ३ | २ | १ | ३ | २ | १ | ३ | २ | १ |
| १ | १ | ३ | ३ | ९ | ९ | ३ | ९ | ९ |

प्रतिक्रमण ४ कायोत्सर्ग ५ प्रत्याख्यान ६ रूपं संक्षेपतः । अवश्यं
क्रियते इत्यावश्यकं । तन्नित्यमेव करणीयं साधूनां श्रावकाणां च ।
तच्च न योजनां विना करणीयानुष्ठानमुपयाति तदर्थं योजना क-
थ्यते । प्रथमं सामायिकस्य योजना यथा । सर्वविरतिसामायिकं प्रव्रज्याग्रहणविधेरवसितं । श्रुतसम्यक्त्व-
देशविरतिसामायिकानि श्राद्धव्रताधिरोपाधिकारादवसितानि ॥

अधुना च आवश्यकसामायिकं यदवश्यं श्राद्धैरनुष्ठीयते । सर्वकर्मारम्भे पूर्वं परमेष्ठिमन्त्रपाठः किं पुनरा-
वश्यके । अतः पूर्वं नमस्कारं पठेत् । 'मुहपत्ति नमुक्कारं दंडग मिरियासणस्स पडिलेहा । सज्झायपच्चक्खाणे
गुरुमुणिसद्दाहय पणामो ॥ १ ॥' पूर्वं श्राद्धः पुरोधृतासनो गुरुं नत्वा इच्छाकारेण संदिसह भगवन् सामाइ-
यमुहपुत्तियं पडिलेहेमि इत्युक्त्वोपविश्य मुखवस्त्रिकां प्रतिलेखयति । तत ऊर्ध्वीभूय नमस्कारं त्रिरेकवेलं

वा पठति । ततः कथयति गुरोरग्रे भगवन्, सामायिकदण्डक उच्चरावओ । ततो गुरुस्त्रिरेकवेलं वा सामायिकदण्डकं पठति । श्राद्धोपि गुरुमनुपठति । ततः श्राद्धो विधिनैर्यापथिकीं प्रतिक्रामति । तत उपविश्य क्षमाश्रमणपूर्वकं भणति भगवन्, बइसणं संदिसावेमि । बइसणं पडिलेहेमि इत्युक्त्वा काष्ठासनं पञ्चविंशतिप्रतिलेखनाभिः प्रतिलेखयेत् पादप्रोंछनं च । तथैव पुनः क्षमाश्रमणं दत्वा भणति भगवन्, सज्झायं करेमि । ऊर्ध्वीभूय नमस्कारत्रयं अथवा जयजीवजोणीगाथापञ्चकं पठति । ततः क्षमाश्रमणपूर्वं भणति भगवन्, पसाउकरी पच्चक्खाणं करावउ । पूर्वाह्णे सामाइयचरियं पच्च० चउ ४ अन्न० सह० मह० सव० वोसिराइ । अपराह्णे दिवसचरिमं पच्च० यथाशक्ति दु २ त्रि ३ चउ ४ अन्न ४ वोसिरइ तदनन्तरं आचार्योपाध्यायगुरुसर्वसाधुवन्दनं । गच्छान्तरेषु च 'इरिया मुहपत्ती मंतदंडगं आसणं च सज्झाओ । पच्चक्खाणं गुरुसाहुवंदणं होइ सामइयं ॥ १ ॥ पारणमुहपत्ति पारणारिहं दुगजुअं खमासमणं । पारणगाहा परमिट्ठिमंतपढणं च अवसाणे ॥ २॥' सामाइके पूर्णे द्विघटिकान्तरं इच्छाकारेण संदिसह भगवन्, सामायिकपारणमुहपत्तिं पडिलेहेमि । इत्युक्त्वा मुखवस्त्रिकां प्रतिलेखयति । पुनः क्षमाश्रमणपूर्वं भणति भगवन्, सामायिकपारउं । द्वितीयक्षमाश्रमणेन भणति भगवन्, सामायिकपारियउ । गुरुवाक्यं पुणोवि कायव्वो आयार नमुत्तवो । ततो मुखवस्त्रिकापिहितवदनः श्राद्धो भणति भून्यस्तशीर्षः । 'भयवं दंसणभद्दो सुदंसणो थूलभद्द वयरो य । सफलीकयगिहचाया साहू एवंविहा हुंति ॥ १ ॥ साहूणवंदणेणं नासइ पावं असंकिया भावा ।

फासुदाणे निज्जर अणुग्गहो नाणुमाईणं ॥ २ ॥ छउमत्थो मूढमणो कित्तियमित्तंपि संभरइ जीवो । जं च न
सुंभरामि अहं मिच्छा मे दुक्कडं तस्स ॥ ३ ॥ जं जं मणेण बद्धं जं जं वायाइ भासियं किंचि । जं जं काएण
कयं मिच्छा मे दुक्कडं तस्स ॥ ४ ॥ सव्वे जीवा कम्मवसि महियलि जे य भमंति । ते मए सव्वे खमाविया
मउभवि तेय खमंति ॥ ५ ॥ खमिउ खमाविउ मइं खमिउ सव्वह जीवनिकाओ । सिद्धहदिन्नआलोयण नम्म-
हवइरूनणाओ ॥ ६ ॥ सामाइयवयजुत्तो जाव मणो होइ नियमसंजुत्तो । छिंदइ असुहं कम्मं सामाइय ज-
त्तिया वारा ॥ ७ ॥ सामायिकविधिलीधउं विधिपारियउ विधिमाहि जि काई अविधिआसातना की तस्स
मिच्छा मि दुक्कडं ॥ ततः परमेष्ठिमन्त्रपाठः । इति सामायिकप्रकरणम् ॥

अथ सामायिकप्रसंगेन पौषधविधिरभिधीयते । यस्मिन्दिने श्राद्धो वा श्राद्धी वा पौषधं विवरिषति तदा
प्रातर्वा संध्यायां वा साधुसमीपे साध्वीसमीपे वा गत्वा अङ्गप्रतिलेखनां कृत्वा प्रस्रवणोच्चारमात्रकानि त-
द्भूमिं च प्रतिलेखयेत् । 'इरिया पोसहमुत्ती नवकारं तहय दंडगुच्चारो । सामाइयमुत्ती मंतदंडकं आसणे पेहा
॥ १ ॥ सज्झायं गुरुमुत्ती पडिलेहा उवहिमसवसहीणं । वंदणयं साहरसस होई इय पोसहे जुत्ती ॥ २ ॥'
ततो गुरुसमीपे स्थापनाचार्यं वा संस्थाप्य ऐर्यापथिकीं प्रतिक्रम्य इति भणति । इच्छाकारेण संदिसह भग-
वन्, पोसहमुहपत्तियं पडिलेहेमि । ततो मुखवस्त्रिकां प्रतिलिख्य क्षमाश्रमणं दत्वा भणति भगवन्, पोसहं
संदिसावेमि । द्वितीयक्षमाश्रमणेन भणति भगवन्, पोसहं ठाएमि । गुरुः कथयति संदिसावेह ठाएह ।

ततः श्राद्ध ऊर्ध्वीभूय नमस्कारं त्रिरेकवेलं वा पठति । ततो गुर्वग्रे कथयति । भगवन्, पोसहदंडकं उच्चरावउ । ततो गुरुस्त्रिरेकवेलं वा पौषधदण्डकं वदति श्राद्धोपि तमनु वदति । दण्डको यथा । 'करेमि भंते पोसहं आहारपोसहं सवओ सरीरसक्कारपोसहं सवओ अवावारपोसहं सवओ बंभचेरपोसहं सवओ चउविहे पोसहे ठामि जाव दिवसं वा रत्तिं वा अहोरत्तं वा पज्जवासामि दुविहं तिविहेणं मणेणं वायाए काएणं न करेमि न कारवेमि तस्स भंते पडिक्कमामि निंदामि गरिहामि अप्पाणं वोसिरामि १ अत्र च यः किल दिवसपौषधे अहोरात्र्यौषधे वा आहारार्थी तस्य आहारपोसहं देसओ इत्युच्चारः शेषं तथैव । तत उपविश्य इच्छाकारेण संदिसह भगवन्, सामाइकमुहपत्तिं पडिलेहेमि इत्युक्त्वा मुखवस्त्रिकां प्रतिलेखयति । ततः श्राद्ध ऊर्ध्वीभूय परमेष्ठिमन्त्रं त्रिरेकवेलं वा पठित्वा पुनः कथयति भगवन्, सामाइकदंडकं उच्चरावउ । ततो गुरुस्त्रिरेकवेलं वा सामायिकदंडकमुच्चारयति यथा करेमि भंते सामाइयं सावज्जं जोगं पच्चक्खामि जाव पोसहं पज्जुवासामि दुविहं तिविहेणं मणेणं वायाए काएणं न करेमि न कारवेमि तस्सभं ॥ १ ॥ १ । ततः क्षमाश्रमणं दत्वा भणति । वर्षाकाले भगवन्, कट्ठासणं संदिसावामि । कट्ठासणं पडिलेहेमि । शेषाष्टमासेषु पाउंछणउं संदिसावेमि । पाउछणउं पडिलेहेमि । इत्युक्त्वा पट्टकं पादप्रोंछनं वा प्रतिलेखयेत् । ततः क्षमाश्रमणं दत्वा भणति भगवन्, सज्झायं संदिसावेमि सज्झायं करेमि । तत ऊर्ध्वीभूय नमस्कारत्रयं पठित्वा । जयइ जगजीवजोणी इत्यादिगाथापञ्चकं पञ्चविंशतिं वा पठेत् । ततः पुनः क्षमाश्रमणपूर्वं भणति

इत्युक्त्वा यदि पूर्वं प्रतिलेखनाकाले वस्त्रं पौषधागाराद्यप्रतिले-
भगवन्, उपधिसंदिसावउं उपधिपडिलेहउं इत्युक्त्वा यदि पूर्वं प्रतिलेखनाकाले वस्त्रं पौषधागाराद्यप्रतिले- ततः क्षमाश्रमणद्वय-
गितं स्यात् तदा प्रतिलेखयेत्। यदि प्रतिलेखितं स्यात् तदा क्षमाश्रमणेनैव पूरयेत् । ततः क्षमाश्रमणद्वय-
पूर्वं भणति भगवन्, वसतिसंदिसावउं वसतिपडिलेहउं इत्युक्त्वा यदि वसतिमात्रकादि पूर्वं प्रतिलेखना-
काले अप्रतिलेखितं स्यात् तदा प्रतिलेखयेत्। प्रतिलेखितेपि क्षमाश्रमणेनैव पूरयेत्। वसतिप्रमार्जनं दण्डप्रों-
छनेन। ततः पुनः गुरुसमीपमागत्य क्षमाश्रमणपूर्वमिति वदेत् भगवन्, पसाउकरी पच्चक्खाण करावउ।
ततो गुरुर्यदि श्राद्ध आहारार्थी भवति तदा दिवसपौषधे प्रातर्गृहीते नमस्कारसहितं प्रत्याख्यानमुच्चारयेत्
यथा। उग्गए सूरे नवकारसहियं पच्च० चउ० ४ अन्न० सह० वोसिरइ । स्वाध्यायकाले पुनराचाम्लैकभक्त-
निर्विकृतिकादित्रिविधाहारं उपवासं वा दद्यात्। संध्याकृते रात्रिपौषधे तु दिवसचरिमं पच्च० चउ० ४ अन्न०
सह० मह० सव्व० वोसिरइ। तत्र यः किल आहारग्राही भवति तदा स वन्दनकद्वयं ददाति। यो न आहा-
रग्राही तस्य न आचार्योपाध्यायगुरुसाधुवन्दनं। अयं च सामान्यपौषधग्रहणविधिः। यत्किल अहोरात्रिकं
पौषधं गृह्णाति तस्येयं चर्या। ब्राह्मे मुहूर्ते पूर्वोक्तविधिना पौषधं गृह्णाति । अतीतसंख्याप्रतिलेखितोपधिव-
सतिः। ततो जातायां प्रतिक्रमणवेलायां प्राभातिकप्रतिक्रमणं करोति। तदन्ते क्षमा० द्वयपूर्वं बहुवेलं संदि-
सावेमि बहुवेलं करेमि इत्युक्त्वा आचार्योपाध्यायसर्वसाधून् वन्दते । ततो जाते प्रतिलेखनाकाले क्षमा०
द्वयेन भणति भग० पडिलेहणं संदिसावेमि पडिलेहणं करेमि इत्युक्त्वा मुखवस्त्रिकां प्रतिलेखयति। ततः

पुनः क्षमा० द्वयेन भणति भग० अंगपडिलेहणं संदिसावेमि अंगपडिलेहणं करेमि इत्युक्त्वा स्वपरिधानं प्रतिलिख्य स्थापनाचार्यं प्रतिलेखयति । पुनरिच्छाकारेण संदिसह भग० उपधिमुहपत्तिं पडिलेहेमि । मुखवस्त्रिकां प्रतिलिख्य क्षमा० द्वयपूर्वकं भणति भग० उपधिं संदिसावउं उपधिं पडिलेहउं इत्युक्त्वा वस्त्रकंबलादि प्रतिलेखयति । पुनः क्षमाश्रमणद्वयेन भणति भग० वसतिं संदिसावउं वसतिं पडिलेहउं इत्युक्त्वा वसतिं मात्रकादि प्रमार्जयति । पुनरैर्यापथिकीं प्रतिक्रम्य क्षमा० द्वयपूर्वं भणति भग० सज्झायं संदिसावेमि सज्झायं करेमि । ततः पश्चिमरात्रिकृतनमस्कारसहितप्रत्याख्यानः तदा स्वशक्त्या एकभक्तं निर्विकृतिकं आचाम्लं उपवासं वा प्रत्याख्याति । ततः परमेष्ठिमन्त्रं जपति पुस्तकादि वाचयति साधुभ्य आगमं वा शृणोति । ततो जाते पादोनप्रहरे क्षमा० द्वयपूर्वं भणति भग० पडिलेहणं संदिसावेमि पडि० करेमि । मुखवस्त्रिकां प्रतिलिख्य सर्वं वस्त्रपात्रोपकरणादि प्रतिलेखयेत् । ततो भग० आवस्सी इत्युक्त्वा निष्क्रम्य चैत्येषु देववन्दनं करोति । ततो यद्याहारग्राही भवति तदा प्रत्याख्याने पूर्णे इच्छाकारेण संदिसह भगवन्, पारणमुहपत्तिं पडिलेहेमि । मुखवस्त्रिकां प्रतिलिख्य ततः क्षमाश्रमणं दत्वा भणति पारावेमि पोरसीए पुरिमड्ढेण वा चउविहाहारेण वा तिविहाहारेण वा निव्विएण वा अंबिलेण वा एगासणेण वा पाणाहारउपवासेण वा पारावेमि जाव काइवेलातीए । ततः शक्रस्तवं पठति विंशतिगाथाषोडशगाथापर्यन्तं स्वाध्यायं करोति । ततः अन्नस्य यथासंभवं अतिथिसंविभागं विधाय मुखहस्तपादादि प्रतिलिख्य नमस्कारं पठित्वाऽरक्तद्विष्टो गृह-

मुपात्रे प्राशुकं भुंक्ते। पञ्चसमितियुतः स्वगृहे गत्वा स्वयोगनिष्पन्नं प्राशुकं भुञ्जीत। पौषधशालायां वा पूर्वनिर्दिष्टस्वजनानीतं भिक्षाटनेन वा। ततो भोजनानन्तरमैर्यापथिकीं प्रतिक्रम्य शक्रस्तवं भणित्वा द्वादशावर्तवन्दनं दत्वा दिवसचरिमं त्रिविधाहारेण चतुर्विधाहारेण वा प्रत्याख्याति। यदि पुनः शरीरचिन्तार्थी तदा आत्मद्वितीयो भगवन् आवस्सी इत्युक्त्वा साधुवदुपयुक्तो निर्जीवे स्थण्डिले गत्वा विधिनोच्चारप्रश्रवणे विसृज्य पुनरपि विधिना पौषधागारमागत्य निस्सीही इत्युक्त्वा प्रविश्य ऐर्यापथिकीं प्रतिक्रम्य क्षमाश्रमणं दत्वा भणति इच्छा० भगवन् गमणागमणं आलोएमि आवस्सीकरीय पुव्वपच्छिमअवरदक्खिणदिसिहिं जाइउ दिसालोयं करिय संडासए थंडिले च पमज्जिय उच्चारपासवणं वोसरिय निस्सीहियं करिय पोसहसालाए पविट्ठा। आवंत जंतेहिं जं खंडियं जं विराहियं तस्स मिच्छामि दुक्कडं। ततः स्वाध्यायेन शुभध्यानेन दिनमतिवाहयति यावत्प्रथमप्रहरः तदा च प्रतिलेखनावेलायां क्षमा० द्वयपूर्वं भणति भग० पडिलेहणं संदिसावेमि पडि० करेमि इत्युक्त्वा मुखवस्त्रिकां प्रतिलिख्य पुनः क्षमा० पूर्वं भणति भग० पोसहसालं पमज्जेमि। ततो मुखवस्त्रिकां प्रतिलिख्य पादप्रोंछनकं च। पुनः क्षमाश्रमणद्वयं दत्वा भणति भग० अंगपडिलेहणं संदिसावेमि अंगप० करेमि। भक्तार्थी स्थापनाचार्यं प्रतिलिख्य पश्चात्परिधानं प्रतिलेखयति। ततः पौषधशालां प्रमृज्य अवकरमुद्धृत्य प्रतिलेखितं स्थापनाचार्यं संस्थाप्य पुनः क्षमाश्रमणं दत्वा मुखवस्त्रिकां प्रतिलेखयति। ततः स्वाध्यायं करोति पूर्ववत्। ततः क्षमा० द्वयपूर्वं भणति भग० ओहीथंडिल्ले संदिसावेमि।

ओहीथंडिल्ले पडिलेहेमि । ततो वस्त्रकम्बलादि प्रतिलिख्य पुनः शुभध्यानेन तिष्ठति । संप्रासायां कालवेलायां चतुर्विंशतिस्थण्डिलानि प्रतिलेखयति उच्चारप्रस्रवणार्थं । ततस्तद्दिवसानुसारेण सांवत्सरिकं चातुर्मासिकं पाक्षिकं वा दैवसिकं वा प्रतिक्रमणं करोति । तदनन्तरं साधुविश्रामणां करोति । ततः स्वाध्यायेन निशाप्रथमप्रहरमतिवाहयति । ततः शरीरचिन्तां कृत्वा ऐर्यापथिकीं प्रतिक्रम्य मुखवस्त्रिकां प्रतिलिख्य क्षमा० द्वयपूर्वं भणति भग० राईसंथारए संदिसावेमि राईसंथारए ठाएमि इत्युक्त्वा शक्रस्तवं पठति । ततः संस्तारकं शरीरं च प्रमृज्य जानूपरि संस्तारकोत्तरपट्टं मीलयित्वा भूमौ संस्थाप्य । अणुजाणह निस्सीही नमो खमासमणाणं इत्युत्वा संस्तारकोपरि उपविशति । तत्र नमस्कारत्रयं भणित्वा त्रिवेलं चतुःशरणं च पठित्वा गाथात्रयं त्रिः पठति यथा । 'अणुजाणह परमगुरू गुरुगुणरयणेहि भूसियशरीरा । बहुपडिपुन्ना पोरसि राईसंथारए ठ्ठाएमि ॥ १ ॥ अणुजाणह संथारं बाहुवहाणेण वामपासेण । कुक्कुडपायपसारण अतरंतु पमज्जए भूमिं ॥ २ ॥ संकोडियसंडासा उवट्टंते य कायपडिलेहा । दव्वाईअणुओगं ऊसासनिरुंभणा लोए ॥ ३ ॥' इति त्रिः पठित्वा संकोचितपाणिर्वामबाहूपधानो वामपार्श्वेन शेते । यद्युद्वर्तनां करोति तदा संस्तारकं शरीरं च प्रतिलेखयेत् ॥ अथ शरीरचिन्तार्थमुत्तिष्ठति तदा शरीरचिन्तां कृत्वा ऐर्यापथिकीं प्रतिक्रम्य एकवेलं अणुजाणह प० इत्यादिगाथात्रयं पठति । पुनः शेते । सुप्तस्य चेन्निद्रा नायाति तदा शुभध्यानेन धर्मजागर्यां करोति । ततो रजन्याः पश्चिमप्रहरे उत्थाय देहचिन्तादिविधाय ऐर्यापथिकीं प्रतिक्रम्य कुसुमि-

गदुस्सुमिणराईपायच्छित्तं चित्तविशोधनार्थं कायोत्सर्गं करोति शक्रस्तवं च पठति । ततो मुखवस्त्रिकां
प्रतिलिख्य सामायिकदण्डकमुच्चार्य स्वाध्यायपर्यन्तं करोति । पुनः शुभध्यानेन रात्रिशेषमतिवाहयति । ततः
प्रतिक्रमणवेलायां प्राभातिकं प्रतिक्रमणं करोति । ततः पूर्ववत्सर्वं प्राभातिकं कर्म विदध्यात् । जाते पौषध-
पारणावसरे इच्छा० भगवन् पोसहपारणमुहपत्तिं पडिलेहेमि । मुखवस्त्रिकां प्रतिलिख्य क्षमा० द्वयपूर्वकं
भणति भगवन् पोसहं पारउं भग० पोसहं पारियउं । मुखवस्त्रिकापिहितवदनो भून्यस्तशीर्षः पौषधपारण-
गाथाः पठति यथा–'सागरचंदो कामो चंदवडिंसो सुदंसणो धन्नो । जेहिं पोसहपडिमा न खंडिया जीवि-
यंतेवि ॥ १ ॥ जो गब्भवासभीओ ताडुल्ललिओ महामुणी अभओ । उम्मुक्कमणिसुवन्नो पडिपुन्नं पोसहं
कुणइ ॥ २ ॥ पोसहसुद्धे भावे असुहाइं खवेइ नत्थि संदेहो । छिंदइ नरतिरियगई इह भणियं पोसहं कुणइ
॥ ३ ॥ पोसहसामाइयसंठियस्स जीवस्स जाइ जो कालो । सो सफलो बोधव्वो सेसो संसारफलहेऊ ॥ ४ ॥
चत्तारिदसाभिवत्तं सुक्खो कालओ विक्खिओ । इच्चेअं पोसहस्सेव फलं विंति महेसिणो ॥ ५ ॥' ततो नम-
स्कारं भणित्वा सामायिकपारणमुखवस्त्रिकां प्रतिलिख्य पूर्ववत्सामायिकं पारयति । ततः पौषधपारणके
साधुषु सत्सु नियतमतिथिसंविभागो विधेय एव । इत्याहोरात्रिकपौषधविधिः ॥ सामायिकं च द्विघट्यन्तं
नमस्कारजापप्रतिक्रमणादिभिः पूरयेत् । केचित्स्थूलमतयः परमेष्ठिमन्त्रपञ्चशतीजपान्तं ब्रुवते । तदनन्तरं
तत्पारयित्वा पुनः सामायिकं गृह्णीयादिति रूढिः । इत्यावश्यके सामायिकयोजना संपूर्णा ॥

अथ चैत्यवन्दनयोजना । तत्र स्थापनाचार्यस्थापनं । ततो गुर्वग्रे वन्दनप्रतिक्रमणालोचनक्षामणादिकर्मोचितं भवति किंतु चैत्यवन्दनं भगवतोऽर्हतो वन्दनं कर्म तच्च तदग्र एवोचितं एतदर्थं स्थापनाचार्यस्थापनं । यतः परमेष्ठिमन्त्रस्थापितस्य स्थापनाचार्यस्य भगवत्कल्पना गुरुकल्पना च तदग्रत उभयमपि क्रियमाणं श्रेयस्करं । यत उक्तमागमे । 'गुरुविरहंमि य ठवणा गुरूवएसोवि दंसणत्थं च । जिणविरहम्मि य जिणबिंबसेवणामंतणं सहलं ॥ १ ॥' अपिच । रत्तोवि परूक्खस्स वि जह सेवा मंतदेवया एव । तह चेव परूक्खस्सवि गुरुणो सेवा विणयहेऊ ॥ २ ॥' अतएव स्थापनाचार्यस्थापनं । तस्य प्रमाणशुद्धिर्यथा । 'चउवीसंगुलमाणं ठवणायरियं च होइ उक्कोसं । मज्झं च बारसंगुल मइहीणं मुट्ठिमज्झगयं ॥ १ ॥ उत्तमदारुमयं वा रयणमयं वा ठविज्ज तं पुरओ । बारस अंगुलदीहा दारुमई कालदंडीय ॥ २ ॥ केविहु भणंति वट्टं ठवणायरियं च रयणसंखमयं । इय कप्पणाविहाणं न दूसणिज्जं अणेगंते ॥ ३ ॥ इत्येवं स्थापनाचार्यं स्थापयेन्मुखवाससि । उभयोः कालयोः साधुः श्राद्धो वा प्रतिलेखयेत् ॥ ४ ॥' तदग्रे चैत्यवन्दनं । यतीनां चैत्यवन्दनं सप्तवेलमहोरात्रि नियतं । श्राद्धानां तु विभाषा । यदुक्तं । 'साहूण सत्तवारा होइ अहोरत्त मज्झयारम्मि । गिहिणो पुण चियवंदण तिय पंचय सत्त वा वारा ॥ १ ॥' यतीनां सप्तवारं । यथा । ब्राह्मये मुहूर्ते निद्रागमे एका १, प्राभातिकप्रतिक्रमणे द्वितीया २, चैत्यपरिपाट्यां तृतीया ३, पारणमुखवस्त्रिकायां चतुर्थी ४, भोजनानन्तरं पञ्चमी ५, संध्याप्रतिक्रमणे षष्ठी ६, शयनकाले सप्तमी ७, । गृहिणां तु स्वप्नादौ १ जागर-

गादौ २ भोजनादौ ३ इति तिस्रः। चैत्यपरिपाट्यां भोजनानन्तरं च पञ्च ५ उभयकालं प्रतिक्रमणकरणे सप्तमी ७ एवं गृहिणां चैत्यवन्दने विभाषा। सा चैत्यवन्दना त्रिविधा। यथा। 'नमुक्कारेण जहन्ना दंडयुगथुइजुअलमज्झमा नेया। संपुण्णा उक्कोसा विहिणा खलु वंदणा तिविहा ॥ १ ॥' जघन्या नमस्कारेण जिनाग्रतः परमेष्ठिमन्त्रं पठेत्। एतावज्जघन्या चैत्यवन्दना पूर्यते। दण्डकस्तुतियुगलपाठात् मध्यमा। यथा। जिनाग्रे स्थापनाचार्याग्रे वा गत्वा। 'जिणठवणं सक्कत्थय चेइयथय साहुवंदणं चेव। पत्थुअजिणथयपढणं पत्थणगाहाउ गुरुनमणं ॥ १ ॥' व्याख्या। पूर्वं अर्धसिंहनिषद्योपविष्टो मुखे वस्त्रिकावस्त्राञ्चलाञ्जलिश्लिष्टमुखो भणति इच्छा० भग० चैत्यवन्दना करउं। वरकनकशंखविद्रुममरकतघनसन्निभं विगयमोहं। सप्ततिशतं जिनानां सर्वामरपूजितं वंदे ॥ १ ॥' इत्यार्यापठनं। ततः शक्रस्तवपाठः। ततो जावंति चेइयाइं इति गाथापठनं। ततः क्षमाश्रमणं दत्वा जावंति के० इति गाथापठनं। ततः नमोर्हत्सिद्ध० इत्युक्त्वा प्रस्तुतजिनस्तोत्रपाठः। ततो जयवीयराय इति गाथापठनं। तत आचार्योपाध्यायगुरुसाधुवन्दनं। इति मध्यमा चैत्यवन्दना संपूर्णा ॥ उत्कृष्टा यथा। 'जिणथय सक्कथय तह चेइयथयमवि जिणंदथुइ कहणं। चउवीसत्थय सव्वा रिहाणथयमेव ताण थुई ॥ १ ॥ सुअथयकाउस्सग्गं सुयथुइकहणं तहेव सिद्धथयं। वेयावच्चगराण य उस्सग्गो ताण थुइकहणं ॥ २ ॥ पुणरवि सक्कत्थयं चिय चेइय साहूण थुइ जिणिंदत्थयं। [ पत्थणं गाहा ] चेइय वंदणमिय भणिय मुक्कोसं ॥ ३ ॥' ऐर्यापथिकीं प्रतिक्रम्य प्रथमं इच्छाकारेण संदिसह भगवन् चैत्यवन्दनं करउं इत्यु-

क्त्वा वरकनकआर्यां पठेत् । ततः शक्रस्तवं पठित्वा । अरहंत चेइयाणं करेमि काउस्सग्गं अन्नत्थ० यावत् अप्पाणं वोसिरामि । ततो नमस्कारं विचिन्त्य नमो अरिहंताणं इति पारयित्वा नमोर्हत्सिद्धा० इति कथयित्वा प्रस्तुतजिनस्तुतिमेकां पठेत् । पुनश्चतुर्विंशति भणित्वा सव्वलोए अरिहंत० वंदणवत्तियाए जाव अप्पाणं० पूर्ववत् । नमस्कारं विचिन्त्य नमस्कारेण पारयित्वा सर्वजिनस्तुतिभणनं । ततः श्रुतस्तवं पठित्वा सुअस्स भगवओ करेमि काउ० वंदणव० जाव अप्पाणं वो० पूर्ववच्चिन्तनं श्रुतस्तुतिभणनं । ततः सिद्धस्तवपठनं ततो वेयावच्चगराणं संतिगराणं समदिट्ठिसमाहिगराणं करेमि काउस्सग्गं अन्नत्थ ऊ० यावदप्पाणं वो० पूर्ववच्चिन्तनं नमस्कारेण पारयित्वा नमोर्हत्सिद्ध० पूर्वकं वैयावृत्यकरस्तुतिपाठः । पुनरुपविश्य शक्रस्तवपाठः । ततश्चैत्यगाथासाधुगाथापाठः ततो नमोर्हत्सिद्धा० कथनपूर्वं प्रस्तुतजिनस्तोत्रपाठः ततः जयवीयरायगाथापठनं तत आचार्योपाध्यायगुरुसाधुवन्दनं । इत्युत्कृष्टचैत्यवन्दना । इत्यावश्यके शक्रस्तवचतुर्विंशतिस्तवयोजना ॥

अथ वन्दनकयोजना ॥ यथा । तत्र वन्दनकं द्वादशावर्तं । तदुक्तं पूर्वं । 'पडिक्कमणे सज्झाए काउस्सग्गा वराहपाहुणए । आलोअणपडिसुणणे उत्तम अट्ठेय वंदणयं ॥ १ ॥' तत्र सामान्यवन्दनकं उत्कृष्टचैत्यवन्दनां विधाय मुखवस्त्रिकां प्रतिलिख्य द्वादशावर्तवंदनं दद्यात् । ततः इच्छा० भगव० देवसियं आलोएमि० पुनः द्वादशावर्तवन्दनकं दत्वा इच्छा० भग० देवसियं खामेमि० इति क्षामणं पुनः द्वादशावर्तवन्दनं दत्वा प्रत्याख्यानोच्चारं कुर्यात् । तत आचार्योपाध्यायगुरुसाधुवन्दनं चैत्यवन्दनाभावेपि गुरुभक्त्यर्थं वन्दनकं दत्वा ।

ततः प्रतिक्रमणमध्ये यथायुक्त्या वन्दनकानि। स्वाध्यायकरणेपि वन्दनकं कायोत्सर्गं च क्षामणे आलोचने गुरूपासनायां सर्वेष्वपि उत्तमार्थेषु वन्दनकदानं। एकमुखवस्त्रिकाप्रतिलेखनेन त्रिर्द्वादशावर्तवन्दनकं भवति। एकवेलं द्वादशावर्तवन्दनकदाने आलोचनं क्षामणं प्रत्याख्यानं क्रमेण विदध्यात्। वन्दनकादौ सर्वत्र ऐर्यापथिकीं प्रतिक्रमेत्। इत्यावश्यके वन्दनकयोजना संपूर्णा॥

अथ प्रतिक्रमणम्॥ यथा। गुर्वग्रे स्थापनाचार्याग्रे वा क्षमाश्रमणपूर्वं कथयति इच्छा० भग० इरियावहियं पडिक्कमामि यावत् अप्पाणं वोसिरामि। चतुर्विंशतिस्तवचिन्तनं पारयित्वा मुखेन चतुर्विंशतिस्तवनं। 'चिइवंदणंमि तह वंदणंमि पडिक्कमणयंमि सज्झाए। पडिलेहणाइं आहारसंगहे तहय आलोए॥ १॥ आगमसक्कणारंभे लोए मलमुत्तमाइ उस्सग्गे। गमणागमणे भिक्खारियाइ आलोअणाकाले॥ २॥ वसई उवहिठाणे आरंभे लेवमाइए विहिए। कालग्गहणे सज्झायमाइपट्ठाणकालेय॥ ३॥ अप्पडिलेहियमग्गं निसिसंथरणे य वीसमणुगमणे। इरियावहिया साहूहिं फासियचेवमाईहिं॥ ४॥' इति ईर्यापथिकी॥ ॥ अथ चैत्यवन्दनवन्दनक्षामण आलोचनकायोत्सर्गप्रत्याख्यानादिभिर्मिलितैः प्रतिक्रमणयुक्तिर्भण्यते। यथा। पूर्वं प्राभातिकप्रतिक्रमणं यथा। 'इरियावहिया कुसमिण काउस्सग्गो गुरूणनमणं च। पडिक्कमणगयणं चिय समाच्छग करण मह उवरिं॥ १॥ सामाइयदंडयकाउस्सग्गा चउवीसथयंमि उस्सग्गो। सुयथयउस्सग्गो चिय सिद्धत्थय कहण मुहपत्ती॥ २॥ वंदणयं आलोयण संथारुचरण सुत्तकहणाइं। वंदणय खामणं चिय

वंदणयं दंडसामइयं ॥ ३ ॥ काउस्सग्गो चउवीसथय महो पुत्तियाइ पडिलेहा । वंदणयं थुइतियगं उक्किट्ठं देववंदणयं ॥ ४ ॥' शक्रस्तवपाठः । पूर्वमैर्यापथिकीं प्रतिक्रम्य । ततः कुस्समिणराईप्रायच्छित्तविशोधनार्थं करेमि काउस्सग्गं अन्नत्थ० यावत् अप्पाणं वो० चतुर्विंशतिस्तवचिंतनं पुनर्मुखभणमं ततः क्षमाश्रमणचतुष्टयेन क्रमेण आचार्योपाध्यायगुरुसर्वसाधून् वन्दित्वा भग० राईपडिक्कमणं ठाउं । सव्वस्सवि राईदुच्चिंतिय दुब्भासिय दुचिट्ठिय इच्छाकारेण संदिसह इच्छं तस्स मिच्छामि दुक्कडं । ततः शक्रस्तवं पूर्णं कथयित्वा तत ऊर्ध्वीभूय सामायिकदण्डकं तत आलोचनं ततः तस्स उत्तरीकरणेणं इत्यादिकायोत्सर्गं विदध्यात् । चतुर्विंशतिस्तवद्वयचिन्तनं । ततः पारयित्वा० चतु० भणनं सर्वलोक अर्हच्चैत्यस्तवकायोत्सर्गः एकचतु० चिन्तनं पारयित्वा श्रुतस्तवभणनं तत्कायोत्सर्गः तत्र साधुभिः सयणासणन्नपाणे० इति गाथा चिन्त्यते । श्राद्धैश्च । 'नाणंमि दंसणंमि य चरणंमि तवंमि तहय विरयंमि । आयरणं आयारो इय एसो पंचहा भणिओ ॥ १ ॥ काले विणए बहुमाणे उवहाणे तहय निह्नवणे । वंजण अत्थ तदुभए अट्ठविहो नाण मायारो ॥ २ ॥ निस्संकिय निक्कंखिय निव्वितिगिच्छा अमूढदिट्ठी य । उववूहथिरीकरणे वच्छल्लपभावणे अट्ठ ॥ ३ ॥ पणिहाणजोगजुत्तो पंचहिं समईहिं तीहिं गुत्तीहिं । एस चरित्तायारो अट्ठविहो होइ नायव्वो ॥ ४ ॥ बारसविहंमिवि तवे सब्भिंतरबाहिरे कुसलदिट्ठी । अगिलाइ अणाजीवी नायव्वो सो तवायारो ॥ ५ ॥ अणसणमूणो अरिया वित्तीसंखेवणं रसच्चाओ । कायकिलेसो संलीणया य वज्झो तवो होइ ॥ ६ ॥ पायच्छित्तं विणओ

वेयावच्चं तहेव सज्झाओ । झाणं उस्सग्गोवि य अब्भिंतरओ तवो होइ ॥ ७ ॥ अणगूहियबलविरिओ परि-
क्कमइ जो जहुत्त माउत्तो । जुंजइ य जहाथामं नायव्वो वीरियायारो ॥ ८ ॥' इति अतीचारगाथाष्टकं ॥ ततः
पारयित्वा सिद्धस्तवं पठित्वा उपविश्य मुखवस्त्रिकां प्रतिलेखयेत् । मुखवस्त्रिकाप्रतिलेखनं वन्दनकावर्तः
सर्वेऽप्युत्कटिकासनेन । ततो वन्दनकं दत्वा इच्छा० भग० राइयं आलोएमि इत्यालोचनं पठेत् । ततः साधवो
ज्येष्ठाद्यनुक्रमेण संथाराउवट्टणाए परियट्टणाए० तस्समि० इतिपर्यन्तं पठति । श्राद्धास्तु सव्वस्सवि राइय-
दुच्चिं० इति पठन्ति । ततो यतयो गृहिणश्च स्वस्वोचितं प्रतिक्रमणसूत्रं पठन्ति । ततः पुनर्वन्दनकं दत्वा
इच्छा० भग० राइयं खामेमि इच्छं खामेमि राइयं० इति क्षामणकं कृत्वा पुनर्वन्दनकं दत्वा श्राद्धललाटे न्य-
स्ताञ्जलयः आयरिय उवज्झाए इति गाथात्रयं पठति । गच्छान्तरेषु साधवोपि पठन्ति । ततः सामायिकमा-
लोचनं तस्स उत्तरीकरणेणं इत्यादिकायोत्सर्गः । अत्र षाण्मासिकवर्धमानतपश्चिन्तनमेकवेलं प्रसिद्धं पार-
यित्वा चतु० स्तवं भणित्वा मुखवस्त्रिकां प्रतिलिख्य वन्दनं दद्यात् । ततः प्रत्याख्यानकरणं यथाशक्त्या ।
ततः इच्छामोणुसट्ठियमित्युक्त्वोपविश्य नमोऽर्हत्सिद्धा० पूर्वकं स्तुतित्रयं पठेत् । ततः शक्रस्तवं पठित्वा
चतसृभिः स्तुतिभिरुत्कृष्टं चैत्यवन्दनं । पुनः शक्रस्तवं पठित्वा आचार्योपाध्यायगुरुसर्वसाधुवन्दनं । गच्छा-
न्तरेषु शक्रस्तवपाठानन्तरं स्तोत्रान्तरं पठित्वा तत आचार्यादिवन्दनं । ततः क्षमा० द्वयपूर्वं भग० बहुवेलं
संदिसावेमि बहुवेलं करोमि । ततो जाते रोमकूपालोकरूपे प्रतिलेखनाकाले क्षमा० द्वयपूर्वं कथयेत् भग०

पडिलेहणं संदिसावेमि पडि० करेमि इत्युक्त्वा मुखवस्त्रिकां प्रतिलेखयेत् । अत्र—'मुहपत्ति चोलपट्टो कप्पतिगं तहय चेव रयहरणं । संथारुत्तरपट्टो दसपोहा उग्गए सूरे ॥ १ ॥ बहुवेलं पडिलेहण अंगोवहिवसहि इरियसज्झायं । उपओगकाउसग्गो मुनिगुरुवयणं च गुरुनमणं ॥ २ ॥' ततो मुखवस्त्रिकाप्रतिलेखनानन्तरं क्षमा० द्वयपूर्वकं वदेत् भग० अंगपडिलेहणं संदि० अंगप० करेमि । ततः स्थापनाचार्यं चोलपट्टं कल्पत्रयं रजोहरणं प्रतिलेखयेत् । एतेषां प्रतिलेखनं साधुप्रतिलेखनाचेष्टितादवसेयं । ततः क्षमाश्रमणं दत्वा इच्छा० भगव० उपधिमुहपत्तिं पडिलेहेमि । ततः क्षमा० द्वयपूर्वकं कथयेत् इच्छा० भग० उपधि संदिसावउं उपधि पडिलेहउं इत्युक्त्वा संस्तारकोत्तरच्छदादिप्रतिलेखयेत् । क्षमा० द्वयपूर्वं भणति भग० वसति संदिसावउँ वसति पडिलेखउं इत्युक्त्वा वसतिमात्रकप्रभृति दंडप्रोञ्छनेन मार्जयेत् । तत ऐर्यापथिकीं प्रतिक्रम्य गुर्वग्रे क्षमा० द्वयपूर्वं वदेत् इच्छा० भग० सज्झायं संदिसावेमि । नमस्कारं पठित्वा दशवैकालिकादिमाध्ययनद्वयं एकमध्ययनं वा । अथवा जयइ जगजी० गाथापंचविंशतिं गाथापञ्चकं वा उपविष्टः पठेत् । ततः क्षमा० पूर्वं भणति भग० उपयोगं करेमि उपयोगस्स करावणत्थं करेमि काउस्सग्गं० अन्नत्थ० यावत् अप्पाणं वोसि० कायोत्सर्गः नमस्कारचिन्तनं पारयित्वा नमस्कारभणनं ततः इच्छाकारेण संदिसह साधुभिरित्युक्ते गुरुः कथयति लाभु । पुनः साधवः कथयन्ति भग० कहलेसह गुरु० जह गहियं पुव्वसाहूहिं । पुनः साधुः कथयति इच्छं आवस्सियाए जस्स विजुग्गत्ति । ततः क्रमेण साधुवन्दनं ततो धर्मव्याख्यानं पठनपाठनकर्म साधवः

३५६ पत्रेऽस्य विषयोस्ति.

२१ पद्मोत्तरतप अनागाढं उपवास ७२ पारणा ७२ सर्वदिन १४४



'पारावउं भातपाणी निव्विय आंबिल एकासणं कारेहं । पोरसिपुरिमढचउविहाहारेहिं जीवकाचि वेला तइए पारावेमि' इत्युक्त्वा चैत्यवन्दनं विदध्यात् । 'दोसु पडिक्कमणेसुं चिइपरिवाडीइ चेव उक्किट्ठं । चिइवंदणमन्नत्थयमज्झिम माहिंसु जिणनाहा ॥ १ ॥' अतो भोजनाद्यन्तेषु स्वप्नजागरणकालेषु मध्यमैव चैत्यवन्दना । ततः क्रमेण सर्वां पूर्वोक्तां दिनचर्यामधिष्ठाय चतुर्थप्रहरस्यादौ संजाते पूर्वोक्ते प्रतिलेखनाकाले प्रभातवत् क्रमेण प्रतिलेखनां कुर्यात् । अत्र भाण्डोपकरणादिप्रतिलेखनमधिकं । वसतिप्रमार्जनानन्तरं पुनरैर्यापथिकीं प्रतिक्रम्य भग० सज्झायमुहपत्तिं पडिलेहेमि इत्युक्त्वा मुखवस्त्रिकां प्रतिलिख्य क्षमा० द्वयपूर्वकं इति वदेत् । भगवन् सज्झायं संदिसावेमि सज्झायं करेमि । तत्र नमस्कारं पठित्वा जयइ जगजीवजोणी इत्यादिगाथापञ्चकं पठित्वा कृताहारो वन्दनकं दद्यात् । अकृताहारो न । ततः क्षमा० द्वयपूर्वकं वदेत् । भगव० उहीथंडिल्लासंदिसावउं उहीथंडिल्लापडिलेहउं । ततो दिवसचरिमं प्रत्याख्यानं त्रिविधाहारं चतुर्विधाहारं वा यथाशक्ति । ततः संजाते संध्यासमये सर्वं संनिधिमुत्सृज्य मुनिर्मण्डलीस्थितः श्राद्धोपि पूर्वोक्तविधिगृहीतसामायिकः प्रतिक्रमणाय यतते । 'इरिया गोयर तह पच्चक्खाण उक्किट्ठदेववंदणयं । सामाइय आलोयण दंडगउस्सग्गकरणं च ॥ २ ॥ वंदणखामणयं वंदणं च आयरियखामणं चेव । सामाइयदंडालोअणं च उस्सग्गकरणं च ॥ ३ ॥ चउवीसथयं चेइय उस्सग्गो सुयथयं तउस्सग्गो । सिद्धत्थयं सुयदेवय काउस्सग्गं थुईकहणं ॥ ४ ॥ खित्ताहिव उस्सग्गो तत्थुइकहणं च पुत्तिपडिलेहा । वंदणं थुइतिगकहणं सक्कथओ अरिहथुइकहणं

पाइच्छित्तस्सग्गो खुद्दोपद्दवहरो य उस्सग्गो । देवसियपडिक्कमणे एवं अणुकमणिया नेया ॥ ६ ॥
य ॥ ५ ॥
पूर्वं ऐर्यापथिकीं प्रतिक्रम्य ततो यतिः गोयरचरीपडिक्कमणत्थं करेमि काउसग्गं अन्नत्थ० यावत् अप्पाणं वोसिरामि । नमस्कारचिन्तनं । ततः कालोयगोयरचरिया० इति गाथापठनं। ततो दिवसचरिमं प्रत्याख्यानं । ततः प्रतिक्रमणारम्भः । तत्र पूर्वं उत्कृष्टविधिना चैत्यवन्दनं तदनन्तरं इच्छा० भग० देवसियं पडिक्कमणं ठाउं । सव्वस्सवि देव० ततः करेमि भंते सामाइयं इच्छामि ठामि काउसग्गं जो मे देवसिउ० तस्स०। उत्तरी० कायोत्सर्गकरणं यतीनां। सयणासणन्नपाणे गाथाचिन्तनं । श्राद्धानां नाणंमि दंसणंमिय इति गाथाष्टकचिन्तनं । तदनन्तरं चतु० भणनं मुखवस्त्रिकाप्रतिलेखनं वंदनकं तत इच्छा० भग० देवसियं आलोएमि जो० इत्यादि आलोचनं । यतिभिर्यथाक्रमं ठाणे कमणे इत्यादि उच्यते। श्रावकैः समकालं सव्वस्सवि देव० कथनं। ततः श्राद्धाः यतयश्च स्वस्वोचितं प्रतिक्रमणसूत्रं पठन्ति । ततो वन्दनं तत इच्छा० भग० देवसियं खामेमि इच्छं गा० इत्यादि क्षामणं । ततः पुनर्वन्दनकं । ततः श्राद्धाः आयरिओ उवज्झाए० इति गाथाकथनं। क्वचिद्गच्छान्तरेषु यतयोपि कथयन्ति । ततः करेमि भंते सामा० तत इच्छामि ठामि काउसग्गं जो मे० इति आलोचनं । तस्स उत्तरीकरणेणं० यावत् अप्पाणं० कायोत्सर्गः चतु० द्वितय० चिन्तनं मुखेन भणनं सर्वचैत्यस्तवः कायोत्सर्गः। एकचतु० चिंतनं श्रुतस्तवभणनं कायोत्सर्गः एकचतु० चिन्तनं सिद्धस्तवपठनं श्रुतदेवताकायोत्सर्गः नमस्कारचिन्तनं स्तुतिः क्षेत्रदेवताकायोत्सर्गः स्तुतिः । अत्र च गच्छान्तररीत्या शासनदे-

वता वैरोट्याप्रभृतीनां कायोत्सर्गस्तुतयः। ततो नमस्कारपूर्वं मुखवस्त्रिकाप्रतिलेखनं वंदनकं। तत इच्छामो-णुसट्ठियं नमोर्हत्सिद्धा० पूर्वकं। 'नमोस्तु वर्धमानाय स्पर्धमानाय कर्मणा। तज्जयावाप्तमोक्षाय परोक्षाय कुतीर्थिनां ॥ १ ॥ येषां विकचारविन्दराज्याज्यायः क्रमकमलावलिं दधत्या। सदृशैरिति संगतं प्रशस्यं कथितं सन्तु शिवाय ते जिनेन्द्राः ॥ २ ॥ कषायतापार्जितजन्तुनिर्वृतिं करोतु यो जैनमुखाम्बुदोद्गतः। स शुक्रमासोद्भववृष्टिसंनिभो दधातु तुष्टिं मयि विस्तरो गिरां ॥ ३ ॥' इति स्तुतित्रयपाठः। शक्रस्तवपाठः। स्तोत्रकथनं आचार्योपाध्यायगुरुसाधुनमनं दैवसिकप्रायश्चित्तविशोधनाकायोत्सर्गः चतु० चतुष्टयचिन्तनं चतु० भणनं क्षमा० द्वयपूर्वं भणति भग० सज्झायं संदिसावेमि सज्झायं करेमि इत्युक्त्वा नमस्कारत्रयपाठः। ततः क्षुद्रोपद्रवोपशमनार्थं कायोत्सर्गः चतुष्टयचिन्तनं मुखेन चतु० भणनं०। ततः प्रव्रज्याविधानपाठः। इति दैवसिकप्रतिक्रमणविधिः ॥

अथ पाक्षिके तु। 'मुहपत्ती वंदणयं संबुद्धाखामणं तहा लोए। वंदणपत्तेयं खामणाणि वंदणय सुत्तं च ॥ १ ॥ सुत्तं उब्भट्ठाणं उस्सग्गो पुत्तिवंदणं तहय। पज्जंतिय खामणयं तह चउरो त्थोभवंदणयं ॥ २ ॥' प्रतिक्रमणसूत्रकथनं यावत् दैवसिकप्रतिक्रमणवत्। ततः क्षमा० पूर्वकं इति वदेत् भग० पक्खियमुहपत्तियं पडिलेहेमि इत्युक्त्वा मुखवस्त्रिकां प्रतिलेखयेत्। ततो वंदनकं। ततः इच्छा० भग० संबुद्धाखामणेणं अब्भुट्ठिओमि अब्भिंतरपक्खियं खामेमि। इत्थं खामेमि पक्खियं जं किंचि अपत्तियं पर० इत्यादि यावत् तस्स

ॐ इति तिलकमन्त्रः। ततः पट्टं श्रिरखं भाले मुकुटाधो वध्नीयात् सुवर्णमयं रत्नजटितं यतिगुरुः सूरिमन्त्रेण गृहगुरुस्तु वेदमन्त्रेण। स यथा। ॐ अर्हं नमोऽर्हते समवसरणस्थाय सिंहासनस्थाय चैत्यद्रुमच्छायाप्रतिष्ठाय निःकल्मषाय निःकर्मकाय प्रियप्रबोधाय स्थिराय तदस्तु पट्टबन्धेनानेन भगवान् अर्हन् सुप्रतिष्ठितः सुपूजितः अर्हं ॐ इति पट्टबन्धमन्त्रः। ततोऽन्ये नृपाः सामन्ताः राजानका मण्डलाधिपाः ग्रामाधिपाः धर्माधिकारिसेनानीमन्त्रिब्राह्मणक्षत्रियवैश्यशूद्रास्तिलकं कुर्वन्ति। सर्वेऽपि प्रणम्य स्वस्वोचितामुपदां गजतुरगभूपणासिंहासनशस्त्रवस्त्रकवचपुस्तकद्रव्यफलप्रभृतिकां समर्पयन्ति तेषां सर्वेषां तिलककरणे गुरुर्गृह्यगुरुर्वा पौष्टिकदण्डकमेव पठेत्। ततः श्वेतं मुक्ताजालाङ्कितं छत्रं तद्वंश्यकरेणानाययेत्। ततो गुरुर्गृह्यगुरुर्वा पुष्पाक्षतान् क्षिपन् इति मन्त्रं पठेत्। ॐ अर्हं नमो रत्नत्रयाय विमलाय निर्मलाय ऊर्ध्वोर्ध्वाधिकाय भुवनत्रयदुर्लभाय दुर्गतिच्छादनाय कामितप्रदाय विश्वप्रशस्याय भगवन् रत्नत्रय इहातपत्रे स्थिरो भव शान्तितुष्टिपुष्टिधृतिकीर्तिमतीः प्रवर्धय अर्हं ॐ इति छत्रपूजनमन्त्रः। ततः—सर्वोऽपि लोको दिननाथपादान्निधाय शीर्षे लभते मन्त्रार्ति। छत्रान्तरालेन महीश्वरोयं द्वितीयतां तस्य दधाति भूमौ ॥ १ ॥ इति काव्यं पठित्वा तद्वंश्यहस्तेन नृपशीर्षे छत्रं समुल्लासयेत्। ततश्चामरे समानीय पुष्पाक्षतैः पूजयन् गुरुर्गृह्यगुरुर्वा इति मन्त्रं पठेत्। यथा ॐ अर्हं नमोऽर्हते भगवते अष्टमहाप्रातिहार्यकलिताय ललिताय चतुःषष्टिसुरासुरेन्द्रपूजिताय सर्वसंपत्कराय सर्वापद्रवनिवारणाय सर्वविश्वत्रयधारणाय जगच्छरण्याय स्थिरोस्तु भगवन्नत्र तव प्रभावः अर्हं ॐ

इति चामरे अभिमन्त्र्य । ततः भूयादस्य पदन्यासः सर्वेष्वपि हि जन्तुषु । अन्यस्यापि पदन्यासो नास्मिन्कस्यापि जायतां ॥ १ ॥ इति पठित्वा वरकामिनीकराभ्यां तत्सेवककराभ्यां वा चामरे चालयेत् । ततः इन्द्रध्वजमत्स्यध्वजप्रभृतीन्ध्वजान् पुर ऊर्ध्वीकृत्य पुष्पाक्षतपूजनपूर्वं गुरुरिति मन्त्रं पठेत् । ॐ अर्हं नमो नमो जगन्मूर्धस्थिताय स्थिराय परमेष्ठिने भगवतेऽर्हते अर्हं ॐ इति ध्वजान्संपूज्य नृपस्य दक्षिणहस्तेन संस्पर्शयेत् । ततो वुक्कताम्रवुक्कप्रभृतिवाद्यगणं समानीय विविधपूजोपकरणैः संपूज्य इति पठेत् । यशःप्रतापौ नरनाथकस्य महीतले पन्नगविष्टपेपि । सुरेन्द्रलोके भवतामुदात्तौ निःस्वानशब्दानुगतौ स चैव ॥ १ ॥ मनाक् नृपहस्तेन वाद्यानि वादयेत् । एवं विधाय नृपस्य शिक्षां दद्यात् । यथापूर्वं नियमाः—देवान्गुरून्द्विजांश्चैव कुलज्येष्ठांश्च लिङ्गिनः । विहाय भवतान्येषां न विधेया नमस्कृतिः ॥ १ ॥ न स्पृष्टं क्वापि भोक्तव्यं नान्येन सह भोजनं । न श्राद्धभोजनं कार्यं भोक्तव्यं नान्यवेश्मनि ॥ २ ॥ अगम्यास्पृश्यनारीणां विधेयो नैव संगमः । परेण धारितं वस्त्रं न धार्यं भूषणं तथा ॥ ३ ॥ शयनं परशय्यायां आसनं च परासने । परपात्रे भोजनं च वर्जयेः सर्वदा नृप ॥ ४ ॥ नैवारोप्या गुरून्मुक्त्वा स्वशय्यासनवाजिषु । स्वरथे वारणे चैव पर्याणे क्रोड एव च ॥ ५ ॥ काञ्जिकं क्वथितान्नं च यवान्नं तैलमेव च । न भोक्तव्यं क्वचिद्राज्ञा पञ्चोदुम्बरजं फलं ॥६॥ इति नियमाः ॥ ॥ अथ नीतिशिष्या । अपराधसहस्रेपि योषिद्द्विजतपस्विनां । न वधो नाङ्गविच्छेदस्तेषां कार्यं प्रवासनं ॥ ७ ॥ देवद्विजगुरूणां च लिङ्गिनां च सदैव हि । अभ्युत्थाननमस्कारप्रभृत्या मानमाचरेः ॥८॥

॥ ३७९ ॥

धर्मार्थकामान्संदध्या अन्योन्यमविरोधितान् । पालयस्व प्रजाः सर्वाः स्मृत्वा स्मृत्वा क्षणे क्षणे ॥९॥ मन्त्रिभिः
संयुक्तश्चैव पीड्यमानां प्रजां नृप । क्षणे क्षणे पालयेथाः प्रमादं तत्र माचरेः ॥ १० ॥ अङ्गरक्षान्सौविदल्लान्म-
न्त्रिणो दण्डनायकान् । सूपकारान्द्वारपालान्कुर्याद्वंशक्रमागतान् ॥ ११ ॥ वर्जयेर्मृगयां द्यूतं वेश्यादासीपर-
स्त्रियः । सुरां वचनपारुष्यं तथा चैवार्थदूषणं ॥ १२ ॥ वृथाट्यां दण्डपारुष्यं वाद्यं गीतं तथाधिकं । नृत्याव-
लोकनं भूयो दिवानिद्रां च संततं ॥ १३ ॥ परोक्षनिन्दां व्यसनान्येतानि परिवर्जयेः । न्यायान्यायपरामर्शे
नीरक्षीरविवेचने ॥ १४ ॥ न पक्षपातो नोद्वेगस्त्वया कार्यः कदाचन । स्त्रीणां श्रीणां विपक्षाणां नीचानां
रक्षितागसां ॥ १५ ॥ मूर्खाणां चैव लुब्धानां मा विश्वासं कृथाः क्वचित् । देवगुर्वाराधने च स्वप्रजानां च
पालने ॥ १६ ॥ पोष्यपोषणकार्ये च मा कुर्याः प्रतिहस्तकान् । कार्यः संपदि नोत्सेको धैर्यच्छेदो नचापदि
॥ १७ ॥ एतद्द्वयं निगदितं बुधैरुत्तमलक्षणं । शास्त्रैर्दानैः कृपा भोज्यैः प्रासादैश्च जलाशयैः ॥ १८ ॥ यशस्कारैः
रमाभिश्च पूरयेः सकलामिलां । घातयेः शत्रुवंशानां पोषयेः सुहृदन्वयं ॥ १९ ॥ पालयेश्च प्रजाः सर्वाः स्वप-
रापक्षपोज्झितः । दुष्टान्प्रजापीडकांश्च तथा राज्यपदैषिणः ॥ २० ॥ गुरुदेवभिदः शत्रून् चौरान्प्राणैर्वियोजयेः ।
इत्येता भवता शिष्या करणीया दृढात्मना ॥ २१ ॥ दुष्टस्य दण्डः स्वजनस्य पूजा न्यायेन कोशस्य च संप्र-
वृद्धिः । अपक्षपातोऽरिषु राज्यरक्षा पञ्चैव यज्ञाः कथिता नृपाणां ॥ २२ ॥” इत्येवं शिक्षयित्वा नृपं पट्टाश्वं
पट्टहस्तिनं पट्टरथं समारोपयेत् । पट्टाश्वादीनां अभिषेकविधिः पुरोऽभिधारयते । ततो दिग्विजयादि कर्म

समादिशेत् । अनन्ययोग्यानि नृपचिह्नानि यथा—"श्वेतं छत्रं चामरे च सिते रक्तं स्थूलादि च । रक्तांशुकवृता शय्या कनकाल्लृंपासनं ॥ १ ॥ पादपीठं तथा श्वेतौ पर्याणशरधी अपि । इन्द्रध्वजो बुक्कवाद्यं जयकारोऽन्यवक्रतः ॥ २ ॥ मुद्रासुवर्णरूप्यादेरेतच्चिह्नं महीपतेः । स एव जायते सम्राट् राजसूयविधानतः ॥ ३ ॥ विजित्य सकलां पृथ्वीं यो शास्ति नृपमण्डलं । तस्याप्ययं विधिः कार्योऽभिषेके चक्रिणोपि हि ॥ ४ ॥ शेषा युद्धादिसंवित्तिर्विज्ञेया नीतिशास्त्रतः । इदमाचारशास्त्रं तु वर्धतेऽन्यकथापथैः ॥ ५ ॥" इति पदारोपाधिकारे क्षत्रियपदारोपे नृपपदारोपः संपूर्णः ॥ ॥ राज्ञीपदारोपस्तु भद्रासनाधिरोपणतिलककरणेन चामरचालनेन । तच्छिक्षा यथा—"वत्से कुलत्रयस्यापि भूयाः कीर्तिप्रकाशिनी । परमेश्वरवद्भक्तिं दध्याः स्वीये च भर्तरि ॥१॥ सुरेन्द्रपदलाभेपि प्राणनाशेपि वर्णिनि । पतिव्रताव्रतस्यास्य मा विदध्याद्विघातनं ॥ २ ॥ स्वबन्धून्स्वसुतांश्चैव तथा सर्वजनानपि । पश्येः समानदृष्ट्या यत् त्वं जनस्याम्बिकासमा ॥ ३ ॥ दीनेषु कारसंस्थेषु याचमानेषु जन्तुषु । नृपेण निगृहीतेषु दयां कुर्यान्निरन्तरं ॥ ४ ॥ लोकोत्तरेषु सर्वेषु तथा वै लौकिकेषु च । महेषु तत्तन्नियमोत्सवादि परिभावयेः ॥ ५ ॥ पत्यौ च व्यसनासक्ते मध्यस्थमपि धारयेः । कोशस्य च परां रक्षां विदध्याः सुकृतस्य च ॥ ६ ॥ पान्थेषु साधुषु तथा विद्वत्सु गुणवत्सु च । विशेषं पालनं कुर्यान्नृपेषु भाग्यतेषु च ॥ ७ ॥ अवरोधजनस्यापि पालनं शासनं तथा । विदधीथा यथा तस्य स्याद्भक्तं सभयं मनः ॥ ८ ॥ रसवत्यादिकार्येषु यत्नः कार्यः सदाऽवने । दानं च प्रवरं दद्या यशो विपुलमर्जयेः ॥ ९ ॥ सपत्नीमण्डलं सर्वं स्वस्-

यन्परिपालयेत् । तदपत्यान्यौरसवत्पोषयेः करुणापरा ॥ १० ॥ अत्यन्तविषयासक्तिं हृदि कुर्या न कर्हिचित् । राज्यव्यापारविषये न खेदं नित्यमाचरेः ॥ ११ ॥ त्रिवर्गसाधनं कुर्या अविरोधात्परस्परं । इत्यादिशिक्षादानेन शिक्षयेन्मतिदीं गुरुः ॥ १२ ॥" अस्या उपकरणानि—"चामरे स्वर्णभृङ्गारश्छत्रं शिखिकलापजं । किरीटं पश्चशिगरं वेत्रासनमनुत्तरं ॥ १३ ॥ चलने चामरमयी पताका मत्स्यकेतनं । गजारोहश्च पुरतो गीतं वाद्यं नरेन्द्रवत् ॥ १४ ॥ इति पदारोपाधिकारे राज्ञीपदारोपविधिः ॥

अथ सामन्तपदारोपः । तत्र सामन्ता महीश्वरस्य सोदरास्तद्भूमिभागभुजो राजकुला इति प्रसिद्धाः । अथवा किंचिद्भूमिमण्डलस्वामिनो राजशब्दधारिणो मध्यस्थसप्तराज्याङ्गधृतो मुद्राश्वेतच्छत्रादिवर्जिता महाभूपत्याज्ञावशंवदाः सामन्ताः कथ्यन्ते तेषां पदारोपविधिः । तेषां वस्तुस्तोमः—सिंहासनश्वेतच्छत्रस्वर्णभृङ्गारचन्द्रध्वजकुम्भसिंहनादाश्वेतपर्याणरक्तपटमण्डपामुद्रावर्जितो भूपतिवत् । अभिषेको नास्ति । तिलक एव विशेषः । स्वगुरुपितृभगिनीकरात् ततो महाभूपतिकरात् । एतत्कर्ममन्त्रास्त एव । शिष्याविधिः स एव । स्वदेशानुसारेण विशेषश्चायं । "आज्ञां महामहीशस्य खण्डयेन्न कदाचन । अत्यन्तयत्निना नैव विरोधं क्वापि वर्धयेः ॥ १ ॥" अस्योपकरणानि—"चतुरङ्गबलं चैव धवलं पटमण्डपं । वेत्रासनं चामरे च छत्रं शिखिकलापजं ॥ २ ॥ केचिद्रक्तं च हरितं महाभूपसमर्पितं । छत्रं सामन्तवृन्दस्य कथयन्ति विचक्षणाः ॥ ३ ॥ मत्स्यध्वजादयः सर्वे केतनास्तस्य चाग्रतः । कुम्भवर्जितमातोद्यं पर्याणं श्वेतवर्जितं ॥ ४ ॥ आज्ञा स्वमण्डले चापि

तस्यैव परिकीर्तिता । किरीटं पञ्चशिखरमाळू रूप्यमयी तथा ॥ ५ ॥" सामन्तपत्नीनामपि पदारोपः सामन्तवदेव । शिष्याविधिः स एव । छत्रचामरवर्जितान्युपकरणानि सामन्तवत् । च्छिष्याविधिः स एव । इति पदारोपाधिकारे सामन्तपदारोपविधिः ॥ ॥ अथ मण्डलेश्वरत्वं । तत्र मण्डलेश्वराः कियन्नगरग्रामाधिपतयो महानृपसामन्ताज्ञावशंवदाः राजानका इति प्रसिद्धाः तेषां पदारोपो गुरुजनमहाभूपतिसामन्तकृतं तिलकमात्रमेव । शिष्या सामन्तवत् । तस्योपकरणानि यथा—"अश्वपत्तिमयं सैन्यं तथा वेत्रासनं पुनः । पटहो दुन्दुभिर्वाद्यं केतनं चामराङ्कितं ॥ १ ॥ पटगेहानि शुभ्राणि रथश्चैकः स्ववाहने । मण्डलेशस्य वस्तूनि कल्पयेत्प्रभुतागमे ॥ २ ॥ गजा रथाश्चामरे च सर्वछत्राणि वुक्कं । ताम्रवाद्यं मत्स्यकेतुः प्रणामो जयपूर्वकः ॥ ३ ॥ पट्टाभिषेको नारीणां मण्डलेशपदार्पणं । आरोहश्चैव हस्त्यादौ गीतं वाद्यं नृपान्तिके ॥ ४ ॥ भोजने जलपानादौ सुधावचनकीर्तनं । इत्यादिमण्डलेशानां न कदाचन विद्यते ॥ ५ ॥ इति पदारोपाधिकारे मण्डलेशपदस्थापनविधिः ॥ ॥ अथ देशमण्डलाधिपत्यं । तत्र देशमण्डलाधिपतयो राजधानीनगराधिपत्यवर्जिताः कियद्ग्रामाधिपतयः ठकुरा इति लोकप्रसिद्धास्तेषां पदारोपविधिः मण्डलेश्वरवत् । किंच मण्डलेश्वरकृतेपि तिलके तेषां पदारोपो भवति । तेषामुपकरणानि ध्वजवेत्रासनरथारोहवर्जितानि मण्डलेश्वरवत् । तेषां पर्यङ्कबन्ध एव पर्षदि नतु वेत्रासनादि । शिष्या मण्डलेश्वरवत् । इति पदारोपो देशमण्डलाधिपत्यपदारोपविधिः ॥ ॥ ग्रामाधिपतयस्तु स्वस्वैकग्रामवासिनः सामन्तमण्डलाधिपतीनां ग्रामाधिपत्ये तु तिल-

कादि नास्ति किंतु महानृपसामन्तमण्डलेश्वरादिदत्तं वस्त्रं दण्डं खड्गादि तत्पदारोपहेतु । अस्योपकरणानि —"तुरगारोहणं चैव दण्डादि क्षितिपार्पितं । पत्तिभिः सैन्यसंयोगो वाद्यं डिण्डिम एककः ॥ १ ॥" अस्य शिक्षा—"ग्रामिभक्तिः सदा कार्या कार्यं न्यायविचारणं । सर्वोपि ग्राम्यलोकस्तु ज्ञातव्यो निजबन्धुवत् ॥ २ ॥ सर्वैश्च विनयः कार्यः प्रियवादित्वमेव च । क्रुद्धेषु कार्या ग्राम्येषु न कार्या भवता क्रुधा ॥ ३ ॥ नृपादौ न्यायदानेन रक्षणीयो जनस्त्वया । दण्ड्या अदण्ड्या ग्राम्याश्च वाच्याः स्वामिपुरस्त्वया ॥ ४ ॥ अहर्निशं रक्षणीया ग्राम्या जागरणात्त्वया । पान्थानां यात्रिकाणां च न विधाप्य उपद्रवः ॥ ५ ॥ कर्षणात्पाशुपाल्याच्च भृतिर्ग्राम्यकरात्तव । इत्यादिशिक्षणीयोसौ गुरुणा ग्रामचिन्तकः ॥ ६ ॥" इति पदारोपे ग्रामाधिपतिपदारोपः ॥ ॥ अथ मन्त्रित्वं । मन्त्रिणोपि सर्वकार्यकारिणः शौण्डीर्यमतिमन्तो नृपस्य जीवितमिव भवन्ति । मन्त्रिपदयोग्यपुरुषलक्षणं यथा—"कुलीनः कुशलो धीरो दाता सत्यसमाश्रितः । न्यायैकनिष्ठो मेधावी शूरः शास्त्रविचक्षणः ॥ १ ॥ सर्वव्यसननिर्मुक्तो दण्डनीतिविशारदः । पुरुषान्तरविज्ञाता सत्यासत्यपरीक्षकः ॥ २ ॥ कृतापराधे सोदर्ये शत्रावपि समाशयः । धर्मकर्मरतो नित्यमनागतविमर्शकः ॥ ३ ॥ अत्यक्तिक्यादिमतिषु धनगृध्नुष्वपि बद्धधीः । भक्तः षड्दर्शनेष्वेव गुरुदेवाद्युपासकः ॥ ४ ॥ नित्यमाचारनिरतः पापकर्मपराङ्मुखः । सदा विचारपण्यायं नीरक्षीरविवेचनं ॥ ५ ॥ कुलक्रमागतं मन्त्रं नृपयोग्यमुदीरयन् । ईदृशः पुरुषो मन्त्री जायते राज्यवृद्धिकृत् ॥ ६ ॥ ॥ अथ मण्डलाधिपतिदेशमण्डलाधिपतिग्रामाधिपतिमन्त्रिसेनापतिकर्माधि-

कारिप्रभृतयः तिलकमुद्राप्रासितः पूर्वं पश्चाच्च शान्तिकं पौष्टिकं कारयन्तीति सर्वयुक्तिः। मन्त्रिपदे नृपहस्तात् मुद्रावस्त्रादिप्राप्तिरेव पदारोपः। अस्योपकरणानि नृपादेशप्रसादलभ्यानि न तत्र नियमः। तस्य शिष्या सविस्तरा—सामनीतिकामन्दकीनीतिचाणक्यनीतिश्रावणेन गुरुणा देया। इति पदारोपाधिकारे मन्त्रिपदारोपविधिः॥ ॥ अथ सेनापतित्वं। तत्र सेनापतयः समस्तनृपकटकयोधननिवर्तनबद्धकक्षाः नृपस्य प्राणा इव भवन्ति। सेनापतिलक्षणं यथा—"शूरः प्रियंवदो मानी बुद्धिमान्बहुबन्धुभाक्। सपक्षो बहुभृत्यश्च सर्वदेशपथानुगः॥ १॥ दाता सौभाग्यवान्वाग्मी विश्वासपरिवर्जितः। कृतास्त्रः कृतयुद्धश्च सैन्यावेशकृतश्रमः॥ २॥ अहर्निशं निःप्रमादः सर्वव्यसनवर्जितः। सेनाधिपत्ये योग्यः स्यादीदृशः पुरुषः सुधीः॥ ३॥" सेनाधिपतीनां पदारोपः नृपदत्तवस्त्रसुवर्णदण्डरूपः। केचिच्च सेनापतीनां स्वामिहस्तात्तिलकमप्युदीरयन्ति। तस्य शिष्या यथा—"त्वया परबलावेशो बुद्ध्या बाहुबलेन च। भञ्जनीयो नो विधेयो विश्वासः कस्यचित्परं॥ १॥ परस्य मण्डलं प्राप्य कार्या नाऽनवधानता। अल्पेपि परसैन्ये च महान्कार्य उपक्रमः॥ २॥ देशं कालं बलं पक्षं षाड्गुण्यं शक्तिसंगमं। विलोक्य भवता शत्रुरभियोज्यो न चान्यथा॥ ३॥ स्वस्वामिनो जयो देयः कार्यं स्वप्राणरक्षणं। दण्डनायकमुत्कृष्टमित्येवं शिक्षयेद्गुरुः॥ ४॥ इति पदारोपाधिकारे सेनापतिपदारोपविधिः॥ ॥ अथ कर्माधिकारिपदं। तत्र कर्माधिकारिणः। प्रतीहारः कोट्टपतिः दहपतिः नलरक्षकः शुल्काधिपतिः रूप्याधिपतिः स्वर्णाधिपतिः कारुकाधिपतिः अन्तःपुराधिपतिः शूद्राधिपतिः किंकराधिपतिः रथा-

नीकाधिपतिः गजानीकाधिपतिः तुरगानीकाधिपतिः पदात्यनीकाधिपतिः सैन्यसंवाहकः धर्माधिकारी भा-
ण्डागारिकः कोष्ठागारिकः पुरोहितसंसप्तकप्रभृतयो भवन्ति । तेषां सर्वेषां लक्षणानि यथा—"कुलीनाः
कुशला धीराः शूराः शास्त्रविशारदाः । स्वामिभक्ता धर्मरताः प्रजावात्सल्यशालिनः ॥ १ ॥ सर्वव्यसननि-
र्मुक्ताः शुचयो लोभवर्जिताः । समाशयाश्च सर्वेषु नृपवस्तुसुरक्षकाः ॥ २ ॥ परापेक्षाविनिर्मुक्ता गुरुभक्ताः
प्रियंवदाः । महाशया महाभाग्या धर्मे न्याये सदा रताः ॥ ३ ॥ अप्रमादाः प्रसन्नाश्च प्रायः कीर्तिप्रिया अपि ।
कर्माधिकारे योग्याः स्युरीदृशाः पुरुषाः परं ॥ ४ ॥" एतेषां सर्वेषां कर्माधिकारिणां पदारोपो नृपादेशात्तद्-
साम्यद्वण्डाङ्कुशकशावीरमुष्टिभिर्वचनमात्रैर्वा भवति । तेषां सर्वेषां शिष्या यथा—"स्वामिना यदिदं कर्म
न्यस्तं विश्वासतस्त्वयि । अत्र प्रमादो नो कार्यो विधेयं स्वामिवाञ्छितं ॥ १ ॥ प्रजा न पीडनीयास्तु स्वपक्ष्यं
पत्युर्न कर्म च । अर्जनीयं नयाद्वित्तं न हेयं सत्वमुत्तमं ॥ २ ॥ प्रजाधने नृपधने न कार्या कर्हिचित्स्पृहा ।
एवं शिक्षा सदा देया सर्वकर्माधिकारिषु ॥ ३ ॥" इति पदारोपाधिकारे कर्माधिकारिपदारोपविधिः ॥ ॥
अथ वैश्यशूद्रयोः मन्त्रिसेनाधिपतिकर्माधिकारिपदानि प्रसन्ननृपदत्तानि भवन्ति । तेषां विधिः पुरातन एव
किंतु श्रेष्ठिसार्थवाहगृहपतिपदान्यधिकानि । तत्र श्रेष्ठिनस्सर्ववणिग्वर्गश्रेष्ठा नृपपूज्याः कार्यकारिणो भव-
न्ति । सार्थवाहाः सर्वदेशेषु सर्वभूपतिमानिताः विविधवाणिज्याः सार्थस्वामिनो भवन्ति । गृहपतयस्तु
नृपाणां सर्वद्रव्याधिकारनिरता विश्वासपात्रं भवन्ति । तेषां पदारोपो नृपादेश एव । शिक्षा कर्माधिकारि-

सदृशी । इति पदारोपाधिकारे वैश्यशूद्रपदारोपविधिः ॥ ॥ अथ महाशूद्रा आभीराः तेषां पदारोपो ग्रामाध्यक्षत्वं । स च नृपादेशादेव । शिक्षा तेषां ग्रामाधिपतित्वसदृशी पूर्वोक्तैव ॥ ॥ कारूणां च पदारोपः स्वस्वज्ञातिमुख्यत्वकरणं स च नृपदत्तैर्वस्त्रादिभिः स्वर्णमयरूप्यमयैश्च तत्तत्कारूपकरणैर्भवति । तेषां शिक्षा कर्माधिकारिसदृशी । इति पदारोपाधिकारे महाशूद्रकारुपदारोपविधिः ॥ ॥ अथ पशूनां पदारोपः । तत्र हस्त्यश्ववृषभादयो मुख्यत्वमानीताः श्रेष्ठाः पदमाप्नुवन्ति । ते च पूर्वं पञ्चगव्यतीर्थोदकगन्धोदकैः संस्नापिताः प्रशस्यवस्त्राच्छादिताः यक्षकर्दमपुष्पमालादिपूजिताः गुर्वग्रे स्थाप्याः । गुरुश्च प्रतिष्ठाधिकारोक्तैस्तदधिवासनमन्त्रैस्तानधिवासयेत् । ततश्च नृपादिस्तान्सम्यक्संपूज्य अध्यास्ते । इति पशूनां पदारोपणविधिः ॥

अथ चातुर्वर्ण्यप्रशस्या तीर्थंकरनामकर्मकृतानुबन्धा भोगमोक्षदायिनी सर्ववाञ्छितफलप्रदा चक्रवर्तिपदादप्युत्कृष्टा सत्या संघपतिपदारोपयुक्तिरभिधीयते । तत्र सर्वर्द्धिसम्पन्नः पुरुषः सर्वविशिष्टगृहस्थगुणश्रावकगुणसहितो विशुद्धवासनावान् संपूर्णधनः मीलितचतुर्विधसंघो विमुक्तक्रोधमानमायालोभो गुरुदेवभक्तोऽनादितीर्थयात्रायै कल्पादितीर्थयात्रायै वा संघपतिपदं गृह्णाति तस्य चायं विधिः । तत्र लग्नं विवाहदीक्षाप्रतिष्ठासमं प्रास्थानिकनक्षत्रयुक्तं च । तत्र वर्षमासदिनलग्नानि सर्वाणि विवाहवत् शुद्धानि गवेष्यन्ते पदारोपप्रस्थानयोग्यानि नक्षत्राणि च । तथा पूर्वं तद्गृहे शान्तिकं पौष्टिकं च विदध्यात् । ततो लग्नवेलायां संप्राप्तायां महावाद्येषु वाद्यमानेषु महादानेषु दीयमानेषु मङ्गलेषु गीयमानेषु बन्दिचारणेषु पठत्सु चतुर्विधसंघ-

समक्षं गुरुर्गृहगुरुर्वा संघपतिं पीठे निवेशयेत् सभार्यं योजितग्रन्थिं च। ततस्तच्छरीरे क्षिप ॐ स्वाहा इत्या-
दिमन्त्रैः शरीररक्षां कुर्यात् सभार्यस्य। ततः परिधृतमनोज्ञवस्त्राभरणं संघपतिं सभार्यं शान्तिकजलैः कुशा-
ग्रगृहीतैरभिषिञ्चेत्। ततः ॐ शिरसि श्रीं भाले ह्रीं नयनयोः श्रीं कर्णयोः जं मुखे वं कण्ठे ह्रीं स्कन्धयोः भ्रं
भुजयोः क्ष्म्ल्व्यूँ हृदि ऐं नाभौ व्रूं ऊर्वोः एवं चन्दनार्चनपूर्वं संघपतेः सभार्यस्य शरीरे वर्णन्यासं कुर्यात्। तत-
श्चन्दनं पौष्टिकदण्डकं पठन् संघपतेः सभार्यस्य तिलकं कुर्यात्। अक्षतान्यारोपयेत्। अष्टविधमर्घं च
दद्यात्। वासक्षेपं व्रतारम्भविधिना कुर्यात्। ततो गुरौ पुनर्निषद्यां निषण्णे सर्वेऽप्यन्ये तपोधनाः श्रावकश्रा-
विकादयस्तिलकं कुर्वन्ति। ततः संघपतिर्गुरवे श्वेतकौशेयं स्वर्णमणिकङ्कणं मुद्रासहितं दद्यात्। ततः सर्व-
साधुभ्यो वस्त्रदानं। संघपूजा महाविस्तरेण विधेया। ततः संघपतिः माण्डलिकमहाधरभाण्डागारिककोट्ट-
पतिपाणिग्रहप्रभृतीन् संघानुसारेण तिलककरणैः परिकल्पयेत्। एवं संघपतिपदारोपणं। तस्योपकरणानि
यथा। "देवालयो बिम्बसमन्वितश्च तथातपत्रं चमरौ च कुम्भाः। ध्वजा महातोद्यसमुच्चयस्य चतुर्विधं
सैन्यमनुत्तरं च ॥ १ ॥ देवालयार्थं शकटाश्च शुभ्रवर्णौ च तस्मिन्बलिनौ महोक्षौ। कौसुम्भवस्त्रं वृषतूणि-
कासु देवालयस्यावरणं विशिष्टं ॥ २ ॥ सघुर्घुरं नूपुरमण्डलं च महोक्षभूषाकरणं प्रशस्तं। घण्टास्तथा काञ्च-
नकुम्भयुक्तिचतुष्टयं हेममयं च पीठं ॥ ३ ॥ कुम्भाक्षतादेश्च विशिष्टपीठान्यारात्रिकं षोडश धातुकुम्भाः।
श्रीखण्डकर्पूरनिघर्षहेतोः पाषाणपात्रे वरचन्दनं च ॥ ४ ॥ सतालवृन्तं शुभधूपपात्रं निर्माजनं कुम्भपिधा-

नवस्त्रं । करण्डिकामेरुरथाम्बुकुण्डं भृङ्गारुरर्चाकरमानुषाश्च ॥ ५ ॥ नैवेद्यपात्राणि चतुष्किकाश्च चन्द्रोदयाः प्रोन्नतदीपकाश्च । तदर्थगन्त्री लघुदीपकाश्च वाद्यानि सर्वाणि मनोहराणि ॥ ६ ॥ तद्वादका आर्हतगायनाश्च महाध्वजाः सद्गुरुविष्टराश्च । दौवारिकाः सत्पटमण्डपाश्च नानाप्रकारा धवला निवासे ॥ ७ ॥ प्रस्थानकाले बहुसंघपूजा जिनार्चनं बन्दिविमोचनं च । सत्साधुयोग्याः शकटाश्च तेषां भक्ताम्बुचिन्ताभृशसेवनं च ॥ ८ ॥ महाधरा माण्डलिका अमात्या दौवारिकाः पार्ष्णिधरा भटाश्च । वाचंयमार्थे पटमण्डपाश्च कौद्दालिकाः कारुजनाश्च सर्वे ॥ ९ ॥ महाचरुस्ताम्रकटाहिकाश्च सत्सूपकारा वणिजः सहट्टाः । पानीयशाला तुरगोपयोगिवस्तूनि वैद्या बहुबन्दिनश्च ॥ १० ॥ पट्टालया वस्तुषु भिन्नरूपा मनुष्यवाह्यानि सुखासनानि । भोज्यार्थपात्राणि च शुष्कशाकास्तथा च ताम्बूलविशेषयुक्तिः ॥ ११ ॥ लघुप्रयाणं सजले सवृक्षे वह्निन्धने भूमिपदे निवासः । मयूरपिच्छातपवारणानि मार्गे च चैत्यानि विलोक्य सम्यक् ॥ १२ ॥ महापूजां ध्वजारोपं महः संघार्चनं महत् । विधाय तद्वासिमुनीन्सार्थे कृत्वा ततश्चलेत् ॥ १३ ॥ एवं पुरेषु ग्रामेषु येषु येषु जिनालयाः । तेषु तेषु ध्वजारोपं महापूजां विधापयेत् ॥ १४ ॥" कुलकं । इति संघपतेरुपकरणानि ॥ ततोऽध्यवसिततीर्थं संघपतिः संप्राप्य तीर्थदर्शनमात्रेण महोत्सवं महादानं कुर्यात् । ततः संघपतिः समस्तसंघसहितो गुरून्साधूनग्रे कृत्वा महार्घ्यरत्नस्वर्णमुद्राफलोपायनहस्तोऽर्हदग्रे ढौकनिकां कृत्वा दण्डवत्प्रणामं विधाय शक्रस्तवपाठेन तीर्थेशान्वन्देत । ततो बृहत्स्नात्रविधिना स्नात्रं महापूजा चैत्यपरिपाटी जिनमूर्तौ बहुमूल्याभरणरोपणं

जीर्णोद्धारनवचैत्यकरणं महाध्वजारोपणं अनिवारितान्नदानं महासंघपूजा इन्द्रपदमालारोपणं इत्यादि कर्माणि परश्रायर्कः कार्याणि । इन्द्रमहाधरमालाधरपाणिग्राहादिभिरपि महापूजाध्वजारोपसंघपूजा विधेया । इति तीर्थे संघपतिकार्याणि । ततस्तथैव रीत्या गृहे समागत्य देवभोज्यदानं संघवात्सल्यं संघपूजा च । इति पदारोपाधिकारे संघपतिपदारोपविधिः ॥

अथ मुद्राविचारः । प्रतिष्ठायां पूजने च पदारोपे समस्तके । ध्याने मन्त्रोपासने च तथा वासाभिमन्त्रणे ॥ १ ॥ सर्वासु नन्दिषु पुनर्मुद्राकरणमिष्यते । तदर्थं संग्रहस्तासां प्रसंगादभिधीयते ॥ २ ॥ परमेष्टिमयीमुद्रा १ मांङ्गरी २ यज्ञमुद्रिका ३ । तथा गरुडमुद्रा च ४ जिनमुद्रा ५ तथैव च ॥ ३ ॥ ततो मुक्ताशुक्तिमुद्रा ६ ऽञ्जलिमुद्रा ७ च सौरभी ८ । पद्ममुद्रा ९ चक्रमुद्रा १० मुद्रा सौभाग्यनामका ११ ॥ ४ ॥ यथाजाता १२ ऽऽरात्रिकी च १३ वीरमुद्रा १४ विनीतिका १५ । प्रार्थना १६ पर्शुमुद्रा च १७ छत्रमुद्रा १८ प्रियंकरी १९ ॥ ५ ॥ तथा गणधरीमुद्रा २० योगमुद्रा २१ तथैव च । ततः कच्छपमुद्रा २२ च धनुःसंधानमुद्रिका २३ ॥ ६ ॥ योनिमुद्रा २४ व्रणमुद्रा २५ सिंहमुद्रा २६ च शक्तिजा २७ । शङ्ख २८ पाश २९ खड्ग ३० कुन्त ३१ वृक्ष ३२ शाल्मलिमुद्रिका ३३ ॥ ७ ॥ दीप ३४ कन्दुक ३५ मुद्राख्य मुद्रा नागफणाभिधा ३६ । माला ३७ पताका ३८ घण्टा ३९ च प्रायश्चित्तविशोधिनी ४० ॥८॥ ज्ञानकल्पलता नाम ४१ मोक्षकल्पलता ४२ तथा । व्याख्यानमासां निर्दिष्टं क्रमेण श्रूयतां पुरः ॥ ९ ॥ उत्तानहस्तद्वयेन वेणीवद्धं विधायाङ्गुष्ठाभ्यां कनिष्ठिके तर्जनीभ्यां मध्यमे संगृह्याना-

मिके समीकुर्यादिति परमेष्ठिमुद्रा १, वामकलाचिकाया उपरि दक्षिणकलाचिकां निधाय पराङ्मुखहस्ताभ्यामङ्गुली विदर्भ्य तथास्थितावेव हस्तौ परिवर्त्य अङ्गुलीमध्ये विदध्यात्साऽमुद्गरमुद्रा दुष्टभञ्जनी २, वामहस्तोपरि दक्षिणकरं कृत्वा कनिष्ठाङ्गुष्ठाभ्यां मणिबन्धं संवेष्ट्य शेषाङ्गुलीनां विस्फारितप्रसारणेन वज्रमुद्रा विषहरी ३, आत्मनोभिमुखदक्षिणहस्तकनिष्ठिकया वामकनिष्ठिकां संगृह्याधःपरावर्तितहस्ताभ्यां गरुडमुद्रा ४, चतुरङ्गुलमग्रतः पादयोरन्तरं किंचिन्न्यूनं च पृष्ठतः कृत्वा समपादकायोत्सर्गेण जिनमुद्रा सुप्रतिष्ठाकरी ५, किंचिद्गर्भितौ हस्तौ समौ विधाय ललाटदेशयोजनेन मुक्ताशुक्तिमुद्रापुण्यवृद्धिकरी ६, किंचिदाकुञ्चितकरशाखौ पाणी विधाऽर्पयेदित्यञ्जलिमुद्रा विनयकरी ७, अन्योन्यग्रथिताङ्गुलीषु कनिष्ठिकानामिकयोर्मध्यमातर्जन्योश्च संयोजनेन गोस्तनाकारा सुरभिमुद्रा वाञ्छितकरी ८, पद्माकारौ करौ कृत्वा मध्येऽङ्गुष्ठौ कर्णिकाकारौ विन्यस्येति पद्ममुद्रा लक्ष्मीप्रदा ९, वामहस्ततले दक्षिणहस्ततलं निवेश्य करशाखौ विरलीकृत्य प्रसारयेदिति चक्रमुद्रा सर्वरक्षाकरी १०, परस्पराभिमुखौ ग्रथिताङ्गुलीकौ करौ कृत्वा तर्जनीभ्यामनामिके गृहीत्वा मध्यमे प्रसारयन् तन्मध्येऽङ्गुष्ठद्वयं निक्षिपेदिति सौभाग्यमुद्रा सौभाग्यकरी ११, हस्तद्वयस्य शिप्राकारकृतस्य यमलरीत्या स्थापितस्य मुखोपरि स्थापनं वन्दनवत् यथाजाता मुद्रा कर्मक्षयकरी १२, करद्वयाङ्गुल्योः परस्परमीलितयोः पञ्चसु स्थानेषु शिखावत्स्थापनं आरात्रिकमुद्रा पूजाप्रापणकरी १३, सुखासनस्थस्य वरदाकारौ हस्तौ वीरमुद्रा सर्वरक्षाकरी १४, नम्रशिरसः करयोजने कृते विनीतमुद्रा पूजाद्युपयोगिनी १५, प्रसारितौ करौ

योजितकरभौ प्रार्थनामुद्रा वाञ्छितप्रदा १६, आकुञ्चिते दक्षिणहस्ते प्रसारिते भूसंमुखं कृते वामहस्तेन धृते सर्पमुद्रा विषापहारिणी १७, मुकुलीकृतपञ्चाङ्गुलौ वामहस्ते प्रसारितदक्षिणकरस्थापनं छत्रमुद्रा प्रभुत्वकरी १८, पक्षाकारकृतयोर्भुजयोः स्कन्धद्वये हस्तस्थापनं प्रियंकरी मुद्रा स्तम्भनकरी १९, पद्मासनस्थितस्य वामहस्तस्य उत्सङ्गस्थापनं दक्षिणहस्तस्य सजापस्य हृदि निधानं गणधरमुद्रा सर्वलब्धिकरी २०, योगपट्टासनस्थस्य वामहस्तकरौ जानुस्थं वा शिरो योगमुद्रा २१, स्वेच्छासुखासनासीनस्य वामहस्ते प्रसारिते उत्सङ्गधृते तदुपरि दक्षिणहस्ते कच्छपाकारधृते कच्छपमुद्रा स्तम्भनकरी २२, पद्मासनस्थस्य वामबाहौ प्रलम्बिते भूमावलग्ने दक्षिणे करे च दक्षिणाभागे बद्धमुष्टौ ऊर्ध्वस्थितस्य वा सैव स्थितिः धनुःसंधानमुद्रा सर्वभयहरी २३, सौभाग्यमुद्रेव मध्यमाङ्गुष्ठमध्ये स्थापितया कनिष्ठिकया योनिमुद्रा वाञ्छितार्थकरी २४, सुखासनस्थस्य दक्षिणकरे बद्धमुष्टा-वूर्ध्वीकृते दण्डमुद्रा कुलवृद्धिकरी २५, उत्कटिकासनस्थस्य वामकरे भूमौ स्थापिते दक्षिणकरे च अभयवत्कृते सिंहमुद्रा भयहरी २६, करद्वयमध्यमासावित्र्योरग्राग्रयोजितयोः शक्तिमुद्रा प्रतिष्ठाद्युपयोगिनी २७, तर्जनीमध्यमयोरङ्गुष्ठाधःस्थापितयोः सावित्रीकनिष्ठिकाप्रसारणात् शङ्खमुद्रा सर्वार्थजयदायिनी २८, कनिष्ठातर्जन्योर्ध्वजाकृतीकृतयोर्मध्यमासावित्र्योर्वक्रीकरणं पाशमुद्रा स्तम्भकरी २९, हस्तौ मीलिताङ्गुली सरलीकृतौ खड्गवत्स्थापितौ खड्गमुद्रा विघ्नविच्छेदिनी ३०, कर्णपार्श्वे बद्धमुष्टौ दक्षिणकरे धारिते कुन्तमुद्रा जनरक्षाकरी ३१, दक्षिणबाहौ आकुञ्चित प्रसारिताङ्गुलौ पाणौ वृक्षमुद्रा शान्तिकरी ३२, बाहुद्वये परस्परं वल्लीवद्वेष्टिते कराङ्गु-

लीनां कङ्कतीकरणं शाल्मलीमुद्रा ज्ञानप्रकाशिनी ३३, दक्षिणकरे अधोमुखे प्रसारिताङ्गुलौ निरालम्बे स्थापिते कन्दुकमुद्रा विद्वेषणकरी ३४, दक्षिणहस्तस्य ऊर्ध्वीकृतस्य किंचिदाकुञ्चिताङ्गुलीयोजनं नागफणमुद्रा विषलूतादिहरी ३५, दक्षिणे करे योजितप्रदेशिन्यङ्गुष्ठे निरालम्बधारिते मालामुद्रा पूजाकर्मोपयोगिनी ३६, ऊर्ध्वीकृते दक्षिणे भुजे करतले च लम्बिते पताकामुद्रा सर्वविघ्नोपशान्तये ३७, बद्धमुष्टेः करस्य कम्पनं घण्टामुद्रा पूजाद्युपयोगिनी ३८, दक्षिणकरस्य वामकराच्छोटनं प्रायश्चित्तविशोधिनी मुद्रा यथाजाताभिधाना ३९, नासाग्रे दक्षिणाङ्गुष्ठतर्जन्योः स्थापनं नाभौ वा भाले वा भ्रूमध्ये वा ज्ञानकल्पलतामुद्रा योगसिद्धिकरी ४०, अङ्गुष्ठे अङ्गुलीसमूहात्पृथक्कृते अङ्गुलीसमूहे चलिते नाभेरारभ्य द्वादशान्तनयनं मोक्षकल्पलतामुद्रा यथार्थाभिधाना ४१, भुजयोः कूर्परादारभ्य मीलितयोरङ्गुलीप्रसारणं कल्पवृक्षमुद्रा सर्ववाञ्छितप्रदा ४२। द्विचत्वारिंशदाख्याता एवं मुद्रा महागमे। कार्यकार्योपयोगिन्य इतराः कल्पिता बुधैः ॥ १ ॥ अन्तर्धानं पुनस्तासामेतास्वेव प्रजायते। तेन कर्मान्तराण्येव मुद्राख्याविदितानि च ॥२॥ अङ्कुशाकारकरणादाङ्कुशी पाशमध्यगा। स्नानमाकुञ्चितं चैव तत्तत्कर्मवदीरितं ॥३॥ समाधानस्य मुद्रास्तु खसमाधानतोऽखिलाः। मुद्राकवचसंज्ञा तु देहरक्षाविधानतः ॥४॥ तर्जन्यागममुद्रास्तु तत्तचेष्टाविधानतः। आच्छोटनादिकर्माणि तथा दिग्बन्धनानि च ॥ ५ ॥ कर्मान्तरैररसंख्यानि विज्ञेयानि मनीषिभिः। एवं मुद्राः समस्तास्तु कथिताः शान्तिकादिषु ॥ ६ ॥ कर्मान्तरेषु सर्वेषु गृहियत्यनुसारिषु। तथोभयोचितेष्वेव मुद्रा एव हि कारणं ॥ ७ ॥ इति पदारोपाधिकारे मुद्राकीर्तनं संपूर्ण ॥

अथ नामकरणविधिः । नाम स्यात्सर्वलोकेषु सर्ववस्तुषु संस्थितं । सर्वजीवेषु कार्येषु सर्वसंयोजनेष्वपि
॥ १ ॥ शब्दरूपरसस्पर्शगन्धा वै येषु संस्थिताः । तथा प्रभावास्ते सर्वे ख्यातिमायान्ति नामभिः ॥ २ ॥ तानि
नामानि शब्देषु शास्त्रेषु त्रिविधानि च । रूढयौगिकमिश्राणि तद्भेदेषां च कीर्तनं ॥ ३ ॥ उक्ता या नामसं-
पत्तिः शास्त्रेषु सुखदायिनी । शिष्याणां सेवकानां च न शुभा तद्विपर्ययात् ॥ ४ ॥ येषां च वस्तुवृन्दानां
स्वभावान्नाम पूर्वजं । देशकार्यादिभेदेन परिवर्त्यं न तत्क्वचित् ॥ ५ ॥ पूर्वं हि जैनसाधुत्वे सूरित्वेपि समागते ।
न नाम्नां परिवर्ताभून्मुनीनां मोक्षगामिनां ॥ ६ ॥ सांप्रतं गच्छसंयोगः क्रियते वृद्धिहेतवे । महास्नेहायायुषे
च लाभाय गुरुशिष्ययोः ॥ ७ ॥ ततस्तेन कारणेन नामराश्यनुसारतः । गुरुः प्रधानतां नीत्वा विनयेनानुकी-
र्तयेत् ॥ ८ ॥ अश्वेभाजफणिद्वयं श्ववृकमुओपोतुकौ मूषकश्चाखुगौः क्रमशस्ततोपि महिषी व्याघ्री पुनः सौ-
रभी । व्याघ्रैणौ मृगमण्डलौ कपिरथो बभ्रुद्वयं वानरः सिंहोऽश्वो मृगराट् पशुश्च करटी योनिस्तु भानामियं
॥ ९ ॥ गोव्याघ्रं गजसिंहमश्वमहिषी श्वैणं च बभ्रूरगं वैरं वानरमेषकं च सुमहत्तद्वद्बिडालोन्दुरं । लोकानां
व्यवहारतोऽन्यदपि च ज्ञात्वा प्रयत्नादिदं दंपत्योर्नृपभृत्ययोरपि सदा वर्ज्यं गुरुक्षुल्लयोः ॥ १० ॥ अकचटतपय-
शवर्गेष्वष्टौ गरुडो बिडालसिंहाख्यौ । कुक्कुरसर्पौ मूषकहरिणौ मेषाधिपाः क्रमशः ॥ ११ ॥ पूर्ववद्वैरं चिन्त्यं ।
नृपभृत्याद्यक्षरवर्गाङ्कस्य क्रमाक्रमगतस्य । अष्टाभिरपहृतस्योद्धरिताङ्कार्धं विशोपकाश्च स्युः ॥१२॥ ते चोत्त-
राङ्कविभुना लभ्याः प्राच्यार्थैकवर्गेषु । पूर्वोत्तराक्षराङ्कः स्थाप्यः स्याच्छेष आयविधिः ॥ १३ ॥ हस्तस्वात्यनुराधाः

श्रवणपुनर्वसुमृगाश्विनीपुष्याः । रेवत्यपि देवगणः पूर्वोत्तरायात्रये भरण्यार्द्रा ॥ १४ ॥ रोहिण्यपि मर्त्यगणो ज्येष्ठा मूलद्वयं धनिष्ठायाः । आश्लेषाकृत्तिकाचित्रा मघाविशाखा पलादगणः ॥ १५ ॥ स्वकुले परमा प्रीतिर्मध्यमा देवमर्त्ययोः । देवराक्षसयोर्वैरं मरणं मर्त्यरक्षसोः ॥ १६ ॥ मकरवृषमीनकन्यावृश्चिककर्काष्टमे रिपुत्वं स्यात् । अजमिथुनधन्विहरिघटतुलाष्टमे मित्रतावश्यम् ॥१७॥ शत्रुषट्काष्टके मृत्युः कलहो नवपञ्चमे । द्विर्द्वादशेऽथ दारिद्र्यं शेषेषु प्रीतिरुत्तमा ॥ १८ ॥ त्रिपञ्चसप्तमी तारा चान्योन्यं गुरुशिष्ययोः । वर्जनीया शुभाय स्यादेकनाडीगतं तु भं ॥ १९ ॥ तथा योनि १ वर्ग २ लभ्यालभ्य ३ गण ४ राशिभेद ५ शुद्धं नाम दद्यात् । नाम स्यात्पूर्वतः साधोः शुभो देवगुणागमैः । जिनकीर्तिरमाचन्द्रशीलोदयधनैरपि ॥ २० ॥ विद्याविमलकल्याणैर्जीवमेघदिवाकरैः । मुनित्रिभुवनाभोजैः सुधातेजोमहानृपैः ॥ २१ ॥ दयाभावक्षमासूरैः सुवर्णमणिकर्मभिः । आनन्दानन्तधर्मैश्च जयदेवेन्द्रसागरैः ॥ २२ ॥ सिद्धिशान्तिलब्धिबुद्धिसहजज्ञानदर्शनैः । चारित्रवीरविजयचारुराममृगाधिपैः ॥ २३ ॥ महीविशालविबुधविनयैर्नयसंयुतैः । सर्वप्रबोधरूपैश्च गणमेरुवरैरपि ॥ २४॥ जयन्तयोगताराभिः कलापृथ्वीहरिप्रियैः । एतत्प्रभृतिभिः पूर्वपदैः स्यादभिधा पुनः ॥ २५ ॥ शशाङ्ककुम्भशैलाब्धिकुमारप्रभवल्लभैः । सिंहकुञ्जरदेवैश्च दत्तकीर्तिप्रियैरपि ॥ २६ ॥ प्रवरानन्दनिधिभी राजसुन्दरशेखरैः । वर्धनाकरहंसैश्च रत्नमेरुसमूर्तिभिः ॥ २७ ॥ सारभूषणधर्मैश्च केतुपुंगवपुण्ड्रकैः । ज्ञानदर्शनवीरैश्च पदैरेभिस्तथोत्तरैः ॥ २८ ॥ जायन्ते साधुनामानि स्थितैः पूर्वपदात्परैः । अन्यानि यानि सहजनामानि विदि-

तानि च ॥ २९ ॥ नृणां तान्युत्तमपदैर्भूपा यद्वतदानतः । एवं विदध्यात्सुगुरुः साधूनां नामकीर्तनं ॥ ३० ॥ उपाध्यायवाचनार्य-एतेष्वेव परं सूरिपदं स्यात्तत्पदागमे । गच्छस्वभावसंज्ञासु न विभेदोऽभिधानतः ॥ ३१ ॥ उपाध्यायवाचनार्य-नामानि खलु साधुवत् । व्रतिनीनां तु नामानि यतिवत्पूर्वगैः पदैः ॥ ३२ ॥ स्युरुत्तरपदैरेभिरनन्तरसमीरितैः । मतिश्रुलाप्रभादेवीलब्धिसिद्धिवतीमुखैः ॥ ३३ ॥ प्रवर्तिनीनामप्येवं नामानि परिकीर्तयेत् । महत्तराणां तैः पूर्वैः सर्वैः पूर्वपदैरपि ॥ ३४ ॥ श्रीरुत्तरपदे कार्या नान्यासु व्रतिनीषु च । मुनिनामानि सर्वाणि स्त्रियामादादि-योजनात् ॥ ३५ ॥ जायन्ते व्रतिनीसंज्ञाः श्रान्तैः कैश्चिन्महत्तराः । विशेषान्नन्दिसेनान्ताः संज्ञाः स्युर्जिनक-ल्पिनां ॥ ३६ ॥ शेषनामानि तुल्यान्युभयोरपि सर्वदा । विप्राणामपि नामानि बुद्धार्हद्विष्णुवेधसां ॥ ३७ ॥ गणेशकार्तिकेयार्कचन्द्रशंकरधीमतां । विद्याधरसमुद्रादिकल्पद्रुजययोगिनां ॥ ३८ ॥ समानान्युत्तमानां च नामानि परिकल्पयेत् । ब्रह्मचारिक्षुल्लकयोर्न नाम्नां परिवर्तनं ॥ ३९ ॥ क्षत्रियाणां तु संज्ञासु भवेत्पूर्वपदक्र-मात् । पृथ्वीविजयविश्वाब्दगजाश्ववह्नहेतुभिः ॥ ४० ॥ पराक्रममहायुद्धवीरदुर्धरवल्लभैः । बाहुभानन्तकल्या-णप्रतापगुणभास्करैः ॥ ४१ ॥ देवदानवदुर्हृत्कासिंहकन्दर्पविष्णुभिः । पूर्वैः पदैः परपदं योज्यं चानन्तरो-दितं ॥ ४२ ॥ सिंहसेनदेवपालचन्द्रसूर्याब्धिशाल्यकाः । मल्लकोटीरसंघट्टा दुःसहव्याघ्रमण्डनैः ॥ ४३ ॥ जनो-त्तमर्मविद्वेषिरस्तशत्रुकरैरपि । इत्येवमादिभिश्चान्यैः पदैरुत्तरधारितैः ॥ ४४ ॥ संज्ञा द्विपदसंयोगाज्जायन्ते

१ मेणुभिः इति पाठः ।

क्षत्रियेष्वपि । पुरातनोत्तमनृणां नामभिः क्षत्रियाभिधाः ॥ ४५ ॥ वैश्यानां चैव शूद्राणां कारूणां गुरुताजुषां । नामान्येकपदानि स्युस्तद्देशप्रथितानि तु ॥ ४६ ॥ नीचानामपि कारूणां नीचवृक्षादिसंश्रयाः । हीनवस्तुप्रयुक्ताः स्युः संज्ञा एकपदाश्रयाः ॥ ४७ ॥ हस्त्यश्वादिपशूनां च नामानि जययोगतः । उत्तमान्येव कार्याणि युद्धशत्रुजयादिभिः ॥ ४८ ॥ इत्येवं नामकरणं निर्दिष्टं पदरोपणे । सर्वत्र पूर्वं नामैव पदारोपाय जायते ॥ ४९ ॥ इति पदारोपाधिकारे नामकरणविधिः ॥ इत्याचार्यश्रीवर्धमानसूरिकृते आचारदिनकरे उभयधर्मस्तम्भे पदारोपकीर्तनो नाम चत्वारिंशत्तम उदयः ॥ ४० ॥

---

## अथ व्यवहारपरमार्थः ।

व्यवहारोऽखिलो लोके संस्कार इव कथ्यते । स केन कारणेनेति ब्रूमस्तत्परमार्थतां ॥ १ ॥ आचारादिक्रियायोगाद्विशेषो न नृणां क्वचित् । रूपसौन्दर्ययोगस्य प्रतिभास्फीतितेजसां ॥ २ ॥ दाहपाकक्षमो वह्निर्यथा मन्त्रैर्विना कृतः । तथा नरोऽप्यसंस्कारः कार्यकारित्वमर्हति ॥ ३ ॥ यथेन्धनादिभिः पुष्टो वह्निर्दाहक्षमो भवेत् । तथाहारादिपुष्टात्मा देही स्यात्कार्यभाजनं ॥ ४ ॥ ततः प्रमाणं संस्कारो न च क्वाप्यवलोक्यते । विधीयते किमर्थं स वृथा वित्तव्ययास्पदं ॥ ५ ॥ पुराणैर्विहितो वायं क्रियते तदलं वृथा । उत्तमैर्विहितं कर्म केन कर्तुं हि पार्यते ॥ ६ ॥ ततः कर्मपरीपाकमैहिकं पारलौकिकं । विदुः केवलिनः सम्यक् प्रमाणं तद्वचस्ततः ॥ ७ ॥

स्याद्वादबहुलं यस्मादार्हतं मतमुत्तमं । तेनानेकान्तशब्देन सामान्यं सर्वमुंचति ॥ ८ ॥ ततः केवलिनिर्दिष्टमा-
चाराणां च कारणं । वेषाणां व्यवहाराणां क्रमोऽनुमततः सतां ॥ ९ ॥ दानं तपो ब्रह्मचर्यं करुणाशुद्धभावनाः ।
कर्मक्षयाय पुण्याय जायन्ते सर्वसंमते ॥ १० ॥ आचारवेषौ यौ तत्र तयोः कारणमुच्यते । तौ स्तो यत्कर्मसं-
दृष्टौ कथं वा कार्यसाधकौ ॥ ११ ॥ यथा—गर्भाधाने च यत्कर्म तत्स्याद्गर्भप्रसिद्धिकृत् । आनन्दनं स्वकुल्यानां
शान्तिकाद्गर्भरक्षणं ॥ १२ ॥ मन्त्रप्रयोगो यो बीजी विघ्नहृत्त्राणकृच्च सः । यतोऽक्षराणां महिमाह्वानन्यायेन
दृश्यते ॥ १३ ॥ वेदाः पुनर्ये चत्वारस्तेप्याचारस्य कारणं । न पाठेन विना किंचित्कर्म सौंदर्यमश्नुति ॥ १४ ॥
अधीतिहीनं सत्कर्म क्रियमाणं न शोभते । कारुकर्मसमं सर्वं कर्तव्यं पाठवर्जितं ॥ १५ ॥ इति गर्भाधाननि-
र्यासः ॥ ॥ यद्धि पुंसवनं प्रोक्तं तन्मलापनयावहं । गर्भस्य परिपूर्णत्वे तद्वर्धापनसंनिभं ॥ १६ ॥ इति पुंसवन-
निर्यासः ॥ ॥ जातकर्म यदुद्दिष्टं तज्जन्मोत्सवमादिशेत् । आनन्दहेतुः सर्वत्र वित्तव्ययकरं हि तत् ॥ १७ ॥
इति जातकर्मनिर्यासः ॥ ॥ चन्द्रार्कदर्शनं यद्वा तौ हि प्रत्यक्षदैवते । विश्वप्रकाशौ तत्पूर्वं विलोक्यौ सर्वदा
नरैः ॥ १८ ॥ इति चन्द्रार्कदर्शननिर्यासः ॥ ॥ क्षीराशनं यद्देवस्य आहारारम्भ एव सः । तस्मिन् जन्मनि
तेनैव स्यात्प्राणी प्रीतितः पुरा ॥ १९ ॥ इति क्षीराशननिर्यासः ॥ ॥ षष्ठीजागरणं यच्च तत्तद्भागस्य पूजनम् ।
तत्कायाधिष्ठिता देवी पूज्या स्यात्षष्टिकात्मिका ॥ २० ॥ भ्रमन्ति मातरो याश्च भुवने प्राणिरक्षणे । तासां

१ यदेव स्यादाहारारम्भ इति पाठः ।

संपूजनं तत्र तद्रक्षार्थं विधीयते ॥ २१ ॥ इति षष्ठीनिर्यासः ॥ ॥ शुचिकर्म यदादिष्टं तद्गर्भक्लेदनिर्गमात् । जातां कुत्सिततां हन्ति नखस्नानादिकर्मभिः ॥ २२ ॥ चातुर्वर्ण्यस्य विप्रादेर्दिनैर्यदधिकाधिकैः । शौचं तदुच्चनीचत्वक्रमशंसनहेतवे ॥ २३ ॥ इति शुचिकर्मनिर्यासः ॥ ॥ यन्नामकरणं तच्च प्रेषणाह्वानहेतवे । ननु मर्त्यैर्विना नाम कथमालाप उच्यते ॥ २४ ॥ लग्नसंसाधनं तत्र भाविभाग्यस्य तस्य तत् । कीर्तनं नान्यथोपायैरन्यैर्विज्ञायते क्वचित् ॥ २५ ॥ सततं मण्डलीपूजा गृहिणां साधुवेश्मनि । सा तत्सान्निध्यदेवानां प्रीणनाय विरच्यते ॥ २६ ॥ इति नामकर्मनिर्यासः ॥ ॥ अन्नप्राशनकर्मापि भोजनारम्भहेतवे । आरोग्यं सुमुहूर्ते तद्भुक्तं यच्छति देहिनां ॥ २७ ॥ इति अन्नप्राशननिर्यासः ॥ ॥ सं कर्णवेधो न कथं श्लाघ्यते कार्यवेदिभिः ॥ २९ ॥ इति कर्णवेधनिर्णयः ॥ ॥ व्रतबन्धादिकर्म स्यान्न केशापनयं विना । विपरीतस्य वृक्षस्य निर्मूलं कुन्तलावली ॥ ३० ॥ तस्मात्तच्छेदतो देहार्पणं देवादिकाग्रतः । व्रतबन्धे स्वधर्मे च प्रव्रज्याधारणे तथा ॥ ३१ ॥ मुण्डने देहमूलानां छेदनं तत्स्पृहाहरं । तस्मात्कचापनयनं कार्यमग्रेऽपि धर्मिणां ॥ ३२ ॥ तदारम्भो हि संस्कारो भोजनारम्भवद्भवेत् । तेन मुण्डनसंस्कारकारणं प्राहुरादिमाः ॥ ३३ ॥ इति मुण्डननिर्यासः ॥ ॥ व्रतबन्धो हि वर्णत्वं नयेत्संस्कारयोगतः । पुरुषं तत्र यत्सूत्रं कारणं तस्य कथ्यते ॥ ३४ ॥ ज्ञानदर्शनचारित्राण्याहुर्मोक्षपथं बुधाः । तद्धारणं हि सूत्रेण मर्यादायाः प्रकाशकं ॥ ३५ ॥ गुरुवाक्यस्य मर्यादा या चित्तस्य कुलस्य च ।

१ अत्र मध्ये सार्धश्लोक. श्लोकोऽर्धश्लोको वा लुप्तइव प्रतिभाति ।

सा सूत्रमात्रेणालंघ्या जायते पुण्यचेतसां ॥ ३६ ॥ मर्यादारहितानां च बन्धनं शृङ्खलैरपि । न करोति निषेधं तु तस्मात्सर्वं मनोगतं ॥ ३७ ॥ एतदर्थं हृदि परं स्थापनं सूत्रसंमतं । तस्य यद्वैपरीत्यं तदनिष्टे पितृकर्मणि ॥ ३८ ॥ शरीरे सावधानत्वं सर्वत्रापि हि कर्मणि । व्रतबन्धोऽयमादिष्टो व्रतादेशः सुधीमतां ॥ ३९ ॥ अन्यस्य व्रतदानाज्ञा ततो व्रतविसर्जनं । ब्रह्ममुद्रापरित्यागैस्तदाचारस्य पालनं ॥ ४० ॥ आशातनाभयान्नैव मुद्रा संस्थाप्यते चिरं । उपवीतशिखामात्रं तत्क्रियायुक्स्थिरं पुनः ॥ ४१ ॥ गोदानं यत्पुनस्तत्र स दानारम्भ उच्यते । दानं वर्णप्रविष्टस्य सफलं ज्ञानयोगतः ॥ ४२ ॥ अज्ञानत्वकृतं च स्याद्विफलं कर्म सत्तमं । यद्गोप्रदानं प्रथमं तस्य कारणमुच्यते ॥ ४३ ॥ गौः सर्वोत्तमतामाप्ता सर्वत्राप्युपकारकृत् । स्यादन्यवस्तु चैकत्र कर्मण्येवोपकारकं ॥ ४४ ॥ शिक्षा तु वर्णाचारस्य कथनं धर्मबोधनं । शूद्राणामुत्तरीयादिरत्नत्रयविवर्जितं ॥ ४५ ॥ आचाराधानवत्सूत्रयुक्त्या पाल्यं तदेव हि । ब्रह्मत्वं पूज्यतारूपं न कर्मादेशमर्हति ॥ ४६ ॥ नापमानं न नीचाज्ञां न परं कुप्रतिग्रहम् । न श्लाघां न प्रशंसां च कर्तुमन्यस्य कस्यचित् ॥ ४७ ॥ अतः स्थलक्रियाभाजां भट्टादीनां यदृकृतिः । रत्नत्रयस्य तन्मुद्राधारणं नाममात्रतः ॥ ४८ ॥ इत्युपनयननिर्यासः ॥ ॥ पाठारम्भो दीक्षितस्य वर्णिनो नापरस्य च । अवर्णः पाठ्यते किंवा स स्याद्वासर उत्तमे ॥ ४९ ॥ इति पाठारम्भनिर्यासः ॥ विवाहो नाम दम्पत्योर्लोकप्रत्यक्षसंगमः । कृतं जनसमक्षं स्यात्कर्म निर्वादहेतवे ॥ ५० ॥ प्रच्छन्नं यत्कृतं कर्म तदन्याय्यं जनो वदेत् । अतो विवाहप्रारम्भ उत्सवेन विधीयते ॥ ५१ ॥ अन्यगोत्रभवानां च यः संबन्धो

नृणां स्त्रियां । गृहिबन्धे सापराधे तद्रागादिविचारणं ॥ ५२ ॥ संबन्धिनां न कलहक्षारणादिकथोचिता । तेनान्यैश्च वधूपुंसोर्योजनं गृहवासकृत् ॥ ५३ ॥ समानकुलशीलत्वं दम्पत्योस्तुल्यकर्मणे । नानाकर्मकृतां नैव गृहबन्धः प्रशस्यते ॥ ५४ ॥ भोजने वेषकरणे कथासु सहकर्मणि । समानकुलता नैव दोषमावहति कचित् ॥ ५५ ॥ पितृमातृसमक्षं योगस्ताभ्यां संमतो मुदा । प्रत्यक्षः सर्वलोकानां विवाहो धर्म एव सः ॥५६॥ यस्तयोरसमक्षं तु ताभ्यां नानुमतश्च यः । यो हठेन कृतो गूढं विवाहः पाप एव सः ॥ ५७ ॥ यच्चौर्याद्यद्गुठाचैव यच्च लोकोपतापनम् । क्रियते कर्म तत्पापं धर्म्यं तदपरं मतम् ॥५८॥ यत्तैलादिकृतं स्नानं मण्डनाय तदेव हि । तद्व्याख्या श्रूयतां तद्धि कार्यं कुलकरार्चनं ॥ ५९ ॥ एतस्यामवसर्पिण्यां मार्गः सांसारिकश्च तैः । निर्दिष्टोऽर्हत आद्यस्य जन्मस्थानं यतो हि ते ॥ ६० ॥ वेदांनुक्षेत्रसंस्कारे माङ्गल्यस्यापि कर्मणः । यतः सा भूषिता भूमिरानन्दाय शिवाय च ॥ ६१ ॥ यत्तत्र स्तम्भकलशस्थापना मङ्गलाय सा । सर्वं यत्पूर्णकुम्भादि माङ्गल्यशकुनं हि तत् ॥ ६२ ॥ यदग्निस्थापनं तत्र ज्योतिरुद्योतकृच्च तत् । स सर्वतोमुखः सर्वसाक्षी स्यात्तत्र कर्मणि ॥ ६३ ॥ यस्तत्र होमो देवादिसंतर्पणकरः परं । स मनःशुद्धये वह्निः प्रत्यक्षग्राहको यतः ॥ ६४ ॥ परमार्थेन देवानां संतुष्टिर्बलिकल्पनात् । वस्तुनो भुक्तितो नृणां चित्तस्य प्रत्ययोऽनलात् ॥ ६५ ॥ यदर्घदानं सा पूजा कृता माङ्गल्यवस्तुभिः । यो हस्तबन्धः स तयोर्वाचाबन्धाय चाभवत् ॥ ६६ ॥ उदुम्बरादिछल्लीनां लेपः सौभा-

१ वेदी तु क्षेत्र इति पाठः ।

न्यभेपजं । प्रदक्षिणा दैवतानां युतयोर्लाजमोक्षणं ॥ ६७ ॥ आजन्म सहचारित्वं तेन चैव प्रतीयते । यत्तत्र युगयोर्दानं तत्प्रेम्णा यशसेपि वा ॥ ६८ ॥ गणिकानां विवाहो यः कन्दर्पेण स वै नृणां । सर्वसामान्यतारूपः कामिनां भोगयुक्तये ॥ ६९ ॥ इति विवाहनिर्यासः ॥ ॥ व्रतारोपे च नन्यादिदीक्षाकर्म प्रशस्यते । सम्यक्त्वारोपणं तत्वज्ञानस्यानुमतिर्गुरोः ॥ ७० ॥ व्रतोच्चाराः सर्वपापनिवृत्तौ नियमग्रहः । प्रतिमोद्वाहनं तत्तत्कर्मणां निश्चयावहं ॥ ७१ ॥ उपधानं नमस्कारप्रभृतेः सेवनातपः । कर्मक्षयार्थं तत्पाठाराधनार्थं च शस्यते ॥७२॥ यन्मालारोपणं सर्वव्रतोद्यापनमेव तत् । या माला सा परं मुद्रा प्रभोस्तीर्थंकरस्य च ॥ ७३ ॥ परिग्रहप्रमाणं चतुष्टकः स्मरणाय सः । दिनकृत्यं श्रावकाणां व्रतपालनहेतवे ॥ ७४ ॥ अर्हत्पूजा शुभध्यानं सिद्धार्हत्तर्पणं न तत् । दिक्पालग्रहपूजा च तेषां संतर्पणाय सा ॥ ७५ ॥ इति व्रतारोपनिर्यासः ॥ ॥ या चान्त्याराधना शान्तेः शुभध्यानाय कल्पिता । यान्ते मतिः प्राणिनां स्यात्सा गतिः परजन्मनि ॥ ७६ ॥ यद्धि शवस्य दहनं देहसंस्कृतिहेतु तत् । देहो हि शाटमाप्नोति तस्मात्संस्कारमर्हति ॥ ७७ ॥ या क्रिया स्नात्रपूजाद्या तदर्थं क्रियते शुभैः । सनाथतायै स्यात्तस्य कर्तुं पुण्यचयाय च ॥ ७८ ॥ इत्यन्तकर्मनिर्यासः ॥ ॥ प्रथमं ब्रह्मचर्यं यद्व्रतात्तत्कारणं शुचे । व्रते कामविरागार्थमभ्यासस्तत्परीक्षणं ॥ ७९ ॥ ब्रह्मचर्यं भवेन्मूलं सर्वस्य व्रतकर्मणः । ब्रह्मचर्येण भग्नेन व्रतमन्यन्निरर्थकं ॥ ८० ॥ अब्रह्मचर्ये सुरतं सुरते स्त्री गवेष्यते । स्त्रियः परिग्रहः प्राप्तिरारम्भाप्तिः परिग्रहात् ॥ ८१ ॥ आरम्भात्प्राणिपातश्च तस्माद्धतकसंग्रहः । अतो मैथुनमूलानि पाप-

कर्माणि संस्तृतौ ॥ ८२ ॥ ततो व्रतस्यादानार्थं ब्रह्मचर्यपरीक्षणं । विनैव ब्रह्मचर्येण गृहिधर्मश्च भावतः ॥ ८३ ॥ इति ब्रह्मचर्यनिर्यासः ॥ ॥ क्षुल्लकत्वे यदादानं तस्येदं कारणं स्मृतं । महाव्रतानां पञ्चानां धारणार्थं परीक्षणं ॥ ८४ ॥ दीक्षां गृहीत्वा यदि वा न व्रताचरणे प्रभुः । ततस्तस्य कृतं पापकरं चाप्ययशस्करं ॥ ८५ ॥ अतः पूर्वं परीक्षा स्यात् क्षुल्लकत्वे व्रतेषु च । गृहिसंस्कारकरणमदीक्षायां च तद्विधिः ॥८६॥ इति क्षुल्लकत्वनिर्यासः ॥ प्रव्रज्याग्रहणं यच्च स सामायिकसंग्रहः । यावज्जीवं सर्वविरत्युच्चारेऽव्ययवर्जनं ॥८७॥ अदीक्षणीया ये प्रोक्ता एतदर्थं तदुज्झनं । न तैः स्याद्व्रतनिर्वाहः कौलीनं च जने महत् ॥ ८८ ॥ यः शिखासूत्रकक्षाणां त्यागः स्याद्व्रतधारणे । तेन त्याज्याः सर्वबन्धा व्यवहारक्रिया अपि ॥ ८९ ॥ इति प्रव्रज्यानिर्यासः ॥ ॥ यः स्यादुत्थापनानन्दिः सा व्रतोच्चाररूपिणी । महाव्रतानामुच्चारः पालनं व्रतमुच्यते ॥ ९० ॥ दीक्षा सामायिकोच्चारो व्रतमुत्थापना पुनः । यो मण्डलप्रवेशोऽत्र तत्कारणमुदीर्यते ॥ ९१ ॥ जातयः पूर्वमेव स्युर्यतित्वे सति तां पुनः । सर्वथैकत्वमायान्ति समाने व्रतसंग्रहे ॥ ९२ ॥ व्यवहारपरित्यागाद्विकल्पादिविवर्जनात् । समानधर्मतश्चैका पङ्क्तिः स्याद्भोजने यतेः ॥ ९३ ॥ इति उत्थापनानिर्यासः ॥ ॥ अतः परं प्रवक्ष्यामो योगोद्वहनकारणं । योगा मनोवाक्कायाः स्युस्तेषां निग्रहहेतवे ॥ ९४ ॥ कालग्रहणजापाद्यैर्मनसः शुभधारणात् । तत्र मौनादिकरणैर्वचसो निग्रहः पुनः ॥ ९५ ॥ नितरां विरसाहारैः संघट्टे लीनता विधेः । कायस्य निग्रहस्तेन योगे स्याद्योगनिग्रहः ॥ ९६ ॥ योगोद्वहनसंजातकर्मक्षयविशोधनाः । मुनयः शुक्लचरिता अर्हन्त्यागमवाचनम् ॥ ९७ ॥ श्रुत-

स्कन्धाध्ययनादावुद्देशादित्रयं च यत्। तच्छ्रुतादानदानादौ गुर्वादेशावधारणं ॥ ९८ ॥ तत्र वैनयिकं कर्म
वन्दनादिविनिर्दिशेत्। स्वाध्यायकालग्रहणं शुभध्यानार्थमीरितं ॥ ९९ ॥ इति योगोद्वहननिर्यासः ॥ ॥
वाचनाग्रहणं ज्ञेयं गुरुवक्त्राच्छ्रुतग्रहः। गुरुं विनाखिलं ज्ञानं खपुष्पसदृशं विदुः ॥ १०० ॥ इति वाचनाग्रहण-
निर्यासः ॥ ॥ या पुनर्वाचनानुज्ञा सा चार्यादिपदं विना। आज्ञा स्याद्वाचनादाने गुरुणा सर्वदेरिता ॥१०१॥
इति वाचनाचार्यनिर्यासः ॥ ॥ उपाध्यायपदारोपः समग्रस्तस्य कारणं। पाठना द्वादशाङ्गयास्तु शिष्याणां तस्य
कर्म तत् ॥१०२॥ इति उपाध्यायपदनिर्यासः ॥ ॥ यदाचार्यपदं तच्च तस्य निर्देश उच्यते। सर्वप्रभुत्वं ज्ञानित्वं
तपस्वित्वं सुसाधुता ॥३॥ गुणित्वं योधकत्वं च लब्धिभाजनता तथा। शमित्वं सर्वयोग्यत्वं सामर्थ्यं तत्र कारणं
॥४॥ यस्तस्यैव पदारोपः स प्रभुत्वाय जायते। मन्त्राद्याराधनायैपा जिनशासनसंविदे ॥ ५ ॥ इत्याचार्यपदनि-
र्यासः ॥ ॥ प्रतिमोद्वहनं साधुसाध्वीनां योगसिद्धये। नीरागतायै विषयपरित्यागाय सर्वथा ॥ ६ ॥ इति
प्रतिमोद्वहननिर्यासः ॥ ॥ व्रतिनीव्रतदानं च तत्पदद्वयरोपणं। तत्सर्वं साधुवज्ज्ञेयं कारणं चरणादिवत् ॥७॥
इति व्रतिनीव्रतप्रवर्तिनीपदमहत्तरापदनिर्यासः ॥ ॥ व्रतिनीव्रतिनोर्यश्च दिनरात्रिस्थितिक्रमः। स संयमस्य
निर्वाहहठोपायापघातनः ॥ ८ ॥ तेषां य उपधिर्धर्मध्वजादिः पूर्वमीरितः। स व्रतस्याराधनार्थं न विज्ञेयः परि-
ग्रहः ॥ ९ ॥ इति साधुसाध्वीदिनरात्रिचर्यानिर्यासः ॥ ॥ ऋतुचर्या साधुसाध्व्योर्या पुनः परिकीर्तिता। सा
कषायेन्द्रियाणां च निग्रहायाभिधीयते ॥ ११० ॥ विहारयुक्तिर्विज्ञेया रागद्वेषादिहारिणी। कायक्लेशाय

तपसे स्थितिर्लोचमलादिका ॥ ११ ॥ भाषासमितये ज्ञेयमव्याख्येयविवर्जनं । सर्वं मनोवाक्कायानां विग्रहाय व्रतं परं ॥ १२ ॥ इति साधुसाध्वीऋतुचर्यानिर्यासः ॥ ॥ यद्दत्तं साधुसाध्व्योः स्यात्क्षामणादिक्रियाक्रमः । कर्मक्षयाय सुमतिशुभध्यानादिहेतु तत् ॥ १३ ॥ मुनेः शवस्य यत्कर्म साधुश्राद्धैर्विधीयते । सनाथतायै तत्सर्वमपुनस्तद्भवाय च ॥ १४ ॥ इत्यन्त्यकर्मनिर्यासः ॥ ॥ प्रतिष्ठा नाम यत्कर्म साप्यचैतन्यवस्तुनः । मन्त्रादिना दैवतस्य तस्य मध्ये प्रवेशिनी ॥ १५ ॥ पाषाणकाष्ठरत्नादिकृता मूर्तिरचेतना । मन्त्रन्यासाद्गुरोर्वाक्यात्स्थापनाद्दैवतं भवेत् ॥ १६ ॥ नामाकृतिद्रव्यभावैः स्युर्जिना इति वाक्यतः । तथैव सर्वतत्त्वानां कथनं तत्त्वशास्त्रतः ॥ १७ ॥ वेदीप्रदीपकल्पादि मुद्राकर्म च तत्र यत् । तत्सर्वं सकलीकारहेतुर्दैवतवेशनं ॥ १८ ॥ कङ्कणादिकबन्धो यो विघ्नेभ्यो रक्षणाय सः । मणिमन्त्रौषधादीनि प्रभावाढ्यानि सर्वथा ॥ १९ ॥ या चक्रयाणकैः पूजा साप्यौषधिसमाश्रिता । कंचित्कंचित्कापि कापि प्रभावं धत्त ओषधिः ॥ १२० ॥ तत्प्रभावप्रवेशः स्याद्बिम्बे पूजकसिद्धिदः । नन्द्यावर्तस्थापनं यत्तन्निदानमुदीर्यते ॥२१॥ प्रतिमाया आसनं तन्नवकोणं विलिख्यते । नवतत्त्वोपरिस्थायी स पूज्यो भगवान्यतः ॥ २२ ॥ तत्पार्श्वे दैवतानां च सर्वेषां यच्च पूजनं । तत्तत्प्रसादहेतुः स्यादर्हत्प्राभवकारि च ॥ २३ ॥ यद्वा बलिफलादीनि वस्तून्येषां पुरः पुनः । ढौक्यन्ते तत्सर्वमेव रूच्यं देयं हि पूजके ॥ २४ ॥ एवं देवीगृहादीनां प्रतिष्ठाकार्यनिर्णयः । यच्चाधिवासनं तच्च वस्तुनो दैवतात्मता ॥ २५ ॥ अर्हतो या च पूजा स्याद्यत्स्नात्रविधिसंयुतं । तच्छुभध्यानहेतु स्यात्पुराणस्थितिपालनं

॥ २६ ॥ इति प्रतिष्टानिर्यासः ॥ ॥ यच्छान्तिकर्म तद्विघ्नशान्तये परिकीर्तितम् । चतुर्णिकायदेवानां पूजनं
तत्प्रसादकृत् ॥ २७ ॥ भवेत्तेषु प्रसन्नेषु सर्वविघ्नपरिक्षयः । उत्पातादावनिष्टे च शान्तिकं यद्विधीयते ॥ २८ ॥
तज्जिनस्नात्रविधिना सर्वदोषनिकृन्तनं । शान्तिपातोद्घोषणेन दुष्टानां प्रलयो भवेत् ॥ २९ ॥ इति शान्ति-
कनिर्यासः ॥ ॥ पौष्टिकं कर्म यत्तत्स्यात्सर्वारम्भेषु पुष्टिदं । सुपूजिता देवताः स्युर्नियतं कार्यसिद्धये ॥१३०॥
इति पौष्टिकनिर्यासः ॥ ॥ बलिदानं हि देवानामुक्तानां कर्तृतोपकृत् । अमुक्तानां प्रीणनाय जायते मङ्गलाय
च ॥३१॥ इति बलिकर्मनिर्यासः ॥ ॥ यत्प्रायश्चित्तचरणं प्रमादात्कृतपाप्मनां । विशुद्धये तज्जायेत न शुद्धि-
र्दृढपाप्मनां ॥३२॥ यद्बाह्यानां दुराचारकृतं शुद्धिरुदीरिता । लोकव्यवहृतेः सा तु परमार्थो हि चान्तरः ॥३३॥
इति प्रायश्चित्तनिर्यासः ॥ ॥ आवश्यकं षड्विधं यन्मीलितं वा विधीयते । दिवा रात्रौ पक्षमासवत्सरेषु
विशुद्धये ॥ ३४ ॥ तदावश्यकयोग्यानां कर्मणां घातहेतवे । शुभध्यानसंविदे च निर्दिष्टं परमेश्वरैः ॥ ३५ ॥
इत्यावश्यकनिर्यासः ॥ ॥ तपोविधानं षोढा यद्बाह्यं स्यान्निर्जराकृते । तद्धि नित्यं न कोपि स्यात्कर्तुं सामर्थ्य-
भाजनं ॥ ३६ ॥ अवधेः कल्पनात्तेन विहिता तपसां बुधैः । स्वशक्तितः कोपि किंचित्करोतु तपसो विधिं
॥ ३७ ॥ इति तपोविधिनिर्यासः ॥ ॥ पदारोपो हि सर्वेषां मुख्यत्वस्य प्ररूपणं । एकः प्रभुर्हि सर्वेषां योगक्षे-
माविष्कारकः ॥ ३८ ॥ अप्रभुत्वेन सर्वे स्युर्दुःखिनः स्वामिनं विना । बहुप्रभुत्वे न पुनः सर्वेषां स्यात्प्रतिक्षयः
॥ ३९ ॥ मुद्रादीनां तु निर्यासो मन्त्रशास्त्राद्विलोक्यताम् । यन्नामकरणं युक्तं तत्तत्संवित्तिहेतवे ॥ १४० ॥

यत्सर्वकार्येषु पुनः सुमुहूर्तावलोकनं । तत्सत्कालविपाकाय वीतरागैरुदीरितं ॥ ४१ ॥ जीवेन विहितं कर्म कालात्पाकमुपैति च । अतो जीवकर्मकालाः कारणं सर्ववस्तुषु ॥ ४२ ॥ इति पदारोपनिर्यासः ॥ ॥ एवं गृहस्थाचारस्य यत्याचारस्य सर्वथा । विदित्वा परमार्थं हि कर्म तत्सर्वमाचरेत् ॥ ४३ ॥ अमुना कर्मयोगेन धर्मनिर्वहणस्थितेः । प्राणी सर्वत्र जीयेत चक्रित्वेन्द्रत्वभाजनं ॥ ४४ ॥ अयं कर्मनियोगस्तु शुभः शुभफलप्रदः । अतोपि विपरीतो यः सोऽशुभं ददते फलं ॥ ४५ ॥ इति सर्वशुभाचारनिर्यासः ॥ ॥ एवं कृत्वा सदाचारं प्राणी प्राप्नोति वाञ्छितं । यन्मोक्षहेतु तत्किंचिदन्यद्गम्यं गुरोर्मुखात् ॥ ४६ ॥ कर्मक्षयात्पञ्चमोक्षो न शुभात्कर्मणः क्वचित् । किं स्वर्णनिगडैर्युक्तो यन्त्रितो नाभिधीयते ॥ ४७ ॥ दुष्कर्मणा फलं दुष्टं शुभं स्याच्छुभकर्मणा । अतस्तुल्यफलप्राप्तौ क्व मोक्षस्यावकाशिता ॥ ४८ ॥ अथ वा निर्जरा प्रोक्ता तपसो द्वादशात्मकात् । दुष्कर्म निर्जराय स्याच्छुभकर्माभिवेष्टनं ॥ ४९ ॥ स्याद्व्याघ्रदुस्तटीन्यायो जन्तोर्मोक्षस्य साधने । शुभकर्मविघाते स्यादुदयो दुष्टकर्मणां ॥ १५० ॥ दुष्कर्मणां विघाते स्यादुदयः शुभकर्मणां । एवं सति च किं त्याज्यं किं कार्यं मोक्षकाङ्क्षिभिः ॥ ५१ ॥ उष्णाशनाद्भवेत्पित्तं मरुच्छीताशनादिभिः । समाशनाद्द्वयोर्वृद्धिर्भवेत्किं भुज्यते हि तत् ॥ ५२ ॥ अथ द्वयोर्विघाति स्यादौषधं वस्तुनः स्वयं । स्वप्रभावं रचयति देहे किं तद्विधीयते ॥ ५३ ॥ एकस्य विपरीतं हि विद्यते यत्सनातनं । जलं स्थलं वृषः पाप्मा सज्जनो दुर्जनस्तथा॥५४॥ क्ष्वेडोऽमृतं दुर्गतिश्च सुगतिर्दुःखिता सुखं । साधुः खलो रिपुर्मित्रमेवमादि द्वयं द्वयं ॥ ५५ ॥ परस्परविरो-

ध्यस्ति तथा संसृतिनिर्वृती । एकस्य विगमादेव स्यादन्यस्य महोदयः ॥ ५६ ॥ द्वयोरवगमाय स्यात्पन्थाः संदिग्ध एव सः । जीवा भ्राम्यन्ति सर्वत्र कर्मसूत्रविवेष्टिताः ॥ ५७ ॥ कुकर्मोन्मोचनादेव बन्धः सत्कर्मणो भवेत् । सत्कर्मोन्मोचनात्तत्र बन्धः स्याच्च कुकर्मजः ॥ ५८ ॥ एवं सति कथं कर्मक्षयः संभाव्यते बुधैः । कथं तेन विना मोक्ष इत्येवं संशयो महान् ॥ ५९ ॥ अदेवागुर्वधर्माणां त्यागाच्चेत्कर्मणां क्षयः । किं देवगुरुधर्माः स्युः समर्थास्तत्र कर्मणि ॥ १६० ॥ कोऽर्हता सुगतेनापि विष्णुना शंभुनाथ वा । सूर्येण ब्रह्मणा वापि नीतो मोक्षपदं जनः ॥ ६१ ॥ कः पापकारी गुरुणा स्वशक्त्या मोचितोंऽहसः । तस्योपदेशदाता स कर्मणा स्वेन गृह्यते ॥ ६२ ॥ को वा जटावान्कर्मन्दी मुमुक्षुर्वा दिगम्बरः । शुक्लध्यानविनाभूतो वेषमात्रेण निर्वृतः ॥ ६३ ॥ अथ केवलिनोक्तेन मोक्षः स्याद्धर्मकर्मणा । तदा तदाचारयुक्तिः कथमेवानुमीयते ॥ ६४ ॥ दयया सत्यवादेन शुभ्रमशुभ्रवर्जनैः । तपसा प्राप्य किं कोपि सर्वथा कर्मनिर्जराम् ॥ ६५ ॥ तदेव गुरुधर्माणां संग्रहः कर्मबन्धहृत् । यत्त शुभाशुभं कर्म बन्धयन्त्यशुभं परे ॥ ६६ ॥ तस्मात्केन पथा मोक्षः साध्यते मोक्षकाङ्क्षिभिः । ज्ञानदर्शनचारित्ररत्नत्रयविनाकृतः ॥६७॥ एतद्रत्नत्रयं कैश्चिदेकान्तत्वेन गृह्यते । ऐकान्त्यादेव मिथ्यात्वं मिथ्यात्वे नास्ति निर्वृतिः ॥ ६८ ॥ ज्ञानमेकान्ततां नीतं मूढैः कुग्रहवादिभिः । ऐक्येपि सर्वतत्त्वानां तद्भेदान्तरसंभवात् ॥ ६९ ॥ सर्वत्र सर्वं व्याख्येयमेकमन्यत्कदाचन । कल्पनानामयुक्तीनां विबुधा विबुधेरिता ॥ १७० ॥ तस्मात्स्याद्वाद एवास्ति ज्ञानं नान्यद्विमर्शने । तत्त्वादीनां विचारेऽत्र येन स्यादप्यनुष्ठितः ॥ ७१ ॥ जगत्सु

जन्तवः सन्ति स्वस्वकर्मानुसारिणः । कर्मणा प्रेरितास्ते स्युः स्वस्वप्रकृतिभागिनः ॥ ७२ ॥ विधास्ति रुचिरस्तेषामिन्द्रियैर्विषयान्तरैः । एवं मतानि धर्मादौ तेषां स्युर्विविधानि च ॥ ७३ ॥ ज्ञानदृष्ट्या यदा लोकस्तद्रुचीनां विधीयते । तदा तदेव तत्र स्यात्प्रमादान्तरसंग्रहात् ॥ ७४ ॥ अतः स्याद्वादमालम्ब्य कार्यं तत्त्वविमर्शनं । नान्यः पन्था क्वचिज्ज्ञाने कदाचन विलोक्यते ॥ ७५ ॥ मतानि विविधान्येवं षड्दर्शनगतानि च । प्रत्यक्षादिप्रमाणौघैः स्थापितोत्थापितानि च ॥ ७६ ॥ तत्त्वाद्विसृज्यमानानि न तान्यायान्ति गोचरं । द्रव्यक्षेत्रकालभावैर्भिन्नं तेषां विमर्शनं ॥ ७७ ॥ खण्डितं हेतुदृष्टान्तैः प्रमाणं नोपलभ्यते । तेन प्रमाणीकार्यः स्यात्तत्त्वान्तरविनिर्णयः ॥ ७८ ॥ यथैव विविधा वाञ्छा देहिनां चेतनावतां । तथा मतानि भिन्नानि प्रमाणीक्रियते च किं ॥ ७९ ॥ अचेतनेष्वजीवेषु तथा जीवेषु सर्वतः । विविधं प्रीणनं तेषु विविधं चापि खण्डनं ॥ १८० ॥ पुरातनैश्च मुनिभिः परामर्शो निजैर्निजैः । तदेव विश्वं विविधं व्याख्याभिरुररीकृतं ॥ ८१ ॥ यथैकोपि गिरिर्भूमिनिष्पत्त्या परिभिद्यते । कथं तथैकं विविधवक्तृत्वैर्विविधं कृतं ॥ ८२ ॥ भवेद्यथा रथाङ्गानां विभेदे भिन्ननामता । रथस्यैक्यं तथा सर्ववस्तुवृन्दस्य भिन्नता ॥ ८३ ॥ यथैवैकस्य सरसो जलं नानापथैर्जनैः । पीयते तत्त्वजा व्याख्या तथा स्याद्दर्शनाध्वभिः ॥ ८४ ॥ प्रामाणिकैश्च विबुधैर्यद्बुद्ध्या विखण्ड्यते । संस्थाप्यते तत्क्रमात्स्यादप्रमाणप्रमाणकं ॥८५॥ किं सत्यं किमसत्यं वा किं न निश्चीयते हि तत् । येन यत्रानुरागस्तु प्रबद्धो दर्शनान्तरे ॥ ८६ ॥ तत्तदुक्तं तेन परं प्रमाणीक्रियते हृदि । विनैव केवलालोके तत्त्वं जानन्ति


॥ ३९४ ॥

ततः स्याद्वादमीमांसा मोक्षहेतुर्विलोक्यते । एकान्तं यत्र यत्र स्यात्तत्र मूढत्वमुख्यतां ॥८८॥
नाङ्गिनः ॥ ८७ ॥ ततः स्याद्वादमीमांसा मोक्षहेतुर्विलोक्यते । मूढैरपि प्रमाणं यत्क्रियते तद्यथातथं ॥ ८९ ॥ अप्रमाणं प्रमाणं
तस्यालोको ह्यनैकान्त्यं बुद्धेः फलमनाग्रहः । मूढैरपि प्रमाणं यत्क्रियते प्रत्ययावहः ॥ १९० ॥ यतो ह्यनेकधर्मत्वं पदार्थानां जग-
त्स्याद्बुद्धिमद्भिरुद्गीरितं । स्याद्वादः सर्वलोकेपि दृश्यते प्रत्ययावहः ॥ १९१ ॥ तेन प्रमाणं स्याद्वादो लक्ष्यते सर्ववस्तुषु । हेतुदृष्टा-
न्तं । संशयः सर्वभावेषु गुणानैक्याद्विलोक्यते ॥ ९१ ॥ तेन प्रमाणं स्याद्वादो लक्ष्यते सर्ववस्तुषु । विषस्य प्राणदायित्वं
न्तसंघातो यतो लोकेपि दृश्यते ॥ ९२ ॥ सतमस्त्वं दिनेशस्य क्रूरत्वं शशिनोपि हि । विषस्य प्राणदायित्वं
जीवनस्याशुघातनं ॥ ९३॥ अचलायाश्च चलनं शैत्यं हुतवहस्य च। घृतस्य ज्वरनाशित्वं मरोः सजलता तथा
॥ ९४ ॥ निर्जलत्वं समुद्रस्य सामर्षत्वं मुनेरपि । बन्धनं विहगानां च शङ्खस्यापि सरागता ॥ ९५ ॥ स्थिरत्वं
पवमानस्य घनत्वं सलिलस्य च । कार्तस्वरस्य वैवर्ण्यं वज्राणामपि चूर्णता ॥ ९६ ॥ त्यक्तप्राणस्य देहस्य पुनः
प्राणसमागमः । शोषणत्वं पयोदस्य हिमान्या दाहकारिता ॥ ९७ ॥ एवं दृष्टान्तलक्षैश्च वस्तुनो नैकधर्मता ।
ततः प्रामाण्यमायाति स्याद्वादो निश्चितं जने ॥ ९८ ॥ यावच्च केवलज्ञानमुन्मीलति च देहिनां । तावदेव परं
ज्ञानं स्याद्वादो निर्मलोदयः ॥ ९९ ॥ अनेकान्तमतं यच्च तदेव ज्ञानमुत्तमं । शेषमज्ञानमाख्येयं चातुर्यं वचसां
पचः ॥२००॥ सर्वं प्रतीतिमायाति स्याद्वादकलितं वचः ॥ एकान्तकथितस्यापि व्यभिचारो विलोक्यते ॥ १ ॥
नमस्कारे तपःकार्ये तथा चावश्यके जले । साधूपकरणे चैव व्यभिचारो य ईक्ष्यते ॥ २ ॥ स कोपि नाप्रमा-
णोस्ति स्याद्वादो जिनशासने । तस्मान्निवारणीयो हि मत्सरः शास्त्रवेदिभिः ॥ ३ ॥ अन्येषु दर्शनेष्वेव

व्याख्यास्तत्वस्य याः परं । स्याद्वादं ताः समायान्ति सरितः सागरं यथा ॥ ४ ॥ ततः स्याद्वादमालम्ब्य रागद्वेषौ विवर्जयेत् । मतानि वापि सर्वेषां न निन्द्यान्न स्तुयादपि ॥५॥ ज्ञानं स्याद्वादमालम्ब्य दर्शनं चाहरेद्धृदि । मिथ्यात्वमिश्रसम्यक्त्ववर्जितं क्षायकादिकं ॥ ६ ॥ यच्छ्रद्धानमनैकान्त्ये या भृशं निःकषायता । विषयोपशमो यस्तु तद्दर्शनमुदीरितं ॥ ७ ॥ कदाग्रहो न सम्यक्त्वं मिथ्यादर्शनमेव तत् । यच्च स्याद्वादमालम्ब्य श्रद्धानं तद्धि दर्शनं ॥ ८ ॥ तस्मादेकग्रहं मुक्त्वा रागद्वेषविवर्जितः । मनःशुद्धिसमायुक्तो मोक्षार्थी दर्शनं श्रयेत् ॥ ९ ॥ चारित्रं नाम यत्तत्र मुण्डने लुञ्चनेपि वा । न नाग्न्ये चीवरादाने जटानां बन्धने न च ॥ २१० ॥ न रक्तश्वेतवस्त्रत्वे नैव वल्कलधारणे । न भिक्षाभोजने नाग्निजलाद्यैः स्वाङ्गतापने ॥ ११ ॥ या दया सर्वभूतेषु यत्सत्यं च हितं वचः । यन्निस्पृहत्वं भावेषु ब्रह्मचर्यं त्रिधा च यत् ॥ १२ ॥ शत्रौ मित्रे भवे मोक्षे स्वर्णे पाषाण एव च । वने पुरे गृहे वृक्षे तृणे स्त्रैणे विषेऽमृते ॥ १३ ॥ नृपे रङ्के सुजने च दुर्जने बालिशे बुधे । चन्दनेऽग्नौ यत्समत्वं यत्सर्वेषामनिन्दनं॥ १४ ॥ यदात्मनिन्दनं चैव परोपेक्षाविवर्जितं । सर्वजीवहितत्वं यच्चद्रागद्वेषघातनं ॥ १५ ॥ या सान्तता परं गाढा यदन्यरतिवर्जनं । भयशोकजुगुप्सानामभावः परमार्जनं ॥ १६ ॥ क्षमाया गतमोहत्वं यत्सावद्योज्झितं मनः । एतदेव हि चारित्रं मोक्षाध्वा सरलो मतः ॥ १७ ॥ जटिलो मुण्डितो वापि गृही वा म्लेच्छ एव वा । एतच्चारित्रमासाद्य मोक्षं प्राप्नोति निश्चितं ॥ १८ ॥ ज्ञानदर्शनचारित्राण्येवं मोक्षपथः परं । अन्यस्तु सरलः पन्थाः श्रूयते नात्मसंगतः ॥ १९ ॥ मैत्रीप्रमोदकारुण्यमाध्यस्थै-

र्वासितं मनः। समाधानेन संपृक्तं मोक्षदानाय कल्पते ॥ २२० ॥ मोक्षः कर्मक्षयादेव स चात्मज्ञानतो भवेत्।
ध्यानसाध्यं मतं तच्च तद्ध्यानं हितमात्मनः ॥ २१ ॥ न साम्येन विना ध्यानं न ध्यानेन विना च तत्। न
रूपं जायते तस्माद्द्वयमन्योन्यकारणं॥ २२ ॥ तस्मात्समाधिमासाद्य प्राप्नुवन्ति शिवं जनाः। तपोभिर्दुष्करैश्ची-
र्णैर्न समाधिं विना कश्चित् ॥ २३ ॥ औदासीन्यं हि सर्वत्र देहिनां मोक्षकारणं। प्रतिबन्धस्तु यस्तत्र मानसो
बन्धकृच्च सः ॥२४॥ शब्दरूपरसस्पर्शगन्धैर्युक्तो मनोहरैः। औदासीन्यसमाधिस्थो न लेपं प्राप्नुयाज्जनः ॥२५॥
मनः सर्वेषु भावेषु प्रसरत्तु निरर्गलं। औदासीन्यसमासीनं न बन्धाय प्रकल्पते ॥ २६ ॥ विहाय सर्वतत्त्वानि
बाह्यानि विबुधो जनः। आत्मज्ञाने परं चेतः स्थापयेत्स्थिरतां गतं ॥ २७ ॥ जन्मकोटिगतैर्दानैस्तपोभिरति-
सत्तमैः। आत्मज्ञानं विना नैव मोक्षो भवति देहिनां ॥ २८ ॥ संगृह्णन्सर्वविषयान्सर्वकर्मकरोपि हि। आत्म-
ज्ञानी न बन्धेन बध्यते भवहेतुना ॥ २९ ॥ न पुण्यं नैव वा पापं जायते विदितात्मनां ॥ शुभाशुभैः कृतैः
कार्यैर्ज्ञानाग्निदग्धकर्मणां ॥ २३० ॥ यथा घृतप्लुते कुम्भे जलक्लेदो न जायते। तथात्मज्ञातरि परं कर्मबन्धो
न कुत्रचित् ॥ ३१ ॥ भवेदात्मविदः सर्वं तृणवद्विष्टपं श्रुतं। आत्मानन्दविनिर्मग्नो नान्यज्जानाति किंचन
॥ ३२ ॥ ततः सद्गुरुयोगेन ज्ञात्वात्मानं नरोत्तमः। समाधानं परं चेतो निदधीत क्रमोज्ज्वलं ॥ ३३ ॥ यथा
सर्वधर्मेषु सुभार्या सारमुत्तमं। तथा यतीनां सर्वेषां समाधिर्मोक्षकारणं ॥ ३४ ॥ परित्यज्याखिलं जालं
सर्वं बाह्यमशोभितं। आत्मज्ञानात्समाधाने स्थाप्यं मोक्षार्थिभिर्मनः ॥ ३५ ॥ आचारसंपादितसर्वकार्यो

आत्मज्ञताप्राप्तविशुद्धभावाः ॥ समाधितः प्राप्य शिवं वरिष्ठा नरा महानन्दभृतो जयन्ति ॥ २३६ ॥ इत्याचार्यवर्धमानसूरिकृते आचारदिनकरे तत्वालोककीर्तनो नाम महाद्योतः संपूर्णः ॥

॥ संपूर्णमिदमाचारदिनकराख्यं जैनशास्त्रम् ॥

# ग्रन्थकर्तृप्रशस्तिः ।

देवाधिदेवानाम् ॥ १ ॥
जयति प्रथमो नृपतिः प्रथमाचारप्रबोधको जगतां । प्रथमोऽर्हत्प्रथममुनिः प्रथमो देवाधिदेवानाम् ॥ २ ॥ भूयाद्विविधसिद्धाना-
जयत्यनन्तविज्ञानज्ञानयुक्तिप्रकाशकः । भगवान् श्रीमहावीरस्तीर्थकृच्चरमः परम् ॥ २ ॥ भूयाद्विविधसिद्धाना-
मास्पदं गणनायकः । श्रिये तत्त्वविदां श्रीमानिन्द्रभूतिर्दयानिधिः ॥ ३ ॥ आषष्ठारान्मुनीन्द्राणां संहतिर्यस्य
संततिः । श्रीवर्धमानान्तेवासी सुधर्माभूद्गणेश्वरः ॥ ४ ॥ गणाः संख्यातिगास्तस्माद्बभूवुः साधुशालिनः ।
तेभ्यः कुलानि शाखाश्च प्रसस्रुः प्रौढचेष्टितैः ॥ ५ ॥ तत्राभूत्कोटिकगणः श्रीमद्वज्रमुनीश्वरात् । वाज्रीशाखा
कुलं चान्द्रं तत्रापि परिपप्रथे ॥ ६ ॥ पूर्वं श्रीहरिभद्राख्यः सूरीन्द्रो भद्रदर्शनः । तत्र वित्रस्तवादीभः पञ्च-
वक्त्रो व्यराजत ॥ ७ ॥ श्रीयाकिनीवदनसंभववाक्यलेशं सम्यग्विधाय हृदये विलसद्दयेन । येनावनं सुगत-
साधुजनस्य चक्रे चित्रं तदत्र मुनयो विमृशन्ति चित्ते ॥ ८ ॥ देवचन्द्रस्ततः सूरिश्चन्द्रतां प्रत्यपद्यत । मोहा-
न्धकारसंसारतापपीडितचेतसां ॥ ९ ॥ श्रीनेमिचन्द्रसूरीन्द्रो भूषयामास तत्पदं । तत उद्योतनः पद्योद्योतं
तस्य विनिर्ममे ॥ १० ॥ ततः श्रीवर्धमानाख्यः सूरिर्दुर्वादिनां मदं । वर्धयन्वर्धयामास समस्तं जिनशासनं
॥ ११ ॥ श्रीमज्जिनेश्वरः सूरिर्जिनेश्वरमतं ततः । शरत्राकाशशिस्पृक्षसमुत्रसदृशं व्यभात् ॥ १२ ॥ तत्पादपङ्क्ति-

कृतपट्टेऽभयदेवप्रभुर्गुरोः । तस्य स्तम्भनकाधीशमाविश्चक्रे समं गुणैः ॥ १३ ॥ श्राद्धप्रबोधप्रवणस्तत्पट्टे जिनवल्लभः । सूरिर्वल्लभतां भेजे त्रिदशानां नृणामपि ॥ १४ ॥ ततः श्रीरुद्रपल्लीयगच्छसंज्ञालसद्यशाः । नृपशेखरतां भेजे सूरीन्द्रो जिनशेखरः ॥१५॥ दुर्वादिपद्मचन्द्राभां पद्मचन्द्रगणाग्रणीः । बभार तत्पदे पद्मां मुदा निच्छद्मतां गतः ॥ १६ ॥ श्रीमान्विजयचन्द्राख्यः सूरिर्विजयमादधे । ततस्तस्य पदे रेजेऽभयदेवगणाधिपः ॥ १७ ॥ देवभद्रस्ततो भद्रंकरसूरिरजायत । प्रभानन्दो महानन्दं ततः संघेऽप्यवर्धयत् ॥ १८ ॥ श्रीश्रीचन्द्रगणाधीशः श्रीदोऽजनि ततो गुरुः । तत्पट्टे जिनभद्राख्यः सूरिर्भद्रं ततान च ॥ १९ ॥ जगत्त्रयमतां प्राप्तो जगत्तिलकसूरिराट् । सिद्ध्या तपःसमृद्ध्या च द्योतयामास भूतलं ॥ २० ॥ गुणचन्द्रगुरुस्तस्माद्गुणैश्चन्द्रकरोज्वलः । तत्पट्टेऽभयदेवाख्यः प्रख्यातोऽजनि सूरिराट् ॥ २१ ॥ तत्पट्टे सांप्रतं विश्वविश्वविख्यातसद्गुणः । श्रीमान्सूरिर्जयानन्दो जयानन्दमहास्पदं ॥ २२ ॥ दुर्वादिमदसंहर्ता हर्ता च सकलांहसां । विभाति सर्वदेशेषु विहर्ता गणनायकः ॥ २३ ॥ युग्मं । स्वं गच्छं शासतस्तस्य तत्पट्टेऽभयसद्गुरोः । शिष्यः श्रीवर्धमानाख्यः सूरिरस्ति प्रशान्तधीः ॥ २४ ॥ तेनालोक्यागमार्थं च श्रीमदावश्यकोदितं । दिग्वस्त्रश्वेतवस्त्राणां शाखाचारं विचार्य च ॥ २५ ॥ हिताय सर्वसाधूनामाचारख्यापनाय च । निर्ममे शास्त्रमेतच्च दुष्टकर्मक्षयाय च ॥ २६ ॥ युग्मम् । पुरे नन्दवनाख्ये च श्रीजालन्धरभूषणे । अनन्तपालभूपस्य राज्ये कल्पद्रुमोपमे ॥ २७ ॥ श्रीमद्विक्रमभूपालादष्टषण्मनु १४६८ संख्यके । वर्षे कार्तिकराकायां ग्रन्थोयं पूर्तिमाययौ ॥ २८ ॥ युग्मं । शिष्यः श्रीमज्जयानन्दगुरो-

लिग्वनकर्मणि । तेजःकीर्तिमुनिश्चक्रे साहाय्यकमहर्निशम् ॥ २९ ॥ अज्ञानादागमार्थस्य मूढत्वात्किंचिदीरितम् । अशुद्धमत्र यत्तत्र मिथ्यादुःकृतमस्तु मे ॥ ३० ॥ दुरुक्तं शोधनीयं च निरस्यैर्मुनीश्वरैः । सदुक्तमनुमोद्यं च पाठ्यं शिष्यगणस्य च ॥ ३१ ॥ यावद्धराधरधराशशिसूर्यमेरुवारीश्वरा भुवनमेव विभूषयन्ति । तावत्सुसाधुनिकरैः परिपठ्यमानं शास्त्रं तनोतु हृदये कृतिनां प्रमोदम् ॥ ३२ ॥ इति शास्त्रकारप्रशस्तिः संपूर्णा ॥ ॥

इति श्रीमण्डलाचार्यकमलसूरिविकासित—खरतरगच्छमालाद्वितीयपुष्परूपे श्रीवर्धमानसूरिविरचित आचारदिनकरस्य द्वितीयविभागः संपूर्णः ।



